श्रीनारायणप्रणीतः

# तन्त्रसमुच्चयः

शङ्करप्रणीतया विमर्शिन्याख्यया व्याख्यया
तन्त्रसमुच्चयकारशिष्यप्रणीतया विवरणाख्यया
व्याख्यया च समेतः

## द्वितीयसम्पुटः




उत्तर प्रदेश संस्कृत संस्थान
लखनऊ

श्रीनारायणप्रणीतः

# तन्त्रसमुच्चयः

शङ्करप्रणीतया विमर्शिन्याख्यया व्याख्यया
तन्त्रसमुच्चयकारशिष्यप्रणीतया विवरणाख्यया
व्याख्यया च समेतः

## द्वितीयसम्पुटः



उत्तर प्रदेश संस्कृत संस्थान
लखनऊ

दुर्लभ एवं अप्राप्य महत्त्वपूर्ण ग्रन्थ-प्रकाशन योजनान्तर्गत
षष्ठ पुष्प

*प्रकाशक* : श्रीमती अलका श्रीवास्तवा
निदेशक
उत्तर प्रदेश संस्कृत संस्थान, लखनऊ

*प्राप्ति-स्थान* : विक्रय विभाग
उत्तर प्रदेश संस्कृत संस्थान,
नया हैदराबाद, लखनऊ-२२६ ००७

*प्रथम संस्करण* : वि. सं. २०५४ (१९९७ ई.)

*प्रतियाँ* : १०००

*मूल्य* : रु. १००.०० (सौ रुपये)



*मुद्रक* : शिवम् आर्टस् निशातगंज, लखनऊ।
दूरभाष : ३८६३८६

# PREFACE

The present publication is the Second part of "Tantra samuccaya" with the commentary 'Vimarsinī' of Śaṅkara, and 'Vivaraṇa' written by a disciple of Nārāyaṇa. First part of which comprising the first four chapters has already been published as No. 151 of the Trivandrum Sanskrit Series. This Part II also consists of four chapters namely the 5th, 6th, 7th and 8th. Chapter 5 deals with the rules and rites relating to preliminary ceremonies connected with the initiation of an idol. The actual consecration of the image erected is described in the 6th chapter. The manner of worship of the enshrined deity is set down in detail in the 7th chapter and the 8th chapter contains all the ceremonial rites about the abhisheka etc. of the deity consecrated.

For convenience of reference detailed indexes of the verses in the text, citations of works and authors, mantrās etc. in the commentary, are appended at the end.

A full account of the life of the author of Tantrasamuccaya, his time etc. has been given in the introduction to the Part I of this book.

Trivandrum, }
1953. }

K. S. MAHADEVA SASTRI.

1556

## निवेदना

द्वितीयोऽयं भागः श्रीशङ्करप्रणीतया विमर्शिन्या नारायणशिष्यविरचितेन विवरणेन च समेतस्य तन्त्रसमुच्चयस्य । आदित आरभ्य तुरीयपटलान्तः प्रथमः सम्पुटोऽस्मादेवाधिकरणादनन्तशयनग्रन्थावल्यां १५१ तमाङ्कतया पूर्वं प्रकाशितः । अस्मिंश्च द्वितीये भागे पञ्चमाद्यष्टमान्ताश्चत्वारः पटलाः संघटिताः । तत्र पञ्चमे पटले मन्त्रबिम्बपीठाद्यधिवासविधिः, तदङ्गभूतक्रियाकलापः, षष्ठे नपुंसकशिलापीठप्रतिमादीनां तदावरणपीठानां च प्रतिष्ठाविधिः सप्तमे प्रतिष्ठितस्य देवस्य पूजाविधिः, अष्टमे कलशप्रसाधनपूरणपूजनाधिवासादिविधिश्च वितत्य प्रतिपाद्यन्ते ।

पद्यानां स्मृतग्रन्थतत्कर्तॄणामुदाहृतवाक्यानां मन्त्राणां चानुक्रमण्यः सौकार्यार्थान्ते समायोजिताः ।

ग्रन्थकर्तुर्जीवितसमयादिकं च प्रथमसम्पुटोपोद्घात एव प्रपञ्चितमिति नेह वितायते ।

अनन्तशयनम्,
१९५३.

के. एस्. महादेवशास्त्री.

# विषयानुक्रमणी ।

## पञ्चमः पटलः ।

| विषयः | पुटम् |
|---|---|

विषयः पृष्ठम्



---

षष्ठः पटलः ।

— —

सप्तमः पटलः ।

| विषयः | पृष्ठम् |
|---|---|
| समष्टिमन्त्राः | २१८ |
| पीठपूजाक्लृप्तिः | २२० |
| आवाहनविधिः | २२४ |
| आवाहने मुद्राः | २२६ |
| सूर्यादीनां ध्यानानि | २२८ |
| षोडशोपहारकथनम् | २३० |
| उपहृतिनियमः | २३९ |
| परिषद्विहरणम् | २४१ |
| सामान्यावरणक्लृप्तिः | ,, |
| असाधारणावरणदेवतान्यसनम् | २४६ |
| साधारणावरणदेवतान्यसनम् | २५१ |
| पुष्पावरणम् | २५७ |
| धूपदीपार्पणविधिः | २६१ |
| षण्णामुपहाराणां समर्पणरीतिः | २६७ |
| होमक्लृप्तिः | २७६ |
| परिषद्बलिहरणम् | २७८ |
| पानीयसमर्पणम् | २७९ |
| गण्डूषादिकम् | २८१ |
| प्रसार्पणम् | २८५ |
| प्रसन्नार्घ्यम् | ,, |
| द्वादशाक्षरन्यासप्रकारः | २९१ |
| ध्यानभेदः | २९२ |
| उपहारदानादौ विशेषः | ,, |
| वैष्णवषडक्षरविधानम् | २९३ |
| मूर्तिपालकस्वादीनां पूजामन्त्राः | २९४ |
| शिवस्य प्रासादमन्त्रविधाने विशेषः | २९५ |
| प्रासादमूर्तिध्यानं तत्परिवारपूजा च | २९६ |
| पञ्चब्रह्मविधानम् | २९७ |

---

## अष्टमः पटलः ।

विषयः पुटम्



———

॥ श्रीः ॥

नारायणप्रणीतः

# तन्त्रसमुच्चयः ।

शङ्करप्रणीतया विमर्शिन्याख्यया नारायणशिष्य-
प्रणीतया विवरणाख्यया च
व्याख्यया समेतः ।

---

(द्वितीयो भागः । )

## अथ पञ्चमः पटलः ।

स्नात्वा गुरुः कृतदिनान्तविधिः सुवासाः
स्वाचम्य नव्यवसनेन कृतोत्तरीयः ।
बिम्बाग्रतः समुपविश्य पवित्रपाणि-
र्वन्देत साञ्जलिरथो गुरुविघ्नराजान् ॥ १ ॥

विमर्शिनी ।

अथ पञ्चमेन पटलेनाधिवासविधिमाह — स्नात्वेति । अथो गुरुः स्नात्वा तदर्थं विशेषतो मन्त्रस्नानं कृत्वा कृतदिनान्तविधिः कृतसायन्तनसन्ध्याविधिः सुवासाः नववस्त्रधारी स्वाचम्य विशेषतो मन्त्राचमनं कृत्वा नव्यवसनेन कृतोत्तरीयः नवेन वस्त्रेण कृतोत्तरीयश्च भूत्वा पवित्रपाणिः, पवित्रस्य विशेषतो विधानात् सौवर्णं पवित्रं गृह्यते, तत्करोऽपि भूत्वा देवाग्रत एव किञ्चिद् दक्षिणतः समुपविश्य सम्यगुपविश्य साञ्जलिरञ्जलिमुद्रासहितः सन् गुरुविघ्नराजान् गुरून् विघ्नराजं च वन्देत ॥ १ ॥

विवरणम् ।

इदानीं तद्दिने रात्रि(कृत्यं) प्रस्तौति—स्नात्वा गुरुरिति । प्रागेवाख्य-भयाद् विधिवत् स्नात्वा सायन्तनसन्ध्याविधानं विधाय नवाम्बरधरः सोत्तरीयः समाचम्य मण्डपे प्रविश्य तद्बिम्बाग्रतः स्वायतने समुपविश्य गुरुवन्दनादि विदध्यात् । गुरुविघ्नराजानिति । गुरवश्च विघ्नराजो गणपतिश्चेति समासः । 'ओं गुं गुरुभ्यो नमः' इति गुरुमन्त्रः 'ओं गं गणपतये नमः' इति गणपतिमन्त्रः । वामदक्षिणपार्श्वयोश्च वन्दनम् । वक्ष्यति च — 'गुरूनुदग्दक्षिणतो गणेशम्' इति । यद्वा गुरुशब्देन गुरुसमष्टिरपि गृह्यते । ओं परमात्माद्यशेषगुरुपारम्पर्यक्रमेण स्वगुरुपादाम्बुजं यावत् तावत् प्रणौमि । 'ओं परमगुरुभ्यो नमः' । 'ओं अवरगुरुभ्यो नमः' इति मूर्ध्न्यञ्जलिं कृत्वा पूर्वोक्तगुरुमन्त्रेण स्वगुरुवन्दनं वामभागे कुर्यात् । विघ्नराजश्च अश्चेति समासः, पुनर्बहुवचनम् । गणपतिर्दक्षिणभागे वन्दनीयः । अशब्देन विष्णुशिवादिरूपः परमात्मा स्वाभिमतो देवो गृह्यते । स च तत्तन्मूलेन तत्तन्नाममन्त्रेणैव वा हृदुद्देशे वन्दनीय इति ॥ १ ॥

दग्ध्वा स्वास्त्रहुताशकल्पतलपृष्ठव्यापकेनाभितो
मूलव्यापकतोऽपरौ मनुमयौ हस्तौ समुत्पाद्य च ।
न्यस्तार्णाङ्कतराङ्कितास्त्रपरिदीप्ताग्रेण हस्तद्वये-
नास्त्रेणातनुयात् त्रितालदशदिग्बन्धाग्निसालोदयान् ॥ २ ॥

विमर्शिनी ।

ततः स्वास्त्रहुताशकल्पतलपृष्ठव्यापकेन स्वस्वास्त्रमयाग्निना कृतेन तले पृष्ठे च व्यापकेन प्राक्तनौ हस्तौ दग्ध्वा अभितो मूलव्यापकतोऽपरौ मनुमयौ हस्तौ च समुत्पाद्य न्यस्तार्णाङ्कतराङ्कितास्त्रपरिदीप्ताग्रेण न्यस्तमूलमन्त्राक्षराङ्कत्वादुज्ज्वलितं न्यस्तास्त्रमन्त्राङ्गुल्यग्रत्वात् परिदीप्ताग्रं च यत् तेन हस्तद्वयेन अस्त्रेणास्त्रमन्त्रेण त्रितालदशदिग्बन्धाग्निसालोदयान् तालत्रयं दशदिग्बन्धमग्निप्राकाराणामुद्गमं चातनुयात् । अत्रायं प्रयोगविधिः—यथोक्तप्रकारेण स्वासन उपविश्य गुरुगणपतिवन्दनानन्तरं करयोर्दहनबुद्ध्या स्वस्वास्त्रेण तले पृष्ठे च व्याप्य उत्पादनबुद्ध्या तयोः परितश्च मूलेन व्याप्य मूलमन्त्रस्याक्षराण्यङ्गुलि

१. 'इति मन्त्रः' घ. पाठः. २. 'तन्मन्त्रे' क. ख. पाठः.

च यथास्थानं विन्यस्याक्षिणाङ्गुलीनामग्रेषु च प्रत्येकं विन्यस्य ताभ्यां कराभ्यां तालत्रयदिग्बन्धनाग्निप्राकारान् कुर्यादिति ॥ २ ॥

विवरणम् ।

दग्ध्वेति । हस्तावित्याकर्षः । प्रतिपत्तिरिः मुक्ता । स्वास्त्रमेव हुताशस्तेन कल्पं कृतं करयोस्तले पृष्ठे च व्यापकं तेन तौ हस्तौ दग्ध्वेति । अभितो मूलव्यापकत इति । ततो मूलेन करयोरभितः पार्श्वयुगले व्यापकं तेन मन्त्रमयतया तयोस्समुत्पादनमित्यपि प्रतिपत्तिरुक्ता । अभितो व्यापकं हि कृत्स्नव्यापकं भवति । मूलव्यापकेन हस्तयोः समुत्पादनं तयोस्सामान्यतो मन्त्रमयत्वं च साध्यत इति भावः । न्यस्तार्णेति । पूर्वं पूजापटलभाविनयेन मूलवर्णान् करशाखासु विन्यस्य तदङ्गान्यपि तथा विन्यस्य पुनः स्वास्त्रमुभयाङ्गुल्यग्रेषु विन्यसेत् । तरङ्गितं शोभितं त्रितालं तालत्रयम् । अग्निसालादयो दशदिगभिव्यक्ताग्निमूर्त्याश्रयतया समन्तादग्निप्राकाराभिव्यञ्जयः । स च प्राकार एकस्त्रयो वा स्युः ॥ २ ॥

मार्ताण्डावरतारजप्तपवनायामक्रमोन्मेषिते
स्वस्मिन् भूमनि नामरूपभुवनस्फूर्जासमष्ट्यात्मनि ।
आस्थायास्त्रसमीरयामविधिना संशोध्य नाडीत्रयं
तारांशत्रितयासुरोधविधिना वाथात्मशुद्धिं चरेत् ॥ ३ ॥

विमर्शिनी ।

ततो मार्ताण्डावरतारजप्तपवनायामक्रमोन्मेषिते द्वादशसंख्यावरोऽधमो यस्य प्रणवजपप्राणायामस्य, तत्क्रमादुन्मेषिते प्रकाशिते नामरूपभुवनस्फूर्जासमष्ट्यात्मनि नामरूपमयस्य शब्दार्थमयस्य भुवनस्य स्फूर्जा वर्धनं तस्य समष्टिरूपे स्वस्मिन् भूमनि ऐश्वर्यातिशये आस्थाय, गुरुः द्वादशवारप्रणवप्राणायामेनाखिलभुवनसमष्ट्यात्मा देवो भूत्वेत्यर्थः । अस्त्रसमीरयामविधिना अस्त्रमन्त्रप्राणायामविधानेन वा तारांशत्रितयासुरोधविधिना प्रणवांशत्रयप्राणायामविधानेन वा स्वस्य नाडीत्रयं संशोध्याथात्मशुद्धिं जीवात्मनः परमात्मयोगेन शुद्धिं चरेत् ॥ ३ ॥

---

१.'जापप' इति मूलकोशपाठः

विवरणम् ।

मार्ताण्डावरेति । द्वादशावृत्त्या प्रणवजपेन कुम्भकप्राणायामं कुर्यात् । तस्यैकत्वे तेन क्रमादुन्मेषिते त्रित्वे तु तेषां क्रमेण उन्मेषिते, उन्मेषः स्फूर्तिः । किमुन्मेषणीयमित्याह—स्वस्मिन् भूमनीति । भूमा महत्ता तद्विशेषणं नामरूप-भुवनस्फूर्जासमष्ट्यात्मनीति । नामरूपमात्रस्फूर्त्या व्यष्ट्यात्मा हि तावत् स्वय-मवस्थितः तस्य नामभुवनस्फूर्त्या रूपभुवनस्फूर्त्या च समष्ट्यात्मरूपे स्वस्मिन भूमनीत्यर्थः । कुम्भकप्राणायामे धारणाविषयोऽप्यनेनोक्तः । स्थूलसूक्ष्मपरतया त्रित्वाच्च क्रमोन्मेषोपपत्तिः । स्वस्मिन् भूमनि आस्थाय नाडीत्रयं संशोध्य, अथ आत्मशुद्धिं चरेदित्यन्वयः । आस्थानमवस्था म...कोदयपर्यन्तम्, एवं भावस्थैर्यसिद्धये तात्पर्यतोऽवस्थानं च । अन्नसमीरयामविधिना तारांशत्रित-यासुरोधविधिना वेति मन्त्रविकल्पः । समीरयामोऽसुरोधविधानं च प्राणायामः । आत्मशुद्धिमिति । त्रिधा ह्यात्मावस्थितो जीवो देहो जातमिति । तत्र जीवस्य परमात्मापत्त्या शुद्धिः, देहस्य नित्यपञ्चभूतरूपस्य स्वस्वकारणापत्त्या, जातस्य तु अनित्यपञ्चभूतरूपस्य शोषणादिभिः शुद्धिरिति विभागः । प्रक्रियान्तरेणाप्या-त्मशुद्धिसद्भावोऽथात्मशुद्धिं चरेदिति सूचितम् । नाडीशुद्धावन्नपक्षे स एव मन्त्रः । तारांशपक्षे ते मन्त्रा भिन्ना इति ॥ ३ ॥

नाड्या दक्षिणया त्रिवारमुदितेनामा विमुच्यानिलं
षड्वारेण तया प्रपूर्य परिकुम्भ्य द्वादशावर्तिना ।
व्यामुञ्चेदिडया तथैव परिशोष्येडाममुमा मारुतं
मुञ्चेत् पिङ्गलया ततस्तदुभयेनापूरयेदीरणम् ॥ ४ ॥

विमर्शिनी ।

नाडीशुद्धिमाह—नाड्येति । त्रिवारमुदितेन जप्तेन अमा अम्बीजेन दक्षिणया पिङ्गलया नाड्या अनिलं प्राणं विमुच्य रेचयित्वा, तया पिङ्गलयैव षड्वारेण अंबीजेन प्राणं प्रपूर्य, द्वादशावर्तिना तेनैव अंबीजेन पिङ्गलया परि-कुम्भ्य, तं प्राणमिडया वामनाड्या व्यामुञ्चेद् रेचयेत् । तथैव पिङ्गलया प्रोक्तप्रकारेणैव उमा उंबीजेन इडामपि परिशोध्य पिङ्गलया मारुतं मुञ्चेत् । ततस्तदुभयेन तन्मार्गद्वयेन अं उं इति बीजद्वयेन च ईरणं वायुमापूरयेत् ॥ ४ ॥

---

१. 'भयाभ्यां वायुमापूरयेद' ज. पाठः.

विवरणम् ।

ताराशैर्नाडीशुद्धिं दर्शयति — नाड्या दक्षिणयेति । उदितेनेति । मनसोच्चारितेन । अमेति । तारस्य आद्यंशो बीजमन्त्रत्वेन गृहीतः । षड्वारेण द्वादशावर्तिनेति । अत्राप्येतदनुषङ्गः । तथैवेति । रेचकादित्रयमावृत्तिक्लृप्तिश्चातिदिश्यते । इडामिति वामनाडीम् । उमेति तारमध्यमांशः । परिशोध्येत्यनेन सुषुम्नाग्रन्थिभेदनलक्षणा शुद्धिरुक्ता । यदाहुः — पूरयित्वा मूर्धभ्रूमध्यतालुकण्ठहृदयेषु स्थितान् ग्रन्थीन् निर्भिद्य मूलाधारं प्रापय्येति । कुम्भकेनासौ नाडीपथस्सुशुद्धो भवति । तथा च तदा धारणापि सिद्धा भवति । व्यामुञ्चेदिडयेति । अनेनैव वा रेचकोऽभिप्रेतः । मुञ्चेद् पिङ्गलयेऽपि । (मः अ) मिति रेचको वा स्यात् । तदुभयेनेति । शुद्धेन नाडीद्वयेन ईरणमिति । प्राणं सुषुम्नायां पूरणे समारम्भ एवायं भवति ॥ ४ ॥

नाडीद्वन्द्वाभिपूर्णं मरुतमुभयमार्गानुरोधात् सुषुम्ना-
सुष्यामाकृष्य तद्वन्ममिति परिजपन्नङ्गवारं प्रपूर्य ।
सन्धार्यादित्यवारं विदलितनिखिलग्रन्थिकां ब्रह्मनाडी-
मप्येवं शोधयित्वा बहिरथ मरुतं रेचयेद् व्यत्ययेन ॥ ५ ॥

विमर्शिनी ।

नाडीद्वन्द्वाभिपूर्णं नाडीद्वयेन पूरितं मरुतं वायुम् उभयमार्गानुरोधाद् मार्गद्वयानुसारेण सुषुम्नासुष्यां मध्यनाडीद्वारे आकृष्यानीय तद्वत् पूर्ववद् अङ्गवारं षड्वारं मं इति परिजपन् सुषुम्नां प्रपूर्य आदित्यवारं द्वादशवारं सन्धार्य विदलितनिखिलग्रन्थिकां भेदितपञ्चग्रन्थिं ब्रह्मनाडीं सुषुम्नामप्येवं शोधयित्वा अथ मरुतं व्यत्ययेन पिङ्गलया पूरितमिडया, इडया पूरितमपि पिङ्गलया च बहीं रेचयेत् ॥ ५ ॥

विवरणम् ।

उभयमार्गानुरोधादिति । पिङ्गलेडामार्गयोः प्रत्यावृत्तिनिरोधात् । यद्वा मार्गद्वयेऽपि मूलाधारावेशगतिं प्रत्युत्साहोऽनेनोक्तः । सुषुम्नासुष्यामाकृष्येति सुषुम्नाया मूलेऽस्ति विवरस्तस्मिन् प्रापय्येत्यर्थः । तद्वदिति । अयमेवात्र पूरक इति । भावः । सन्धार्यादित्यवारमिति । परिजपन्नित्यनुषङ्गः ।

---

१. 'रस्य म' ग. ख. घ. पाठः.

कुम्भकाभिप्रायमेतत् । विदलितनिखिलग्रन्थिकामिति । फलतया विशेषणम् । सन्धारणप्रकारोऽप्यर्थाद् दर्शितः । सकलग्रन्थिविदारणशक्त्याकारेणेयं मानस-सन्धारणेति । यदाहुः— हृदयकण्ठतालुभ्रूमध्यमूर्धस्थान् ग्रन्थीन् निर्भिद्येत्यादि । ब्रह्मनाडीसुषुम्नाव्यत्ययेन रेचयेदिति । मूलाधाराद् द्वादशान्तपर्यन्तं प्राणशक्ति-द्वयं मिथः श्लिष्टं पूरितं तथैव च कुम्भितं पुना रेचनकाले द्वादशान्तसीमतो दाक्षिणस्य वामभागेन वामस्य च दक्षिणभागेन तथा मिथः श्लिष्टस्यैव मूलाधार-पर्यन्तं प्रत्यावृत्तिः । ततो वामदक्षिणनाडीभ्यां च बही रेचनमिति भावः । धारणायामस्वपक्षे तत्तेजसां ग्रन्थिसंहारकतयानुसन्धानं कार्यमिति ॥ ५ ॥

प्रभञ्जनं पिङ्गलया बहिस्त्यजेद्
विकारसङ्ख्यैः प्रणवैरथेडया ।
प्रपूरयेत् तद्द्विगुणैश्चतुर्गुणैः
प्रपूरितं ब्रह्मपथे प्रकुम्भयेत् ॥ ६ ॥

विमर्शिनी ।

रेचकादिना प्राणायामविशेषमाह — प्रभञ्जनमिति । अथ विकार-सङ्ख्यैः षोडशवारमावर्तितैः प्रणवैः पिङ्गलया प्रभञ्जनं वायुं बहिस्त्यजेत् । इडया तद्द्विगुणैः द्वात्रिंशत्सङ्ख्यैः प्रपूरयेत् । चतुर्गुणैश्चतुष्षष्टिसङ्ख्यैः प्रपूरितं प्रभञ्जनं ब्रह्मपथे सुषुम्नायां प्रकुम्भयेत् ॥ ६ ॥

विवरणम् ।

प्रणवप्राणायाममाह — प्रभञ्जनमिति । प्राणवायुं विकारसङ्ख्यैः प्रणवैर्बहिस्त्यजेदिति । षोडशावृत्तिजपेन रेचनमुक्तम् । अथेडया तद्द्विगुणैः प्रपूरयेदिति । द्वात्रिंशदावृत्त्या जपेन पूरणम् । चतुर्गुणैः प्रकुम्भयेदित्यन्वयः । ब्रह्मपथस्सुषुम्ना तस्यां चतुष्षष्ट्यावृत्त्या जपेन कुम्भनमेतत् । इह द्वादशान्ता-रम्भं रेचनं तत्पर्यन्तं च पूरणमाद्वादशान्तमूलाधारं कुम्भनमिति ज्ञेयम् ॥ ६ ॥

शुद्धब्रह्मपथप्रसारिपरमात्मार्चिष्कलापाततो
जाग्रज्जीवपुनर्विमोहनभिषद्दुर्वासनापासनम्[3] ।

---

१. 'न्त' घ. पाठः. २. 'सो' ग. पाठः. ३. 'अन्यात्मोद्बोधविरोधिमो' क. ग. ङ. पाठः.

कृत्वा रेचककर्म पूरकविधौ स्वस्थानमास्थाय चे-
त्येवं कुम्भककर्मणा स्वपरमैश्वर्यं सुधीर्भावयेत् ॥ ७ ॥

विमर्शिनी ।

रेचकादेरभिसन्धिमाह — शुद्धेति । शुद्धब्रह्मपथप्रसारिपरमात्मार्चि-ष्कलापाततः शुद्धे ब्रह्मपथे सुषुम्नायां प्रसारिण्याः परमात्मनस्तेजस्कलाया आपाततः संस्पर्शनेन हेतुना जाग्रज्जीवपुनर्विमोहनमिषद्दुर्वासनापासनम् उद्बुध्यमानस्य जीवस्य पुनर्विमोहनाय मिषन्त्याः प्रेक्षन्त्या दुर्वासनाया दुष्ट-रूपिण्या वासनाया अपासनं निरसनं तद्रूपं रेचककर्म कृत्वा पूरकविधौ स्वस्थानं वायोरन्तर्मुखत्वमास्थाय चेत्येवं रेचकं पूरकं च बुद्ध्या विमृश्य सुधीः प्रसन्न-धीर्भूत्वा कुम्भककर्मणा स्वपरमैश्वर्यं स्वस्य जीवस्य परमात्मसमानमैश्वर्यं भावयेत् ॥ ७ ॥

विवरणम् ।

प्रतिपत्तिमपि दर्शयति — शुद्धब्रह्मपथेति शुद्धब्रह्मपथे प्रसारिण्या परमात्मार्चिष्कलाया आपातेन जन्यस्यात्मबोधस्य विरोधिनि मोहे मिषन्त्या दुर्वासनाया अपासनं प्रभञ्जनं पिङ्गलयेत्युक्तम् । रेचककर्म कृत्वेति । इह द्वादशान्तादिरेचनं तदन्तं पूरणं मूलाधारादिद्वादशान्तान्तं कुम्भकमिति बो-द्धव्यम् । रेचकसमये परमार्चिष्कलाया आपातस्तत्सम्पातसमये दुर्वासनापायश्च चिन्तनीयः । यद्वा दुर्वासनापदेन कुण्डलिनीफणावरणमुच्यते । यदुक्तम् .... .... .... .... .... तदा तदापायं चिन्तयेदिति । पूरकमपि ज्ञानादिसम्पादकमिति । परमात्मार्चिष्कलासम्पातमहिम्ना स्वात्मनः स्वाभाविक-ज्ञानैश्वर्यादिसम्पूर्णत्वं चिन्तनीयम् । भूमन्यास्थापकं कुम्भकमिति । तस्य तथा पूर्णस्य स्वमहिमनि स्थितिं कुम्भके चिन्तयेत् । सुधीरिति तथानुसन्धान-कौशलमुक्तम् ॥ ७ ॥

उन्नीय हंसमनु नाधरचक्रतस्त-
मेकाम्बुजस्थपरमात्मनि सङ्क्रमय्य ।
व्याख्यास्यमानविधिना वसुधादितत्त्व-
जातं विलाप्य तनुयात् तनुशोषणाद्यम् ॥ ८ ॥

---

१. 'अपि ज्ञानादिसम्पादकं तथैवं विदधीत भूमनि सुधीरास्थापकं कुम्भकम् ॥ ७' इति विवरणानुसारतः क. ग. ज. ड. पाठः.

विमर्शिनी ।

अथात्मशुद्धिमाह — उन्नीयेति । हंसमनुना 'ओं हंसः' इति मन्त्रेण अधरचक्रतः मूलाधारात् तं जीवात्मानम् , उन्नीयोर्ध्वं नीत्वा अर्काम्बुजस्थपरमात्मनि द्वादशान्तसहस्रदलपद्मस्थितपरमात्मनि सङ्गमय्य संयोज्य व्याख्यास्यमानविधिना बिम्बशोधने वक्ष्यमाणरीत्या वसुधादितत्त्वजातं पृथिव्यादितत्त्वसमूहं विलाप्य स्वे स्वे कारणे संयोज्य तनुशोषणाद्यं शरीरस्य शोषणदहनाद्यं तनुयात् ॥ ८ ॥

विवरणम् ।

तमधरचक्रतो हंसमनुनोन्नीय अर्काम्बुजस्थपरमात्मनि सङ्गमय्येत्यन्वयः । अधरचक्रं मूलाधारपद्मम् अर्काम्बुजं द्वादशान्तपद्मं हंसमनुजपं तदीयाद्यक्षरेणोन्नयनमन्त्याक्षरेण परमात्मनि योजयेदिति भावः । व्याख्यास्यमानविधिनेति । बिम्बशोधनविधाविति शेषः । वसुधादितत्त्वजातमिति । जातं निचयः । भूतेष्विन्द्रियोपसंहारोऽप्यनेन सूचितः । विलाप्येति । अर्काम्बुजस्थपरमात्मनीत्यनुषङ्गः । यद्वा वसुधादि विलाप्येति सम्बन्धः । अत्रान्तरा वसुधादेर्विशेषणं करोति तत्त्वजातमिति । तत्तु वसुधादि अजातं जातांशरहितं विलाप्येति जातांशस्यावशेषणमपि लभ्यते । वसुधादिभ्यो जातो देहलक्षणः पिण्डो जातम् । यद्वा निजलिङ्गशरीरकार्यमिह वसुधाद्युक्तम्[1] । शुक्लशोणितं जन्तु तदन्तर्गतं जातम् । अथवा जातमित्यधिकरणे क्तः स्वदेह एव किञ्चिद्[2] विराड्देहेऽण्डकपालमिव तदुत्पत्त्याद्यधिकरणमभ्युपगम्यते, तदिह जातमभिप्रेतमिति । तनुयात् तनुशोषणाद्यमिति । तनुशब्देन जातांशग्रहणम् ॥ ८ ॥

स्वस्वार्हनाड्या नृपदन्तवर्ण-
सङ्ख्यासमभ्यस्तनिजार्हवर्जैः ।
कुर्यात् क्रमाद् रेचकपूरकौ च[3]
सकुम्भकौ शोषणपूर्वकेषु ॥ ९ ॥

---

१. 'जम् ।' क. पाठः. २. 'तु' ख. पाठः. ३. 'तु' ग. म. पाठः.

विमर्शिनी ।

शोषणादिष्वितिकर्तव्यतामाह — स्वस्वार्हेति । शोषणपूर्वकेषु स्वस्वार्हनाड्या स्वस्वयोग्यया नाड्या नृपदन्तवर्णसङ्ख्यासमभ्यस्तनिजार्हबीजः षोडशद्वात्रिंशच्चतुःसङ्ख्याभिरावर्तितेन निजनिजबीजेन युक्तः । अत्र वर्णशब्देन चतुष्षष्टिसङ्ख्या वा विवक्षिता । मन्त्री क्रमाद् रेचकपूरकौ सकुम्भकौ कुर्यात् ॥ ९ ॥

विवरणम् ।

स्वस्वार्हनाड्येति । शोषणे रेचकविधौ पिङ्गलयेत्यादि द्रष्टव्यम् । वर्णशब्देनैकपञ्चाशच्चतुष्षष्टिर्वा सङ्ख्या गृह्यते । यं रं वमिति च शोषणाद्यर्हाणि बीजानि ॥ ९ ॥

इडामुखे नाभिसरोरुहे च
धूम्रं विचिन्त्यानिलमण्डले यम्[1] ।
संयोज्य तद्योगजवायुनाङ्गं
संशोष्य तं पिङ्गलया प्रमुञ्चेत्[2] ॥ १० ॥

विमर्शिनी ।

इडामुखे नाभिसरोरुहे चानिलमण्डले षड्बिन्दुयुक्तवृत्तात्मके वायुमण्डले धूम्रं यंबीजं विचिन्त्य तन्मण्डलद्वयमन्योन्यं संयोज्य तद्योगजवायुना तद्योगाज्जातमहावायुना अङ्गं शरीरं संशोष्य तं वायुं पिङ्गलया प्रमुञ्चेत् ॥ १० ॥

विवरणम् ।

इडामुख इति । प्रथमं पिङ्गलया यंबीजेन षोडशमात्रया रेचकं कार्यमिति । संयोज्येति पूरकाभिप्रायम् । यद्वा त्रिंशन्मात्रया यंबीजेन पूरकं कुर्वन् संयोजयेदित्यर्थः । नाभावेव च संयोजनमिष्यते । अत्राध्यात्मिकस्य वायोर्बाह्येन संवर्तकवायुना तादात्म्यं संयोगेन क्रियते । एवं दहनप्लावनयोरपि ज्ञेयम् । तद्योगजवायुनाङ्गं संशोष्येति कुम्भकाभिप्रायम् । तदा धारणाविषयोऽप्येवं सूचितः । नाभिगतवायुबिम्बकलासु कृत्स्नदेहव्यापिनीषु तच्छोषणीषु तदा धारणेति । अङ्गमिह कृत्स्नो जातांशः । यद्वांहः संशोष्येति पाठः । पापपुरुषं संशोष्येत्यर्थः । यदाहुः — 'महापातकपञ्चाङ्गमि'त्यादि ॥ १० ॥

---

१. 'न्त्या वि' क. पाठः. २. 'संशोष्य त' ख. पाठः.

एतन्मुखे हृत्कमले च वह्ने-
　　बिम्बेऽरुणं[2] रं सुमतिर्विचिन्त्य ।
संयोज्य तद्योगजवह्निनाङ्गं
　　सन्दह्य मुञ्चेदिडया बहिस्तम् ॥ ११ ॥

विमर्शिनी ।

सुमतिः शोषणदहनादिकाले तत्तदात्मयोगं[3] ध्यातुं कुशलः एतन्मुखे पिङ्गलामुखे हृत्कमले च सस्वस्तिकत्रिकोणात्मके वह्नेर्बिम्बे अरुणं रंबीजं विचिन्त्य तदुभयं संयोज्य तद्योगजवह्निना अङ्गं शरीरं संदह्य तमग्निमिडया बहिर्मुञ्चेत् ॥ ११ ॥

विवरणम् ।

एतन्मुख इति । पिङ्गलामुखे । सुमतिरिति । मूलाधारेण वायोः सुषुम्नायां प्रवेशादि चिन्तनीयम् इति सूचितम् । य(दा) द्वादशकलायोगः, तदा च शोषणे तद्वाय्वारूढं सूर्यबिम्बमपि द्वादशकलं चिन्तनीयम् । प्लवने सौधार्चिषामपि षोडशकलम् । अथवा शोषणादिषु षड्बिन्दुलाञ्छितवृत्ताकाराद्यनुसन्धानमुक्तम् । यदाहुः—"नाभेरधस्ताद् धूम्रवर्णं षड्बिन्दुलाञ्छितं वृत्ताकारं मध्यगतयंबीजं वायुमण्डलम्" इति । हृदि बन्धूकारुणं स्वस्तिकलाञ्छितत्रिकोणमध्यगतरंबीजमिति । द्वादशान्तेऽतिधवलं वृत्ताकारं मध्यगतवंबीजमिति । पूरणादिसर्वं पूर्ववदेव । अंहस्सन्दह्येति वा पाठः, प्राग्वदर्थः ॥ ११ ॥

इडामुखेऽर्काम्बुरुहे च बिम्बे
　　सौधार्चिषे वं परिचिन्त्य शुभ्रम् ।
संयोज्य तस्मात् परचित्सुधाम्बु-
　　पूरं प्रवर्षेद् भुवनाप्लवार्हम् ॥ १२ ॥

विमर्शिनी ।

इडामुखेऽर्काम्बुरुहे द्वादशान्तकमले च वृत्तात्मकचान्द्रे बिम्बे च शुभ्रं वंबीजं परिचिन्त्य संयोज्य तस्मादुभयमिलिताद् बिम्बाद् भुवनाप्लवार्हं सकलभुवनाप्लावनसमर्थं परचित्सुधाम्बुपूरं परचैतन्यामृतप्रवाहं प्रवर्षेत् ॥ १२ ॥

---

१. 'बीजेऽह' ङ. पाठः. २. 'णे' इति मूलकोशपाठः. ३. 'त्मतया ध्या' ग. पाठः

विवरणम् ।

सौधार्चिषे विम्ब इति । सुधार्चिः सोमः । भुवनाप्लवार्हमिति । जातांशस्य ब्रह्माण्डतया प्राग्भावितत्वादुक्तम् । पापपुरुषदहने तु तथा शुद्धस्य केवलजातांशस्य प्लावनं भवति । जातांशस्यैव दहने तस्य भस्मभूतस्येति बोद्धव्यम् ॥ १२ ॥

काठिन्यरन्ध्रीकरणे विधाय
स्वबीजतः सोऽहमिति ब्रुवाणः ।
आयोज्य जीवं तदुपाधितत्त्वं-
सृष्ट्यब्दवृद्ध्यादिविधिं विदध्यात् ॥ १३ ॥

विमर्शिनी ।

स्वबीजतः लं हं इति पृथिव्याकाशबीजाभ्यां काठिन्यरन्ध्रीकरणे काठिन्यकरणं सुषिरीकरणं च विधाय सोऽहमिति ब्रुवाणः सन् जीवमायोज्य हृदयं प्रापय्य तदुपाधितत्त्वसृष्ट्यब्दवृद्ध्यादिविधिं तस्य जीवस्योपाधिभूतस्य तत्त्वसमूहस्य सृष्टिसंवत्सरपरिपाकाण्डभेदादिकं च विदध्यात् । अत्रायं प्रयोगक्रमः — तालत्रयाद्यनन्तरं द्वादशप्रणवप्राणायामेन स्वयं प्रपञ्चस्वरूपो भूत्वा नाडीशोधनं रेचकादिकं च कृत्वा हंसमनुना जीवं परमात्मनि संयोज्य मूलप्राणायामेन सामरस्यं विधाय तत्त्वसंहारं शोषणाद्यं च कृत्वा सोऽहमिति जीवमायोज्य पुनस्तत्त्वसृष्टिं संवत्सरमपि पाकादिकं कुर्यादिति ॥ १३ ॥

विवरणम् ।

काठिन्यरन्ध्रीकरणे इति । तस्मिन् जलात्मनि परचिति शक्तिमात्रशेषतया प्रलीनस्य पार्थिवस्य जातांशस्य परमाण्वादिदशाक्रमेण घनतापत्तिरिह काठिन्यम् । तदन्तर्महतोऽवकाशस्य निष्पत्ती रन्ध्रीकरणम् । लंहंबीजयोर्जपेन पादाग्रमूर्ध्नोर्न्यासेन कुम्भकेन प्राग्वत् प्राणायामैर्वा कार्यमेतत् । जीवं सोहमिति ब्रुवाण आयोज्येति । द्वादशान्तपद्मतो हृदि मूलाधारे वा प्रागुक्तवैलोम्येन आयोजनमेतदुक्तम् । तदुपाधितत्त्वसृष्टीति । व्याख्यास्यमानविधिनैवैतत् । किं तु प्राग्भूतेन्द्रियतन्मात्राणां सह संहृतत्वात् सहैव सर्गोऽपि स्यादित्यवबोद्धव्यम् । आदिशब्देन अण्डभेदनमुक्तम् ॥ १३ ॥

---

१. 'त्त्वं' ग पाठः, २. 'समारस्यं' ख. पाठः

लिप्या नियम्यासुमिनाब्जमध्या-
द्याद्यर्णरूपामृतवारिधाराम् ।
स्वस्योत्तमाङ्गे परिपात्य देह-
माप्लाव्य तन्वीत तया शरीरम् ॥ १४ ॥

विमर्शिनी ।

ततो लिपिभावनां प्रस्तौति — लिप्येति । लिप्या असुं प्राणं नियम्य इनाब्जमध्याद् द्वादशान्तकमलकर्णिकायाः आद्यर्णरूपामृतवारिधाराम् अकारादिक्षकारान्ताक्षररूपामृतजलधारां स्वस्योत्तमाङ्गे स्वशरीरस्य मूर्ध्नि परिपात्य परितः पातयित्वा देहमाप्लाव्य तया लिप्या शरीरं तन्वीत, लिपिन्यासं कुर्यादित्यर्थः ॥ १४ ॥

विवरणम् ।

लिप्या नियम्यासुमिति । असुः प्राणः । इनाब्जमध्यादिति । द्वादशान्तगताधोमुखकमलमध्यगतसोमादित्यर्थः । आद्यर्णपदेन अकारादिक्षकारान्तवर्णग्रहणम् । स्वस्येति । स्वदेहात्मनः स्वहृद्गतजीवात्मनश्चेत्यभिप्रेयते । उत्तमाङ्गं शिरःस्थानम् ॥ १४ ॥

भूतानि पञ्च परमात्मनि संविलाप्य
शोषादिपञ्चकविधिं प्रविधाय जीवम् ।
आयोज्य चात्मन इमानि वियन्मुखानि
सृष्ट्वा लिपिन्यसनपश्चिममाचरेद् वा ॥ १५ ॥

विमर्शिनी ।

अथवा ततो न्यूने[१] पक्षे जीवात्मनः परमात्मयोजनानन्तरं पञ्चभूतान्यपि क्रमेण परमात्मनि संविलाप्य शोषादिपञ्चकविधिं शोषणदाहनप्लावनकाठिन्यसुषिरीकरणानि प्रविधाय जीवमायोज्य च आत्मन इमानि वियन्मुखान्याकाशादीनि सृष्ट्वा लिपिन्यसनपश्चिममाचरेत् ॥ १५ ॥

विवरणम् ।

इह प्रसङ्गान्नित्यपूजादिषु संक्षिप्तां देहशुद्धिं दर्शयति — भूतानि पञ्चेति । भूतशब्देन तन्मात्राद्यवस्थानां भूतानां ग्रहणम् । जीवमायोज्येति ।

१. 'न' ख. पाठः.

अत एव प्राग्जीवस्य द्वादशान्ते रक्षा च प्राग्वदुक्तेति ज्ञेयम् । लिपिन्यसनम्-
धिममिति । संवत्सरवृद्ध्यण्डभेदनाद्यभिप्रायम् ॥ १५ ॥

पूर्वोक्तरेचकमुखैः परमात्मभाव-
मालम्ब्य शोषदहनाप्लवनं यथोक्तम् ।
आधाय चिन्मयसुधाम्बुभिरात्मदेहं
कुर्वीत वा लिपिमयं लघुसम्प्रयोगे ॥ १६ ॥

विमर्शिनी ।

अथवा लघुसंप्रयोगे लघुक्रियायां पूर्वोक्तरेचकमुखैः 'प्रभञ्जनं पिङ्ग-
लये'त्याद्युक्तैः रेचकमुखैः परमात्मभावं पारमात्म्यमालम्ब्य आश्रित्य यथोक्तं
तथा शोषदहनाप्लवनमाधाय चिन्मयसुधाम्बुभिः चैतन्यमयामृतरसैः आत्मदेहं
स्वशरीरं लिपिप्राणायामादिना लिपिमयं कुर्वीत, प्लावनानन्तरमेव लिपिप्राणा-
यामादिकं कुर्यादित्यर्थः ॥ १६ ॥

विवरणम् ।

लघुसम्प्रयोग इति । पूर्वोक्तादपि लघुतरः समीचीनश्चैवायं प्रयोग
इति भावः ॥ १६ ॥

षड्भिर्दोस्तलपृष्ठपार्श्वयुगले व्याप्य व्यतीहारतो
ज्येष्ठाद्यङ्गुलिषु स्वरैरपि परैः सव्यापसव्यक्रमात् ।
तर्जन्यादितदन्तिमं न्यसतु पर्वाग्रेषु कादीन्[1] हल-
क्षार्णानि प्रथमायुगे युगपदङ्गानि प्रसिद्धक्रमात् ॥ १७ ॥

विमर्शिनी

लिपिन्यासमाह— षड्भिरिति । दोस्तलपृष्ठपार्श्वयुगले करयोस्तले
तत्पृष्ठे तत्पार्श्वयुगले च अकाराद्यूकारान्तैः षड्भिः स्वरैः व्यतीहारतः अन्यो-
न्यतः सव्यापसव्यक्रमात् ह्रस्वैः सव्ये दक्षिणे दीर्घैः अपसव्ये वामे च क्रमात
व्याप्य तर्जन्यादितदन्तिमं[2] तर्जन्यादितर्जन्यन्तं यथा तथा पर्वाग्रेषु पर्वस्वग्रेषु
च कादीन् सान्तान् द्वात्रिंशद्वर्णान् न्यसतु । प्रथमायुगे अङ्गुष्ठद्वये पर्वद्वयाग्रेषु
हलक्षार्णानि द्वयोरपि युगपन्न्यसतु अङ्गानि मातृकाया अङ्गानि प्रसिद्धक्रमात्
सामान्यन्यायेन च ॥ १७ ॥

---

१. 'क्षां' ग, 'का' ख. पाठः. २. 'मं र' क. पाठः.

विवरणम् ।

स्वैरेपि पैरिति ऋकारादिदशभिः। अपिशब्दाद् व्याप्येत्यनुकृष्यते । प्रथमायुगे युगपदिति । अङ्गुष्ठद्वयस्य पर्वद्वयेऽग्रे चेत्यर्थः ॥ १७ ॥

आभ्यां दोर्भ्यां स्वरस्पर्शव्यापकाख्यभिदाक्रमात् ।
आकेशादापदाम्भोजं लिप्या संव्यापयेत् तनौ ॥ १८ ॥

विमर्शिनी ।

आभ्यां दोर्भ्यां लिप्या स्वरस्पर्शव्यापकाख्यभिदाक्रमात् स्वरैः स्पर्शैः याद्यैश्च क्रमात् तनौ आकेशादापदाम्भोजं केशादारभ्य पदान्तं संव्या पयेत् ॥ १८ ॥

न्यस्येत् काननवृत्तदृक्छ्रवणनोगण्डोष्ठदन्तद्वयी-
मूर्धास्येषु कराङ्घ्रिसन्धिषु सहाग्रेषु क्रमान्मातृकाम्[1] ।
पार्श्वद्वन्द्वसपृष्ठनाभिजठरे हृत्कक्षपश्चाद्गले
सव्ये कक्षतले हृदादिकरपादान्ध्वानने मन्त्रवित् ॥ १९ ॥

विमर्शिनी ।

काननवृत्तदृक्छ्रवणनोगण्डोष्ठदन्तद्वयीमूर्धास्येषु मूर्ध्याननवृत्ते दृशोः श्रोत्रयोर्नासिकयोर्गण्डयोरूर्ध्वाधरोष्ठयोस्तथा दन्तपङ्क्त्योर्मूर्ध्न्यास्ये च, पुनः कराङ्घ्रिसन्धिषु सहाग्रेषु करपादानां सन्धिष्वग्रेषु च, पार्श्वद्वन्द्वसपृष्ठनाभिजठरे पार्श्वद्वये पृष्ठे नाभिजठरयोश्च, हृत्कक्षपश्चाद्गले हृदये दक्षकक्षे गलपृष्ठे च, सव्ये कक्षतले वामकक्षे, हृदादिकरपादा(द्याऽन्ध्वा)नने हृदयादिकरयोः पादयोर्गुह्य आनने च क्रमान्मातृकां न्यसेत् । मन्त्रविदित्यनेन 'ओं अं नमः' ओं आं नमः' इत्यादिमन्त्रयोजनं दक्षिणवामक्रमत्वं च सूचितम् ॥ १९ ॥

विवरणम् ।

न्यस्येदिति । कं शिरः द्वयीशब्दस्य दृगादिभिः सम्बन्धः । अन्धुर्गुह्यम् । मन्त्रविदिति । सर्ववर्णानां प्रणवरुद्धत्वं नमोऽन्तत्वं चोक्तम् । स्वरादिवर्गत्रयस्य व्यापकेऽपि समानमेतत् । किं च अङ्गेषु हृदयाय नमः इत्याद्याख्या जातियोगोऽपि लभ्यते ॥ १९ ॥

---

१. 'काः ।' क. पाठः. २. 'पार्श्वान गले' ग. पाठः.

अनपुंसकविषमसमस्वरषट्कयुगान्तरस्थषड्वर्गैः ।
अङ्गानि ब्रह्मा गायत्र्यृष्याद्याः सरस्वती चास्याः ॥ २० ॥

विमर्शिनी ।

अनपुंसकविषमसमस्वरषट्कयुगान्तरस्थषड्वर्गैः अनपुंसकाः ऋ ॠ ऌ ॡ इति रहिताः, विषमाः ओजस्वराः, समाः युग्मस्वराः, तेषां षड्द्वन्द्वानां मध्यस्थैः कचटतपयवर्गैरङ्गानि भवन्ति । 'अं क ख ग घ ङ आं हृदयाय नमः' इत्यादीन्यङ्गानीत्यर्थः । ब्रह्मा गायत्री सरस्वती चास्या मातृकाया ऋष्याद्याः ऋषिच्छन्दोदेवताः ॥ २० ॥

निजविहितसरण्या न्यस्य साङ्गादिकां तां
प्रजपतु लिपिमेनां विघ्नबीजादिकं च ।
तदनु पवनयामाद्यर्चनाख्यास्यमान-
क्रमत इह मनूक्ता भावना भावयेत ॥ २१ ॥

विमर्शिनी ।

निजविहितसरण्या स्वोक्तमार्गेण शुद्धाबिन्दुविसर्गादिभेदयुक्तां साङ्गा[1]दिकाम् अङ्गर्ष्यादियुक्तां तां लिपिं न्यस्य एनां प्रजपतु च, विघ्नबीजादिकं च । आदिशब्देन 'गणानां त्वे'त्यृङ्मालामन्त्रश्च गृह्यते । तदन्विह पवनयामादि अर्चनाख्यास्यमानक्रमतः पूजापटले वक्ष्यमाणेन क्रमेण मन्त्रप्राणायामादि मनूक्ता भावना भावयेत ॥ २१ ॥

विवरणम् ।

निजविहितसरण्येति । दशविधलिपिन्यासादिसम्भवे तदप्युचितमित्युक्तम् । साङ्गादिकामिते मानसपूजाद्यभिप्रायम् । तदान्विति । तदनन्तरम् । पवनयामादीति मन्त्रप्राणायामपीठन्यासादि सर्वमुक्तम् ॥ २१ ॥

अत्र सुम्भजिति विष्णुभावनां
चादधीत निजभावनोपरि ।
मङ्गपूरणमथात्मगुर्विभा
स्यार्चनानि च करोतु सर्वतः ॥ २२ ॥

---

1. 'ताङ्ग' ख. पाठः

विमर्शिनी ।

शुम्भजितीति अत्राधिवासे निजभावनोपरि स्वमन्त्रभावनानन्तरं विष्णुभावनां वैष्णवाष्टाक्षरमन्त्रोक्तभावनां चादधीत । अथ सर्वतः सर्वदेवेषु शङ्खपूरणम् आत्मगुर्विभास्यार्चनानि आत्माराधनं गुरुगणपतिपूजां च करोतु ॥

विवरणम् ।

अत्र शुम्भजितीति । ध्यानाधिवास एव नत्वन्यत्र मण्डपसंस्कारादावपीत्यर्थः । यत उक्तम्—

"स्वयं देवीमयो भूत्वा स्थापयेद् परमेश्वरीम् ।

इति । दौर्गमेव महो वैष्णवं भावयेदिति भावः । शङ्खपूरणादि सर्वं वैष्णवमेवार्थाद् भवति । सर्वत आत्मगुर्विभास्यार्चनानि चेति । सर्वदेवेष्वात्माराधनमग्रत उदग्भागे गुरुपूजां दक्षिणभागे गणपतिपूजां च करोत्वित्यर्थः ॥ २२ ॥

कृत्वा पाणितले जलं प्रणवमावर्त्याष्टशोऽथामुना
 बिम्बं प्रोक्ष्य फडन्वितेन परिरक्ष्यास्त्रत्रितालादिना ।
भूयः प्रोक्ष्य तथाभिमृश्य हृदये जप्त्वाष्टवारं ध्रुवं
 जीवव्याप्तिमिहानयेदखिलतो विद्वान् विकृष्याङ्गतः ॥ २३ ॥

विमर्शिनी ।

अथ ध्यानाधिवासविधिमाह—कृत्वेति । अथ विद्वान् तत्तत्कर्मणि तत्तद्ध्यानकुशलो गुरुः पाणितले जलं कृत्वाष्टशः प्रणवमावर्त्य फडन्वितेनामुना प्रणवेन बिम्बं प्रोक्ष्य अस्त्रत्रितालादिना अस्त्रेण तालत्रयादिना परिरक्ष्य भूयश्च प्रोक्ष्य हृदयेऽभिमृश्य स्पृष्ट्वाष्टवारं ध्रुवं जप्त्वा जीवव्याप्तिं बिम्बस्थस्य जीवस्य व्याप्तिमखिलतोऽङ्गतो विकृष्य आकृष्य इह हृदये आनयेत् ॥ २३ ॥

विवरणम् ।

फडन्वितेन अमुना प्रोक्ष्येति । फडन्तप्रणवेन भूयस्तथा प्रोक्ष्येत्यन्वयः । हृदयेऽभिमृश्याष्टवारं ध्रुवं जप्त्वेति । ध्रुवः प्रणवः । तदा प्रतिपत्तिमाह—जीवव्याप्तिमिति । अखिलतोऽङ्गतो विकृष्येहानयेदिति । कृत्स्नाद् बिम्बशरीराद् विकृष्येह हृद्यानयनमेतदुक्तम् । विद्वानिति मार्ताण्डाबरतारजापेत्याद्युक्तप्राणायामोऽपि सूचितः । यद्वा बिम्बतत्त्वस्थितिं विद्वानिति । तेन बिम्बे सर्गक्रमेण सकृत्तत्त्वन्यासोऽपि सूचितः ॥ २३ ॥

---

१. 'र्थः । दौर्ग' घ. पाठः. २. 'का' ग. पाठः.

नाडीसन्धानकृत् स्वात्मनि कुसुमयुजा दोर्युजा ब्रह्मनाड्या
तच्चैतन्यं प्लुतेन प्रणयतु मपरेणोत्क्रमय्याणुबिम्बात् ।
तारेण यस्य वायुं समरसमिदमाकल्पयेत् तत्र तस्मिन्
बिम्बे स्वोपाधितत्त्वव्रजविलयविशुद्ध्यादिकं चादधीत ॥ २४ ॥

विमर्शिनी ।

गुरुरुक्तक्रमेण स्वेन सह तद्बिम्बस्य नाडीसन्धानकृत् सन् कुसुमयुजा कुसुमयुक्तेन दोर्युजा करद्वयेन प्लुतेन मपरेण प्रणवेनाणुबिम्बात् तच्चैतन्यं ब्रह्मनाड्या सुषुम्नया उत्क्रमय्य ऊर्ध्वं नीत्वा स्वात्मनि प्रणयतु । तारेण वायुमायम्य इदं चैतन्यं तत्र स्वात्मनि समरसम् एकत्वं प्राप्तमाकल्पयेत् । तस्मिन् बिम्बे स्वोपाधितत्त्वव्रजविलयविशुद्ध्यादिकं स्वस्याश्रयभूतस्य तत्त्वसमूहस्य संहारं शोषणादिकं चादधीत ॥ २४ ॥

विवरणम् ।

नाडीसन्धानकृदिति ।

"बिम्बपिङ्गलया स्वेडा बिम्बेडा च स्वयान्यया ।
सुषुम्नया सुषुम्ना च मुखैक्यात् सन्धिमृच्छति ॥
त्रिमात्रप्रणवेनैक्यमिडापिङ्गलयोर्भवेत् ।
चतुष्षडादिमात्रेण सन्धानं स्यात् सुषुम्नयोः" ॥

इति । तच्चैतन्यं कुसुमयुजा दोर्युजा अणुबिम्बात् ब्रह्मनाड्योत्क्रमय्य प्लुतेन मपरेण स्वात्मनि प्रणयत्वित्यन्वयः । मपरः प्रणवः । उद्वासनमुद्रयायं संहारः । स्वात्मनीति । बिम्बशरीरस्य द्वादशान्तगतः परमात्मैव ह्येवं गुर्वाविष्टमन्त्रदेवतारूपेणावस्थितः तस्मिन्नित्यर्थः । तत्रेदं समरसमाकल्पयेदिति । इदं स्वात्मन्युद्वासितं बिम्बजीवचैतन्यं तेन स्वात्मना समरसं तादात्म्यापन्नं भावयेत् । स्वोपाधितत्त्वव्रजविलयविशुद्ध्यादिकं चेति । स्वशब्देन तच्चैतन्यं गृह्यते । व्रजो निचयः ॥ २४ ॥

पादाग्रनाभिहृदयाब्जशिरोधितालु-
देशस्थितानि पृथिवीप्रमुखानि पञ्च ।
तालूर्ध्वतश्च चतुरङ्गुलकादिक्लृप्त-
स्थानेषु कल्पयतु चात्र मनोमुखानि ॥ २५ ॥

१. 'चिल्लिमध्यस्थि', ख, 'चिल्लीमध्यस्थि' ज. पाठः. २. 'तालूर्ध्वकं च च' च, 'तत्त्वानि चिल्ल्युपरिषट्चतुरङ्गुकादिसंस्थानि क' क. ज. पाठः.

विमर्शिनी ।

तत् कथमित्याकाङ्क्षायामाह—पादाग्रेति । अत्र बिम्बे पादाग्रनाभिहृदयाब्जशिरोधितालुदेशस्थितानि, शिरोधिः कण्ठः, पादाग्रादितालवन्तदेशेषु स्थितानि पृथिवीप्रमुखानि पृथिव्यप्तेजोवाय्वाकाशानि पञ्चभूतानि तालूर्ध्वतः तालूपरि चतुरङ्गुलकादिक्लृप्तस्थानेषु तालूपरि चतुरङ्गुलोर्ध्वे मनः तस्मात् किञ्चिदूनोर्ध्वभागेऽहङ्कारः इति क्रमेण मनोमुखानि मनोहङ्कारबुद्ध्यादीनि वक्ष्यमाणानि च कल्पयतु ॥ २५ ॥

विवरणम् ।

तत्त्वानां संहारानुगुणतया बिम्बेऽवस्थापनमाह—पादाग्रेति । शिरोधिः कण्ठः । देशशब्दः पादाग्रादिभिः प्रत्येकं सम्बध्यते । तत्तन्मन्त्रैरेषां तत्तत्स्थानेषु न्यासः ॥ २५ ॥

**घ्राणोपस्थस्मरशरगुणाढ्यां धरित्रीं सजिह्वा-**
**पायूदन्वद्गुणमुदकमक्ष्यङ्घ्रिहव्याद्गुणाढ्यम् ।**
**तेजस्त्वग्दोर्द्विगुणसहितं मारुतं श्रोत्रवाग्भ्यां**
**युक्तं शब्दैकगुणमपि खं कल्पयेत् संजिहीर्षुः ॥ २६ ॥**

विमर्शिनी ।

कल्पनायां विशेषमाह—घ्राणोपस्थेति । सञ्जिहीर्षुः संहारेच्छायुक्तो गुरुः धरित्रीं पृथिवीं घ्राणोपस्थस्मरशरगुणाढ्यां, स्मरशराः पञ्च, घ्राणोपस्थाभ्यां शब्दस्पर्शरूपरसगन्धैः पञ्चभिर्गुणैश्च युक्तां कल्पयेत् । उदकं जलं सजिह्वापायूदन्वद्गुणं, उदन्वन्तश्चत्वारः, जिह्वापायुभ्यां शब्दस्पर्शरूपरसैश्चतुर्भिर्गुणैर्युक्तं च । तेजः अक्ष्यङ्घ्रिहव्याद्गुणाढ्यं, हव्यादस्त्रयः, चक्षुःपादाभ्यां शब्दस्पर्शरूपैस्त्रिभिर्गुणैर्युक्तं च । मारुतं वायुं त्वग्दोर्द्विगुणसहितं त्वक्पाणिभ्यां शब्दस्पर्शाभ्यां गुणाभ्यां च युक्तम् । खमाकाशं श्रोत्रवाग्भ्यां शब्दैकगुणमपि कल्पयेत् ॥ २६ ॥

विवरणम् ।

पृथिव्यादिपञ्चस्वनुक्ततत्त्वोपसंहारक्लृप्तिमाह—घ्राणेति । स्मरशराः पञ्च । गुणाः गन्धरसरूपस्पर्शशब्दाः । भूतावस्थायाममी तद्गुणा भवन्ति । [3]तत्र गन्धतन्मात्रा पृथगुपसंहर्तव्या । कारणावस्था हि स

---

१. 'स्थान', २. 'भ्रा' च. पाठः. ३. 'तेनग' घ [illegible]

भवति । अत्रेन्द्रियतन्मात्राणां भूतानुसेधेन स्ववर्गानुरोधेन वा न्यासः । तत्त्वविदित्यनेनैतत् सूचितम् । किं च तन्मात्राणां सत्त्वांशतो ज्ञानेन्द्रियाणि रजोंऽशतः कर्मेन्द्रियाणि तमोंऽशतो भूतानीत्येतदपि सूचितम् । तदनुरोधेन च घ्राणोपस्थस्परशरगुणाढ्यां धरित्रीमित्येवं क्रम आश्रितः । इह विष्णुदुर्गयोर्जातांशस्यापि यथास्वमुपसंहारो न त्वेवं शिवादिष्वेतदपि तत्त्वविदित्ये सूचितम् इति ॥ २६ ॥

पञ्च प्राञ्च्यथ पञ्चतत्त्वमनुबीजाद्यैः पृथिव्यात्मने-
हुंफट्पूर्वकमन्त्रकैः स्वगुणसङ्ख्यातो नियम्यानिलम् ।
तन्मात्रासु विलाप्य तत्त्वमनुभिस्तैर्व्याप्य संहारत-
स्तन्मात्राश्च विलापयेत् स्वजनके तत्त्वे समुक्तक्रमात् ॥ २७ ॥

विमर्शिनी ।

संहारक्रममाह — पञ्चेति । अथ प्राञ्चि प्राग्भवानि पृथिव्यप्तेजोवाय्वाकाशाख्यानि पञ्च भूतानि पञ्चतत्त्वमनुबीजाद्यैः स्वस्वपञ्चतत्त्वमन्त्राणां बीजानि आदौ युक्तैः पृथिव्यात्मनेहुंफट्पूर्वकमन्त्रकैः 'पृथिव्यात्मने हुंफट्' 'अबात्मने हुंफट्' इत्यादिमन्त्रैः स्वगुणसंख्यातः स्वस्वगुणसंख्याया अनिलं प्राणं नियम्य तन्मात्रासु स्वस्वतन्मात्रासु विलाप्य तैः संहारक्रमेण स्थितैः स्वैः स्वैः पञ्चतत्त्वमनुभिः संहारतो व्याप्य तन्मात्राः समुक्तक्रमात् स्वजनके स्वस्वकारणभूते तत्त्वे विलापयेत् ॥ २७ ॥

विवरणम् ।

अथ पृथिव्यात्मनेहुंफट्पूर्वकमन्त्रकैः स्वगुणसङ्ख्यातोऽनिलं नियम्य प्राञ्चि पञ्चतन्मात्रासु विलाप्येत्यन्वयः । ओं लां नमः पराय पृथिव्यात्मने हुं फट् इत्यादयो मन्त्राः । स्वगुणत इति । पृथिव्यादिषु पञ्च चत्वारः त्रयो द्वावेकश्च गुणाः तत्सङ्ख्यया च प्राणायामा इत्यर्थः । अनिलं नियम्येति । बिम्बे कुम्भकोऽभिप्रेतः । अत्र रेचकपूरकयोरर्थप्राप्तयोर्न नाडीनियमो नापि मात्रादिनियमः । अयं प्राणायामो भूतेन्द्रियतन्मात्राणां शोधनार्थ एव । तदुक्तम्—'उद्घाताद्यावृत्तिभिस्तानि मण्डलानि विशोध्य वा' इति । ननु कथमिह भूतधारणयैव सर्वशुद्धिसम्भव इति । भूतेन्द्रियमूलात्मकतन्मात्रान्ततयैव

१. णतः संयम्य वायुं पृथक् ।' ख. ज. पाठः. २. 'त्र', ३. 'भिः संहारवे व्यापयंश्च', ४. 'क्रमान्मन्त्रवित् ॥' क. ग. ङ. ढ. पाठः.

भूतानामनुसन्धानात्। अयमिह प्रयोगः—बिम्बपादाग्रादिनाभ्यन्तमवस्थितं पीतं चतुरश्रं पृथिवीमण्डलं विचिन्त्य तत्र कारणतया गन्धतन्मात्रं तत्कार्यतया घ्राणमुपस्थेन्द्रियं च विचिन्त्य तथा गन्धरसरूपस्पर्शशब्दगुणानपि विचिन्तयेत्। तत्र च गन्धलक्षणभूतांशस्य गन्धतन्मात्रपर्यन्ततां तद्द्वारा घ्राणोपस्थानुगतिं च विचिन्त्य रसाद्यंशानामपि निजनिजतन्मात्रपर्यन्ततां चिन्तयेत्। तत उक्तपृथिवीमन्त्रेण पञ्चवारमुक्तविधपार्थिवांशप्रधानां धारणां कुर्यात्। एवं कृते भूतेन्द्रियतन्मात्राणां शुद्धिर्भवति। एवमबादिष्वपि विज्ञेयम्। तन्मात्रासु विलाप्येति। यद्यपीह घ्राण्वि पञ्चेत्युक्तं तथाप्युभयेषामिन्द्रियाणामप्युपसंहृतत्वात् तेषामपि सहविलापनमेषितव्यम्। ततश्च धारणानन्तरं प्रणवेन गन्धतन्मात्रे तत्कार्याणां पृथिव्युपस्थघ्राणानां विलापनं भावनीयमिति। तत्त्वमनुभिरिति। तन्मात्रमात्रेऽवशिष्टे सति स्वपञ्चतत्त्वमन्त्रेण संहारव्यापकं कुर्वंस्तदपि संहरेदिति। तस्य नाभिगते तत्त्वसमुदाये तत्रापि निजकारणे रसतन्मात्रे संहारः। तत्त्वमनुभिः संहारतो व्यापयंस्तन्मात्रासु विलाप्य तास्तन्मात्राश्च विलापयेदिति वान्वयः। एवं तु व्यापकसमय एव भूतेन्द्रियग्रसनपूर्वकं तन्मात्राणां प्रलय इति। मन्त्रविदिति। पञ्चतत्त्वमन्त्राणां हुं फडन्तत्वं नमोऽन्तत्वं वा इत्याद्यप्युक्तम्॥ २७॥

तत्तद्बीजोर्ध्वसंस्थप्रणतियुतपरा यार्णवत्ताखिलेष्टा
तत्त्वावृत्तिप्रजप्तस्वमनुरभिहितैकासुयामाक्रिया च।
तत्तत्तत्त्वास्पदस्पृक् प्रचरतु पवनायाममन्त्रोक्तक्लृप्त्या
तत्स्थानाद्यूर्ध्वतत्त्वास्पदचरममपि व्यापकं दोर्युगेन॥ २८॥

विमर्शिनी।

मन्त्राणां प्राणायामादीनां च क्लृप्तिमाह—तत्तद्बीजेति। अत्र सर्वत्र तत्तद्बीजोर्ध्वसंस्थप्रणतियुतपरा यार्णवत्ता तत्तद्बीजानामूर्ध्वसंस्थिता नमोयुतपरा याक्षरवत्ता बीजोपरि 'नमः परायै'ति योजना अखिलेष्टा अत्रत्याखिलेषु मन्त्रेष्विष्टा। तत्त्वावृत्तिप्रजप्तस्वमनुः पञ्चविंशत्यावृत्तितो जप्तः स्वस्वमन्त्रः एकासुयामक्रिया प्राणायामक्रिया अभिहिता उक्ता च। अत्र संहारादिषु तत्तत्तत्त्वास्पदस्पृक् पृथिव्यादितत्तत्तत्त्वानां पादाग्राद्यास्पदं स्थानं दर्भेण स्पृशन् पवनायाममुक्तक्लृप्त्या प्रचरतु। तत्स्थानाद्यूर्ध्वतत्त्वास्पदचरमं पादाग्रादिनाभ्यन्तं नाभ्यादिहृदयान्तमित्यादितत्तत्स्थानाद्यूर्ध्वोर्ध्वपर्यन्तमपि व्यापकं दोर्युगेन प्रचरतु॥ २८॥

विवरणम् ।

अखिलेष्टेति । सर्वमन्त्रेष्विष्टा अभिमता एका अमुयामक्रियेत्येकः प्राणायामः । तत्तत्त्वास्पदस्पृगिति । तत्तत्त्वस्थानानि पादाद्यनाभीत्याद्युपदिष्टानि तानि दर्भाग्रेण संस्पृशन्नित्यर्थः । दोर्युगेन व्यापकमिति । प्रचरत्वित्यनुषङ्गः ॥ २८ ॥

विष्णौ सर्वनिवृत्तिविश्वपुरुषान् पञ्च प्रतीपक्रमा-
दन्त्याहुः परमेष्ठिनं च सचतुर्थ्यात्मानि तत्त्वानि तु ।
भूतार्णानि वियत्पदोल्लसितमज्जानि द्वितीयान्तिमा-
नन्ताद्यौज्ज्वलितानि तेषु सकलान्युक्तानि बीजानि च ॥ २९ ॥

विमर्शिनी ।

संहारक्रमेण पञ्चतत्त्वान्युद्धरति — विष्णाविति । विष्णौ अत्र संहारे तु सर्वनिवृत्तिविश्वपुरुषान् परमेष्ठिनं च प्रतीपक्रमात् संहारक्रमात् सचतुर्थ्यात्मानि चतुर्थीसहितात्मशब्दयुक्तानि पञ्चतत्त्वान्याहुः । बुधा इति शेषः । तेषु पञ्चतत्त्वमन्त्रेषु भूतार्णानि पञ्चभूतबीजार्णानि वियत्पदोल्लसितमज्जानि आकाशबीजस्थाने सम्भूतषकाराक्षरयुक्तानि । द्वितीयान्तिमानन्ताद्यौज्ज्वलितानि द्वितीय आकारः अन्तिमो विसर्जनीयः अनन्त आकारः आद्योऽकारः तत ओकारः एतैः पञ्चभिरज्भिः क्रमेण भूषितानि सकलानि बिन्दुसहितानि तेषां बीजान्युक्तानि च स्युः ॥ २९ ॥

विवरणम् ।

पञ्चेति । तत्त्वानीत्यनेन सम्बन्धः । प्रतीपक्रमादिति । प्रातिलोम्यक्रमात् । सचतुर्थ्यात्मानीति । आत्मनेपदान्तानि । वियत्पदोल्लसितमज्जानीति । हकारस्य स्थाने मज्जा षकार इति भावः । द्वितीयेनान्तिमेनानन्तेनादिना ओं इत्यमुना च अवा(ग्) ज्वलितानि दीप्तानि । यथा क्ष्वांः रीं यः, षोः । इति ॥ २९ ॥

सर्वरूपा निवृत्तिन्यथो विश्वया
पौरुषी श्रेष्ठया चापि शक्त्यात्मना ।

१. 'परतस्तत्त्वानि ङेन्तात्मना ।', २. 'षो' इति मूलकोशपाठः. ३. 'आन्यन्न ग. पाठः. ४. राः यं षों' घ. पाठः.

विष्णुतत्त्वोक्तबीजैस्तथौमांश्रितैः
संहृतौ पञ्च तत्त्वानि सुम्भद्विषि ॥ ३० ॥

विमर्शिनी ।

अथो सुम्भद्विषि संहृतौ सर्वरूपा निवृत्तिनी विश्वया युक्ता पौरुषी-श्रद्धया च सह । एताश्च शक्त्यात्मने इत्यनेन युक्ताः, तथाच औमांश्रितैः, औमिति सहितैः विष्णुतत्त्वोक्तबीजैः औंकारयुक्तैर्वैष्णवपञ्चतत्त्वोक्तबीजैर्युक्ताः ञ्चतत्त्वानि ॥ ३० ॥

विवरणम् ।

औमाश्रितैरिति । द्वितीयान्तिमाद्युक्ता वे आं स्थाने औकार एव योज्य इति भावः । शक्त्यात्मनेति । शक्त्यात्मशब्दयोग उक्तः । यद्वा शक्तिवाचकात्मशब्दयोगोऽभिप्रेतः । अस्मिन् पक्षे शक्तिशब्दो न प्रयुज्यते । यथा औं नमः पराय सर्वरूपात्मने नम इत्यादि ॥ ३० ॥

हां ह्रीं हूं हैं हौं निवृत्तिः प्रतिष्ठा
विद्या शान्तिः शान्त्यतीतात्मनेन्ताः ।
ईशे बीजानीति तत्त्वान्यपीतौ
योज्यं चैतेषां परांशे शिवार्णम् ॥ ३१ ॥

विमर्शिनी ।

ईशे अपीतौ संहारे हां हीं हूं हैं हौं इति पञ्चतत्त्वानां बीजानि । आत्मनेन्ताः आत्मने इत्यन्ते युक्ताः निवृत्तिः प्रतिष्ठा विद्या शान्तिः शान्त्यतीता च पञ्चतत्त्वानि । एतेषां परांशे बीजानन्तरगतपरायाक्षरस्थाने शिवार्णं शिवायेत्यर्णं योज्यम् ॥ ३१ ॥

विवरणम् ।

हां हीमिति । ईशे इति । अपीतौ बीजानि तत्त्वानि चेत्युपस्कारेणान्वयः । अपीतिः संहारः ॥ ३१ ॥

मूलाणूदितबीजमज्भिरसमैर्विक्लीबकैर्मेदितं
बीजं शास्तृगणेशयोः शिवहरौ तत् साजितं कीर्तितम् ।

---

१. 'मि' क. पाठः. २. 'ष' ङ. पाठः. ३. 'मि' ख घ. पाठः. ४. 'ध' ङ. पाठः. ५. 'चां स्था' घ. पाठः. ६. 'तत्त्वार्जितं' ग. पाठः.

मूलार्णानि गुहे महेशविहितान्येवैषु तत्त्वान्यथ
स्युः सद्यादिविभिन्नविष्णुविहितान्युक्तानि शर्वाच्युते ॥ ३२ ॥

विमर्शिनी ।

शास्तृगणेशयोः असमैः अयुग्मैः विक्लीबकैर्विगतनपुंसकैरज्भिर्भेदितं युक्तं मूलाणूदितबीजं मूलमन्त्रगतं बीजं पञ्चतत्त्वेषु बीजम् । शिवहरौ तद् मूलमन्त्रगतबीजं साजितं विष्णुपञ्चतत्त्वबीजैः सहितं कीर्तितम् । गुहे मूलार्णानि मूलमन्त्रस्यादित आरभ्य पञ्चाक्षराणि । एषु शास्तृगणेशशिवनारायणगुहेषु महेशविहितानि निवृत्त्यादीन्येव तत्त्वानि स्युः । अथ शर्वाच्युते सद्यादिविभिन्नविष्णुविहितानि सद्योजातादिभिर्युक्तानि विष्णुविहितानि सर्वादीनि पञ्चतत्त्वान्युक्तानि ॥ ३२ ॥

विवरणम् ।

भेदितं तदीयस्वरस्थाने योजितम् । यथा शास्तरि घृमिति बीजं तत्तः घ्रं घ्रिं घ्रुं घ्रें घ्रों इति बीजानि हरिहरे तत्साजितमिति । तदित्यु(क्ता ? क्त्वा)-भेदितमूलाणूदितबीजं यथा हं क्लां हिं वः इत्यादि । मूलार्णानि गुह इति । बकारादिनकारान्तानि पञ्चमूलार्णानि । म इत्येष वर्णस्तु क्षेत्रज्ञतत्त्वबीजतयावशेषणीयः । वक्ष्यति च 'स्वमूलषष्ठवर्णेने'त्यादि । महेशविहितान्येवेति । यथा ओं घ्रं नमः । पराय निवृत्त्यात्मने नम इत्यादि । सद्यादिविभिन्नेति । हं क्लां नमः पराय सद्योजाताय सर्वात्मने नम इति ॥ ३२ ॥

चित्ताहङ्कृतिपूर्वकेषु कवचास्त्रान्तो मनुस्तारको
हुंफट्कारयुताः स्वकीयमनवो वा वायुसंरोधने ।
प्राणायामविधिः सकृत् सकृदिह स्यान्मानसाद्यप्यये
सर्वस्मिन्निह हार्दमुद्रितविरामो व्यापके तारकः ॥ ३३ ॥

विमर्शिनी ।

अथ मनस्तत्त्वादीनां संहारविधिमाह[1] — चित्तेति । चित्ताहङ्कृतिपूर्वकेषु मनोहङ्कारबुद्धिप्राणतत्त्वेषु वायुसंरोधने प्राणायामे कवचास्त्रान्तो हुंफडन्तस्तारको मनुः 'ओं हुंफडि'ति मन्त्रः । हुंफट्कारयुताः स्वकीयमनवो

---

१. 'तिधीप्रकृत्यणुषु भां भीं भूं पृथक् चापृथग् बीजं वायुनिरोधनेऽन्न परतो वक्ष्यमाणं निजम् । प्रा' ख. ज. पाठः.

वा वं[1] नमः पराय मन आत्मने हुंफडित्यादयो वा । इह मानसाद्यप्यये मन-स्तत्त्वादीनां संहारे सकृत् सकृत् प्राणायामविधिः स्यात् । इह सर्वस्मिन् व्यापके हार्दमुद्रितविरामः 'नम' इत्यनेन लक्षितावसानस्तारकः 'ओं नम' इति मन्त्रः स्यात् ॥ २३ ॥

विवरणम् ।

कवचास्त्रान्तो मनुस्तारक इति । ओं हुं फडित्येव मन्त्र उक्तः । स्वकीयमनव इति । ओं पं नमः पराय मनआत्मने नमः इत्यादयः । मनआदीनि तु तेजोमण्डलाकाराणि चिन्तनीयानि । इह मानसाद्यप्यये स्यादित्यन्वयः । अप्ययः संहारः । हार्दमुद्रितविराम इति । नमश्शब्दा-न्वितावसानः ॥ २३ ॥

संहृत्यैवं भुवं वारि तदनल इमं मातरिश्वन्यमुं खे[2]
तच्चित्ते तत्तु गर्वे तमु धियि धियमव्याकृते तत् परस्मिन् ।
प्राणायामैः क्रियादित्रयमपि[3] निखिले संविलाप्यादिकल्पै-
र्विश्वोत्तीर्णं[4] प्रशान्तं पुरुषमपि तमानन्दरूपं विदध्यात् ॥ २४ ॥

विमर्शिनी ।

एवमुक्तप्रकारेण भुवं पृथिवीं वारि अप्सु, तदनले ता अपस्तेजसि, इमं मातरिश्वनि तेजो वायौ, अमुं खे वायुमाकाशे, तच्चित्ते आकाशं मनसि, तत्तु गर्वे मनोऽहङ्कारे, तमु धियि अहङ्कारं च बुद्धौ, धियमव्याकृते बुद्धिं प्राणतत्त्वे, तत् प्राणं परस्मिन् पुरुषाख्ये जीवतत्त्वे च क्रमेण संहृत्य आदि-कल्पैः आदिना प्रणवेन कल्पैः प्राणायामैः क्रियादित्रयं क्रियां ज्ञानमिच्छा-मपि (निखिले) संविलाप्य तं पुरुषमपि विश्वोत्तीर्णं विश्वस्मादप्युत्तीर्णं प्रशान्तं प्रकर्षेण शान्तं निर्विकारतां प्राप्तम् आनन्दरूपं केवलानन्दस्वरूपं विद ध्यात् ॥ २४ ॥

---

१. 'च' ख. पाठः. २. 'ते पुंस्यथैतत् ।' ख. ज. पाठः. ३. 'त्रितयमपि विलाप्यादिकल्पैस्ततस्तं स्वात्मानं सुप्र' इति विवरणादृतः क. पाठः ४. 'पि बुधो भावयेताखिलेषु ॥' इति विवरणादृतः क. ग., 'पि पुनः कल्पयेत् तं यथावत् ॥' ख. पाठः.

विवरणम् ।

अथेमामेव संहृतिं साधकबुद्ध्युपारोहसिद्धयेऽनुक्रामति— संहृत्यैवमिति । तमुधियीति । उकारो निपातः । धियमव्याकृत इति प्राणतत्त्वं शिवे तु गुणप्रकृतितत्त्वं चोक्तम् । तत् परस्मिन् इति । उत्तरस्मिंस्तत्त्वे । सर्वेषु जीवतत्त्वे शिव तु पुरुषतत्त्व इत्यर्थः । जीववस्तुनि सकलजीवसामान्यांशो बीजतत्त्वं बन्धमोक्षादिभागांशस्तु जीव इति भेदः । बिम्बेऽपि तत्स्थानीयः प्राणपुर्यष्टकाद्यध्यक्षो जीवांशः स्वेच्छाकल्पित इष्यते । जीवतत्त्वमेव शिवे पुरुषतत्त्वं भवति । आदिकल्पैः प्राणायामैरिति । आदिः प्रणवः । यद्वा आदयोऽकारादितदंशाः ॥ २४ ॥

अव्याकृतान्ते पुरुषादितत्त्व-
जातं विलाप्याथ शिवे परस्मिन् ।
प्राग्वत् क्रियादित्रितयं च हुत्वा
शिवे शिवं केवलमादधीत ॥ २५ ॥

विमर्शिनी ।

अथ शिवे तु अव्याकृतान्ते प्राणाख्यगुणप्रकृतितत्त्वावसाने पुरुषादितत्त्वजातं पुरुषरागादितत्त्वसमूहं क्रमेण परस्मिन् जीवे विलाप्य प्राग्वत् प्रणवप्राणायामत्रयेण क्रियादित्रितयं च हुत्वा शिवं केवलं निर्विकारं निरतिशयानन्दं चादधीत । अत्र सर्वत्रायं संहारक्रियाक्रमः — गुरुः स्वस्य लिपिन्यासादिकं मन्त्रभावानां च कृत्वा शङ्खपूरणात्माराधनगुरुगणपतिपूजानन्तरं पाणितले जलमादायाष्टशः प्रणवमावर्त्य 'ओं फडि'ति बिम्बं प्रोक्ष्य तालत्रयादि कृत्वा भूयः प्रोक्ष्य हृदयं स्पृष्ट्वा अष्टवारं प्रणवमावर्तयन् जीवव्याप्तिमेकीकृत्य नाडीसन्धानं कृत्वा पुष्पयुताभ्यां कराभ्यां तच्चैतन्यमात्मनि प्लुतप्रणवेनोद्वास्य प्रणवप्राणायामेन सामरस्यं विधाय तद्बिम्बस्य पादाभ्रनाभिहृदयकण्ठतालुघ्राणादिभिर्ज्ञानेन्द्रियैरुपस्थादिभिः कर्मेन्द्रियैश्च पञ्चचतु(स्त्रि ? स्त्रिद्व्य)क्रमेण शब्दादिगुणैः पृथग् युक्तानि पृथिव्यप्तेजोवावाकाशानि क्रमेण कल्पयित्वा स्वस्वपञ्चतत्त्वबीजाद्यैः 'नमः पराय पृथिव्यात्मने हुं फट्' इत्यादिभिर्मन्त्रैः तत्तद्वर्णस्थाने दर्भैः स्पृशन् स्वस्वगुणसंख्यातः प्राणायामान् कुर्वन् तानि भूतानि

---

१. 'च्छया क' ख. पाठः. २. 'लोमक्रमतः शिवे स्वम् । नीत्वा क्रि', ३. 'बं विलाप्य ।चे', ४. 'शुद्धतरं विदध्यात्' ख. पाठः.

तत्तन्मात्रासु विलाप्य संहारक्रमेण स्थितैः स्वस्वपञ्चतत्त्वमन्त्रैस्तत्तत्स्थानादूर्ध्व-स्थानान्तं व्यापकं कुर्वन् तन्मात्राश्च विलापयेत् । एवं पञ्चभूतानि संहृत्य ताल्वूर्ध्वभागतश्चतुरङ्गुलमितस्थानगते मनसि शब्दतन्मात्राः संहृत्य 'ओं हुं फडि'-ति सकृत् प्राणायामं कृत्वा 'ओं नम' इति व्यापयन् मनस्तदूर्ध्वगतेऽहङ्कारे एवमेव प्राणायामं व्यापकं च कुर्वन्नहङ्कारं बुद्धिं प्राणं च जीवसंज्ञे पुरुषे संहृत्य प्रणवेन त्रीन् प्राणायामान् कुर्वंस्तस्य क्रियाशक्तिं ज्ञानशक्तिमिच्छाशक्तिं च विलाप्य तमानन्दरूपं भावयेदिति सकलदेवेषु । अथ शिवे 'ह्रां नमः शिवाय पृथिव्यात्मने हुं फट्' इत्यादिभिर्मन्त्रैः प्राणायामः । 'ह्रां नमः शिवाय निवृत्त्या-त्मने नम' इत्यादयो व्यापकमन्त्राः । एवं सामान्यक्रमेण बुद्धितत्त्वान्तं संहृत्य बुद्धिं गुणप्रकृतौ, तां पुरुषे, पुरुषं रागतत्त्वे, तमशुद्धविद्यायां, तां कलायां, तां नियतितत्त्वे, तत् काले, तं मायायां, तां शुद्धविद्यायां, तामीश्वरे, तं सदाशिवे, तं शक्तौ, तां शिवे च संहृत्य प्रणवप्राणायामत्रयेण क्रियादि-त्रयमपि संहृत्य शिवं केवलानन्दस्वरूपं भावयेदिति ॥ ३५ ॥

विवरणम् ।

क्रियादित्रितयं क्रिया ज्ञानं इच्छा च । ततस्तं, पुरुषं सुप्रशान्तमपि भावयेतेत्यन्वयः । वैष्णवादिविषयमेतत् परस्मिन्नित्युक्तम् । पुरुषं प्रणवप्राणा-यामेन सुप्रशान्तावस्थं भावयेत् । यद्वा पूर्वं तत् परस्मिन्नित्युक्तमवरं पुरुषं प्रणवप्राणायामेन स्वात्मानं परं पुरुषं भावयेत् । पुनस्तं स्वात्मानं प्रणवप्राणा-यामेनैव सुप्रशान्तं स्वरूपमात्रसमवस्थितं भावयेदिति । शिवे परस्मिन्निति पूर्ववत् । शिवं केवलमिति । सुप्रशान्तावस्थमित्यर्थः ॥ ३५ ॥

ईशेशा[1]जितषण्मुखार्यगणपे संहृत्य तत्त्वानि ता-
न्येवं प्राङ् निजबीजवायुयमनैर्बिम्बे विसारे चरेत् ।
शोषप्लोषसमाप्लवान्[2] हरिकुमार्योस्तानि शोषादिभिः
शोधंशोधमनुक्रमेण परमे संयोजयेदात्मनि ॥ ३६ ॥

विमर्शिनी ।

एवं संहारमुक्त्वा शोषणादीनां क्रमभेदमाह— ईशेशेति । ईशेशा-जितषण्मुखार्यगणपे ईशादिषु पञ्चसु देवेषु तानि तत्त्वानि एवं प्राक् संहृत्य

१. 'व' ग. पाठः. २. 'प्लावनमथ कुर्याद् यथोक्तं स्वबीजैः शर्वस्कन्दादेषु हरिकुमार्योस्तु विद्वानपीतौ ॥' क. ग. घ. पाठः.

विसारे बिम्बे निजबीजवायुयमनैः क्रमेण वाय्वग्न्यमृतबीजप्राणायामैः शोष-प्लोषसमाप्लवान् शोषणदहनप्लावनानि चरेत् आचरेत् । हरिकुमार्योस्तानि भूतानि शोषादिभिः शोषणादिभिः शोधंशोधं शोधयित्वा शोधयित्वानुक्रमेण परमे आत्मनि संयोजयेत ॥ ३६ ॥

विवरणम् ।

इदानीं बिम्बे यो जातांशस्तत्संहारमाह — शोषप्लोषाप्लवनमथेति । शोषप्लोषाप्लवनमवनेरिति यथोक्तमित्यनुषङ्गः । विद्वानिति संहारयाथात्म्या-भिज्ञत्वमुक्तम् । यद्वा शिवेऽपि विष्णुवत् स्यात् संहार इति । अपीतिः संहारः ॥ ३६ ॥

शोषप्लोषाप्लवनमवनेः शोषदाहौ ततोऽपां
शोषं वह्नेस्तदनु सुषिरीकारमीरस्य कुर्यात् ।
व्योमादीनां प्रणवपवनायामतः कारणेन
स्वेन स्वेन स्वहृतिसमये भावयेत् सामरस्यम् ॥ ३७ ॥

विमर्शिनी ।

तत्प्रकारमाह — शोषप्लेति । अवनेः पृथिव्याः शोषप्लोषाप्लवनं शोषणदहनप्लावनानि कुर्यात् । ततोऽपां शोषदाहौ च । वह्नेस्तेजसः शोषं च । तदनु ईरस्य वायोः सुषिरीकरणं च । व्योमादीनामाकाशादीनां स्वहृतिसमये स्वस्वसंहारकाले प्रणवपवनायामतः प्रणवप्राणायामेन स्वस्वकारणेनैक्यभावनं चावगन्तव्यम् ॥ ३७ ॥

ततस्त्रिभिस्तपरसमीररोधनै-
रिच्छामयीं ज्ञानमयीं क्रियामयीम् ।
तिस्रोऽस्य शक्तीरनयोर्विभावयेत्
परेषु ताः प्राङ् निजसृष्ट्युपक्रमे ॥ ३८ ॥

---

१. 'थाविष्ण्वनु' ग. पाठः. २. 'ष', ३. 'प्लावनकर्मतः परम्' क. ग. पाठः.

विमर्शिनी ।

ततः स्वसृष्ट्यारम्भे अनयोः विष्णुदुर्गयोः त्रिभिः तारसमीररोधनैः प्रणवप्राणायामैः अस्य आत्मनः इच्छामयीं ज्ञानमयीं क्रियामयीं च तिस्रः शक्तीर्विभावयेत् । परेषु शिवादिषु पञ्चसु ताः तिस्रः शक्तीः निजसृष्ट्युपक्रमे निजनिजसृष्ट्यारम्भे प्राक् जगदण्डकल्पनात् पूर्वं विभावयेत् विशेषेण भावयेत् ॥ ३८ ॥

एकद्वित्रिचतुःशिलीमुखमितान् प्राणानुरोधांश्चरन्
मूर्त्यन्तैरिषुतत्त्वकैः सृजतु मूर्तीर्वासुदेवादिकाः ।
पूर्णज्ञानकृतेः प्रजापतिसमाख्यानात्तु नारायणा-
दम्भोऽपूर्वमयं सृजेत् प्रणवतो लक्ष्मीशसुम्भद्विपोः ॥ ३९ ॥

विमर्शिनी ।

लक्ष्मीशसुम्भद्विपोः मूर्त्यन्तैः वासुदेवादिमूर्त्यवसानैः इषुतत्त्वकैः पञ्चतत्त्वैः 'ओं षों नमः पराय परमेष्ठ्यात्मने नमः' इत्यादिभिः एकद्वित्रिचतुःशिलीमुखमितान् एकद्वित्रिचतुष्पञ्चसङ्ख्याकान् प्राणानुरोधान् प्रणायामांश्चरन् वासुदेवादिकाः वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धनारायणाख्याः मूर्तीः सृजतु । पूर्णज्ञानकृतेः पूर्णज्ञानं क्रिया च यस्य तस्मात् प्रजापतिसमाख्यानात् प्रजापतिनाम्नः नारायणाद् अपूर्वमयं जगत्सृष्टेः कारणभूतम् अम्भः प्रणवतः प्रणवप्राणायामेन सृजेत ॥ ३९ ॥

विवरणम् ।

अथ बिम्बे यो जातांशः तत्सर्गमभिधत्ते—एकद्वित्रीति । शिलीमुखाः शराः । मूर्त्यन्तैरिषुतत्त्वकैरिति वासुदेवाद्यवसानैः । मूर्तीरिति परमेष्ठ्यादितन्मात्राणां ग्रहणम् । तान्येव हि वासुदेवाद्यात्मकान्यपि भवन्तीति । पूर्णज्ञानकृतेरिति । पञ्चतत्त्वानां स्वातन्त्र्येच्छाज्ञानक्रिया तत्परिपूर्णावस्थाभिप्रायेणोक्तम् । यद्वा वासुदेवादिषूत्पन्नमात्रत्वे ज्ञानक्रियाभिव्यक्तिः तत्परिपूर्णत्वं च भावनीयमित्याशयेनैवमुक्तम् । प्रजापतिसमाख्यानात्त्विति । सर्वात्मतत्त्वोत्पत्त्यनन्तरं तस्य नारायणस्य ब्रह्मरूपतापि प्रणवेन प्रतिपत्तव्येत्युक्तम् । अपूर्व-

१. 'खा' ढ. पाठः.

मयमम्भः सृजेदिति । नारायणस्वायतनपृथिव्यनुगतमम्भोगर्भोदकतया व्याकुर्व-न्ननुसन्धय इत्यर्थः । सकलकर्मापूर्वसमवायात् स्वयमेवापूर्वत्वाद्वा तदम्भो-ऽपूर्वमयमित्युक्तम् ॥ ३९ ॥

तयोरपूर्वाम्भसि भूमिबीजतः
परेष्वपि प्लावनवारि भावयेत् ।
तद्बुद्बुदाभं जगदण्डमुत्थितं
भूतात्मकं तद् द्युतिमद्धिरण्मयम् ॥ ४० ॥

विमर्शिनी ।

तयोः विष्णुदुर्गयोः अपूर्वाम्भसि परेषु शिवादिपञ्चसु प्लावनवारि प्लावनजलेऽपि भूमिबीजतः पृथिवीबीजप्राणायामेन तद्बुद्बुदाभं तस्याम्भसो बुद्बुदाकारं जगदण्डमुत्थितं भावयेत् । तद् भूतात्मकं पञ्चभूतमयं द्युतिमत् कान्तिमत् हिरण्मयं च भावयेत् कल्पयेत् । भूतात्मकमित्यनेन क्वचित्पक्षे पार्थिवशक्तेरनुप्रवेशनात् पूर्वं सृष्टिक्रमात् स्वस्वपञ्चतत्त्वैर्गुणसङ्ख्यातः प्राणा-यामैस्तस्य बुद्बुदस्य पञ्चभूतात्मकत्वं सम्पाद्यमिति सूचितम् ॥ ४० ॥

विवरणम् ।

तयोरिति । हरिदुर्गयोः अपूर्वाम्भसि भूमिबीजतो जगदण्डं भावये-दित्यन्वयः । पृथिव्यां व्याक्रियैषा । पञ्चतत्वान्यव्याकृतभूतानि तेष्वपां व्याकृतावस्थागर्भोदकं पृथिव्या ब्रह्माण्डमिति बोद्धव्यम् । उत्थितमिति ।

'विचिकीर्षुर्घनीभूता क्वचिदभ्येति बिन्दुताम् ।'

इत्युदीरितरीत्योत्पन्नमिति भावः । तद्बुद्बुदाभमिति । तस्या पूर्वाम्भसानेन सद्यो निष्पत्तिमार्दवाद्युक्तम् । द्युतिमद् भास्वरम् । हिरण्मयमिति तदीयतात्का-लिकद्रव्याभिधानम् । पार्थिवस्य प्रकर्षो हि हिरण्यं भवति । पञ्चतत्त्वानां इतोऽप्यधिकतरदीप्तिमत्त्वमनेन सूचितम् । भूतात्मकमिति । भूमिर्बीजेन स्वोद्घातोपपत्त्या पञ्चप्राणायामाः स्युरित्यभिप्रायः । यद्वा तत्तद्बीजधारणोक्ता । काठिन्यरन्ध्रीकरणे चार्थात् कार्ये ॥ ४० ॥

---

१. 'व्याः' क्रि' क. पाठः ।

तदेतदण्डं प्रणवेन बिम्बं
प्रकल्प्य तेनैव निजात्मनीताम् ।
तज्जीवशक्तिं प्रतिसंक्रमय्य
सतारशक्त्या प्रणयेत् तदैक्यम् ॥ ४१ ॥

विमर्शिनी ।

पुनः प्रणवप्राणायामेन तदेतज्जगदण्डं बिम्बं प्रकल्प्य तेनैव प्लुत-प्रणवेन निजात्मनीतां गुरोः स्वस्यात्मनि प्राक् प्रापितां तज्जीवशक्तिं तस्य बिम्बस्य जीवशक्तिं प्रतिसङ्क्रमय्य प्रतियोज्य सतारशक्त्या सतारया भुवनेश्वर्या प्राणायामेन तदैक्यं तद्बिम्बेनैक्यं प्रणयेत् ॥ ४१ ॥

विवरणम् ।

तदेतदण्डमिति । अत्रापि प्रणवप्राणायामः । तज्जीवशक्तिं तस्यैव बिम्बदेहस्य जीवलक्षणां परमात्मनः शक्तिम् । प्रतिसङ्क्रमय्येति प्रागुक्त-सङ्क्रमणवैलोम्यमपि प्रतिपादितम् । अयमिह प्रयोगः — प्रथमं प्रणवप्राणा-यामेन स्वात्मतादात्म्याज्जीवशक्तिं विभक्तां विभाव्य कुसुमाञ्जलिपुटेनावाहन-मुद्रया स्वहृदयात् पूर्वसंहितसुषुम्नापथेन प्लुतप्रणवमुच्चरंस्तां बिम्बवपुषोर्हृत्कमले-ऽवस्थापयेदिति । सतारशक्त्येति ह्यभिमर्शनं प्राणायामो वक्ष्यते ॥ ४१ ॥

जीवाद्यैः सकलेषु शूलिनि शिवाद्यैर्वक्ष्यमाणक्रमात्
तत्तत्सर्गधिया नियम्य मरुतं स्वैस्तत्त्वमन्त्रैः पृथक् ।
तत्स्थं जीवमवाप्तकार्यकरणोन्मेषं विभाव्याथ तं
षष्ट्याढ्यत्रिशतध्रुवासुयमनेनाब्दोषितं भावयेत् ॥ ४२ ॥

विमर्शिनी ।

सकलेषु जीवाद्यैः जीवतत्त्वाद्यैः शूलिनि शिवाद्यैः स्वैः स्वैरखिलैस्त-त्त्वमन्त्रैर्वक्ष्यमाणक्रमात् सृष्टिक्रमेण तत्तत्सर्गधिया तत्तत्सृष्टिबुद्ध्या पृथक् मरुतं प्राणं नियम्य तत्स्थं बिम्बस्थं जीवम् अवाप्तकार्यकरणोन्मेषं प्राप्तसर्वा-वयवोन्मेषं विभाव्य अथ (तं) षष्ट्याढ्यत्रिशतध्रुवासुयमनेन षष्ट्यधिकत्रिशत-प्रणवप्राणायामेन अब्दोषितं प्राप्तसंवत्सरपरिपाकं च भावयेत् ॥ ४२ ॥

विवरणम् ।

इदानीं विशुद्धतत्त्वोत्पत्तिमपि दर्शयति—जीवाद्यैरिति । तत्तत्त्वात्पदस्र्ग-गिति संहारप्रकरणेऽभिहितत्वादिहापि तथा प्राणायामः. बिम्बे पादाग्रनाभीत्या-द्युक्तव्युत्क्रमस्थानेषु सर्गक्रमेण तत्तत्तत्त्वं सञ्चिन्त्य तत्स्पृक् प्राणमायच्छेदिति । अत्र जीवप्रतिसङ्क्रमणे तच्छक्तिं बिम्बान्तर्द्वादशान्तादिप्रदाग्रावधिसूत्ररूपेणा-नुस्यूततया विभाव्य तस्मिञ्छक्तिसूत्रे तत्त्वान्येवमुद्भावनीयानि । एतद-भिप्रायेण वा जीवशक्तिमिति शक्तिग्रहणम् । यद्वा तत्स्थं जीवमिति निर्देशा-देव बिम्बहृदये स्पृशन् प्राणायामान् विदध्यात् । तत्स्थं जीवमिति । बिम्बवपुषो हृद्देशगतजीवशक्तावेव तत्त्वेषु उत्पन्नेष्वत एव तेषु प्रलयदशातः प्रतिबुद्धेषु तत्सम्बन्धात् तस्य जीवस्य तद्विशिष्टता भावनीयेति । तथा बिम्बवपुषो देवात्मनः समुचितसकलोपभोगसमर्थता च भावनीयेति । अत्र कार्य-शब्देन लिङ्गवपुषः स्थूलवपुषश्च ग्रहणम् । तन्मात्राणां सम्भूयैकं कार्यम् । लिङ्गपञ्चभूतानां सम्भूयैकं कार्यम् । स्थूलदेहः तदुन्मेषश्च तेभ्यः तदुद्भवः करणशब्देनान्तर्बहिःकरणानां ग्रहणम् । बुद्ध्यादीन्यान्तराणि करणानि श्रोत्रा-दीनि वागादीनि च बाह्यानि । तदुन्मेषश्च तेषां तत्त्वानां सतां करणदशापत्तिः । किं च कार्यकरणानां तत्तदभिमानिदेवतानुग्रहतो निजनिजकार्यं प्रत्यप्रतिहतं सामर्थ्यमुन्मेषः । स च तज्जीवान्वयितयाभिव्यक्तो भावनीय इति । किं च तत्स्थं जीवमिति । इदानीं प्रजापतिभाविनो जीववपुषो बिम्बरूपाण्डान्तराभिन्न-वतया निष्पन्नत्वात् सर्गक्रमेण सकृत् तत्त्वन्यासोऽप्युक्तः । तथा बिम्बाभिमा-निनो देवस्य कार्याणि प्राग्वपुरधिष्ठायानुगृह्णातीत्युक्तानि सकलजनसमीहितानि । वक्ष्यति च —'लोकानुग्रहहेत्वर्थमि'त्यादि । तेषां करणं यथाधिकारं सम्पा-दनं, तत्रोन्मेषो देवस्य स्वरूपकरणवर्गसमवदाततया तत्साधकशक्तेः समभिव्य-क्तिः तद्योगितापि भावनीयेति । सर्वं चैतत् प्रणवप्राणायामादिसाध्य-मिति ॥ ४२ ॥

फट्कारान्तनिरञ्जनेन परिभिद्याण्डं स्मरेद् रोदसी
चोभे तच्छकले तदन्तरविराजन्तं[2] प्रजानां पतिम् ।
एनं विश्वजनीनमेव पुरुषं ध्यात्वा नियम्यानिलं
लिप्या न्यस्य मनूदयादिनिजपीठन्यासनिष्ठं चरेत् ॥ ४३ ॥

---

१. 'तत्त्वानामिह' क. पाठः. २. 'न्तं विराजं तथा' ज. पाठः.

विमर्शिनी।

फट्कारान्तनिरञ्जनेन फडन्तप्रणवेन अण्डं परिभिद्य अण्डभेदं कृत्वा उभे तच्छकले च रोदसी द्यावापृथिव्यौ भावयेत्। तदन्तरविराजन्तं द्यावापृथिव्योरन्तर्भागे शोभमानमेनं प्रजानां पतिं विश्वजनीनं सर्वजनहितकारिणं पुरुषमेव ध्यात्वा लिप्यानिलं नियम्य लिपिं न्यस्य मनूदयादिनिजपीठन्यासनिष्ठं पूजापटले वक्ष्यमाणक्रमेण मन्त्रोदयादिपीठन्यासान्तमाचरेत्॥

विवरणम्।

तच्छकले चोभे रोदसी स्मरेदिति। प्रणवांशैर्भूमिं दिवं च तदन्तराकाशं च स्मरेदिति भावः। तदन्तरविराजन्तमिति माधुर्यसौन्दर्यदीप्त्यादिगुणयोग उक्तः। विश्वजनीनमेवेति। सर्वजनहितम्। अनेनान्तःकरणवर्गस्यावबोधश्रवणादिलक्षणवृत्त्यभिव्यक्तिचिन्तनमप्युक्तम्। सर्गक्रमेण तत्त्वन्यासस्तु इतः प्रागेव वा स्यात्। मनूदयादीति। पूजापटले भाविरीत्येति भावः। आदिशब्दो मन्त्रप्राणायामार्थः। यद्वा मन्त्रप्राणायामो मन्त्रव्याप्तिचिन्तनं योगासनशक्त्युदय इत्येतत् सर्वमुक्तम्॥ ४३॥

मूलाणुनासुयमनं प्रविधाय तेन
व्यापय्य तारपुटितेन सुधीस्त्रिवारम्।
न्यस्यार्णतत्त्वमनुवर्णतदङ्गकानि
योगासनार्चनमपि प्रकरोतु तस्मिन्॥ ४४॥

विमर्शिनी।

मूलाणुना असुयमनं प्राणायामं प्रविधाय तारपुटितेन तेन मूलेन त्रिवारं व्यापय्य ततः अर्णतत्त्वमनुवर्णतदङ्गकानि लिपितत्त्वमन्त्राक्षरतदङ्गानि च न्यस्य योगासनार्चनमपि पीठपूजामपि तस्मिन् बिम्बे प्रकरोतु। अत्रायं सृष्टिक्रमः--शिवादिषु पञ्चसु संहारानन्तरं वाय्वग्न्यमृतबीजैः शोषणादीनि कृत्वा प्रणवप्राणायामत्रयेण शक्तित्रयं च सृजेत्। विष्णुदुर्गयोस्तु प्रागुक्तक्रमेण शोषणादिभिः सहैव संहारानन्तरं शक्तित्रयं सृष्ट्वा मूर्त्यन्तैः पञ्चतत्त्वैः स्वस्वगुणसंख्यातः प्राणायामान् कुर्वन् मूर्तीः सृष्ट्वा नारायणादपूर्वाम्भः परिभावयेत्। एवं तयोरपूर्वाम्भसि परेषु प्लावनजले च पृथिवीबीजप्राणायामेन जगदण्डं स्मृत्वा तदण्डं बिम्बं परिकल्प्य प्लुतप्रणवेन निजात्मगतां जीवशक्तिं संयोज्य प्रणवशक्तिभ्यामैक्यं परिभाव्य सर्वेषु स्वैः स्वैः सकलैस्तत्त्वैः सकृत्सकृत्

१. 'तनोतु' इति मूलकोशपाठः. २. 'मोक्ष' ख. पाठः.

प्राणायामं कुर्वंस्तस्य सर्वावयवपरिपूर्णत्वं स्मृत्वा प्रोक्तक्रमात् संवत्सरपरिपाकं च कृत्वा फडन्तप्रणवेनाण्डं भित्त्वा तच्छकले द्यावापृथिव्यौ च कल्पयित्वा तदन्तः परिपूर्णं देवं संकल्प्य लिपिप्राणायामलिपिन्यासमन्त्रोदयादिपीठन्यासान्तं विधाय मूलप्राणायामं मूलव्यापकं च कृत्वा लिपितत्त्वमन्त्राक्षराङ्गानि न्यस्य पीठपूजां च कुर्यादिति ॥ ४४ ॥

विवरणम् ।

मूलाणुनासुयमनं प्रविधाययेति । बिम्बहृद्रूपाया न्यस्तयोगासनकर्णिकाया मन्त्रदेवताया धारणेयमुक्ता । सुधीरिति । बिम्बगततत्त्वैरेव पुरुषपीठमूर्तिविभागेन प्रतिपत्त्यादिकौशलमुक्तम् । तारपुटितेन तेन त्रिवारं व्यापयेत्यन्वयः । अर्णन्यासो मूलपुटितलिपिन्यासः । तदङ्गग्रहणमायुधाद्युपलक्षणम् । योगासनार्चनमपीति । तन्न्यासक्रमेणेति भावः ॥ ४४ ॥

बिम्बे स्वमूर्तियुजि तत्र पृथक् प्रसूनै-
स्तत्त्वानि तानि मनुवित् क्रमशोऽभिवाह्य ।
व्यापय्य तत्त्वमनुना वितनोतु तेन
तेन प्रसूनयजनं सुसमाहितात्मा ॥ ४५ ॥

विमर्शिनी ।

अथ तत्त्वावाहनमाह—सुसमाहितात्मा मनुवित् तत्त्वमन्त्रविशेषज्ञः स्वयं समाहितो भूत्वा स्वमूर्तियुजि पीठपूजानन्तरं मूर्त्यावाहनं कृत्वा तत्र बिम्बे प्रसूनैस्तानि सर्वाणि तत्त्वानि क्रमशः सृष्टिक्रमेण पृथक् पृथगावाह्य तदा[1] तदा तत्तत्तत्त्वमनुना व्यापय्य तदा तदा तत्तत्तत्त्वमन्त्रेण प्रसूनयजनं पुष्पाञ्जलिं च वितनोतु ॥ ४५ ॥

विवरणम् ।

पीठन्यासपूजानन्तरं तदारूढमूर्त्यावाहनपूजामाह—बिम्बे स्वमूर्तियुजीति । कलशपटलभाविरीत्येति शेषः । स्वमूर्तिर्नारायणमूर्तिः सदाशिवमूर्तिरित्येवंविधा । सा च मन्त्रोचिताकारविरचितबिम्बलक्षणैव । तथा मन्त्रात्मदेहरूपविद्यादेहलक्षणा च स्वा मूर्तिरपरा, तद्योगिनि बिम्बे । यद्वा स्वमूर्त्योर्युक् द्वयी यत्रेति समासः, तदुभयावाहनमन्त्रक्लृप्तिर्मन्त्रविदेति सूचिता ।

---

१. 'तथा तत्त' ख. पाठः.

प्रणवोपचारमूलान्ते नारायणमूर्तौर्विद्यादेहेत्यादि योजनीयम् । सुसमाहितात्मेति तदुचितप्रतिपत्तिसूचनम् । मूर्त्यावाहनं विधाय तन्मन्त्रेण व्यापय्य मूलपुटितां मातृकां प्रसिद्धरीत्या विन्यसेत् । यद्वा आकारादियुग्मत्रयं हृदि, ऋकारादियुग्मपञ्चकं शिरोवदनहृद्गुह्यपत्सु, हसाभ्यां व्यापकं षकारमुदरे, शबलयरयान् श्रोत्रादिषु, क्षकारं शिरसि, पतवर्गवर्णान् दोर्द्वये प्रसिद्धस्थानेषु टचवर्गवर्णान् पद्द्वये, कवर्गवर्णान् युगपद् द्विबाह्वङ्गुलीषु द्विपादाङ्गुलीषु च इत्येवं लिपिन्यासः । निवृत्त्याद्येकपञ्चाशत्कलायोगेन वा सकृत् लिपिन्यासः । तदाद्य सोमसूर्याग्निकलानामाधारत्रयेऽपि न्यास उचितः । पुनरक्षराङ्गायुधन्यासः पूजा च । पुनर्विद्यादेहमावाह्य तन्मन्त्रेण व्यापय्य वक्ष्यमाणरीत्या नैजं मन्त्राध्वानं विन्यस्य पूजयेत् । अथ पृथक् प्रसूनैरित्यादिश्लोकशेषेण तत्त्वावाहनाद्युच्यते । तानि तत्त्वानीति । यानि तत्त्वानि पूर्वमुत्पादितानि तानीत्यर्थः । तेषां बिम्बे विद्यमानानामपि पुनरावाहनं तत्सान्निध्यप्रकर्षार्थम् । यद्वा तेषां तज्जीवांशान्वितानां च इह सन्निधापनमेतदभिप्रेतम् । तत्त्वानामपि तत्तत्कार्यकरं शक्तिमात्रं जीवोऽभ्युपगम्यते । मनुविदिति । तन्मन्त्रप्रयोगकल्पविद्वानित्यर्थः । प्रणवत्रयं तत्त्वमन्त्रं चोक्त्वा तत्तत्त्वपदपूर्वकमागच्छागच्छेत्यादि प्रयोज्यमिति । अथवा तत्त्वानितानीति, तत्त्वानि तेषामनितानि प्राणितानि जीवांशानीति यावत् । अनितग्रहणेन वृत्तिलाभपर्यन्ततयावाहनं सूचितम् । मनुविदिति सर्वतत्त्वेषु तत्पदपूर्वकं प्राणापानेत्यादिविशेषयोजनमुक्तम् । क्रमश इति । न्यासक्रमेणेत्यर्थः । यत्र यत्तत्त्वं पूर्वं कल्पितं जीवे शक्तिसूत्रे वा तत्र तत्तत्त्वं तस्मिंस्तदीयं जीवं चावाह्य व्यापकं विधाय ततः स्वास्पदे प्रसरणं तत्त्वस्ववृत्तिलाभं च प्रणवेनानुसन्दधीतेति । तेन तेन तत्त्वाणुनेति सम्बन्धः । प्रसूनयजनं चेति संक्षेपपूजोक्ता । हृदिस्थादिजपः सर्वावाहनेषु समानः । समाहितात्मेति । अस्यायमाशयः । पूर्वमात्मानमधिदेवतात्मकं समष्टिव्यष्टिलक्षणं सकलतत्त्वदेवताविग्रहं विभाव्य ताभिः स्वेच्छयैव निजानिजमाध्यात्मिकांशजीवलक्षणं स्वमूलाधारे हृदये वोत्पादितं स्मृत्वा ततस्तन्मन्त्रेणावाहयेत् । यद्वा तज्जीवनिचयं द्वादशान्तस्थपरमात्मन्यावेशेन विशुद्धं ततो हृदि विभाव्यावाहयेत् । यद्वा एकैकमेवं विभाव्यावाहयेदिति ॥ ४५ ॥

तत्त्वानि षट्कृतिमितानि शिवे शिवश्च
शक्तिः सदाशिवयुतेश्वरशुद्धविद्ये ।
माया च कालनियती च कलाप्यशुद्ध-
विद्या च रागपुरुषौ च गुणप्रकृत्या ॥ ४६ ॥

सबुद्ध्यहङ्कारमनांसि मात्रा-
ज्ञानक्रियार्थेन्द्रियपञ्चकानि ।
भूतानि पञ्चेति समीरितानि
तानीह मात्रादिगणान् वदामि ॥ ४७ ॥

विमर्शिनी ।

अथ तत्त्वमन्त्रानाह— तत्त्वानीति । शिवे षट्कृतिमितानि षट्त्रिंशत्संख्यानि तत्त्वानि । कानि पुनस्तानि, शिवश्च शक्तिश्च सदाशिवयुतेश्वरशुद्धविद्ये सदाशिवः ईश्वरः शुद्धविद्या च माया[1] च कालनियती च कालो नियतिश्च कला अशुद्धविद्या च रागपुरुषौ रागः पुरुषश्च गुणप्रकृत्या गुणप्रकृतिश्च सबुद्ध्यहङ्कारमनांसि बुद्धिः अहङ्कारो मनश्च मात्राज्ञानक्रियार्थेन्द्रियपञ्चकानि पञ्चतन्मात्राः ज्ञानक्रियार्थानि ज्ञानार्थानि क्रियार्थानि च पञ्चपञ्चेन्द्रियाणि पञ्च भूतानि चेति तानि तत्त्वानि समीरितानि । इह तत्त्वेषु मात्रादिगणान् वदामि ॥ ४६, ४७ ॥

विवरणम् ।

षट्कृतिमितानीति । षट्त्रिंशत् । गुणप्रकृत्येति सहायार्थे तृतीया ॥ ४६ ॥

मात्राः तन्मात्राः ॥ ४७ ॥

शब्दस्पर्शौ रूपं रसगन्धौ चापि पञ्च तन्मात्राः ।
श्रोत्रं त्वक् चक्षुरथो जिह्वा घ्राणं च बुद्धिकरणानि ॥ ४८ ॥

वाक्पाणिपादपायूपस्थाख्यानीह कर्मकरणानि ।
आकाशवायुतेजांस्यापः पृथिवी च पञ्च भूतानि ॥ ४९ ॥

---

१. 'ज्ञाना' क. पाठः.

विमर्शिनी ।

शब्दस्पर्शौ द्वौ रूपं रसगन्धौ च द्वौ एताः पञ्च तन्मात्राः । अथो श्रोत्रं त्वक् चक्षुः जिह्वा घ्राणं च बुद्धिकरणानि ज्ञानेन्द्रियाणि । वाक्पाणि-पादपायूपस्थानि पञ्च कर्मकरणानि कर्मेन्द्रियाणि । आकाशवायुतेजांसि आपः पृथिवी च पञ्च भूतानि ॥ ४८, ४९ ॥

नादं बिन्दुसदाशिवौ प्रथमतोऽतः शुद्धविद्याभिधं
तत्त्वं पञ्चममात्मतत्त्वमथ मायाकालतत्त्वे कलाम् ।
तत्त्वान्यत्र समामनन्ति नियतिं चाशुद्धविद्यां परे
रागाव्यक्तगुणात्मकान्यथ च बुद्ध्यादित्रयोविंशतिम् ॥ ५० ॥

विमर्शिनी ।

अथ परे आचार्याः अत्र प्रथमतो नादं बिन्दुसदाशिवौ च अतः शुद्धविद्याभिधं तत्त्वं पञ्चममात्मतत्त्वं मायाकालतत्त्वे मायातत्त्वं कालतत्त्वं च कलां नियतिं चाशुद्धविद्यां रागाव्यक्तगुणात्मकानि रागमव्यक्तं गुणप्रकृतिं च अथ बुद्ध्यादित्रयोविंशतिं च तत्त्वानि समामनन्ति कल्पयन्ति ॥ ५० ॥

विवरणम् ।

नाद इति । शिवशक्त्योरेव नादव्यपदेश इत्यादि सर्वमूह्यम् ॥ ५० ॥

नादः शिवे क्षादिकपश्चिमानि
शेषेषु बीजान्यथवाणुवर्णैः ।
शुद्धेषु हौं ह्रीमजपा हसौ च
पाद्यन्यतंस्त्रैगुणिके[२] त्रिदीर्घम् ॥ ५१ ॥

विमर्शिनी ।

अथ पूर्वोक्तानां तत्त्वानां बीजान्याह — नाद इति । शिवे शिव-तत्त्वे नादः प्रासादमन्त्रो बीजम् । शेषेषु शक्त्यादितत्त्वेषु क्षादिकपश्चिमानि क्षकारादिप्रातिलोम्येन ककारान्तानि बीजानि । अथवा शुद्धेषु शिवशक्ति-

१. 'पाद्यन्वितसैत्रगुणिते त्रि' च. पाठः. 'तो ह्रांमिति वाखिलेषु ॥' ख. ज. पाठः. २. 'ते' क. ख. पाठः.

दाशिवेश्वरशुद्धविद्यासु अणुवर्णैः पञ्चाक्षराक्षैरेकैकेन युक्तानि हौं ह्रीं अजपा हंस इति हसौ हकारः सकारश्च बीजानि । अन्यतो मायादिषु षादि षकारादिककारान्तानि बीजानि । त्रैगुणिके[1] गुणप्रकृत्यां तु त्रिदीर्घं दीर्घत्रययुक्तो भकारः भां भीं भूं इति ॥ ५१ ॥

विवरणम् ।

नादशिव इति । नादः प्रासादः कपश्चिमशब्देन ककारान्ताभिधानम् । अथवाणुवर्णैरिति । स्वमूलाक्षरैस्सहितानि हौमादीनि शुद्धतत्त्वेषु बीजानीत्यर्थः । यथा ओं ने .... .... भः । त्रैगुणिके त्रिदीर्घमिति । भां भीं भूं इत्येतदित्यर्थः ॥ ५१ ॥

जीवप्राणौ पुंस्प्रकृत्यन्यसंज्ञौ
बुद्ध्यादीनि स्युस्त्रयोविंशतिश्च ।
तत्त्वानीत्यन्येषु तत्त्वोन्मितानि
बीजान्येषां मादिकान्ताक्षराणि ॥ ५२ ॥

विमर्शिनी ।

अन्येषु देवेषु पुंस्प्रकृत्यन्यसंज्ञौ पुरुषः प्रकृतिश्चेत्यन्ये संज्ञे ययोस्तौ जीवप्राणौ, बुद्ध्यादीनि त्रयोविंशतिश्चेति तत्त्वोन्मितानि पञ्चविंशतिसंख्यानि तत्त्वानि स्युः । एषां तत्त्वानां मादिकान्ताक्षराणि मकाराद्यानि ककारान्तानि अक्षराणि बीजानि ॥ ५२ ॥

विवरणम् ।

तत्त्वोन्मितानीति । पञ्चविंशतिः । पूर्वं प्रुसमाहितात्मेत्यमुनैवैषामाकारचिन्तनमपि सूचितम् ।

"जीवस्तटित्प्रभः प्राण आधूम्रोध्यादि (?) तु त्रयम् ।
सितरक्तासितं मात्रा[2] अव्यक्ता धूम्रलोहिताः ॥
सितश्यामेऽप्यथ श्रोत्राद्यव्यक्तं पिङ्गलं क्रमात् ।
दीप्तं सितं चासितं च वाग्दीप्ता[3] दोस्तु पीतकम् ॥
चरणे तु सितश्यामं परे श्यामसिते क्रमात् ।
तन्मात्राभानि भूतानि स्यादारक्तं हृदम्बुजम् ॥

---

१. 'त्रिगुणे त्रि' घ. पाठः. २. 'दितन्मात्रा', ३. 'वा दी' क. पाठः.

मण्डलानि निजाभानि तन्मात्राभानि पञ्च तु ।
तत्त्वानि कोपतत्त्वं तु दहनौघसमद्युति ॥
शिवोऽव्यक्तस्ततः शक्तिर्निर्मलैव सदाशिवः ।
स्वच्छो नीलोत्पलप्रख्या विद्या धूम्रनिभा परा ॥
कालः सजलमेघाभोऽथाव्यक्ता नियतिः कला ।
नीललोहितवर्णाथाशुद्धविद्या सितेतरा ॥
पीतो रागस्तद्विवर्णः पुमानन्यत् पुरोदितम् ।

इति । निष्कलभावे सर्वं तत्तद्वर्णं खद्योतवदतिसूक्ष्मं प्रभामण्डलपरिक्षितं ध्येयमिति ॥ ५२ ॥

हृत्पुण्डरीकमितशं हंसरमितानि मण्डलान्यखिले ।
स्युः सूर्यसोमवह्न्यादीन्यर्कविकारदिक्कलावन्ति ॥ ५३ ॥

विमर्शिनी ।

'अखिले हृत्पुण्डरीकम् इतशं युक्तशंबीजं 'शं नमः पराय हृत्पुण्डरीकात्मने नमः' इत्यादि । मण्डलानि हंसरमितानि हं सं रं इति बीजैरन्वितानि सूर्यसोमवह्न्यादीनि मण्डलशब्दात् प्राक् सूर्यसोमवह्निशब्दयुक्तानि अर्कविकारदिक्कलावन्ति द्वादशषोडशदशपदसहितानि । 'हं नमः पराय सूर्यमण्डलाय द्वादशकलात्मने नमः' इत्यादयो मन्त्राः स्युरित्यर्थः ॥ ५३ ॥

विवरणम् ।

हृत्पुण्डरीकमितशमिति । प्राप्तं शंबीजम् । हंसरमितानीति । हं सं रं इति बीजं प्राप्तानि । अर्कविकारदिक्कलावन्तीति । यथा 'हं नमः पराय सूर्यमण्डलाय द्वादशकलात्मने नमः' इत्यादि ॥ ५३ ॥

प्राञ्च्येव पञ्च परमेष्ठिमुखानि विष्णौ
सेशादिकानि शिवशार्ङ्गिणि तान्यथ स्युः ।
श्रेष्ठादिकानि महिषद्विषि शान्त्यतीता-
ख्यादीनि शेषविबुधेष्विह तत्त्वकानि ॥ ५४ ॥

विमर्शिनी ।

इह सृष्टौ विष्णौ प्राञ्च्येव प्राग्भवान्येव पञ्च तत्त्वानि परमेष्ठिमुखानि 'पों नमः पराय परमेष्ठ्यात्मने नमः' इत्यादीनीति विशेषः । शिवशा-

१. 'च', २. 'कालव' ज. पाठः.

त्रिणि सेशादिकानि ईशानादियुक्तानि 'ओं हौं षौं नमः पराय ईशानाय परमेष्ठ्यात्मने नमः' इत्यादीनि । महिषद्विषि श्रेष्ठादिकानि 'षौं नमः पराय श्रेष्ठाशक्त्यात्मने नमः' इत्यादीनि । शेषविबुधेषु शिवादिषु शान्त्यतीताख्यादीनि 'ओं हौं नमः शिवाय शान्त्यतीतात्मने नमः' इत्यादीनि तत्त्वकानि स्युः ॥ ५४ ॥

विवरणम् ।

प्राञ्च्येवेति सर्वत्र सम्बध्यते ॥ ५४ ॥

साग्निमनुस्वरबिन्दुस्फुरितान्त्यार्णैकबीजमजितादौ ।
कुहचित् कोपमयं च स्यादन्ते नारसिंहमपि तत्त्वम् ॥ ५५ ॥

विमर्शिनी ।

अजितादौ कुहचिद् अन्ते अवसाने साग्निमनुस्वरबिन्दुस्फुरितान्त्यार्णैकबीजम् अग्निः रेफं मनुस्वर औकारः बिन्दुरनुस्वारः एतैः सह स्फुरितोऽन्त्यार्णः क्षकारः प्रधानबीजं यस्य 'क्ष्रौम्' इति नारसिंहं नरसिंहदेवत्यं कोपमयं कोपस्वरूपं च तत्त्वं स्यात्, कोपतत्त्वमित्यर्थः ॥ ५५ ॥

विवरणम् ।

साग्निमन्विति । क्ष्रौमित्येतदुद्धृतम् । कुहचिदिति । हरिहरे दुर्गायां च ॥ ५५ ॥

स्वमूलषष्ठवर्णेन युक्तं क्षेत्रज्ञसंज्ञितम् ।
पञ्चतत्त्वान्ततो योज्यं तत्त्वं शरवणोद्भवे ॥ ५६ ॥

विमर्शिनी ।

शरवणोद्भवे स्कन्दे सर्वत्रापि पञ्चतत्त्वान्ततः स्वमूलषष्ठवर्णेन स्वमूलस्य षष्ठाक्षरेण मकारेण युक्तं क्षेत्रज्ञसंज्ञितं तत्त्वं योज्यम् ॥ ५६ ॥

तत्त्वोपोद्बलकेन स्वकीयमहसा सुयोज्य मूलेन ।
त्रिर्व्याप्य तत्त्वकानि स्वमूलवर्णाङ्ककानि च न्यस्येत् ॥ ५७ ॥

---

१, २. 'षौं' क. पाठः. ३. 'स' ग. पाठः.

विमर्शिनी ।

तत्त्वोपोद्बलकेन तत्त्वानां सामर्थ्ययोजकेन स्वकीयमहसा स्वीयस्वीयमूलमन्त्रवीर्येण सुयोज्य मूलेन त्रिर्व्याप्य तत्त्वकानि स्वमूलवर्णाङ्कानि च न्यस्येत् ॥ ५७ ॥

विवरणम् ।

तत्त्वसमष्टेर्मूलेनावाहनमाह — तत्त्वोपोद्बलकेनेति । सुयोज्येत्यावाहनाद्यभिप्रायम् ॥ ५७ ॥

सर्वाङ्गीणं प्रकृतिचरमं बुद्धिपूर्वं त्रयं हृ-
न्मध्ये शब्दादिकगुणगणं कास्यहृद्गुह्यपत्सु ।
स्वीये स्वीये न्यसतु च पदे श्रोत्रवागादिकाक्ष-
ग्रामं व्योमादिकमपि गणं कास्यहृद्गुह्यपत्सु ॥ ५८ ॥

विमर्शिनी ।

तत्त्वन्यासमाह — सर्वाङ्गीणमिति । प्रकृतिचरमं शिवे शिवतत्त्वादिगुणप्रकृत्यन्तं त्रयोदशकं, विष्ण्वादिषु जीवप्राणौ च सर्वाङ्गीणं सर्वाङ्गव्यापकत्वेन न्यसतु । बुद्धिपूर्वं त्रयं बुद्ध्यहंकारमनांसि हृन्मध्ये, शब्दादिकगुणगणं शब्दादितन्मात्रापञ्चकं कास्यहृद्गुह्यपत्सु मूर्धाननहृदयगुह्यपादेषु श्रोत्रवागादिकाक्षग्रामं श्रोत्रादिकं वागादिकं चेन्द्रियगणं स्वीये स्वीये पदे स्थाने च व्योमादिकमपि गणं कास्यहृद्गुह्यपत्सु च न्यसतु ॥ ५८ ॥

विवरणम् ।

सर्वाङ्गीणं सर्वाङ्गव्यापकम् । प्रकृतिचरममिति । शिवे शिवादित्रयोदशानामितरेषु जीवप्राणयोश्च पुंस्प्रकृत्यन्यसंज्ञावित्युक्तयोर्ग्रहणम् । पद इति । स्थाने कर्णद्वयादौ । त्वगिन्द्रियं तु व्यापकं भवति । अक्षशब्द इन्द्रियपर्यायः ॥ ५८ ॥

हृत्पुण्डरीकादिचतुष्कमत्र
हृदीशुतत्त्वानि च कादिगानि ।
कोपाणुना व्यापकमेतदर्हे
क्षेत्रज्ञतत्त्वेन गुहे च कुर्यात् ॥ ५९ ॥

---

१. 'ष्कबुद्धिपूर्वत्रयं तानि थं' ग. ढ. पाठः. २. 'कोपादिना' ढ, 'न्यस्येदितीह्राखिलतात्त्विकोऽध्वा कोपाणुसंव्याप्त्यवधिस्तदर्हे ॥ स्वमूलमष्टाक्षरबीजकेन क्षेत्रज्ञतत्त्वेन च तत्त्वक्लृप्तौ । स्वपञ्चतत्त्वन्यसनोपरिष्टात् पञ्चानने व्यापकमादधीत ॥ गां गीं' क. ज. पाठः.

विमर्शिनी ।

अत्र तत्त्वन्यासे हृत्पुण्डरीकादिचतुष्कं हृदि न्यस्तु, इष्टतत्त्वानि पञ्च-तत्त्वानि च कादिगानि कास्यहृद्गुह्यपत्सु गतानि च । एतदर्हे विष्ण्वादौ कोपाणुना कोपतत्त्वेन व्यापकं कुर्यात् , गुहे क्षेत्रज्ञतत्त्वेन च ॥ ५९ ॥

विवरणम् ।

कादिगानीति । कास्यहृद्गुह्यपत्स्विति भावः । यद्वा कं जीवात्मतत्त्वमादत्ते धृत्वा वर्तते इति कादिशब्देन जीवाधिष्ठितं हृदयमुच्यते । तथा कादीति शिरआदिपादान्तं कृत्स्नं शरीरं, तथा कादीति कस्यादीनि पञ्चस्थानान्यपि । एवं पञ्चतत्त्वानां त्रिधा न्यास उक्तः । हृत्स्थात्मन ईश्वरभावापत्तिबुद्ध्या हृदि सूक्ष्मदेहबुद्ध्या कृत्स्नदेहव्यापकतया स्थूलदेहतापत्ति-धिया च मूर्धादिषु च न्यासः । सूक्ष्मदेहस्य हृदवच्छिन्नत्वेऽपि स्वदीप्त्या कृत्स्नदेहव्यापित्वमिष्यते । किञ्च कादिगानीति को ब्रह्मा तेन निवृत्तिपृथिवी-भूलोकानां तदधिष्ठितानां ग्रहणम् , तदादीनि सकलानि कलातत्त्वभुवनानि । वर्णपदमन्त्रोपलक्षणमेतत् कादिगानीति । सकलशब्दार्थाध्वमण्डलव्यापीनी-त्यर्थः । मनोवचव्याप्तिं स्मरन् हृदय एवं न्यसेत् । यद्वा प्रसरणमुद्रया न्यास इति । यदुक्तम्—'जीवं तमीशभावस्थं योजयेत् परमेष्ठिने'त्यादि 'वाच्यवाचक-सम्भेदविभक्ताशेषमण्डलमि'त्यादि । कोपाणुनेति । व्यापकं कुर्यादित्यन्वयः । एतदर्हे इति । हर्यादौ । एतदन्त इति वा पाठः । पञ्चतत्त्वन्यासेऽपि कृते इति । हृत्पुण्डरीकाद्यभावे तु पञ्चभूतन्यासे कृते कोपतत्त्वेन व्यापकं षडध्व-विधौ सूचितं भवति । क्षेत्रज्ञतत्त्वेन व्यापकं *गुहे विशेष इति ॥ ५९ ॥

तस्मिन् व्याससमासात्मकैर्निजैः पञ्चतन्त्रकैर्[1]मन्त्री ।
परिकल्प्य लिङ्गदेहं व्याप्य करोतु स्वमन्त्रमहितम[2]पि ॥ ६० ॥

विमर्शिनी ।

तस्मिन् तत्त्वावाहनन्यासादिभिः †कृतस्थूलाङ्गभावे देवे व्याससमा-त्मकैः व्यष्टिसमष्ट्यात्मकैः निजैः पञ्चमन्त्रैः लिङ्गदेहं सूक्ष्मदेहं परिकल्प्य आवाह्य

१. 'पञ्चतत्त्वकै' ग. ञ, ड. पाठः. २. 'मिति' च. पाठः.

* 'गुहे विशेषः' इति †'स्वकै' इति च विवरणपाठः.

व्याप्य व्यापकमन्त्रैश्च व्याप्य स्वमन्त्रमहितमपि करोतु। मन्त्रीति व्यष्टिसमष्ट्यावाहनादिमन्त्रज्ञ इत्यर्थः ॥ ६० ॥

विवरणम्।

एवं बिम्बविद्यामयवपुषोरवस्थापनमुक्त्वेदानीं तदवान्तरवपुषोः स्थूलसूक्ष्मयोः बिम्बाभिमानिजीवभोगविश्रमायतनभूतयोरवस्थापनमाह — तस्मिन्निति। व्याससमासात्मकैरिति। नानात्वेनैकत्वेन चावस्थितैः। लिङ्गदेहमिति। व्यष्टिसमष्ट्यात्मकमित्यर्थाल्लभ्यते। यद्वा पञ्चतत्त्वान्यव्याकृततन्मात्राणि व्यष्टिसमष्ट्यात्मकानि। अत एव व्यष्टिसमष्टिस्थैरात्मभिर्युक्तानि। वासुदेवादयश्च तदात्मानः। तत्त्वशक्तीनां व्यष्टिसमष्टिभावे तदात्मनामपि तथात्वापत्तिः स्यादिति। तथा चोक्तम् — 'पञ्चशक्तिभिः पञ्चात्मानः स्मृता' इति। तत्र भूतात्मनां व्यष्टित्वं तन्मात्रात्मनां समष्टित्वमित्यर्थाल्लभ्यते। गोपनार्थं व्याससमासपदोपादानम्। तानि पञ्चतत्त्वानि स्वकानि हरिहरादीनां निजनिजानि। यद्वा निजनिजचिदात्मकानि। अथवा स्वशब्देन तत्त्वात्मनां वासुदेवादीनां ग्रहणम्। स च स्वात्मपरः स्वात्मीयपरश्च गृह्यते। कशब्दश्च जीववचनः। वासुदेवादीनामेव स्वे स्वात्मीयाः प्राणादयो मनआदयश्च तेषां जीवसिद्धिनिबन्धनत्वात्, तेषां जीवाः तत्त्वानि। तथा वासुदेवादीनां जीवा अन्येतानीति भावः। कथं तत्त्वमेव जीव इति। अवस्थाभेदात् सर्वासामपि हि देवतानां स्वेच्छयैव नियन्तृनियम्यदशापरिग्रहात्। तत्र नियन्तेश्वरो नियम्यश्च जीवः। नियम्यात्मा च प्रधानाश्रयतया द्विधा स्यात्। तत्र भोक्ता प्रधानम्। तस्यात्र बिम्बे भावना जीवावाहनम्। तस्य भोगसाधनं देहेन्द्रियादिगुणः। तद्भावना त्विदं व्यष्टिसमष्ट्यावाहनमिति। ननु कथं पुनस्तत्त्वात्मनस्तदेव तत्त्वं जीव इति। नैष दोषः; देवतावस्थस्य हीतरावस्थो जीवः स्यात्। ननु कथं प्राणकरणानामपि स एव जीव इति। तस्य जीवस्य कला एव तेषां जीवास्ते सम्भूय स एव जीवः स्यादिति। एवंविधैः पञ्चतत्त्वैः तस्मिन् बिम्बे। लिङ्गदेहं परिकल्प्येति। लिङ्गदेहं च तत्र व्यष्टिभिः स्थूलदेहः समष्ट्या लिङ्गमिति। क्रमगोपनार्थमेवमभिधानम्। प्रागुक्तमातिपत्त्यावाहनादिरूपम्। मन्त्रीति तन्मन्त्राणां प्रयोगाभिज्ञत्वमुक्तम्। तत्र पञ्चतत्त्वकैरिति

---

१. 'स्तदेव' ब. पाठः.

... उक्ताः स्वकैरिति । तेषु निजनिजमूलयोगः । व्याससमासात्मका इति । ... समस्ततया च । तेषां प्रयोगः पुनः स्वकैरिति । तत्तन्मूर्तियोगस्तत्त्वेन प्राणादिपदयोगो जीवपदयोगश्चेत्यादि सर्वमुक्तम् । व्याप्येति । देहे मुखादिदेशेषु तद्व्यापकमन्त्रैर्व्यापकं लिङ्गे तु कृत्स्ने व्यापकं चोक्तम् मन्त्रीत्यनेन पुनस्तत्तन्मन्त्रेण तत्तत्स्थानेषु न्यासोऽपि सूचितः । देहे पुनस्तत्तदवयवविभावनार्थं सकृन्मातृकान्यासः, पुनर्मूलाक्षराङ्गन्यासः । लिङ्गशरीरे तु तत्त्वन्यासः । पुनर्मूलाक्षराङ्गन्यासः । स्वमन्त्रसहितमपीति । मूलाङ्गपूजनं स्वमन्त्रपूजनं चोक्तमिति । एवं तावत् बिम्बे कृत्स्नाया मूर्तेरवस्थापनमुक्तम् । अभिमान्यात्मनोऽवस्थापनं तु प्रतिष्ठाविधानवत् कर्तव्यमिति ॥ ६० ॥

तारोपचारसहितेन[1] निजेन मूले-
नावाह्य तत्र परिदर्श्य तदीयमुद्राः[2] ।
व्याप्यामुना[3] न्यसतु[4] मूलषडध्वकाद्यं
सम्पूजयेच्च कथयामि षडध्वनोऽथ ॥ ६१ ॥

विमर्शिनी ।

ततो मन्त्रावाहनं कुर्यादित्याह — तारोपचारेति । तारोपचारसहितेन निजेन मूलेनावाह्य तदीयमुद्राः आवाहनादिमुद्राः परिदर्श्य अमुना मूलेन व्याप्य मूलषडध्वकाद्यं मूलमन्त्रसम्बन्धि षडध्वकाद्यं न्यसतु । यथोक्तविधिना सम्पूजयेच्च । अथ षडध्वनः कथयामि ॥ ६१ ॥

अर्थाः कलातत्त्वजगत्स्वरूपाः[5]
शब्दास्त्रयो वर्णपदाणुरूपाः ।
एते षडध्वान इहाखिलेष्व-
थैकैः[6] स्मृतास्तत्त्वकलाक्रमात् वै ॥ ६२ ॥

विमर्शिनी ।

इहाखिलेषु कलातत्त्वजगत्स्वरूपाः कलास्तत्त्वानि भुवनानि च स्वरूपाणि येषां ते त्रयः अर्थाः अर्थात्मकाः, वर्णपदाणुरूपाः वर्णाः पदानि मन्त्राश्च स्वरूपाणि येषां ते त्रयः शब्दाः शब्दात्मकाः एते षडध्वानः स्मृताः । आचार्यैरिति शेषः । अथैकैस्तैः ते षडध्वानः तत्त्वकलाक्रमात् स्मृताः ॥ ६२ ॥

---

१. 'ह्या' ढ. पाठः. २. 'द्रां' च. ठ. पाठः. ३. 'प्या' ज. पाठः. ४ 'शु' इति मूलकोशपाठः. ५. 'स्त' ग. पाठः, 'कलपज' ज. पाठः. ६. 'कैः ते' क. पाठः.

विवरणम् ।

सिद्धायां मूर्तौ मन्त्रावाहनमाह — तारोपचारसहितेनेति । आदरार्थमियदभिधानम् । मूलषडध्वकाद्यमिति । मूलाद्यं षडध्वकाद्यं च । तत्र मूलपुटितमातृकान्यासस्तत्त्वन्यासो मूलाक्षराङ्गायुधन्यासश्च मूलाद्यमुक्तम् । षडध्वन्यासो दशावृत्त्यादिन्यासोऽङ्गायुधादिन्यासश्च षडध्वकाद्यमुक्तम् । सम्पूजयेच्चेति । न्यस्तमन्त्रैः पूजोक्ता त्रय इत्येतदार्थो इत्यत्रापि सम्बन्धनीयम् । जगच्छब्दो भुवनार्थः ॥ ६२ ॥

हौमादीशेषु तत्त्वप्रथमकथितबीजैः क्रमाच्छान्त्यतीतां
शान्तिं विद्यां प्रतिष्ठां न्यसतु च सकलाद्यात्मनेहृन्निवृत्तिम् ।
कादिस्थाने कलाध्वन्यखिलसुरवरेषु क्रमात् पञ्चकं त-
न्नादात्माद्यैर्नतेः प्राङ् नरकजिति युतं वासुदेवादिभिश्च ॥ ६३ ॥

विमर्शिनी ।

तत्र कलाध्वनि अखिलसुरवरेषु कादिस्थाने मूर्धास्यहृद्गुह्यपादेषु हौमादीशेषु तत्त्वप्रथमकथितबीजैः ईशस्य पञ्चतत्त्वेषु प्रथमं कथितैः हौं हैं हूं हीं हां इति बीजैः सह क्रमात् शान्त्यतीतां शान्तिं विद्यां प्रतिष्ठां निवृत्तिं च, सकलाद्यात्मनेहृदिति क्रियाविशेषणं, कलाशब्दादिभिरात्मने इत्यक्षरैर्हृदा नमसा च युक्तं यथा तथा न्यसतु । 'ओं हौं शान्त्यतीतकलात्मने नमः' इत्यादिभिर्मन्त्रैरित्यर्थः । नरकजिति विष्णौ तत् पञ्चकं नतेः प्राक् नमश्शब्दात् पूर्वं नादात्माद्यैः नादात्मने विश्वात्मने मकारात्मने उकारात्मने अकारात्मन इति पञ्चभिरादिमूर्तैर्वासुदेवादिभिर्युतं च न्यसतु । 'ओं हौं शान्त्यतीतकलात्मने नादात्मने वासुदेवाय नमः' इत्यादिभिरित्यर्थः ॥ ६३ ॥

विवरणम् ।

कलाध्वानंस्तावदाह — हौमादीति । प्रथमत एव कथितानि बीजानि । सकलाद्यात्मनेहृदिति क्रियाविशेषणम् । हृन्नमःशब्दः । यद्वा हौमादीनि शिवपञ्चतत्त्वानां बीजानि । तानि च प्रथमकथितयुक्तानीति प्रथमतो निजमन्त्रेषु कथितान्यक्षराणि । यथा हरिहरे हकारः । स्कन्दे वकारः । गणपतौ गकारः । शास्तरि भकारः । दुर्गायां दकारः इति । यथा हैं वैमित्यादि, शिवे त्वविशेषः । विष्णौ त्वपरो विशेषः तमाह— नादात्माद्यैरिति ॥ ६३ ॥

तत्त्वानां रसकृत्या शरकृत्या वात्र तत्त्वाध्वा
वर्णाध्वा च समिष्टः पञ्चाशद्वर्णविन्यासः ॥ ६४ ॥

विमर्शिनी ।

अत्र तत्त्वात्मनि तत्त्वानां रसकृत्या षट्त्रिंशता शरकृत्या पञ्चविंशत्या वा, शिवे चेत् षट्त्रिंशता इतरेषु चेत् पञ्चविंशत्या, तत्त्वाध्वा समिष्टः । मातृकायाः पञ्चाशद्वर्णविन्यासो वर्णाध्वा च ॥ ६४ ॥

विवरणम् ।

अथ तत्त्वाध्वा स प्रागुक्त एवेत्याह — तत्त्वानामिति । हृत्पुण्डरीकादिशेषस्य अर्थान्निवृत्तिः । चतुर्थमपि वर्णाध्वानं प्रागुक्तत्वादेव श्लोकशेषेणाह — वर्णाध्वा चेति । अङ्घ्र्यादीनां अर्थान्निवृत्तिः ॥ ६४ ॥

गां गीं गूं गणराजि वह्निभुवि वां वीं वूं प्रभावल्लभे
ग्रां ग्रीं ग्रूमिति वर्णकैर्मपरजैरीशेऽखिले वाथ तैः ।
व्याप्त्या न्यस्यतु भूर्भुवः स्वरिति मन्त्रानत्र लोकात्मने
हृद्युक्तांश्चरणान्तराधिवदनेष्वध्वैष लोकात्मकः ॥ ६५ ॥

विमर्शिनी ।

भुवनाध्वानमाह — गां गीमिति । गणराजि गां गीं गूं इति, वह्निभुवि वां वीं वूं इति, प्रभावल्लभे ग्रां ग्रीं ग्रूं इति, ईशे मपरजैः प्रणवस्याकारोकारमकारैः, अथवा अखिले तैर्वर्णकैरक्षरैः बीजैः सह लोकात्मनेहृद्युक्तान् लोकात्मने नम इति युक्तान् भूर्भुवःस्वरिति मन्त्रान् 'ओं अं भूर्लोकात्मने नम इत्यादिमन्त्रान् चरणान्तराधिवदनेषु व्याप्त्या पादादिकट्यन्तं तदादिकण्ठान्तं तदादिमूर्धान्तं न व्याप्य न्यस्यतु । एष लोकात्मकोऽध्वा ॥ ६५ ॥

विवरणम् ।

भुवनाध्वानमाह — गां गीं गूं गणराजीति । वह्निभुवि स्कन्दे[1] । मपरः प्रणवः अन्तराधिर्मध्योद्देशः व्याप्त्येति । संहारव्यापकेन सर्गव्यापकेन वेति भावः ॥ ६५ ॥

---

१. 'वह्निभूः स्कन्दः ।' ख. पाठः

न्यस्येत् कटिद्व्यूरुसजानुजङ्घा-
गुल्फाङ्गुलीपादतलेष्ववविभ्याम् ।
तथा सुनिभ्यां च महारसाभ्यां
तलानि पातालमपि क्रमेण ॥ ६६ ॥

भूरादिसत्यचरमानपि सप्तलोका-
नाधारनाभिहृदयेषु गलास्ययोश्च ।
मध्येभ्रु मूर्धनि च विन्यसतु द्विसप्त-
लोकाध्वकोऽयमजिते क्वचिदन्यतश्च ॥ ६७ ॥

विमर्शिनी ।

अजिते अन्यतश्च दुर्गादिषु क्वचित् कटिद्व्यूरुसजानुजङ्घागुल्फाङ्गुली-पादतलेषु कट्यादिसप्तस्थानेषु सप्ततलानि न्यसेत् । अविभ्यां सह 'अतलाय नमः' 'वितलाय नमः' तथा सुनिभ्यां च 'सुतलाय नमः' 'नितलाय नमः' महारसाभ्यां 'महातलाय नमः' 'रसातलाय नमः' पातालमपि 'पातालाय नमः' इति क्रमेणेत्यर्थः । पुनराधारनाभिहृदयेषु गलास्ययोश्च मध्येभ्रु भ्रूमध्ये मूर्धनि च भूरादिसत्यचरमान् सप्तलोकानपि विन्यसतु । अयं द्विसप्तलोकाध्वकः चतुर्दशलोकाध्वा उदितः ॥ ६६, ६७ ॥

विवरणम् ।

न्यस्येदिति । अतलाय नमः इत्यादि । भूर्लोकाय नम इत्यादि । मध्येभ्रु इति भ्रूमध्ये । क्वचिदन्यतश्चेति दुर्गायां हरिहरे च वर्णाध्वोक्तः ॥ ६७ ॥

*स्वस्वमूलाणुपुटितैर्मातृकार्णैः प्रविन्यसेत् ।
यथास्थानमशेषेषु वर्णाध्वायमिहोदितः ॥ ६८ ॥

---

१. 'भिहितो विशेषात् ॥' ख. पाठः. २. 'ध्व ॥ पुरी' क. पाठः.

---

* अस्य श्लोकस्य व्याख्या मातृकासु नोपलभ्यते ।

तुरीयपूर्वाणि हरावुमेशे
व्योमाणुजातानि निसुम्भहन्त्याम् ।
जातादिजातानि पदाध्वनि स्युः
पदानि शेषेषु जिनार्णजानि ॥ ६९ ॥

विमर्शिनी

पुनरुक्तवर्णाध्वानन्तरं पदाध्वानमाह — तुरीयपूर्वाणीति । पदाध्वनि हरौ तुरीयपूर्वाणि, उमेशे व्योमाणुजातानि, निसुम्भहन्त्र्यां जातादिजातानि 'जातवेदसे सुनवामे'त्यस्माज्जातानि, शेषेषु जिनार्णजानि निजनिजगायत्री-सम्भूतानि पदानि स्युः ॥ ६९ ॥

विवरणम् ।

अथ पदाध्वोच्यते— तुरीयपूर्वाणीति । व्योमाणुः व्योमव्यापी मन्त्रः । जातादि जातवेदस इति मन्त्रः । पदानीति । जीवपरमात्मशक्तिमपरम् ॥ ६९ ॥

सात्माष्टाक्षरवर्णयुक् चरणतः कट्या हृदः कण्ठतो
जाग्रत्स्वप्नसुषुप्तिभिः सह तुरीयेणापि युक्तं क्रमात् ।
न्यसेद् व्याप्य पदात्मनेर्णमनिरुद्धाद्यैश्चतुर्थी*नमो-
निष्ठैश्चेति लये तुरीयमनुपूर्वश्चोदयेऽयं क्रमः ॥ ७० ॥

विमर्शिनी ।

उक्तमेतद् विवृणोति — सात्माष्टाक्षरेत्यादिना । अत्र पदात्मनेर्णमिति विशेष्यपदम् । सात्माष्टाक्षरवर्णयुक्, 'ओं ह्रीं हंसः सोऽहं स्वाहा' इत्यात्माष्टाक्षरमन्त्रः, तस्य वर्णानां युग्मियुग्मैः सहितं, जाग्रत्स्वप्नसुषुप्तिभिः सह तुरीयेणापि च युक्तम्, चतुर्थीनमोनिष्ठैः चतुर्थ्येकवचननमोन्तैः अनिरुद्धाद्यैः अनिरुद्धप्रद्युम्नसङ्कर्षणवासुदेवैः सह पदात्मनेर्णं 'ओं ह्रीं जाग्रत्पदात्मने अनिरुद्धाय नमः' इत्यादिकं चरणतः कट्यन्तं, कट्या हृदन्तं, हृदः कण्ठान्तं, कण्ठतो मूर्धान्तं च क्रमाद् व्याप्य न्यस्येद् इति लये संहारन्यासे । उदये सृष्टौ तु तुरीयमनुपूर्वश्चायं क्रमः स्यात् ॥ ७० ॥

---

१. 'हरौ तुरीयादिपदान्युमेशे' ख. ग. पाठः. २. 'जातान जातानि' च. पाठः.
३. 'पादाज्जीवपरात्मशक्तिमपरं क' क. ग. ञ. ढ. पाठः.

---

* नमोयुक्तैरिति विवरणटीका पाठः.

विवरणम् ।

जाग्रत्स्वप्नसुषुप्तिभिस्तुरीयेणापि पदात्मनेऽर्णमनिरुद्धाद्यैश्चतुर्थीनमोयुक्तैरपि च क्रमाद्युक्तम् । पादात् कट्या हृदः कण्ठतश्च व्याप्य न्यसेदिति योजना । अत्र जीवपरात्मशक्तिमपराणीति चत्वारि पदान्युक्तानि । हंसस्सोऽहं ह्रीं ओं इति । यथा ओं हंसः जाग्रत्परमात्मने अनिरुद्धाय नमः इत्यादि । पादादिति । पादाग्रात् कटिपर्यन्तं व्याप्य न्यसेत् । यद्वा कटित आपादाग्राद्व्याप्य न्यसेत् । एवमुत्तरेष्वपि द्रष्टव्यम् । तुरीयमनुपूर्वञ्चेति । एतदभिप्रायेणैव च प्राक् तुरीयपूर्वाणीत्युक्तम् ॥ ७० ॥

के प्राच्यादिदिशासु फालचिबुकदृक्छुन्नःकपोलास्यके ।[1]
कास्यात्मान्धुपदद्वयेषु करपत्सन्ध्यग्रशाखासु च ।
वामे कश्रवणांसपार्श्वकटिषु व्युत्क्रामतोऽन्यत्र दोः-
पत्सूर्वोर्नसि के च दोर्युजि पदैर्व्योमाणुजैर्विन्यसेत् ॥ ७१ ॥[2]

विमर्शिनी ।

शिवे व्योमाणुजैः महाव्योमव्यापिमन्त्रजातैः पदैः के मूर्धनि प्राच्यादिदिशासु शिरसः प्रागादिदिक्षु फालचिबुकदृक्छुन्नःकपोलास्यके फाले चिबुके दृशोः श्रवणयोर्नसो कपोलयोरास्यके वक्त्रे च कास्यात्मान्धुपदद्वयेषु मूर्धास्यहृदयगुह्यपादद्वयेषु करपत्सन्ध्यग्रशाखासु च करयोः पदयोश्च सन्धिष्वग्रेषु शाखासु वामे वामभागे कश्रवणांसपार्श्वकटिषु पञ्चसु अन्यत्र दक्षिणे व्युत्क्रामतः कटिपार्श्वांसश्रवणशिरस्सु दोःपत्सु करद्वये पदद्वये च ऊर्वोः नसि के च दोर्युजि करयोश्च विन्यसेत् ॥ ७१ ॥

विवरणम् ।

के प्राच्यादिदिशास्विति । कं मूर्धा । प्राच्यादिदिशाः शिरोऽपेक्षयैव ताश्च चतस्रो गृह्यन्ते । श्रुच्छब्दः श्रोत्रार्थः, नःशब्दश्च नासिकार्थः । अन्धुर्गुह्यम् । व्युत्क्रामतोऽन्यत्रेति । दक्षिणे कटिपार्श्वांसश्रवणमूर्धस्वित्यर्थः ॥ ७१ ॥

---

१. 'स' ज. पाठः. २. 'मूर्ध्नि द्रोण्णि च प' ख पाठः.

मूर्धालिकाक्षियुगकर्णयुगोष्ठजिह्वा-
कण्ठेषु कक्षहृदि कुक्षिकटीतटे च ।
आद्यापदानि सशिखोरुसजानुजङ्घा-
पादेषु विन्यसतु मन्त्रितमः[1] क्रमेण ॥ ७२ ॥

विमर्शिनी ।

अथ दुर्गायां मन्त्रितमः त्रिष्टुभः पदच्छेदे प्रणवनमसोर्योजने च कुशलः आद्यापदानि त्रिष्टुभः पदानि क्रमेण मूर्धालिकाक्षियुगकर्णयुगोष्ठजिह्वाकण्ठेषु मूर्ध्नि फाले नेत्रयोः कर्णयोरोष्ठजिह्वाकण्ठेषु नव पदानि, कक्षहृदि कुक्षिकटीतटे च चत्वारि, सशिखोरुसजानुजङ्घापादेषु पञ्च इत्यष्टादशपदानि विन्यसतु ॥ ७२ ॥

विवरणम् ।

आद्यापदानीति । जातवेदस इत्यस्याः पदानि । अत्राक्षियुगकर्ण-युगेति पृथक् स्थानाभिप्रायम् । मन्त्रितम इति । नवैवेत्येकं पदमिति सूचितम् । यद्वा प्रणवपुटितत्वं नमोऽन्तत्वं च सर्वत्र समानमित्युक्तम् ॥ ७२ ॥

के[2] फालदेशे चिबुकण्ठनाभावूरुद्वये जानुपदद्वये च ।
न्यसेत् पदान्यष्ट यथाक्रमेण तत्तज्जिनार्णाणुसमुद्भवानि ॥७३॥

विमर्शिनी ।

सर्वेषु तत्तज्जिनार्णाणुसमुद्भवानि तस्य तस्य गायत्रीसम्भूतानि अष्ट पदानि के फालदेशे मुखकण्ठनाभिषु ऊरुद्वये जानुद्वये पादद्वये यथाक्रमेण न्यस्येत् ॥ ७२ ॥

कालिकपुष्करकर्णेष्वास्यगलांसात्मनाभिगुह्येषु ।
जानुद्वये[3]ऽङ्घ्रिपृष्ठे ककुदि गणानां पदैर्न्यसेद् गणपे ॥ ७४ ॥

---

१. 'मन्त्रमतः क्र' च. ढ. पाठः. २. 'मुर्ध्नीक्षणास्ये हृदि नाभिदेशे गुह्याद्वये जा' ख. पाठः. ३. 'ये' इति मूलकोशपाठः.

विमर्शिनी ।

गणपे 'गणानां त्वे'त्यृचः सप्तदशपदैः। कालिकपुष्करकर्णेषु मूर्ध्नि ललाटे शुण्डायां च कर्णयोश्च आस्यगलांसात्मनाभिगुह्येषु आनने कण्ठे अंसयोर्हृदये नाभौ गुह्ये च जानुद्वयाङ्घ्रिपृष्ठे. जानुद्वयेति द्वयशब्दप्रयोगादेकमेव स्थानं, पुनरङ्घ्र्योः पृष्ठे च ककुदि च क्रमेण न्यसेत ॥ ७४ ॥

विवरणम् ।

गणानां पदैरिति । प्रागनुद्देशादयं विकल्प इति बोद्धव्यम् । ब्रह्मणस्पत इति पदद्वयतया सप्तदश पदानि । जानुद्वयमिति स्थानैकत्वमुक्तम् ॥ ७४ ॥

मन्त्राध्वा पौरुषैः स्यान्मुरजिति गिरिशे पञ्चभिर्ब्रह्मभिस्तैः
शार्ङ्गीशे जातपूर्वैर्महिषजिति तमर्वन्तमाद्यैः कुमारे ।
भूतेशे यात ऊत्यादिभिरथ गणराजे गणाना[2]मृचाथो
गायत्र्या मूर्तिमन्त्रैरपि पुरमुरजित्पूर्वकेषु स्वकीयैः ॥ ७५ ॥

विमर्शिनी ।

मन्त्राध्वानमाह — मन्त्राध्वेति । मुरजिति पौरुषैः पुरुषसूक्तस्य ऋग्भिर्मन्त्राध्वा स्यात् । गिरिशे पञ्चभिर्ब्रह्मभिः, शार्ङ्गीशे तैः पञ्चब्रह्मभिः, महिषजिति जातपूर्वैः 'जातवेदस' इत्यादिपञ्चदुर्गाभिः, कुमारे तमर्वन्तमाद्यैः 'तमर्वन्तमि'त्यादिपञ्चभिः ऋग्भिः, भूतेशे 'यात ऊत्या'दिभिः पञ्चभिः ऋग्भिः, अथ गणराजे 'गणानामृ'चा, पुरमुरजित्पूर्वकेषु शिवनारायणादिषु गायत्र्या स्वस्वगायत्र्या स्वकीयैर्मूर्तिमन्त्रैरपि मन्त्राध्वा स्यात् ॥ ७५ ॥

विवरणम् ।

मन्त्राध्वानमाह — मन्त्राध्वेति । पौरुषैः पुरुषसूक्तमन्त्रैः । तैः शार्ङ्गीश इति । पौरुषैर्ब्रह्मभिश्चेत्यर्थः । अयमेव च तत्र क्रमः । जातपूर्वैरित्यादिषु पञ्चभिरित्यनुवर्तनीयम् ॥ ७५ ॥

वामाङ्गाद्यं करचरणजानूरुयुग्मेषु नाभौ
हृत्कण्ठांसद्वितयवदनाक्ष्युत्तमाङ्गेषु मन्त्री ।
पुंसूक्तोत्थैर्न्यसतु मनुभिः संहृतौ शीर्षपूर्वं
सृष्टौ नाभिप्रभृतिहृदयान्तं स्थितौ च क्रमेण ॥ ७६ ॥

---

१. 'शे जात' ख. ग. ङ. पाठः. २. 'नां पुरोगैर्गाय' क. ग. पाठः.

विमर्शिनी ।

तद् विवृणोति—वामाङ्गाद्यमित्यादिभिः । पुंसूक्तोत्थैः पुरुषसूक्तभवैः षोडशमन्त्रैः संहृतौ संहारन्यासे करचरणजानूरुयुग्मेष्वष्टसु नाभौ हृत्कण्ठांसद्वितयवदनाक्ष्युत्तमाङ्गेष्वष्टसु च, तत्राक्षिद्वये युगपदेव, वामाङ्गाद्यं सर्वत्र वामदक्षिणक्रमेण न्यसतु । सृष्टौ शीर्षपूर्वं मूर्धादिवामकरान्तं, स्थितौ नाभिप्रभृतिहृदयान्तं च । मन्त्री क्रमेणेत्याभ्यां त्रिष्वपि न्यासेषु सहस्रशीर्षादिक्रमेणैव न्यास इति सूचितम् । तथाहि ऋग्विधाने —

"प्रथमां वामहस्ते तु द्वितीयां दक्षिणे तथा ।"

इत्यादि । संहारेऽपि तथा विधानात् ॥ ७६ ॥

विवरणम् ।

वामाङ्गाद्यमिति । करचरणाद्यङ्गेषु वामदक्षिणक्रमेण न्यास उक्तः । उत्तमाङ्गं शिरः । नाभिप्रभृतिहृदयान्तं स्थितौ चेति । नाभ्यादिवामकरान्तं शिरआदिहृदयान्तं चेत्यर्थः । मन्त्रीति संहारे "यज्ञेन यज्ञमि' त्यारभ्य इत्याद्युक्तम् ॥ ७६ ॥

न्यस्येन्निजान् वैदिकपञ्चमन्त्रान्
काख्यात्मगुह्याङ्घ्रियुगेष्वशेषे ।
केन्द्रार्किसोमाप्यमुखेष्वपीशा-[2]
नादीञ्छिवेऽङ्गुष्ठमुखाङ्गुलीभिः ॥ ७७ ॥

विमर्शिनी ।

अशेषे सर्वदेवेषु निजान् निजान् वैदिकपञ्चमन्त्रान् काख्यात्मगुह्याङ्घ्रियुगेषु मूर्धाननहृदयगुह्यपादेषु न्यसेत् । शिवे एवं सूत्रन्यासानन्तरं केन्द्रार्किसोमाप्यमुखेषु ऊर्ध्वप्राग्याम्यसौम्यपश्चिममुखेष्वपि अङ्गुष्ठमुखाङ्गुलीभिः ईशानादीनपि न्यसेत् ॥ ७७ ॥

विवरणम् ।

अशेषे इति दुर्गादिषु । अत्र विशेषमाह — केन्द्रेति । ब्रह्मेन्द्रयमसोमवरुणदिङ्मुखेष्वित्यर्थः । अङ्गुष्ठमुखाङ्गुलीभिरिति सूत्रन्यासेऽपि समानम् । केवलाभिरङ्गुलीभिरयं न्यासः । यद्वा अङ्गुष्ठे तर्जन्युपग्रहः । तर्जन्यादिष्वङ्गुष्ठोपग्रहः ॥ ७७ ॥

---

१. 'अङ्गेष्विति' क, २. 'ऐन्द्रार्कि' ज, ३. 'हः ॥ ७७ ॥' ग. पाठः.

दिक्षु प्राग्याम्यवारीड्वसुपनिजभुवामैन्द्रवारार्किराज्ञां
हृद्ग्रीवांसद्वयीनाभ्युदरचरमवक्षस्सु गुह्याण्डयोश्च ।
सोर्वोर्जान्वोः सजङ्घास्फिगुभयकटिपार्श्वेषु पद्दोस्तलेषु
घ्राणे कंबाहुयुग्मे न्यसतु च मनुवित् तत्कलाः स्वाङ्गुलीभिः ॥

विमर्शिनी ।

अथ मनुवित् द्वादशे पटले 'मातङ्गोरगविश्वे'त्यादिवक्ष्यमाणश्लोकभेदिताः कलाः शशिन्यादिशक्तीश्च जानन् तत्कलाः ईशानादिपञ्चब्रह्मभवाः कलाः अष्टात्रिंशत्कलाः स्वाङ्गुलीभिः ईशानादीनामङ्गुष्ठादिस्वस्वाङ्गुलीभिः प्राग्याम्यवारीड्वसुपनिजभुवां वारीड् वरुणः वसुपो वैश्रवणः निजभूर्ब्रह्मा शिरसः प्राग्याम्यप्रतीच्योदीच्योर्ध्वदिक्षु ईशानकलाः पञ्च, ऐन्द्रवारार्किराज्ञां वार् वरुणः आर्किर्यमः राजा सोमः इन्द्रवरुणयमसोमानां दिक्षु स्थितेषु वक्त्रेषु तत्पुरुषकलाश्चतस्रः, हृद्ग्रीवांसद्वयीनाभ्युदरचरमवक्षस्सु चरमः पृष्ठभागः एतेष्वघोरकला अष्टौ, गुह्याण्डयोश्च सोर्वोर्जान्वोः ऊरुद्वये जानुद्वये सजङ्घास्फिगुभयकटिपार्श्वेषु वामकलास्त्रयोदश, पद्दोस्तलेषु पादकरयोश्चतुर्षु तलेषु घ्राण इत्येकस्मिन् स्थाने कंबाहुयुग्मे मूर्धनि बाह्वोश्च सद्योजातकला अष्टौ च एवमष्टात्रिंशत्कलाः न्यसतु ॥ ७८ ॥

विवरणम् ।

शैवे तत्कलान्यासमप्याह — दिक्ष्विति । वारीड् वरुणः । वसुपो धनदः । निजभूर्ब्रह्मा । वार्जलं वरुण एव । आर्किर्यमः । राजा सोमः । अत्र दिक्ष्वित्यनुषङ्गः । शिरसः पञ्चदिक्षु ईशानकलाः, मुखस्य चतुर्दिक्षु तत्पुरुषकला इति ज्ञेयम् । चरमं पृष्ठम् । उभयकटीत्येकं स्थानम् । मनुविदिति कलानां विभागवित्त्वमुक्तम् । स्वाङ्गुलीभिरिति । अङ्गुष्ठेन ईशानकला इत्याद्युक्तम् । मनुविदिति दुर्गादिषु पञ्च दुर्गादीनामप्येवं विभागेन कलान्यासोऽपि वा सूचितः । यद्वा सर्वकलानां प्रणवरुद्धत्वादिकमुक्तम् । मन्त्रविदित्यपि तथा ॥ ७८ ॥

भ्रूमध्ये वाथ मूर्ध्नि वेति तृतीयपादस्य स्थानविकल्पः ॥

---

१. 'मिं' ग, २. 'ऊ' घ. ङ. म. ढ. पाठः. ३. 'भिः ॥ न्यस्येत् तत्तज्जिनार्णस्य त्रीन् पादान् मन्त्रवित् क्रमात् । मूलाधारे च हृदये भ्रूमध्ये वाथ मूर्ध्नि वा ॥ न्यस्त इति विवरणादृतः क. ग. ङ. म. ढ. पाठः.

न्यस्तब्रह्माणि तारहृद्भगवतेर्णैर्वासुदेवादिका
न्यस्याः कादिषु मूर्तयो हरिहरे ङेन्ता नमोन्ताः* क्रमात् ।
कृत्वैकाद्विचतुर्युतान् न्यसतु दन्तान् वज्रतुण्डं तथा
हेरम्बं च महाणुबीजपरतो विघ्नेऽपि वा केवलान् ॥ ७९ ॥

विमर्शिनी ।

न्यस्तब्रह्माणि कृतपञ्चब्रह्मन्यासे हरिहरे कादिषु मूर्धादिपञ्चस्थानेषु तारहृद्भगवतेर्णैः 'ओं नमो भगवते' इत्यक्षरैः सह ङेन्ताः चतुर्थ्येकवचनान्ताः नमोन्ताश्च वासुदेवादिका मूर्तयः क्रमेण न्यस्याः न्यस्तव्याः। विघ्ने महाणुबीज-परतः महागणपतिबीजानामन्ते कृत्वा स्थापयित्वा एकद्विचतुर्युतान् एकद्विचतु-श्शब्दैः संयुतान् दन्तान् वज्रतुण्डं हेरम्बं च तथा मूर्धादिपञ्चस्थानेषु न्यसतु । 'ओं श्रीं ह्रीं क्लीं ग्लौं[3] गं एकदन्त गणपते वरवरद सर्वजनं मे वशमानय स्वाहा' इत्यादयो मन्त्राः । केवलानपि वा 'एकदन्तगणपतये नमः' इत्यादयो वा ॥७९॥

विवरणम् ।

न्यस्तब्रह्माणीति । स्वदेह इति शेषः । तारहृद्भगवतेर्णैरिति यथा 'ओं नमो भगवते वासुदेवाये'त्यादि । अत्र नारायणेऽपि (तार?) तारहृद्भगवतेर्ण-योगः । कृत्वेति । महाणुबीजपरत एतान् कृत्वा न्यसेत् । केवलानेव वैतान् न्यसेदित्यर्थः । महाणुर्महागणपतिमनुः । तथेति । ङेन्ता नमोन्ता इत्येतद्योजन-मुक्तम् ॥ ७९ ॥

षड्द्वादशाह्वयमनुन्यसनाद्यमत्र
स्वाख्यास्यमानयजनक्रमतोऽवगम्यम् ।
अन्तेऽखिलेषु निजमूलमनूपदिष्टान्
न्यासान् समाचरतु चेति षडध्वक्लृप्तिः ॥ ८० ॥

विमर्शिनी ।

अत्र षडध्वन्यासे षड्द्वादशाह्वयमनुन्यसनाद्यं वैष्णवादिषु षडक्षरद्वा-दशाक्षरादिमन्त्रभेदानां न्यासाद्यं स्वाख्यास्यमानयजनक्रमतः स्वस्वपूजायां

१. 'शेषेषु स्वविधास्यमानयजनाज्ज्ञेयक्रमं षड्द्विषण्मूर्त्यादिन्यसनं न्यसेच्च सकले मूलाज्ञकाद्यं ततः ॥ येन येन' ख. ज. पाठः. २. 'रि' ढ, ३. 'ग्लौ' ढ. पाठः.

* 'नमोन्तास्तथा' इति विवरणपाठः.

वक्ष्यमाणक्रमतोऽवगम्यम् । अन्तेऽखिलेषु निजमूलमनूपदिष्टान् अष्टाक्षरे दशाङ्गादीन् षडक्षरे गोल्कान्यासादींश्च समाचरतु च इति षडध्वक्लृप्तिः इति षडध्वनां स्थितिः ॥ ८० ॥

विवरणम् ।

षड्द्वादशाङ्गद्वयमनुन्यसनाद्यमिति । यथायोगमेतदभिप्रेतमिति ॥

येन येन मनुना मनुबिम्बे देवदेवयजनं कृतमत्र ।
तेन तेन तदुदक्परिक्लृप्ते मण्डले स्वविहिते च यजेत् तम्
॥ ८१ ॥

विमर्शिनी ।

अथ मण्डलपूजामाह — येन येनेति । अत्र मनुबिम्बे येन येन मनुना देवदेवयजनं देवानामपि देवस्य पूजनं कृतं, तेन तेन मनुना तदुदक्परिक्लृप्ते तस्योत्तरभागे कल्पिते स्वस्वविहिते मण्डले च तं देवं यजेत् ॥ ८१ ॥

विवरणम् ।

एवं तावद् बिम्बे पूजामभिधाय प्रसङ्गात् षडङ्गन्यासं चोक्त्वेदानीं तत्पूजापूर्त्यर्थां मण्डले पूजामाह — येन येनेति ॥ ८१ ॥

चक्राब्जे प्रयजेद् विष्णौ दुर्गायां शक्तिदण्डके ।
भद्रकेऽन्येषु सेनान्यां प्रत्यक् प्रागुक्तषड्दले ॥ ८२ ॥

विमर्शिनी ।

विष्णौ चक्राब्जे मण्डले तं प्रयजेत् । दुर्गायां शक्तिदण्डके भद्रके च । अन्येषु केवलभद्रके । सेनान्यां प्रत्यग्भागे प्रागुक्तषड्दले 'मध्येवेदिविनिर्मिते'त्यादिनोक्तषड्दले मण्डले । कौमारके मण्डले पूजैवात्र विवक्षिता ॥ ८२ ॥

विवरणम् ।

स्वविहित इत्येतद्विवृणोति — चक्राब्ज इति । प्रत्यक्प्रागुक्तषड्दल इति । शय्यायाः पश्चिमतो यत् प्रागुक्तं 'मध्ये वेदिविनिर्मित' इत्यादि ॥ ८२ ॥

---

१. 'तं तं दे', २. 'म' ख. पाठः.

पद्मादर्वाक्तनमुदितक्लृप्त्या स्वमभ्यर्च्य पीठं
चक्राम्भोजे तदनु परिकल्प्यात्र तद्वत् कालचक्रम् ।
प्रागाद्येषु प्रधिषु यजतु प्राणपूर्वाणि तत्त्वा-
न्यन्तर्बाह्यक्रमविनिमयेनावनीपश्चिमानि ॥ ८३ ॥

विमर्शिनी ।

चक्रपूजामाह — पद्मादिति । पद्मादर्वाक्तनं 'पद्माय नम' इत्यस्मात् पूर्वगतैर्मन्त्रैः उदितक्लृप्त्या पूजापटले वक्ष्यमाणक्लृप्त्या स्वं वैष्णवं पीठमभ्यर्च्य तदनु तद् मण्डलं कालचक्रं परिकल्प्य अत्र चक्राम्भोजे प्रागाद्येषु प्रधिषु नेमिषु प्राणपूर्वाणि 'मं नमः पराय प्राणात्मने नमः' इत्यन्तानि अवनीपश्चिमानि 'कं नमः पराय पृथिव्यात्मने नमः' इत्यन्तानि चतुर्विंशतितत्त्वानि अन्तर्बाह्यक्रमविनिमयेन पूर्वमन्तर्गतप्राङ्नेम्यां पुनस्तद्दक्षिणगतबहिर्नेम्यां पुनस्तद्दक्षिणगतान्तर्नेम्यां पुनस्तदनन्तरगतबहिर्नेम्यामित्यादिक्रमेण यजतु ॥

विवरणम् ।

अत्र चक्राब्जपूजायां विशेषमाचष्टे — पद्मादर्वाक्तनमिति । माया-विधानन्तपर्यन्तमित्यर्थः । परिकल्प्येति । कालचक्राय नम इति पुष्पाञ्जलि-रुक्तः । तत् कालचक्रमिति । चक्राब्जम् । यद्वा 'पुरुषं मण्डलं ‍विद्या'दित्यादि विज्ञानं सूचितम् । एतच्च भद्रकादिष्वपि समानम् । अन्तर्बाह्यक्रमविनिमये-नेति । मेषारस्याग्रतो यः प्रधिः प्रवर्तते तस्मिन् प्राणतत्त्वस्य, पुनस्तत् ...मध्ये यः प्रधिः प्रवर्तते तस्मिन् बुद्धितत्त्वस्य, पुनर्वृषभराश्यग्रतो यः प्रधिः प्रवर्तते तस्मिन्नहङ्कारस्येत्यादि ...क्रम उक्तः ॥ ८३ ॥

मध्येरं विनपुंसकस्वरहमा सूर्यं समेतं क्रमा-
न्मेषाद्यात्मयुतं स्वधातुमुखमूर्त्युद्भेदितं वा यजेत् ।
बीजान्तस्थनमःपरायपदपूर्वत्वं तथैवात्मने
नत्यन्तत्वमशेषचक्रमनुषु ज्ञेयं बुधैस्तत्त्ववत् ॥ ८४ ॥

---

१. 'त' ढ. पाठः. २. 'मध्ये' ख. पाठः. ३. 'विद्यादिनि वि' क. पाठः. ४. 'वर्तते' क. पाठः. ५. 'रमहासू' च. पाठः. ६. 'विद' ग, 'वान्' च. पाठः.

विमर्शिनी ।

मध्येरम् अराणां मध्ये मध्ये विनपुंसकस्वरहमा विगतनपुंसकैः स्वरै-र्द्वादशभिर्युतेन हंबीजेन समेतं युक्तं मेषाद्यात्मयुतं मेषादिशब्दैः सहात्मने-पदयुक्तं सूर्यं क्रमाद् मेषादिराशिस्थाने (क्रमाद्?) यजेत् । 'हं नमः पराय सूर्याय मेषात्मने नमः' इत्यादयो मन्त्राः । स्वधातृमुखमूर्त्युद्भेदितं वा स्वस्य सूर्यस्य धात्रादिभिर्मूर्तिभिर्भेदितं वा । तत्र 'हं नमः पराय सूर्याय मेषात्मने धात्रे नमः'(?) इत्यादयो मन्त्राः । बुधैरशेषचक्रमनुषु सकलचक्रपूजामन्त्रेषु तत्त्ववत् तत्त्वमन्त्रेष्विव बीजान्तस्थनमःपरायपदपूर्वत्वं स्वस्वबीजानामन्ते स्थितं 'नमः पराय' इति पदद्वयं पूर्वं यथा भवति, तथैव आत्मनेनत्यन्तत्वम् 'आत्मने नमः' इति पदद्वयावसानत्वं च यथा भवति तथा ज्ञेयम् ॥ ८४ ॥

विवरणम् ।

मध्येरमिति । अराणां मध्ये । मेषाद्यराणां द्वादशानां मध्योद्देशे-ष्वित्यर्थः । विनपुंसकस्वरहमा समेतं मेषाद्यात्मयुतं सूर्यं क्रमाद् यजेदित्यन्वयः । नपुंसकवर्णरहिता द्वादश स्वराः । यथा 'हं नमः पराय मेषात्मने सूर्याय नमः' इत्यादि । स्वधातृमुखमूर्त्युद्भेदितं वेत्याधिकांशविकल्पः । तत्त्ववदिति । यथा तत्त्वमन्त्रेषु तथेत्यर्थः । सूर्यपदोपरि धातृपदादियोगः इत्याद्यप्येवम् ॥ ८४ ॥

धात्रर्यममित्राख्या वरुणांशभगा विवस्वदिन्द्रयुताः ।
पूषाह्वयपर्जन्यौ त्वष्टा विष्णुश्च मूर्तयोऽत्र रवेः ॥ ८५ ॥

विमर्शिनी ।

मूर्तीः पठति — धात्रर्यममित्राख्याः धाता अर्यमा मित्रश्च, वरुणांश-भगाः वरुणोंऽशो भगश्च, विवस्वदिन्द्रयुताः विवस्वानिन्द्रश्च, पूषाह्वयपर्जन्यौ पूषा पर्जन्यश्च, त्वष्टा विष्णुश्चात्र रवेर्मूर्तयः स्युः ॥ ८५ ॥

मूलाद्याग्रमचाद्यमन्तमनुवृत्त्यामूलमग्रादिकं
सर्गाद्यान्तमपक्रमेण च सता संबीजकेनान्वरम् ।
सोमं तत्र सितासितप्रतिपदाद्यात्मानमिष्ट्वाभितो
मध्येरं तममाकलात्मकमचाद्येनान्वितं प्रार्चयेत् ॥ ८६ ॥

---

१. 'मायोजयन् । द्यो' ख. ज. पाठः. 'केन समम् ।' ज, 'केनान्व' क. ड. पाठः.

विमर्शिनी ।

तत्र प्रत्यर सोममपि पूजयेदित्याह — मूलाद्याग्रमिति । तत्र अन्वरम् अरे अरे च उभयोरभित्तः उभयोः पार्श्वयोः मूलाद्याग्रम् अधोभागमारभ्याग्रभागान्तम् । आद्यमन्तम् अकाराद्यनुस्वारपर्यन्तम् अनुवृत्त्या अनुलोमक्रमेण सता अचा, अग्रादिकमामूलम् अग्रभागाद्यधोभागपर्यन्तं सर्गाद्यान्तं विसर्गाद्याकारपर्यन्तम् अपक्रमेण प्रातिलोम्येन च सता अचा युक्तेन संबीजकेनान्वितं सितासितप्रतिपदाद्यात्मानं शुक्लप्रतिपदादिना कृष्णप्रतिपदादिना च आत्मशब्देन युक्तं सोमं 'सं नमः पराय सोमाय शुक्लप्रतिपदात्मने नमः' 'सां नमः पराय सोमाय शुक्लद्वितीयात्मने नमः' इत्यादि, 'सः नमः पराय सोमाय कृष्णप्रतिपदात्मने नमः' 'सं नमः पराय सोमाय कृष्णद्वितीयात्मने नमः' इत्यादिसहितमिष्ट्वा मध्येरम् अरमध्येषु आद्येन अचा अकारेण[1] अन्वितम् अमाकलात्मकम् अमाकलात्मशब्दयुक्तं च सोमं प्रार्चयेत् । 'सं नमः पराय सोमाय अमाकलात्मने नमः' इति मध्यस्थमन्त्र इत्यर्थः ॥ ८९ ॥

विवरणम् ।

मूलाद्याग्रमिति । तत्रान्वरमभितः सितासितप्रतिपदाद्यात्मानं सोममिष्ट्वा मध्येरममाकलान्वितं सोमं प्रार्चयेदिति सम्बन्धः । मेषाद्यरेषु शुक्लप्रतिपदादिशुक्लपञ्चदश्यन्तपदोपेतात्मशब्दसहितमेकस्मिन् भागे, पुनः कृष्णप्रतिपदादिकृष्णपञ्चदश्यन्तपदोपेतात्मशब्दसहितम् इतरस्मिन् भागे । एवममाकलात्मकमपि द्रष्टव्यम् । मूलाद्यन्तमाद्यमनुवृत्त्या[2] अग्रादिमूलान्तिकं सर्गाद्यान्तमपक्रमेण च सता संबीजकेन अचा इति अन्वितमिति सम्बध्यते । सोमशब्दस्यैवैतद् विशेषणम् । आद्यमन्तम् अकाराद्यनुस्वारान्तम् । अनुवृत्तिः क्रमः । सर्गाद्यान्तं विसर्गाद्याकारान्तम् । अपक्रमो व्युत्क्रमः । एतदुक्तं भवति । मकारे तावदुदक्पर्यन्तभागे शुक्लभागे तदरमूलोद्देशमारभ्याग्रोद्देशावधि 'सं नमः पराय सोमाय शुक्लप्रतिपदात्मने नमः' इत्यादिपञ्चदशमन्त्रैः पूजयेत् । पुनस्तस्यैव दक्षिणपर्यन्तभागे कृष्णभागे तत एवाग्रदेशत आरभ्य मूलोद्देशावधि 'सः नमः पराय

---

१. 'मित्यपि', क. घ. च. पाठः. २. 'मूलाद्यग्रान्त' क. पाठः.

सोमाय कृष्णप्रतिपदात्मने नमः' इत्यादिपञ्चदशमन्त्रैश्च पूजयेत् । आद्येनाचान्वितमिति । सबीजकेनैव अकारेणान्वितं सोमम् । सं नमः पराय सोमायामाकलात्मने नमः । एवमृषभाद्यरेष्वपीति ॥ ८६ ॥

प्रातर्माध्यन्दिनतृतीयाख्यानि सवनान्यथ ।
अन्तरादि यजेन्नाभित्रयेऽमाद्यक्षरैस्त्रिभिः ॥ ८७ ॥

विमर्शिनी ।

अथ नाभित्रयेऽन्तरादि क्रमेण अमाद्यक्षरैः अं उं मं इति त्रिभिरक्षरैर्बीजभूतैः सह प्रातर्माध्यन्दिनतृतीयाख्यानि सवनानि 'अं नमः पराय प्रातस्सवनात्मने नमः' इत्यादिमन्त्रैर्यजेत् ॥ ८७ ॥

विवरणम् ।

माद्यक्षरैरिति । मं उं अम् इत्येतैः ॥ ८७ ॥

ततः कोपतत्त्वं प्रपूज्याक्षदेशे
पुनस्तत्र पद्मादिकं पीठशेषम् ।
तथा जीवतत्त्वं च तत्कर्णिकाया-
मिहावाह्य मूलेन देवं यजेच्च ॥ ८८ ॥

विमर्शिनी ।

ततः अक्षदेशे चक्रस्याक्षप्रदेशे कोपतत्त्वं प्रपूज्य पुनस्तत्र चक्रे पद्मादिकं पीठशेषं तथा तत्कर्णिकायां जीवतत्त्वं च प्रपूज्य इह मूलेन देवमावाह्य यजेच्च ॥ ८८ ॥

अर्घ्यादि दत्त्वा सकलीकृताय
सम्पूज्य चाङ्गावरणावसानम् ।
विष्वादिकास्तत्परितोऽरसंस्था
मूर्तीर्यजेद् द्वादशवर्णबीजैः ॥ ८९ ॥

१. 'चामला', २. 'भि' क. पाठः. ३. 'माङ्गा' ग. पाठः.

विमर्शिनी ।

सकलीकृताय तस्मा अर्घ्यादि दत्त्वा अङ्गावरणावसानं च सम्पूज्य तत्परितः अरसंस्थाः अरेषु स्थिताः विष्ण्वादिका मूर्तीः द्वादशवर्णबीजैः द्वादशाक्षरमन्त्रस्य वर्णैर्बीजभूतैः सह यजेत् ॥ ८९ ॥

विवरणम् ।

सम्पूज्य चाङ्गावरणावसानमिति । अङ्गावरणद्वयानन्तरं वैनतेयाद्यावरणादर्वाक् मूर्त्यावरणमिहाधिकमिति भावः ॥ ८९ ॥

विष्णुमधुसूदनौ च त्रिविक्रमो वामनाभिधानोऽथ ।
सश्रीधरो हृषीकेशाख्योऽतः पद्मनाभश्च ॥ ९० ॥
दामोदरोऽथ केशवनारायणमाधवाः सगोविन्दाः ।
द्वादशमूर्तय उक्ता विघ्नेशास्त्वष्ट तासु पूर्वोक्ताः ॥ ९१ ॥

विमर्शिनी ।

द्वादशमूर्तीः पठति --- विष्ण्विति । विष्ण्वाद्या गोविन्दान्ता द्वादशमूर्तय उक्ताः । तासु मूर्तिषु पूर्वोक्ता अष्ट विष्ण्वादिदामोदरान्ता विघ्नेशाः विघ्नेश्वरकलशपूजायामुक्ताः ॥ ९०, ९१ ॥

विवरणम् ।

विघ्नेशास्त्वष्ट तासु पूर्वोक्ता इति । विष्ण्वादिदामोदरान्ताः यदुक्तं —

'प्रथमो विष्णुराख्यातो द्वितीयो मधुसूदनः ।'

इत्यादि । 'विष्णौ विष्णुमुखाः समूललिपयः' इत्यत्र विघ्नेश्वरोपयोगः [॥ ९०, ९१ ॥

भूयो यथोक्तं गरुडादिशेषा-
वृतिं समभ्यर्च्य निवेद्य तस्मै ।
प्रसन्नपूजामपि संविदध्या-
दितीरिता चाक्रिणि चक्रपूजा ॥ ९२ ॥

विमर्शिनी।

भूयो गरुडादिशेषाद्यूर्तिं यथोक्तं समभ्यर्च्य निवेद्य प्रसन्नपूजामपि संविदध्यात्। चक्रिणि विष्णौ चक्रपूजा इतीरिता॥ ९२॥

विवरणम्।

निवेद्य इत्याद्यनुवाद इति॥ ९२॥

पीठं ब्रह्मशिलायुतं कृतजलावासान्तमुक्तक्रमात्
सिक्त्वा गन्धजलाभिपूर्णकलशैर्न्यस्येच्च शय्यान्तरे।
संस्थाप्यैव यथास्थिति स्थपतिना गर्भालये गौरवे
सिञ्चेद्वारुणवारिणा सलिलवासोद्देशतो देशिकः॥ ९३॥

विमर्शिनी।

तस्यां रात्र्यामेव पीठनपुंसकशिलयोरप्यधिवासनं कर्तव्यमित्याह— पीठमिति। ब्रह्मशिलायुतं नपुंसकशिलया सह कृतजलावासान्तम् अनुष्ठित-जलाधिवासावसानसंस्कारं पीठं गन्धजलाभिपूर्णकलशैः उक्तक्रमाद् बिम्बोक्त-क्रमेण सिक्त्वा शय्यान्तरे अन्यस्मिन् शयने न्यस्येत्। चकारेण भूषणादिभिः पूजनमुक्तम्। गौरवे तयोर्गुरुत्वे गर्भालये स्थपतिना तक्ष्णा यथास्थिति यथा तत्र स्वस्थाने स्थिरा भवति तथा संस्थाप्यैव देशिकः जलाधिवासादिसंस्कार-मन्त्रानुसन्धातुं समर्थो गुरुः सलिलवासोद्देशतः जलाधिवासमुद्दिश्य वारुणवा-रिणा कटाहस्थे जले वरुणमावाह्य संपूज्य तज्जलेन सिञ्चेत्॥ ९३॥

विवरणम्।

इदानीं पीठब्रह्मशिलयोर्ध्यानाधिवासं विवक्षन् प्रथमं तदीयशुद्धिमुक्ति-लाघवधियैहैव तावदभिधत्ते—पीठमिति। उक्तक्रमादिति। निजबिम्बोक्त-रीत्येत्यर्थः। बिम्बपरिग्रहविधावेवैतदपि युगलं परिगृह्य तच्छुद्धौ सहशुद्धिं विधाय जलाधिवाससमये तत्रैव फलकान्तरे संहृत्य अभिमयमित्युक्तकल्प्त्या

---

१. 'लं च बिम्बवदुभे तोयाधिवासान्तया शुद्ध्या शोध्य करोतु चान्यशयने गर्भालये गौरवे। संस्थाप्यैव यथातथं स्थपतिना संशोध्य दर्भादिभिः।सि', २. 'वा द्वयम्॥' ख. ग. पाठः.

जलाधिवासं विदध्यात् । बिम्बोद्धारे च सहोद्धृत्य बिम्बशुद्धौ सहशुद्धिमपि कुर्यात् । तदेतदाह—सिक्त्वा गन्धजलाभिपूर्णकलशैरिति । गन्धजलेन नवकं पञ्चकं वा पूर्वेद्युः साधनीयम् । पञ्चगव्यैर्वा पञ्चकं बिम्बशुद्धिकलशोक्तद्रव्यैर्वैकम् । तत्र वैष्णवे तु भेदः ।

'गव्यैर्व्यस्तैस्समस्तेन क्वाथेनामलकेन च ।
शोधयेद्धेमतोयेन दिग्विदिङ्मध्यवर्तिभिः ॥'

इति पाठार्थकलशेषु पीठशक्तिं पूजयेत् । ब्रह्मशिलार्थं गन्धजलेन पञ्चगव्येन वा ऐककं पञ्चकं वा पूरयित्वा प्रणवेन ब्रह्मावाह्य पूजयेत् । पुनस्तत्तन्मन्त्रेण आज्यं चतुर्द्रव्यं वा हुत्वा यथास्वं सम्पातमप्यर्पयेत् । पुनस्ताभ्यां यथास्वमभिषेकः । तथाचावाह्य साङ्गीकरणादि कृत्वेत्याद्युक्तमनुसरणीयमिति । न्यसेच्च शय्यान्तर इति । बिम्बपादपर्यन्ते शय्यां सम्पूज्य तस्यामित्यवगन्तव्यम् । तदुक्तं — 'पिण्डिकां चास्य पश्चिमे' इति । 'पिण्डिकान्ते शिलामेवमि'ति च ब्रह्मशिलाभिप्रायमेतत् । यद्वा बिम्बवामभागे तु पीठाद्यधिवासनीयम् । यदप्युक्तम् ।

'प्रतिमावामभागे तु पिण्डिकामधिवासयेद्'

इति । पीठस्य महत्तरतया दुरुद्धरत्वे सति विशेषमप्याह—संस्थाप्यैवेति । यथा प्रतिष्ठासमये पीठस्य स्थित्या भाव्यं तथेत्यर्थः । तदधो ब्रह्मशिलापि यथास्थिति स्थापनीयेत्यर्थाद् भवति । शैवे तु प्रतिष्ठास्पदोपरियन्त्रे निवेशनीयम् । वक्ष्यति च—'पीठे यन्त्रोपरि परिगत' इति । प्रासादपरिग्रहविधावेवं द्वयमपि परिगृह्य प्रासादे शोधिते यथोक्तं शोधयेत् । गौरव इति । गुरुत्वे महत्वेन दुरुद्धरत्वे-सतीत्यर्थः । तदा कथं जलाधिवास इत्यत्राह—सिञ्चेदिति । सलिलवासोद्देशत इति । जलाधिवासमुद्दिश्येत्यर्थः । कटाहादौ जलं सम्पाद्य संस्कृत्य वरुणमिष्ट्वा मूलेनापि समाराध्य पञ्चवारुणजपादि विधाय तेन जलेनाभिषिञ्चेदिति भावः । पुन'स्सिक्त्वा गन्धजलाभिपूर्णकलशै'रित्येतदपि कार्यम् । पीठस्य शोधनान्ते नीराजनं पुण्याहोऽपीष्यते ॥ ९३ ॥

ह्रामादिबीजपवनायमनादिक्लृप्त्या
भूतानि पञ्च परमात्मनि संविलाप्य ।

---

१. 'रे स च' घ. पाठः. २. सम्पादनीयम्' क. पाठः. ३. 'द्रव्यैर्वा नवकं' घ. पाठः. ४. 'विवर्जयेत्', ५. एकैकं वा' क. पाठः. ६. 'गे पीठा' ख. घ. पाठः. ७. 'यः', ८. 'दुर्दर' घ. पाठः. ९. वैतदुद्धय' ख. ग. पाठः. १०. 'य वरु' क. पाठः.

शोषादिकं च सुविधाय धरावधीनि
सृष्ट्वाथ तानि तनुयाल्लिपिभावनां च ॥ ९४ ॥

विमर्शिनी ।

ह्रामादिबीजपवनायमनादिक्लृप्त्या 'ह्रां हुंफडि'त्यादिभिः स्वगुणसंख्यया प्राणायामं तथा 'ह्रां नमः' इत्यादिभिर्व्यापकं च कुर्वन् पञ्चभूतानि परमात्मनि संविलाप्य शोषादिकं शोषणदहनप्लावनकाठिन्यसुषिरीकरणानि विधाय धरावधीनि पृथिव्यन्तानि भूतानि सृष्ट्वाथ लिपिभावनां च तनुयात् ॥ ९४ ॥

विवरणम् ।

ह्रामादिबीजेति। फडन्तप्रणवप्रोक्षणजीवोपसंहरणादि सर्वमिह बिम्बवत् कार्यम्। भूतसंहारश्चायमुद्घातावृत्त्या कार्यः। तथा तज्जीवे प्रतिसङ्क्रामिते भूतसर्गोऽपि। धरावधीनि तानीति। पृथिव्यन्तानि पञ्चभूतानि। द्वादशप्रणवकुम्भकेन संवत्सरवासः। लिपिभावनां चेति। लिपिप्राणायामपूर्वकं तन्न्यासः ॥ ९४ ॥

मध्ये तारं स्वरान् षोडश तमु परितस्तद्बहिर्व्यञ्जनानि
न्यस्येत् पर्जन्यकोष्ठादिकमथ च हळक्षाक्षरं मध्यभागे।
तत्तच्छक्त्युक्तबीजाहितपवननिरोधेन सम्पाद्य मान्त्रं
भावं पीठीयमन्त्रान् न्यसतु वितनुयात् तत्र तत्पीठपूजाम् ॥ ९५ ॥

विमर्शिनी ।

लिपिन्यासे मध्ये तारं तमु परितः तस्यापि परितः षोडश स्वरान् तद्बहिः पर्जन्यकोष्ठादिकं द्वात्रिंशद्व्यञ्जनाक्षराणि अथ मध्ये हळक्षाक्षराणि च न्यस्येत्। तत्तच्छक्त्युक्तबीजाहितपवननिरोधेन तत्तत्पीठशक्तीनामुक्तेन बीजेन कृतप्राणायामेन मान्त्रं भावं मन्त्रदेवतात्मत्वं सम्पाद्य पीठीयमन्त्रान् पीठमन्त्रान् मन्त्रान् स्वस्वस्थाने न्यसतु। तत्र तत्पीठपूजां च वितनुयात् ॥ ९५ ॥

---

१. 'सलिपिप्रा' ख. पाठः. २. 'रान् म' क. पाठः. ३. 'पीठपूजां च पाठे ॥' ख. ज. पाठः. ४. 'वन्' ख. पाठः.

विमर्शिनी ।

अस्मिन् पीठे शक्तिबीजेन शक्तिमावाह्य स्वाङ्गैः स्वस्वशक्तेरङ्गैः साङ्गीकृत्य सकलीकृत्य तेन स्वशक्तिबीजेन अर्चयेत । विष्णौ श्रीबीजेन अन्येषु भुवनेश्वर्येति बीजविभागः । ब्रह्मप्राग्णो नपुंसकशिलायाः भूतशुद्ध्यादि पठितवत् कृत्वा तारेणावाह्य अमुना पूजयेत ॥ ९६ ॥

विवरणम् ।

स्वाङ्गैस्साङ्गीकृत्येति सङ्ग्रहाभिप्रायम् । शक्तिपुटितलिपिन्यासादि सर्वं कार्यमिति । यद्वा स्वाङ्गैरिति आवाह्येति सम्बध्यते । स्वाङ्गभूतैः पञ्चतत्त्वैः सह शक्तिमावाह्येत्यर्थः । पीठे मूर्तिकल्पनानन्तरं प्रागुक्तरीत्या पञ्चतत्त्वावाहनं विधाय स्वशक्तिमन्त्रेण मन्त्रावाहनं कार्यमित्यभिप्रायः । प्रागुक्तन्यासजातमिहार्थप्राप्तमेव । पुनस्तदङ्गैस्साङ्गीकरणमिति । ब्रह्मप्राग्ण इति । स्वरूपदशातश्शक्तिदशामप्राप्तं तदाधारभूतं परं ब्रह्म नपुंसकशिलोचितम् । तदात्मिका नपुंसकशिला । तदुक्तम् ।

'नपुंसकं परं ब्रह्म सर्वाधारं तदुच्यते ।'

इति । परब्रह्मत्वाच्च प्रणवमन्त्रतोपपत्तिः । तस्य च निबिडतेजोरूपेण तद्देवाकारेण तद्देवशक्तिव्यामिश्राकारेण वा प्रतिपत्तेः । फडन्तप्रणवप्रोक्षणादि सर्वमिहापि समानम् । लिपिभावनां कृत्वा प्रणवप्राणायामादि सामान्यप्राप्तं कुर्यात् । तारेणावाह्येति पीठेऽथामूर्तिकल्पने स्याताम् । लिपेर्वर्गत्रयं तत्त्वत्रयं च विन्यस्य अधोमध्योर्ध्वेषु आधारशक्त्यनन्तपृथिवीन्यासं विधाय प्रणवाङ्गन्यासमपि कुर्यात् । मूलमध्याग्रेष्वकारादिन्यासः । स्वरद्वन्द्वरुद्धप्रणवेन चाङ्गानि । यदुक्तम् ।

'अक्लीबैर्युगमध्यगध्रुवयुतैरङ्गानि कुर्यात् स्वरैः ।'

इति । पातालप्रतिष्ठायामाधारशक्त्यादीनां प्रासादमूर्त्यङ्गतयावस्थापनम्, इह तु बिम्बाश्रयपीठशक्त्यङ्गतयेति विशेषः ॥ ९६ ॥

निवेद्यकाले विनिवेद्य चार्घ्यं
प्रसन्नपूजामुभयोर्विधाय ।
आच्छाद्य नव्येन पटद्वयेन
तथाधिवास्य द्वितयं सुरक्षेत् ॥ ९७ ॥

---

१. 'ख्वा' ख. पाठः. २. 'स्थानम्' क, ख. पाठः.

विमर्शिनी ।

उभयोरपि निवेधकालेऽर्घ्यं च विनिवेद्य प्रसन्नपूजां च विधाय नव्येन पटद्वयेनाच्छाद्य तथा उक्तप्रकारेणाधिवास्य द्वितयं सुरक्षेत् ॥ ९७ ॥

विवरणम् ।

विनिवेद्य चार्घ्यमिति । निवेद्यसम्भवे तु तदपि[1] विनिवेद्यमेव 'बलिभिश्च प्रपूजयेद्' इत्याद्यभिधानात् । पटद्वयेनेति । यदुक्तम्—

"पिण्डिकामपि संस्थाप्य रक्तवस्त्रावगुण्ठिताम् ।"

इत्यादि । सुरक्षेदिति तालत्रयादिकमुक्तम् । अथास्मिन्नेवावसरे[2] प्रासादाधिवासः । वक्ष्यति च—'पीठाधिवाससमये विहिताधिवासम्' इति । प्रासादतल उपविश्य फडन्तप्रणवप्रोक्षणप्रणवप्राणायामजीवोद्वासनादि सर्वं विधाय लिपिभावनां कृत्वा पीठन्यासमूलप्राणायामौ कृत्वा व्यापय्य लिपितत्त्वमन्त्रन्यासपूर्वकं पीठमिष्टां मूर्तिं विभाव्यावाहनादि कृत्वा पूजां विदधीत । तत्र पादुक आत्मतत्त्वम्, अधिष्ठाने विद्यातत्त्वं, उपरि परतत्त्वं, वेद्यां प्रागादिदिक्षु इन्द्रादय इति । शिवे प्रासाद एव मन्त्रः, परतत्त्वस्थाने च शिवतत्त्वमिति । एवं बिम्बादीनां ध्यानाधिवास उक्तः ॥ ९७ ॥

कृत्वा स्वकल्पविधिनाग्निमुखं यथाश-
क्त्याज्याहुतिं वितनुयाज्जनिते कृशानौ ।
सृष्टिक्रमेण कथितैरथ तत्त्वमन्त्रै-
र्मन्त्री समित्प्रभृतिहोमविराममत्र ॥ ९८ ॥

विमर्शिनी ।

अथ गुरुः स्वकुण्डे तत्त्वहोमं कुर्यादित्याह—कृत्वेति । जनिते कृशानौ अग्नौ स्वकल्पविधिना स्वगृह्योक्तविधिना अग्निमुखं कृत्वा अथ सृष्टिक्रमेण कथितैरखिलैस्तत्त्वमन्त्रैः यथाशक्ति आज्याहुतिं, समित्प्रभृतिहोमविरामं समिदादिचतुर्द्रव्यं स्विष्टकृदादिहोमशेषं च वितनुयात् । मन्त्रीत्यनेन पूजामन्त्राज्वाहुत्यनन्तरं संहारक्रमेणाज्यमेकैकशः तत्त्वमन्त्रैर्हुत्वा तत्सम्पातं(?) संहृते मन्त्रबिम्बे योजनमपि सूचितम् ॥ ९८ ॥

---

१. 'पि वि' क. पाठः. २. 'अथवास्मि' च. पाठः.

विवरणम् ।

अथ तत्त्वहोममभिधत्ते—कृत्वेति । जनिते कृशानौ तत्त्वमन्त्रै राज्याहुतिं वितनुयादित्यन्वयः । जनिते कृशानाविति बिम्बशिरस्सन्निधावाचार्यकुण्डे प्रागजनितोऽग्निरुक्तः । समित्प्रभृतिहोमविराममिति निर्देशादेव हविस्सद्भावः । तथा च पक्वादियोग इध्मादियोगश्च भवति । यथाशक्तीति सङ्ख्याविकल्पाभिप्रायम् । वक्ष्यति हि—'सर्वत्र सङ्ख्याष्टशतं समुक्ताथाष्टोत्तरा विंशतिरष्ट वात्र' इति । शैवे तु पञ्चतत्त्वानामुद्घातावृत्तिः । यद्वक्ष्यति—'जुहोतु शर्वे निजपञ्चतत्त्वैः' इत्यादि । तदा च शान्त्यतीतादिक्रमेण पञ्चविंशतिः, पञ्चाशत्, पञ्चसप्ततिः, शतं, पञ्चविंशतिशतमितं, तद्द्विगुणं वेत्येवं विकल्पः स्यात् । सृष्टिक्रमेण कथितैरिति । सर्वत्र पुरुषादिभिः शिवे शिवशक्त्यादिभिः ततो हृत्पुण्डरीकादिभिः पञ्चतत्त्वैश्च, विष्ण्वादौ कोपतत्त्वेनापि, स्कन्दे क्षेत्रज्ञतत्त्वेनापीत्यर्थः । मन्त्रीति । 'मं नमः पराय जीवात्मने नमः स्वाहा' इत्येवं नतियोगेन होम उक्तः । विद्वानिति वा पाठः । तत्त्वानां सर्गक्रमेण होमे पूर्वमेव सकृत् संहारक्रमेण होमं जानन्नित्यर्थः । संहारक्रमं तु वक्ष्यति—'पुरः कोपतत्त्वेन' इत्यादि । तदा च तदीयं सम्पातं बिम्बे तत्संहारतत्त्वस्थानेषु संस्पृश्य तैः पुष्पाञ्जलिं विधाय किञ्चिदिष्ट्वा प्रणवेन ततः सर्गानुज्ञां गृहीत्वा सर्गक्रमेण जुहुयादिति न्यायसिद्धमेतत् । यद्वा विद्वानिति जीर्णोद्धारभाविनवेन तत्प्रतिपत्तिं विद्वानिति । अथवा कृत्स्नस्य समष्ट्यात्मनो देवस्य स्वे बिम्बरूपे व्यष्ट्यात्मनि तत्प्रीणनपूर्वकम् अवस्थापनं जानन्निति । तदुक्तं—'नाहुत्वा न्यास इष्यते ।' 'त्रैलोक्यप्रीणनाय वै' इत्यादि । समष्ट्यात्मनः सूक्ष्मं कृत्स्नं रूपं तत्त्वग्रामलक्षणं स्थूलं तारव्याहृतिलिप्यृक्षादिलक्षणम् । तदुक्तम्—

"जीवादिकोपतत्त्वान्तो वाचिकोऽपि सुराधिप ।
न्यासः सूक्ष्मः समाख्यातः स्थूलोऽयं षोडशात्मकः ॥"

इति । तारव्याहृत्यादिन्यासः षोडशात्मक उक्तः । वैष्णवे चायं न्यासः । शैवे षडध्वन्यास एव । यदुक्तं—

'सर्वाध्वानं क्रमान्न्यस्त्वा हुत्वा चाज्यं सकृत् सकृत्' इति ।

समुच्चयेन चानयोः स्थूलसूक्ष्माख्ययोर्न्यासः विकल्पेन वा । तदा च तत्त्वन्यासे

---

१. 'शतं तद्धि' क. पाठः. २. 'शं' ख. च. पाठः. ३. 'व' ग. पाठ
४. 'बिम्बे संहा' क. ग. पाठः ५. 'ध्वनः क्र' क. पाठः

पञ्चभूतसद्भावात् स्थूलांशलाभः, षोडशोधा न्यासे षडङ्गन्यासे च श्रुतिकरणादि सद्भावात् सूक्ष्मांशलाभ इति बोद्धव्यम् । यस्त्विह षोडशो न्यासो जीवन्यास-लक्षणः स तत्त्वन्यासे षडङ्गन्यासे च समान एवेष्यते । वक्ष्यति च कर्णशेषे—'स्थूलात्मतोन्मेषविधायिका' इत्यादि । अथवा विद्वानित्युभयोरपि तत्त्वन्यासयोः समुच्चयेन प्रयोगकल्पप्त्यभिज्ञ इत्यर्थः ।

"व्यष्टिमाध्यात्मिकं तत्वं नीत्वाग्नौ देवबिम्बतः ।
तस्मिन् वैराजरूपां[1] स्वां समष्टिं चाधिदैविकम् ॥

ततस्समष्टिपर्यन्तं व्यष्टितत्त्वं तदुद्दिशन् ।
जुहुयात् तत्त्वमन्त्रेण स्वेन स्वेन यथोदितम् ॥

पूर्णान्वितं ततस्तत्तु[2] देवबिम्बेऽग्नितो नयेत् ।
तत्त्वानां संस्क्रियैवं स्याद् विभोश्च परिपूर्णता ॥"

इति । विद्वानित्यनेन कदाचित् पञ्चतत्त्वैरेवायं[3] होमः स्यादित्यपि सूचितम् । तदुक्तम्—*विद्वत्पदेनैतद्वाभिप्रेतं येषां यथा होमः कार्यः, तथा तत्सर्वं विद्वानिति । अत्राधारशक्त्यादीनां ब्रह्मशिलापीठहोमसद्भावात् तदैव वाधुर्नो वा होमः स्थूलमूर्तिविबादेहयोः समष्टिव्यष्टिदेहयोस्तत्त्वानामपीदानीं होमः । तद्वशात् पूजापरिवारहोमोऽपि स्यात् । तथा चोक्तम्—

'प्रकृत्यादीनि तत्त्वानि संस्कृते जातवेदसि ।
होमयित्वा तिलाहुत्या पुनश्चैव यथाक्रमम् ॥

आधाराद्यानि तत्त्वानि विष्वक्सेनावसानतः ।
हुनेत् पूजानुसारेण त्रित्र्याहुत्या त्वनुक्रमात् ॥'

इति । विष्वक्सेनग्रहणं तच्चनिर्माल्यधार्युपलक्षणम् । समित्प्रभृतिहोमत्रिराममिति चतुर्द्रव्यहोम उक्तः । द्रव्यादिभेदे पूर्णाहुतिस्सामान्यसिद्धैव ॥ ९८ ॥

तत्त्वहोमावसाने तत्सम्पातं मन्त्रबिम्बके ।
समर्प्य तन्मनुन्यासं कृत्वा पुष्पार्चनं चरेत् ॥ ९९ ॥

---

* अत्र किञ्चिद् गलितं प्रतिभाति ।

---

१. 'शन्या', २. 'पात्' छ. पाठः. ३. 'रेवैवमयं' ग, ङ. छ. पाठः ४. 'वा होमः' क. पाठः,

विमर्शिनी ।

पुनस्तत्त्वहोमावसाने तत्संपातं मन्त्रबिम्बे सृष्टितत्त्वन्यासस्थानेषु सम-र्प्य तन्मनुन्यासं तत्त्वमन्त्रन्यासं च कृत्वा पुष्पार्चनं च चरेत् ॥ ९९ ॥

विवरणम् ।

तत्त्वहोमावसान इति स्विष्टकृदादि सर्वमुक्तम् । तन्मनुन्यासमिति तैस्तत्त्वमन्त्रैर्न्यास उक्तः । पुष्पार्चनं चरेदिति । तैरेव तत्त्वमन्त्रैरिति भावः । जपोऽपीष्यते ॥ ९९ ॥

प्रागष्टोर्ध्वसहस्रमाज्यमधुदुग्धाक्तान् द्विजोदुम्बरा-
श्वत्थप्रोत्थसमित्तिलान् प्रजुहुयाद् भूरादिमन्त्रैः क्रमात् ।
गोसर्पिर्निजपीठमूलमनुभिः शर्वादिभिश्चाष्टभिः
शर्वे स्वावरणाणुभिश्च सकलैः सम्पातमप्यर्पयेत् ॥ १०० ॥

विमर्शिनी ।

शिवे प्रतिष्ठाहोमं च कुर्यादित्याह – प्रागिति । शर्वे अधिवासहोमात् प्राग् आज्यमधुदुग्धाक्तान् त्रिमधुरसिक्तान् द्विजोदुम्बराश्वत्थप्रोत्थसमित्तिलान् पला-शोदुम्बराश्वत्थसमिधस्तिलांश्च भूरादिमन्त्रैः चतसृभिर्व्याहृतिभिः क्रमादष्टसहस्रं प्रजुहुयात् । निजपीठमूलमनुभिः स्वपीठमन्त्रैर्मूलेन च शर्वादिभिरष्टभिः स्वाव-रणाणुभिः सकलैः स्वपरिवारमन्त्रैश्च गोसर्पिर्जुहुयात् । गोसर्पिरिति सर्व-होमेष्वप्युपलक्षणमेव ॥ १०० ॥

विवरणम् ।

अथ शैवे[1] होमान्तरमप्याह—प्रागिति । प्रथमत इति वा तत्त्वहोमा-दपि पूर्वमिति वार्थः । कृत्वा स्वकल्पविधिना अग्निमुखमेतदिहापि समानम् । क्रमादिति मन्त्रद्रव्यक्रम उक्तः । सम्पातमप्यर्पयेदिति । अप्ययक्रमेणार्पये-दित्यर्थः । भागत्रयेऽप्यर्पणमिष्यते । अत्र पाठान्तरम्—

प्रागीशेऽग्निमुखादिकृच्चरतु विप्रोदुम्बराश्वत्थमा-
र्गोत्थानां समिधां हुतं त्रिमधुराक्तानां तिलानामपि ।
विद्वान् व्याहृतिभिः शतं चतसृभिः साहस्रकं वाष्टभि-
र्युक्तं शेषकृदर्पयेदजहरीशांशेषु तज्जं घृतम् ॥

---

१. 'अङ्घोपेतस' ख. ज. पाठः. २. 'ष' क. पाठः. ३. 'मन्त्रक' घ. च. पाठः.

इति। त्रिमधुराक्तानामित्येतत् समिधां तिलानां च तुल्यम्। विद्वानिति। लिङ्गेऽतिसूक्ष्मसम्भाव्यमानोनातिरेकादिपरिहारार्थतया होमं विद्वानिति। विष्ण्वादिषु बिम्बपरिग्रह एवैतदर्थो होम उक्तः। विघ्नादिषु त्वेवमिच्छया कार्यम्। एतदर्थमपि विद्वद्ग्रहणम्। सङ्ख्याविकल्पस्तु प्रागष्टोर्ध्वसहस्रमित्यपीष्यत इति॥ १००॥

श्रीशेशाजितसुम्भजित्सु चतसृष्वाशासु षाण्मातुरे
षट्स्वग्नीशादिगन्वयात् तदितरेष्वष्टासु वा दिक्ष्वपि।
कुर्वीरन् परितोऽधिवासहवनं विप्राः शिरःसन्निधा-
वाचार्यश्च स एव तत्र लघुकृत्ये मुख्यतो वा हुनेत्॥ १०१॥

विमर्शिनी।

अधिवासहोमविभागमाह—श्रीशेति। श्रीशेशाजितसुम्भजित्सु चतसृष्वाशासु, षाण्मातुरे अग्नीशदिगन्वयाद् अग्नीशकोणयोर्योगात् षट्स्वाशासु तदितरेषु देवेषु अष्टासु चतसृषु वा दिक्षु परितो विप्रा मूर्तिपाः, शिरस्सन्निधौ देवस्य शिरोभागसमीपस्थस्वकुण्डे मुख्यतो वा मुख्यपदस्थे स्वकुण्डे वा आचार्यश्चाधिवासहवनं कुर्वीरन्। लघुकृत्येऽल्पकर्मणि स आचार्य एव हुनेत्॥ १०१॥

विवरणम्।

अथेदानीमधिवासहोम उच्यते। तत्र प्रथमं कति तावद्धोमा स्युरित्येतदाह—श्रीशेशाजितसुम्भजित्स्विति। मूर्तिधराश्च होमं कुर्युरित्यन्वयः। तदितरेष्वष्टासु वा दिक्ष्वपीति। शिवगणपतिशास्तृषु चतुर्दिक्ष्वष्टदिक्षु वेत्यर्थः। द्रव्याद्युपपत्त्या होमविकल्पः। विष्णवादिष्वष्टदिक्षु होमोऽप्यभ्युपगम्यत एव। स एव तत्र लघुकृत्य इति। हुनेदिति सर्वमनुषज्यते। प्रतिष्ठालक्षणे कृत्ये लघुनि सति स आचार्य एव तत्राधिवासे जुहुयात्। न मूर्तिपा अपीत्यर्थः। द्रव्याल्पत्वादेवैतत्सम्भवः। तथा जीर्णोद्धृताल्पबिम्बप्रतिष्ठायां स्नपने चाधमपक्षं लक्षणे कृत्यग्रहणादिति। मुख्यतो वेति। स एव तत्र लघुकृत्यः। हुनेदिति सर्वमनुषज्यते। सप्तम्यर्थे तसिः॥ १०१॥

१. 'त्यादीष्य' क. पाठः. २. 'स्वीशाग्निदि' इति मूलकोशपाठः. ३. 'कुर्युः मूर्तिधराश्च होममधिवासाख्यं शि' क. ग. पाठः. ४. 'ष्वष्ट' ख. घ. च. पाठः. ५. 'चाधमक' क. पाठः.

कुण्डानि श्रुतिकोणपिप्पलदलार्धेन्द्वाकृतित्र्यश्रिम-
द्वृत्ताकारषडश्रपङ्कजनिभाष्टाश्राणि पूर्वादितः।
अष्टाशाविहितानि तेषु निजहोमार्हाणि कुर्यादिह
त्र्यश्रं सोमदिगाश्रितं निगदितं दुर्गाहरीशेषुजे ॥ १०२ ॥

विमर्शिनी।

कुण्डानां नियममाह—कुण्डानीति। श्रुतिकोणपिप्पलदलार्धेन्द्वाकृतित्र्यश्रिमद्वृत्ताकारषडश्रपङ्कजनिभाष्टाश्राणि, श्रुतिकोणं चतुष्कोणं, पिप्पलदलं अश्वत्थपत्राकारम्, अर्धेन्द्वाकृति अर्धचन्द्राकारं, त्र्यश्रिमत् त्रिकोणं, वृत्ताकारं वृत्तं, षडश्रं षट्कोणं, पङ्कजनिभम् अष्टदलपद्माकारम्, अष्टाश्रमष्टकोणम्, एतानि कुण्डानि पूर्वादितः अष्टाशाविहितानि भवन्ति। तेषु कुण्डेषु निजहोमार्हाणि निजनिजयोग्यानि कुर्यात्। दुर्गाहरीशेषुजे दुर्गाहरीशस्कन्देषु इह कुण्डकरणे सोमदिगाश्रितं त्र्यश्रं कुण्डं निगदितं स्यात् ॥ १०२ ॥

विवरणम्।

कीदृशान्यमूनि कुण्डानि स्युरित्याह—कुण्डानीति। श्रुतिकोणं चतुरश्रं, पिप्पलदलाकृति अश्वत्थपत्राकारम्, अर्धेन्द्वाकृति धनुर्वक्रं, त्र्यश्रिमत् त्रिकोणम्। पूर्वादित इति। प्राग्दिशमारभ्येत्यर्थः। तेषु निजहोमार्हाणि कुर्यादिति। तेषु दिग्वशाद् व्यवस्थिताकारेषु कुण्डेषु मध्ये। पञ्चहोमसम्भवे चतुर्दिक्षु चतुरश्रधनुर्वक्रवृत्तपद्माकाराणि कुर्यादित्यर्थः। इह दुर्गाहरीशेषुजे ति सम्बन्धनीयम्। पञ्चहोमसम्भवे दुर्गाहरीशयोरेतदुपपत्तिः ॥ १०२ ॥

सोपादि[2] कृत्वा परिकल्पितोल्ले-
खाद्येषु तेष्वार्चितशक्तिकेषु।
आचार्यकुण्डात् परिकुण्डकेषु
प्रागादि वह्निं प्रणयेत् क्रमेण ॥ १०३ ॥

---

१. 'ति। दिग्वशात्' क. पाठः. २. स्वगृह्यकल्पया परि ख. ज. पाठः.

विमर्शिनी ।

अग्निविहरणं प्रस्तौति — शोषादीति । शोषादिपञ्चकं दहनं च स्वस्वबीजेन कृत्वा परिकल्पितोल्लेखादिषु उक्तविधिना कृतोल्लेखनप्रोक्षणादिषु अर्चितशक्तिकेषु पीठपूजानन्तरमर्चितस्वस्वशक्तिषु तेषु कुण्डेषु आचार्यकुण्डात् प्रागादिपरिकुण्डेषु क्रमेणैव वह्निं प्रणयेत् ॥ १०३ ॥

विवरणम् ।

शोषादि कृत्वेति । मूर्तिपाः स्वस्वकुण्डेषु शोषणादि कृत्वाग्न्यायतनमुल्लिख्य विष्टरं विन्यस्य पीठं परिपूज्य तत्तच्छक्तिमावाह्य पूजयेयुरिति भावः । प्रागादिक्रमेण वह्निं प्रणयेदिति । आचार्य इति शेषः । मूर्तिपानामाचार्यस्य च सकलीकरणादिकमर्थसिद्धम् ॥ १०३ ॥

अग्निदूतमृचा निजानलमुपस्थायाग्निमीलेऽणुना
दुर्गायामजितेऽग्निनारयिमृचा प्राच्ये त्वमग्नेद्युभिः ।
याम्येऽग्निं प्रणयेद् द्वयोर्वरुणादिक्संस्थेऽग्नआयाह्यृचा
कुण्डे सोमगतेऽग्निमग्निमिति शेषेषु स्वहोमाणुभिः ॥ १०४

विमर्शिनी ।

दुर्गायामजिते च गुरुः 'अग्निदूतमृ'चा निजानलमुपस्थाय प्राच्ये कुण्डे दुर्गायाम् 'अग्निमीले'ऽणुना अजिते 'अग्निनारयिमृ'चा चाग्निं प्रणयेत् । पुनर्द्वयोरपि दुर्गाजितयोर्याम्ये कुण्डे 'त्वमग्नेद्युभिरि'ति, वरुणदिक्संस्थे 'अग्नआयाह्यृ'चा सोमगते कुण्डे 'अग्निमग्निमि'ति च शेषेषु स्वहोमाणुभिः स्वस्वदिक्संस्थितैर्होमाणुभिश्च ॥ १०४ ॥

विवरणम् ।

स्वकुण्डादग्निं यावद्धोमं विभज्य तत्तत्कुण्डं प्रति प्रापणं प्रणयनं तदेव विहरणं तत्प्रकारं दर्शयति—अग्निदूतमृचेति । अग्निमीलेऽणुनेति । प्राच्ये कुण्डे इति सम्बध्यते । द्वयोर्याम्ये 'त्वमग्नेद्युभिरि'त्यन्वयः । अणुनेति चानुषङ्गः । द्वयोरिति । दुर्गाजितयोः । पञ्चहोमविधावेतत् । नवहोमसम्भवे तु स्वहोमाणुभिर्विहारः । शेषेषु स्वहोमाणुभिरिति । शिवादिष्वित्यर्थः । तत्र शिवे

---

१. 'स्वस्वहोमा' क. पाठः.

'पुरुषो हृदयाघोरौ शिखासद्यौ च दंसनम् ।
वामः शिवश्च प्रागादिक्रमाद् विहरणाणवः ॥

स्कन्दे सनत्कुमारश्च भवपुत्रोऽपि दिक्क्रमात् ।
स्कन्दो बाणो हेमचूडो भद्रसेनः षडग्निषु ॥'

इत्यादि ज्ञेयम् ॥ १०४ ॥

केचित् सप्तत इत्युपस्थितिविधौ तार्तीयतुर्याष्टम-
न्यूनानादिमसूक्तगान् विहरणे मन्त्रान् षडाहुः क्रमात् ।
अग्निदूतमथाग्निमग्निमिति च स्थाणौ हरीशे स्मृत-
स्तारः शास्तरि चाग्निमील इति मन्त्रोऽग्न्याहृतौ व्याहृतिः

विमर्शिनी ।

स्थाणौ केचिद् उपस्थितिविधौ उपस्थाने 'सप्त ते अग्ने' इति, विहरणे तृतीयतुर्याष्टमन्यूनान् आदिमसूक्तगान् 'अग्निमील' इति सूक्तगान् मन्त्रान् क्रमात् षडाहुः । अथ 'अग्निं दूतमि'ति 'अग्निमग्निं हवीमभिरि'ति मन्त्रद्वयं चाहुः । हरीशे तारः सर्वत्र स्मृतः । शास्तरि च 'अग्निमील' इति विहरणे मन्त्रः । अग्न्याहृतौ अग्न्याधाने व्याहृतिर्मन्त्रः स्मृतः ॥ १०५ ॥

विवरणम् ।

शैवे विहरणे पक्षान्तरमाह— केचिदिति । आदिमं सूक्तम् 'अग्निमीळ' इत्येतत् । न्यूनशब्दो व्यतिरिक्तार्थः । हरीशे स्मृतस्तार इति । विहरण इत्यनुषङ्गः । शास्तरि च 'अग्निमील' इति विहरणे मन्त्र इति भावः । अग्न्याहृतौ व्याहृतिरिति । शास्तरि 'भूर्भुवस्स्वरि'त्यग्निमादधीरन्नित्यर्थः । विष्ण्वादिषु अमन्त्रमाधानमिति गम्यते । प्रणवो वा मन्त्रः[3] स्यात् ॥ १०५ ॥

प्रारब्धाग्निमुखाः स्वगृह्यविहितेनाघारवद्वर्त्मना
प्रागिध्मात् सुसमिद्धविष्टरनिविष्टं देवमाराधनुयुः ।
निर्वृत्तं विधिमाज्यभागचरमे संपूज्य योगासनं
तत्तन्मूर्तिसमर्चनान्तमथवा कुर्वन्तु ते स्वाग्निषु ॥ १०६ ॥

विमर्शिनी ।

अथ विहरणानन्तरं ते गुरुमूर्तिपाः स्वगृह्यविहितेन स्वस्वगृह्योक्तक्रमेण आघारवद्वर्त्मना आघारादिसहितेन मार्गेण प्रारब्धाग्निमुखाः इध्मात् प्राक्

१. 'हिवौ च' ज. पाठः. २. हि' ग, घ. ङ. पाठः. ३. 'मन्त्रवासात्' ङ. पाठः.

सुसमिद्धविष्टरनिविष्टं पूजितपीठ आनाद्य देवमाराधनुयुः । अथवा ते सर्वे स्वाग्निष्वाज्यभागचरमे निर्वृत्ते आज्यभागहोमान्ते कर्मणि विधिना निर्वृत्ते सति योगासनं संपूज्य तत्तन्मूर्तिसमर्चनान्तं तत्तन्मूर्त्यावाहनपूजना(नन्तरं ? न्तं) कुर्वन्तु ॥ १०६ ॥

विवरणम् ।

इदानीं होमेषु पुरस्तात् तन्त्रं दर्शयति — प्रारब्धाग्निमुखा इति । ते स्वाग्निषु स्वगृह्यविहितेनाघारवद्वर्त्मना प्रारब्धाग्निमुखा इत्यन्वयः । त इति गुरुमूर्तिपाः । द्विधा ह्यग्निमुखम् आघारवदापूर्विकं च । तत्र नित्यहोम आपूर्विकं, विशेषहोमेषु आघारवदिति नियमः । प्रागिध्मादिति । अत्र पक्षत्रयं भवति । अग्नावलङ्कृते पीठं प्रपूज्य तत्र मूलेन देवमावाह्य सावरणं संपूज्य पुनरिध्मादीन् जुहुयादित्येकः पक्षः । स तावदुच्यते प्रागिध्मादिति । इध्माघाराज्यभागानन्तरं पीठपूजादि सर्वं कृत्वा प्रणवव्याहृत्यादिहोममारभेतेत्यपरः पक्षः । स इह निर्वृत्ते विधिनेत्यादिनोच्यते । निर्वृत्तमनुष्ठितम् । अलङ्कृतेऽग्नौ पीठपूजां विधाय इध्माघाराज्यभागेषु कृतेषु देवमावाह्य सावरणमिष्ट्वा होममारभेतेति पक्षान्तरम् । तदिह प्रागिध्मात्सुसमिद्धविष्टरनिविष्टं देवम् आज्यभागचरमे निर्वृत्ते आराधनुयुः इत्येवमुक्तम् । प्रागिध्मात् सुसमिद्धे[2] यत् विष्टरं तस्मिन्निविष्टमिति । कदा निविष्टमिति आज्यभागान्ते निर्वृत्ते सतीदानीं निविष्टमित्येवं योज्यम् । तत्तन्मूर्तिसमर्चनान्तमिति । विष्णुशिवादयस्तत्तन्मूर्तयः । यद्वा तत्तत्कुण्डाधिकृता मूर्तयो विवक्ष्यन्ते । तदुक्तम् —

षट्सु वह्निषु षण्मूर्तीर्ध्यात्वा सङ्कल्प्य वै क्रमात् ।'

इत्यादि । पूर्वकुण्डे वासुदेवमन्त्रकल्पितात्मा मूर्तिपोऽग्नौ वासुदेवमभिध्याय तन्मन्त्रेणेष्ट्वा तेनैव होमं विदध्यात् । तथैव दक्षिणे सङ्कर्षणमित्यादि । दिङ्मूर्तीनां प्रधानवदेव पूजा । यद्वा तत्तद्विधानेन पूजेष्यते । तच्च पूजापटले वक्ष्यामः ॥ १०६ ॥

१. 'दि जुहु' घ. च पाठः. २. 'द्धं विष्ट', ३. 'षण्मुखं ध्यात्वा' . ४. 'न्त्य क', ५. 'नदेव' क. पाठः.

तारव्याहृतियोगपीठमनुभिर्हुत्वाज्यमेकैकशः
पुंसा पक्वमुमापतौ महिषहन्त्र्यां जुह्वतु त्रिष्टुभा ।
गायत्र्या निजयेतरेषु सहभूराद्या प्रभेशेऽनया
सर्पिः स्वैर्यजनाणुभिश्च हवनेऽशेषे मतोऽयं क्रमः ॥ १०७ ॥

विमर्शिनी ।

पुनस्तारव्याहृतियोगपीठमनुभिरेकैकश आज्यं हुत्वा उमापतौ पुंसा तत्पुरुषेण पक्वं जुह्वतु । महिषहन्त्र्यां त्रिष्टुभा , इतरेषु निजनिजया गायत्र्या , प्रभेशे सहभूराद्यानया भूरादियुक्तया गायत्र्या च, स्वैः स्वैर्यजनाणुभिश्च सर्पिर्जुह्वतु । अशेषहवने सर्वेषु होमेष्वयं क्रमो मतः स्यात् ॥ १०७ ॥

विवरणम् ।

सहभूराद्येति । स्त्रियां तृतीया । अनयेति स्वगायत्रीग्रहणम् । स्वैर्यजनाणुभिश्चेति । विग्रहपूजामन्त्रैरावरणपूजामन्त्रैश्चेत्यर्थः । हवनेऽशेष इति अशेषे सर्वस्मिन्नपि होम इष्टकाहोमादौ तत्त्वहोमादौ प्रायश्चित्तहोमादावपीत्यर्थः ॥ १०७ ॥

व्योमव्यापिदशाक्षरेण गिरिशे मन्त्रेण वौषड्वता
विष्णौ द्वादशवर्णकेन निजमूलेनान्यदेवेष्वपि ।
पूर्णां शास्तरि भूर्भुवःस्वरिति मन्त्रेणापि जुह्वत्वमी
तत्तद्द्रव्यमनुप्रभेदविरतौ होमेषु सर्वेष्विह ॥ १०८ ॥

विमर्शिनी ।

अमी गुरुमूर्तिपाः इह होमकाले सर्वेषु होमेष्वपि तत्तद्द्रव्यमनुप्रभेदविरतौ तत्तद्द्रव्याणां भेदेऽवसाने च गिरिशे वौषड्वता वौषट्कारान्तेन व्योमव्यापिदशाक्षरेण मन्त्रेण पूर्णां जुह्वतु । विष्णौ वौषड्वता द्वादशवर्णकेन , अन्यदेवेषु तथा निजनिजमूलेनापि , शास्तरि च तथा भूर्भुवःस्वरिति मन्त्रेण पूर्णां जुह्वतु ॥ १०८ ॥

विवरणम् ।

व्योमव्यापिदशाक्षरेणेति । वौषड्वता मन्त्रेणेति सर्वत्र सम्बन्धनीयम् । तत्तद्द्रव्यमनुप्रभेदविरताविति । तत्तद्द्रव्यप्रभेदावसाने यथा चतुर्द्रव्यहोमान्तेष्विति तत्तन्मन्त्रप्रभेदावसाने यथा 'हुत्वालोपनिषद्भिषड्वसुजिनाणूपचारैर्घृतम्', इति । मनूनां प्रभेदविरतिरपीह गृह्यते । यथा पूजामन्त्र-

१. 'दि', २. 'ष्वपि' ज. पाठः.

होमान्ते भूरादिमन्त्रैराज्यं द्रव्याहुतेः प्रागित्यादौ च । एवमुभयप्रभेदाविरतावपि यथा 'सर्वैर्द्रव्यवशैरित्यादाविति । होमेषु सर्वेष्विहेतीष्टकाहोमादिसकलहोमपरिग्रहार्थमुक्तम् ॥ १०८ ॥

पञ्चब्रह्मतदङ्गकैः पशुमतौ स्वेज्योदिताशाक्रमो-
पात्तैर्जुहुतु ते समिद्घृतचरून् लाजान् सराजीतिलान् ।
वर्मान्तैर्यवशालिसक्तुघृतयुक्तान् वासुदेवादिभि-
र्मूलेनापि तिलं यवं च विनिमय्यैतावसक्तून् हरौ ॥ १०९ ॥

विमर्शिनी ।

पशुपतौ ते स्वेज्योदिताशाक्रमोपात्तैः स्वपूजायामुक्तदिक्क्रमात् प्राप्तैः पञ्चब्रह्मतदङ्गकैः पञ्चब्रह्माभिर्वर्मान्तैस्तदङ्गैश्च मन्त्रैः समिद्घृतचरून् लाजान् सराजीतिलान् यवशालिसक्तुघृतयुक्तान् दश द्रव्याणि जुहुतु । हरौ असक्तून् सक्तुरहितान् तिलं यवं च विनिमय्य व्यत्यासं कृत्वा नव द्रव्याणि वासुदेवादिभिर्दिक्षु मध्ये मूलेन चापि जुहुतु ॥ १०९ ॥

विवरणम् ।

स्वेज्योदिताशाक्रमोपात्तैरिति । स्वपूजाविहितदिग्व्यवस्थया गृहीतमध्यकुण्ड ईशेन प्रागादिकुण्डेषु तत्पुरुषहृदयादिभिः । नवहोमविधावेवं भवति । पञ्चहोमसम्भवे तु अङ्गानामपरिग्रह इति । वासुदेवादिभिरिति । हराविति सम्बध्यते । वेदादिविकल्पोपलक्षणमेतत् । तदुक्तम् —

'द्रव्याणि वेदाद्यैरङ्गैर्वा मूर्तिभिस्तु वा'

इति । नवहोमविधौ तु प्रागाद्यष्टकुण्डेषु विष्णुमधुसूदनादयो ग्राह्याः विनिमयो वैपरीत्यम् ।

"समिद्घृतचरूंल्लाजान् सर्षपांश्च यवांस्तिलान् ।
शालीनाज्यं च जुहुयुः पञ्च वा नव वा हरौ ।"

इति । शैवे दश द्रव्याणि, वैष्णवे नवेति भेदः ॥ १०९ ॥

---

१. 'जान् शाली', क. पाठः.

दिक्षु स्युः समिधः पलाशखदिराश्वत्थोत्थिता धूर्जटौ
प्लाक्षी रोहिणजा च बिल्वतरुजा चौदुम्बरी काष्मरी ।
श्रीशे तोरणदारुजाश्च चतसृष्वाशासु वा ब्रह्मजा
स्ता वा शूलिनि पञ्चहोमसमये ब्राह्मी सदान्तर्द्वयोः ॥ ११० ॥

विमर्शिनी ।

तत्र समिद्भेदमाह — दिक्ष्विति । धूर्जटौ दिक्षु पलाशखदिराश्वत्थोत्थिताः प्लाक्षी रोहिणजा च बिल्वतरुजा औदुम्बरी काष्मरी च समिधः स्युः । श्रीशे चतसृष्वाशासु तोरणदारुजाश्च समिधः, ब्रह्मजाः पालाश्यो वा समिधः । शूलिनि पञ्चहोमसमये ता वा तोरणदारुजा वा पालाश्यो वा । द्वयोः शिवविष्ण्वोः सदा सर्वदा अन्तराचार्यकुण्डे ब्राह्मी पालाशी समित् ॥ ११० ॥

विवरणम् ।

रोहिणो वटः । तोरणदारुजा इति तासां दिग्व्यवस्थापि सैव । प्रागादिषु अश्वत्थोदुम्बरवटप्लक्षसमिध इति । ब्रह्मजा वेति । पालाश्यो दिक्चतुष्टयेऽपि विकल्प्यन्ते । नवहोमसम्भवे तु पालाश्य एव ता वा शूलिनि पञ्चहोमसमय इति । पालाश्यो वा तोरणद्रुमसमिधो वेत्यर्थः । प्लक्षोदुम्बररोहिणाश्वत्थास्तोरणद्रुमाः । ब्राह्मी सदान्तर्द्वयोरिति । शिवे हरौ च पञ्चहोमसम्भवे । नवहोमसम्भवेऽपि स्वोक्तसमिद्भेदपरिग्रहे केवलपालाशीपरिग्रहेऽपि गुरोः पालाश्येव समिदित्यर्थः ॥ ११० ॥

दिक्कुण्डेषु समिद्धवह्निषु ततो वेदादिमन्त्रैः क्रमात्
पालाशेध्मघृते चरुं च सघृतं हुत्वाथ भूरादिभिः ।
शार्ङ्गीशे तिलसर्षपान् सहयवान् लाजान् घृतं चान्ततः
सर्वे जुह्वतु मूलतस्तदखिलं मूलानले च स्वयम् ॥ १११ ॥

विमर्शिनी ।

शिवनारायणे होमानाह — दिक्कुण्डेष्विति । ततः शार्ङ्गीशे सर्वे मूर्तिपाः समिद्धवह्निषु दिक्कुण्डेषु पालाशेध्मघृते पलाशसमिधम् आज्यं चरुं

1. 'स्यु' इति मूलकोशपाठः. 2. 'वि न तु' क. पाठः 3 'मवटास्तो' ख. ग पाठः.

सघृतं घृतेन सह चत्वारि द्रव्याणि वेदादिमन्त्रैः वेदानामादिमूतैर्मन्त्रैः 'अग्निमीळे' 'इषे त्वा' 'अग्न आयाहि' 'शन्नो देवी:' इत्येभिर्हुत्वाथ भूरादिभिश्चतुर्भिर्मन्त्रैश्च तथा तिलसर्षपान् सहयवान् लाजान् अन्ततोऽवसाने मूलतो घृतं च जुहुतु । मूलानले मध्याग्नौ तदखिलं द्रव्यनवकं स्वयं च जुहोतु । अत्र द्रव्यसम्बन्धिनो मन्त्राः, न कुण्डसम्बन्धिनः ॥ १११ ॥

विवरणम् ।

समिद्धवह्निष्विति सर्वेष्वप्यग्नेर्होमयोग्यताप्रदर्शनार्थम् । यदुक्तम्—

"स्निग्धे प्रदक्षिणावर्ते सुसमिद्धे हुताशने ।
विधूमे लेलिहाने च होतव्यं कार्यसिद्धये ॥"

इति । वेदादिमन्त्रैर्दिक्कुण्डेष्विति सम्बन्धः । अथ भूरादिमन्त्रैरिति दिक्कुण्डेष्विति सम्बध्यते । मूलतस्तदखिलमिति । समिदादिनवद्रव्याणि । स्वयमिति गुरुः । अथवा वेदादिमन्त्रैः पालाशेध्मघृते चरुं च सघृतमित्येवं योजना । सर्वेषु कुण्डेष्वप्येत एव मन्त्राः । अथ भूरादिभिस्तिलसर्षपान् सहयवान् लाजांश्चेति पुनर्योज्यम् । सर्वकुण्डेष्वपि भूरादयः घृतं चान्ततस्सर्वे जुह्वतु मूलत इति । सर्वकुण्डेष्वपि नवद्रव्यस्य मूलमुक्तम् । तदखिलं मूलानले च स्वयमिति । चकारो मूलत इत्येतदनुकर्षणार्थः । नवहोमसम्भवेऽपि सममेतदित्यवबोद्धव्यम् ॥ १११ ॥

दुर्गाभिश्च सकृत् सकृद् घृतहुतिं कृत्वाद्यया मध्यतो
ब्राह्मीर्वेदमुखैर्दिशासु समिधो ब्रह्मोद्भवाः पैप्पलीः ।
तद्वत् खादिरबिल्वजाश्च जुहुयुस्ते त्रिष्टुभाज्यं चरुं
दुर्गायां सयवं सशालितिलसिद्धार्थं सदूर्वाग्रकम् ॥ ११२ ॥

विमर्शिनी ।

दुर्गायां सर्वे गुरुमूर्तिपाः पञ्चभिर्दुर्गाभिश्च सकृत् सकृद् घृतहुतिं कृत्वा मध्यतः आचार्यकुण्डे आद्यया त्रिष्टुभा ब्राह्मीः समिधः, दिशासु वेदमुखैः 'अग्निमीळे' इत्यादिचतुर्मन्त्रैर्ब्रह्मोद्भवाः पैप्पलीः तद्वत् खादिरबिल्वजाश्च समिधो जुहुयुः । ते सर्वे त्रिष्टुभा आज्यं चरुं सयवं सशालितिलसिद्धार्थं सदूर्वाग्रकं च सप्त द्रव्याणि जुहुयुः ॥ ११२ ॥

---

१. 'वेद' ख. घ. च. पाठः. २. 'ब्रा' ङ. पाठः.

विवरणम् ।

वेदमुखैरिति । वेदादिमन्त्रैः । त इति । गुरुमूर्तिपाः । त्रिष्टुभेत्यस्याज्यादिभिस्सम्बन्धः । अत्र समिदादीन्यष्ट द्रव्याणि । नवहोमोपपत्तावपि समानतत् । तदा च कोणकुण्डेषु पालाश्यः समिध इति ॥ ११२ ॥

षट्कृत्वोऽत्र सनत्कुमारकमुखैराज्यं गुहेऽर्चाक्रमाद्
दिक्कुण्डाधिकृतैः स्वमूलयुगषट्द्वन्द्वाह्वयैश्चैकशः ।
तत्तन्मूर्त्यणुना दिशासु जुहुयुर्मूलेन चान्तः समि-
त्सर्पिर्दीदिविलाजकांस्तिलयवान् सिद्धार्थकांश्च क्रमात् ॥ ११३ ॥

विमर्शिनी ।

गुहे अत्र अधिवासहोमे अर्चाक्रमाद् दिक्कुण्डाधिकृतैः पूजाक्रमात् प्रागादिक्रमेण दिक्कुण्डेष्ववस्थितैः सनत्कुमारकमुखैः सनत्कुमारभवपुत्रस्कन्दबाणहेमचूडभद्रसेनैर्मध्ये मूलेन च षट्कृत्वः आज्यं जुहुयुः । स्वमूलयुगषड्द्वन्द्वाह्वयैः मूलोपचारद्वादशनामभिः एकैकशः आज्यं जुहुयुः । पुनः दिशासु तत्तन्मूर्त्यणुना अन्तः मध्ये च समित्सर्पिर्दीदिविलाजकान्, दीदिवीति हविरुच्यते, तिलयवान् सिद्धार्थकांश्च सप्त द्रव्याणि क्रमाज्जुहुयुः ॥ ११३ ॥

विवरणम् ।

अर्चाक्रमाद् दिक्कुण्डाधिकृतैः सनत्कुमारकमुखैः षट्कृत्व इति सम्बन्धः । पूर्वकुण्डे सनत्कुमारः आग्नेयकुण्डे भवपुत्र इत्यादिरिज्यायां क्रमः । स्वमूलयुगं मूलमनुरुपचारमनुश्च । षट्द्वन्द्वाह्वयानि द्वादशनामानि । तत्तन्मूर्त्यणुनेति । तत्तद्दिगधिकृतसनत्कुमारादिमन्त्रेणेत्यर्थः । मूलेन चान्तरिति गुरुहोमाभिप्रायम् । अत्र मूलेन षट्कृत्वः सकृच्चोपचारः । द्वादशनामभिराज्यहोमः पूर्वमुचित इति । दीदिविः हविः ॥ ११३ ॥

ब्रह्मद्रुखदिरबोधिप्लक्षवटोदुम्बरोद्भवाः समिधः ।
प्रागादिदिक्क्रमात् स्युः स्कन्दे बैल्व्यः कदम्बजा वान्तः ॥

विमर्शिनी

तत्र समिध आह — ब्रह्मद्रुखदिरेति । ब्रह्मद्रुखदिरबोधिप्लक्षवटोदुम्बरोद्भवाः, बोधिरश्वत्थः, प्रागादिदिक्क्रमात् समिधः स्युः । अन्तर्बैल्व्यः कदम्बजा वा । (കദംബം=കടമ്പ്.) ॥ ११४ ॥

---

१. 'ये मं' घ. च. छ. पाठः. २. 'ते' घ. छ. पाठः.

षण्मन्त्रैश्च सकृत् सकृद् घृतहुतिं कृत्वा गणेशे निजै-
रष्टाशाधिकृतैर्गणञ्जयमुखैर्मन्त्रैः समित्सर्पिषी ।
सर्वे जुह्वतु चान्नलाजपृथुकाख्यान् लड्डुकापूपकान्
शष्कुल्याज्यममूनि मूलमनुना द्रव्याणि मध्ये गुरुः ॥ ११५ ॥

विमर्शिनी ।

गणेशेऽधिवासहोममाह गणेशे गुरुमूर्तिपाः षण्मन्त्रैः सकृत्सकृद् घृतहुतिं कृत्वा दिक्षु अष्टाशाधिकृतैः अष्टदिक्षु स्थितैर्गणञ्जयमुखैर्निजैर्मन्त्रैः समित्सर्पिषी अन्नलाजपृथुकाख्यान् लड्डुकापूपकान् शष्कुल्याज्यं च, (पृथु-कം=അവൽ. ലഡ്ഡുകം=എള്ളുണ്ട. ശഷ്കുലി=ഞണ്ണാപ്പുരി) नव द्रव्याणि जुह्वतु । मध्ये गुरुरमूनि द्रव्याणि मूलमनुना जुहोतु ॥ ११५ ॥

विवरणम् ।

निजैः षण्मन्त्रैरिति सम्बध्यते । मूलमनुनाऽमूनि द्रव्याणीति षण्मन्त्रहोमोऽत्रापीष्यते । पञ्चहोमोपपत्तौ तु दिगधिकृता एव गणञ्जयादयः ॥ ११५ ॥

पलाशखदिराश्वत्थशमीद्रुसमिधः स्मृताः ।
दिक्षु बिल्वभवा मध्ये विदिक्षु च गणेश्वरे ॥ ११६ ॥

विमर्शिनी ।

तत्र समिध आह—गणेश्वरे दिक्षु पलाशखदिराश्वत्थशमीद्रुसमिधः मध्ये विदिक्षु च बिल्वभवाः समिधः स्मृताः ॥ ११६ ॥

विवरणम् ।

दिक्ष्विति पूर्वत्र सम्बन्धः ॥ ११६ ॥

षट्षड्विंशतिनाममन्त्रघृतहोमान्ते प्रभेशे समि-
त्सर्पिर्दधिविलाजशालियवसिद्धार्थांस्तिलान् जुह्वतु ।
सर्वे द्रव्यवशैः स्वमूलजिनचूर्णाभ्यां हुता शास्तृना-
म्नार्याख्येन भवाभिधेन शरमन्त्रेण स्वदिक्पाणुना ॥ ११७ ॥

विमर्शिनी ।

शास्तरि होमानाह—षट्षड्विंशतीति । प्रभेशे सर्वे षट्षड्विंशतिनाममन्त्रघृतहोमान्ते षण्मन्त्रैः षड्विंशतिनाममन्त्रैश्च घृतहोमावसाने समित्सर्पिर्दधिविलाजशालियवसिद्धार्थान् तिलांश्च द्रव्यवशैः द्रव्यवशादागतैर्मन्त्रैः

---

१. 'मुखैः' ङ. पाठः. २. 'मभिधृतमयार्थे मूक्तोऽन्तः स', ३. 'दिशु इ इति विवरणारतः क. ख. ग. ङ. पाठः.

स्वमूलजिनवर्णाभ्यां मूलेन गायत्र्या हृदा हृदयमन्त्रेण शास्तृमन्त्रेण आर्याख्येन आर्यमन्त्रेण भवाभिधेन भवमन्त्रेण शरमन्त्रेण स्वदिक्पाणुना स्वस्वदिक्पालमन्त्रेण इत्यष्टभिर्मन्त्रैरष्ट द्रव्याणि जुहुयात् ॥ ११७ ॥

विवरणम् ।

षट्पञ्चविंशतिनामभिर्घृतमिति । मध्ये दिक्ष्वपि पञ्चहोमे नवहोमेऽपि समानमेवैतत् । दिग्भिरिति । प्रतिदिश इति भावः । द्रव्यवर्णैरिति । द्रव्याधीनकमेरेव न तु दिगधीनकमैरित्यर्थः । जिनवर्णो गायत्री । 'ओं रेवन्ताय नमः इत्ययं हृन्मन्त्रः । सर्वेऽप्येते दिक्पालमन्त्रवर्जं मूलविशेषा एवेति सम्प्रदायः ॥ ११७ ॥

अथ शास्तृगोप्तृभूताधिपतिपदं ङेनमोन्वितं च पृथक् ।
प्रणतिस्वाहान्तोऽयं शास्त्रणुरोमादिकः समुद्दिष्टः ॥ ११८ ॥

विमर्शिनी ।

शास्त्रादिमन्त्रानाह--अथेति । अथ शास्तृगोप्तृभूताधिपतिपदं शास्तृपदं गोप्तृपदं भूताधिपतिपदं च पृथक् ङेनमोन्वितं चतुर्थ्येकवचनेन नमसा च युक्तं भवेत् । प्रणतिस्वाहान्तः नमःस्वाहान्तः ओमादिकः प्रणवादिकश्च एकविंशत्यक्षरः शास्त्रणुः समुद्दिष्टः ॥ ११८ ॥

विवरणम् ।

ओं शास्त्रे नमो गोप्त्रे नमो भूताधिपतये नमो नमः स्वाहेति शास्तृमन्त्रः ॥ ११८ ॥

आर्याय विश्वगोप्त्रे सेनान्यै नतियुगाग्निजायाढ्यः ।
तारादिरार्यमन्त्रः संप्रोक्तो लिख्यतेऽथ भवमन्त्रः ॥ ११९ ॥

विमर्शिनी ।

तारादिः, आर्याय विश्वगोप्त्रे सेनान्ये इति स्वरूपं, नतियुगाग्निजायाढ्यः नमो नमः स्वाहेति युक्तः सप्तदशाक्षर आर्यमन्त्रः संप्रोक्तः । अथ भवमन्त्रो लिख्यते ॥ ११९ ॥

---

१. 'कस्त्रिसप्तार्णः ॥' ख. ज. पाठः.

नमस्ते भवपुत्राय भवतुल्यबलाय च ।
वरदाय नमस्तेऽस्तु भक्तप्रियहिताय वै ॥ १२० ॥

विमर्शिनी ।

तं लिखति—नमस्त इति ॥ १२० ॥

स्वाहा इति ॥

ओं शराय नमस्तेऽस्तु नमः कुक्कुटकेतवे ।
नमस्ते नीलरूपाय नीलाम्बरधराय च ॥ १२१ ॥

विमर्शिनी ।

शरमन्त्रं च पठति—ओं शरायेति ॥ १२१ ॥

सनतिद्वितयस्वाहान्तोऽयं स्याच्छरमन्त्रकः ।
वदामि प्राग्दिगीशाणुमंमुनान्यान् समुन्नयेत् ॥ १२२ ॥

विमर्शिनी ।

सनतिद्वितयस्वाहान्तः नमो नमः स्वाहेत्यन्तोऽयं शरमन्त्रकः स्यात् । प्राग्दिगीशाणुम् इन्द्रमन्त्रं वदामि । अमुना इन्द्रमन्त्रेण अन्यान् अग्न्यादिमन्त्रान् समुन्नयेत् ॥ १२२ ॥

विवरणम् ।

अमुनान्यानिति । सुरादिपदस्थाने तेजआदिपदयोजनयेति भावः ।

ओमिन्द्राय सुराधिपतय इति संकीर्त्य सायुधार्णान्ते ।
वदतु सवाहनपरिवारायेति नमोन्तमिन्द्रमनुरुक्तः ॥ १२३ ॥

विमर्शिनी ।

ओं इन्द्राय सुराधिपतय इति संकीर्त्य सायुधार्णान्ते सायुध इत्यक्षरान्ते सवाहनपरिवारायेति वर्णान् नमोन्तं वदतु । एष इन्द्रमनुरुक्तः ॥ १२३ ॥

मध्ये पालाश्यः स्युः परितोऽथ पलाशखदिरचलदलजाः ।
प्लक्षवटोदुम्बरजाः समिधो बैल्वश्च मार्गजाश्चात्र ॥ १२४ ॥

---

१. 'मनुना' ङ. पाठः.

विमर्शिनी।

समिधः कथयति — मध्य इति। 'मध्ये पालाश्यः स्युः। अथ परितः पलाशखदिरचलदलजाः। चलदलोऽश्वत्थः। प्लक्षवटोदुम्बरजाः वैरूप्यः मार्गजाश्च समिधः स्युः ॥ १२४ ॥

विवरणम्।

पञ्चहोमसमये तु दिक्षु स्वतोरणद्रुमसमिधो वा पलाशाश्वत्थवटविल्वसमिधो वा ग्राह्याः ॥ १२४ ॥

मध्ये दिक्ष्वपि वा बहिश्च चतसृष्वार्ये समित्सर्पिषी
मूलेनौदनलाजसर्षपयवा होम्यास्तिलाश्चाज्यकम्।
दिक्षु स्युः समिधोऽत्र पिप्पलवटप्लक्षाख्यशम्याकजा
लाजाद्येषु तिलान्तिमेषु मनवोऽत्रार्यादयो वा क्रमात् ॥

विमर्शिनी।

पञ्चहोमपक्षे विकल्पमाह — मध्य इति। आर्ये मध्ये बहिश्चतसृषु दिक्षु च समित्सर्पिषी ओदनलाजसर्षपयवास्तिलाश्चाज्यकं च मूलेन होम्याः। अपि वा अत्र पक्षे दिक्षु पिप्पलवटप्लक्षाख्यशम्याकजाः समिधः स्युः। अत्र लाजाद्येषु तिलान्तिमेषु च द्रव्येषु चतुर्षु आर्यादयः 'आर्याय विश्व' 'नमस्ते' 'ओं शराय' 'ओमिन्द्राय' इत्यादि च चत्वारो मन्त्रा वा क्रमात् स्युः ॥१२५॥

विवरणम्।

शास्तर्येव विकल्पेन होमान्तरमाह — आर्येऽन्तश्चेति। कृते स्वाख्यहुत इति। षट्षड्विंशतिनामभिर्घृतहुते कृते इत्यर्थः। लाजान्तचतुष्केति। प्रागुक्तं समित्सर्पिर्दोदिविलाजेत्येतद् गृह्यते। सर्वकुण्डेषु मूलमेव मन्त्रः। यद्वा समित्सर्पिर्हविषामेव मूलं, लाजसर्षपयवतिलानामार्यादिमन्त्राः पुनर्घृतस्य मूलं तदेतदाह — लाजाद्येष्विति। आर्यादयो वेति।

'आर्यः शास्ता गुहासन्नः सेनानीश्च प्रभापतौ'

इत्युक्ता ग्राह्याः। नवहोमसम्भवे त्विह कोणेषु पालाश्य एव समिधः।

१. 'आर्येऽन्तश्च चतुर्दिशासु च कृते स्वाख्याहुते मूलतो
वा लाजान्तचतुष्कसर्षपयवा होम्यास्तिलाश्चाज्यकम्।'

१ छि विवरणाहृत। क. भ, ङ. पाठः.

वेदाद्यैर्जुहुयुः सर्वे मूलेन गुरुरेव च ।
अष्टमूर्तिभिरष्टासु जुहुयुर्वाष्टमूर्तिपाः ॥

इति ॥ १२५ ॥

हुत्वेत्यष्टशतादिसंख्यमुदितांणुद्रव्यक्लृप्त्याखिले
संपातं मनुबिम्बके समुपसिच्य स्वस्वमन्त्रान् जपेत् ।
तत्तद्द्रव्यहुतौ क्रमेण शरजे पज्जानुनोर्गुह्यके
नाभीवत्सशिरःशिखासु विधिवत् संपातमप्यर्पयेत् ॥

विमर्शिनी ।

अथ सामान्येन क्रियाशेषमाह — हुत्वेति । अखिले इति एवम् उदिताणुद्रव्यक्लृप्त्या उक्तमन्त्रद्रव्यक्लृप्त्या अष्टशतादिसंख्यमित्यादिशब्द उभयथा योजनीयः । अष्टसहस्रं वा अष्टविंशत्यादिकं वेति । उक्तसङ्ख्यं हुत्वा संपातं मनुबिम्बके समुपसिच्य स्वस्वमन्त्रान् स्वस्वहोममन्त्रान् जपेत् । शरजे तत्तद्द्रव्यहुतौ पज्जानुनोः गुह्यके नाभीवत्सशिरश्शिखासु. वत्सं हृदयम , एषु स्थानेषु गुरुमूर्तिपाः क्रमेण संपातं विधिवत् तत्र तत्र स्रुवेण अर्पयेत् अर्पयेयुः ॥ १२६ ॥

विवरणम् ।

हुत्वेति । इत्येवमित्यर्थः । अष्टशतादिसङ्ख्यमिति । यदुक्तम् —

"अष्टोत्तरसहस्रं वा शतमष्टाधिकं तु वा ।
सङ्ख्यात्र समिदादीनामष्टाविंशतिरेव वा ॥"

इति । सम्पातं मनुबिम्बके समुपसिच्येति । सम्पातमेकस्मिन् पात्रे संयोज्य प्रतिमाया मूर्ध्नि समर्पयेत् । यद्वा तत्तद्द्रव्यहुतौ क्रमेणेत्येतदिहापि सम्बन्धनीयम् । तथा च प्रतिद्रव्यं सम्पातस्पर्शो भवति । पादादिमूर्धान्तं वा स्पर्शनं स्यात् । स्कन्दे तथा दर्शनात् । स्वस्वमन्त्रानिति तत्तद्धोममन्त्रा उक्ताः । जपेदिति । गुरुः । यद्वा स स इति । गुरुर्मूर्तिपाश्च स्वं स्वं सम्पातं परितोऽवस्थिता यथोक्तं समर्प्य पुष्पाराधिपूर्वकं दर्भैर्बिम्बं स्पृशन्तः स्वस्वहुतमन्त्रान् जपेयुरित्यर्थः । विधिवदित्येतदिहापि समानम् । वत्सो वक्षः । विधिवदिति तत्तन्मन्त्रजपादिकमुक्तम् । सम्पातमप्यर्पयेदिति । प्रतिपर्वं च कुर्यादित्यपि शब्दाशयः । यथोक्तम् —

१. 'तं द्रव्याणुक्लृ' क, 'तद्द्रव्याणुक्लृ' ग. झ. ञ. ढ. पाठः. २. 'जपन्' ढ. पाठः. ३. 'संस्पृशेत्', ४. 'र्शोऽपि भवति' ५. 'त्विष्वं कार्यो इत्यपि शब्दार्थः । क. पाठः

"जगदुत्पत्तिसंस्थानं मायाभावं च सर्वशः ।
सदसद्भावभावं च चिन्तयेद् देवसन्निधौ ॥"

इति ॥ १२६ ॥

त्र्यक्षे मृत्युजिता हुनेच्च दधिमध्वाज्यं गणानामृचा
विघ्नेशेऽष्टयुतं शतं मधुघृतक्षीराणि शेषेष्वथ ।
भूराद्यैः क्रमशो घृतं दधि पयो मध्वष्टशो मूलतः
सर्वं चापि गुहे पयोदधिमधून्याज्यं च भूरादिभिः ॥

विमर्शिनी ।

शान्तिहोमं च तत्रैव स्विष्टकृतः प्राक् कुर्यादित्याह — त्र्यक्ष इति । त्र्यक्षे मृत्युजिता मृत्युञ्जयमन्त्रेण दधिमध्वाज्यं चाष्टशतं हुनेत् । विघ्नेशे गणानामृचा मधुघृतक्षीराण्यष्टशतं हुनेत् । अथ शेषेषु भूराद्यैश्चतुर्भिः क्रमशः घृतं दधि पयो मधु च अष्टशो मूलतः सर्वं चापि गुहे भूरादिभिः पयोदधिमधून्याज्यं चाष्टशो हुनेत् । अयं शान्तिहोमः गुरुमूर्तिपैः सर्वैर्वा गुरुणैव वा होतव्यः । उभयथा चागमेषु दर्शनात् ॥ १२७ ॥

विवरणम् ।

शान्तिहोममाह — त्र्यक्ष इति । शेषेष्वथेत्युपरि सम्बध्यते । मूलतस्सर्वं चापीति । मिलितमिति भावः । जुहोत्विति निर्देशादेव आचार्यस्यैवायं होमोऽवसीयते । दधिमध्वाज्यमित्यष्टयुक्तं शतमिति सम्बन्धनीयम् । सङ्ख्यानियम इह सर्वत्र विवक्षित एवेति बोद्धव्यम् ॥ १२७ ॥

पञ्चद्रव्यभवं स्रुवेण पदनाभीहृच्छिरस्स्वर्पयेत्
संपातं सकलाङ्गकेऽपि मनुबिम्बे स्वस्वहोमान्ततः ।
पद्गुह्यात्ममुखे क्रमेण च चतुर्द्रव्योद्भवं त्र्युद्भवं
निःस्थाने प्रयजेच्च किञ्चन पृथक् प्रक्षालयेच्च स्रुवम् ॥

विमर्शिनी ।

तत्संपातस्पर्शनमाह — पञ्चद्रव्यभवमिति । पञ्चद्रव्यभवं संपातं मनुबिम्बके पदनाभीहृच्छिरस्सु पृथक् सकलाङ्गकेऽपि स्वस्वहोमान्ततः स्रुवेणा-

---

१. 'जुहोतु द' इति मूलकोशपाठः. २. 'दुग्धाज्य' घ, ३. 'यं सम्ब' क, ४, 'स्रुवम् ।' ङ, ५. 'क् स्रुवेण स' क, क् स्रुव स क. ख. पाठः.

पेदेत् । चतुर्द्रव्योद्भवं पद्गुह्यात्ममुखेषु क्रमेण च त्र्युद्भवं त्रिस्थाने आधारहृद्भ्रूमध्येषु च । पृथक् किञ्चन प्रयजेच्च । पृथक् स्रुवं प्रक्षालयेच्च ॥ १२८ ॥

विवरणम् ।

पञ्चद्रव्यभवमिति सम्पातो विशेष्यते[1] । सकलाङ्गकेऽपीति । मूर्धान्तं स्पर्शनमिति सम्प्रदायः । आत्मशब्दो हृदयवचनः । त्रिस्थान इति । शिवे ब्रह्मविष्णुरुद्रभागेषु गणपतौ पादहृच्छिरस्स्वित्यर्थः । प्रयजेच्च किंचनेति । गुरुरेव । हुतमन्त्रेण मूलेन च यजनं जपश्चेष्यते । पृथगित्युपर्यपि योज्यम् । प्रक्षालयेच्चेत्युत्तरहोमार्थम् । तदुक्तम् —

"क्षालयित्वा स्रुवं पश्चात् कुर्याद् द्रव्यान्तराहुतिम् ।"

इति ॥ १२८ ॥

सर्वेष्विह स्वोदितशक्तिबीजतः
शिवेऽथवोमावसुवर्णतो घृतम् ।
आहुत्य पीठेऽङ्घ्र्युपले स्रुवेण तत्
संपातमासिच्य तथाधिवासयेत् ॥ १२९ ॥

विमर्शिनी ।

पुनः पीठाद्यधिवासनार्थं होमोऽप्यत्रैव कार्य इत्याह — सर्वेष्विति । इहैव सर्वेषु देवेषु स्वोदितशक्तिबीजतः स्वस्वशक्तिबीजेन, शिवे अथवा उमावसुवर्णतः औमेयेनाष्टाक्षरेण घृतमष्टशतादिसंख्यमाहुत्य पीठे स्रुवेण च घृतमाहुत्य अङ्घ्र्युपले नपुंसकशिलायां च तत्संपातं चासिच्य तथा तद्द्वयमधिवासयेत् ॥ १२९ ॥

विवरणम् ।

इदानीं पीठाधिवासहोममाह — सर्वेष्विहेति । उमावसुवर्णमौमेयमष्टाक्षरं, तत्सम्पातमासिच्येति सम्बन्धः । अङ्घ्र्युपलं स्रुवेणेति घृतमाहुत्येति सम्बन्धः । ब्रह्मशिलायामित्यर्थः । अत्रानन्तपृथिवीहोमोऽपि स्यात् । पीठहोमे धर्मादिहोमोऽप्युचित एव । होमद्वये तत्तन्मन्त्रेण पूर्णाहुतिः । तथाधिवासयेदिति । बिम्बवद्धुतमन्त्रजपादिकमुक्तम् । यद्वा बिम्बमपि स्वसम्पातस्पर्शने कृतेऽधिवासनीयमिति प्रासादहोमोऽपीदानीं कार्यः । वक्ष्यति हि — 'पीठाधिवास-

१. 'विशेष्यते' क. पाठः. २. 'न्तं दिस्प' ग. घ. ङ. पाठः. ३. 'मोतीह सम्म', ४. 'त' च, ५. 'देऽपि त', ६. 'ह्रदिदमामिति' क. पाठः.

समक्षे विहिताधिवासम्' इति । प्रासादमन्त्रस्तु प्रागुक्त एव । तेनाष्टशतादि[1]-सङ्ख्यं घृतं हुत्वा तत्सम्पातं प्रासादमूर्तौ समर्प्य तदधिवासनं कार्यम् । पीठादेव[2] भूतसंहाराद्यनन्तरं प्रासादान्तस्तले उपविश्य तस्यापि भूतसंहारादिलिपि न्यासान्तं कृत्वा मन्त्रोदयादि कार्यम्। तत्त्वन्यासः त्रितत्त्वन्यासोऽत्राह क्रियते। बिम्बस्थाने परतत्त्वं गर्भगृहे विद्यातत्त्वं तद्बहिरात्मतत्त्वमिति । पूजाकल्पादिस्तु प्रागुक्तैवेति ॥ १२९ ॥

पक्षोपदिष्टमनुनाष्टशतादिसंख्यं
रत्नार्थमाज्यमिह वैव तथा जुहोतु ।
स्वैरष्टबन्धविषये नवशक्तिमन्त्रैः
संपातयुग्ममपि रक्षतु तद्धुतात्तम् ॥ १३० ॥

विमर्शिनी ।

अथाचार्यः इहेवाग्निमुखे वा पृथगग्निमुखं कृत्वा तत्र वा रत्नार्थं रत्न-विन्यासार्थं पक्षोपदिष्टमनुना स्वस्वपक्षहोमार्थमुक्तेन मन्त्रेणाष्टशतादिसंख्य-माज्यं जुहोतु । तथाचाष्टबन्धविषये स्वैः स्वैर्नवशक्तिमन्त्रैराज्यं जुहोतु । तद्धुताचं तद्धोमद्वयाद् गृहीतं सम्पातद्वयं रक्षतु ॥ १३० ॥

विवरणम् ।

रत्नन्यासमाह— पक्षोपदिष्टमनुनेति । इह वैवेति । आचार्यकुण्ड एव । प्रासादोदयभागेऽग्निमाधाय तस्मिन्वेत्यभिप्रायः । प्रासादोत्तरभागे[3] तु रत्नन्यासतः पूर्वमेवायं होमः स्यात् । तदुक्तम्—स्थापयेत् पञ्चगव्येन गर्तम्'-इत्यादि ।

होमकर्म ततः कुर्यात् प्रासादोत्तरपार्श्वतः ।

इत्यादि इति । शक्तिहोममप्याह — स्वैश्चाष्टबन्धविषय इति । इहैव वा इत्येतदिहापि समानम् । पश्चाद्धोमे चतुर्द्रव्यहोमोऽपि कार्यः । पीठहोमा-दिष्वपि समानमेतत् । रक्षत्विति । परेद्युर्ग्येवैतदुपयोग इत्यभिप्रायेणोक्तम् ॥

गायत्र्याज्यहुतान्ते गुहे हुनेद् ब्रह्मसोमवसुरुद्रान् ।
रत्नानि बीजलोहान् धातूनुक्त्वौषधीश्च रत्नहुतौ ॥ १३१ ॥

---

१. 'एतेना' क. पाठः. २. 'देर्भूत' ग. पाठः. ३. 'त्तरभागे' घ. च. पाठः.

विमर्शिनी ।

गुहे हुतौ गायत्र्याज्यहुतेरन्ते ब्रह्मसोमवसुरुद्रान् 'ब्रह्मणे स्वाहा' सोमाय स्वाहा' 'वसुभ्यः स्वाहा' 'रुद्रेभ्यः स्वाहा' रत्नानि 'रत्नेभ्यः स्वाहा' बीजलोहान् 'बीजेभ्यः स्वाहा' 'लोहेभ्यः स्वाहा' धातून् 'धातुभ्यः स्वाहा' ओषधीः 'ओषधिभ्यः स्वाहा' एतान् ब्रह्मादीनुक्त्वाज्यं हुनेत् ॥ १३१ ॥

कृत्वा स्विष्टकृदाद्यं स्वकल्पविधिना प्रसाद्य विभुमन्ते
सर्वेऽपि परिसमूहनपर्युक्षणपूर्विकाः क्रियाः कुर्युः ॥ १३२ ॥

विमर्शिनी ।

एवं सर्वत्र होमानन्तरं स्विष्टकृदाद्यं स्वकल्पविधिना कृत्वा विभुं देवं प्रसाद्यान्ते सर्वेऽपि ते परिसमूहनपर्युक्षणपूर्विकाः क्रियाः कुर्युः ॥ १३२ ॥

विवरणम् ।

एवं कृत्स्नमधिवासहोममुक्त्वा इदानीमुपरिष्टात्तन्त्रमाह — कृत्वा स्विष्टकृदाद्यमिति । स्वकल्पविधिनेत्येतदध उपरि च सम्बन्धनीयम् ॥ १३२

मण्डपबाह्येऽवाच्यां धेनूर्गङ्गाह्वयां तथा यमुनाम् ।
गोदावरीं सरस्वत्याख्यां चास्थाप्य नामभिः प्रयजेत् ॥ १३३ ॥
दुग्ध्वा गायत्र्या ताः श्रीरमणे तारकेण दुर्गायाम् ।
आभ्यामेव मनुभ्यामनयोः स्वाग्नौ पयश्चरुं श्रपयेत् ॥ १३४ ॥

विमर्शिनी ।

अथेह गोदोहनादिकमाह — मण्डपबाह्य इति । श्रीरमणे विष्णौ मण्डपबाह्ये अवाच्यां दक्षिणस्यां दिशि गङ्गाह्वयां तथा यमुनां गोदावरीं सरस्वत्याख्यां च धेनूरास्थाप्य नामभिः 'गङ्गायै नमः' इत्यादिभिः प्रयजेत् । पुनर्गायत्र्या दुग्ध्वा, दुर्गायामप्येवं संस्थाप्य सम्पूज्य तारकेण दुग्ध्वा, अनयोर्विष्णुदुर्गयोः स्वाग्नौ आचार्यकुण्डस्थाग्नौ आभ्यामेव गायत्रीप्रणवाभ्यां पयश्चरुं पायसं श्रपयेत् पाचयेत् ॥ १३३,१३४ ॥

विवरणम् ।

मण्डपबाह्येऽवाच्यामिति । दक्षिणा दिगवाची भवति । गङ्गादिनामान्युपाह्वानपूजनार्थानि ॥ १३३ ॥

---

1. 'नाधिकाः' क. पाठः.

स्वा॥। वत्याचार्यकुण्डे। श्रपणप्रक्रिया त्वेवमुक्ता।

"क्षालिताज्याक्तसक्षीरामुखामारोप्य तण्डुलान्।
क्षालितान् समुपस्तीर्णान् न्यस्यालोड्यावघट्य च॥
उपस्तीर्योदगुद्वास्य क्षालितं प्रोक्ष्य पूजयेत्।'

इति॥ १३४॥

**इष्ट्वा तथैव बिम्बे निवेदयेन्मण्डले च हविरर्धम्।**
**हुत्वांशेन निजाग्नौ सदक्षिणं भोजयेदुदग् विप्रान्॥ १३५॥**

विमर्शिनी।

बिम्बे मण्डले च तथैव गायत्र्या प्रणवेन चेष्ट्वा हविरर्धं हविषोऽर्धमर्धं निवेदयेच्च। अंशेन निजाग्नौ हुत्वा मण्डपस्योदग्भागे विप्रान् सदक्षिणं दक्षिणादानसहितं भोजयेच्च॥ १३५॥

विवरणम्।

इष्ट्वेति बिम्बे मण्डले च विधिवत् पूजोक्ता। तथैवेत्याभ्यामेव मनुभ्याम् इति भावः। हविरर्धमिति। तद्धविर्द्विधा विभज्यैकमंशमुपादाय तदर्धमर्धमित्यर्थः, यथोक्तमुपस्तीर्य शुभे पात्रे क्षिप्तं प्रत्याभिघार्याक्षतं च आद्यं भागं देवाय कल्पयेदिति। हुत्वांशेनेति। शेषार्धेऽप्यर्धेनेति भावः। तच्छेषस्यार्धेन ओदनान्तरोपसेकादिशालिना ब्राह्मणभोजनं शेषार्धेन च बलिरिति द्रष्टव्यम्।

शिवे एकादश हरौ भोज्याः स्युर्द्वादश द्विजाः।
दुर्गायां नव सेनान्यामपि द्वादश षट् तु वा॥
द्वादशैवेशगोविन्दे विघ्नेऽष्टावार्यकोऽपि च॥ १३५॥

**आद्याश्चेति बहिर्दिक्षु वृक्षेष्विति विदिक्ष्वपि।**
**विनायका इति हरेदष्टाशास्वनयोर्बलिम्॥ १३६॥**

विमर्शिनी।

पुनरनयोर्विष्णुदुर्गयोर्मण्डपस्य बहिर्दिक्षु 'आद्याश्चे'ति, विदिक्षु 'वृक्षेष्वि'ति, पुनरपि पूर्वाद्यष्टाशासु 'विनायका' इति च बलिं हरेत्॥ १३६॥

१. 'थैत्याभ्या' घ. पाठः. २. 'पार्धेनेति' क. पाठः. ३. 'व्यम्॥ बलि' च. पाठः.

विवरणम् ।

बलिमाह — आद्याश्चेति अयावृत्त्यायं बलिर्भवति । बहिर्दिक्ष्विति । मण्डपबहिर्भागे । अनयोरिति । विष्णौ दुर्गायां च ॥ १३६ ॥

आद्याश्च कर्मजाश्चैव ये भूताः प्राग्दिशि स्थिताः ।
प्रसन्नाः परितुष्टास्ते प्रतिगृह्णन्त्विमं बलिम् ॥ १३७ ॥

विमर्शिनी ।

दिग्गतान् मन्त्रानाह — आद्याश्चेति ॥ १३७ ॥

प्रागिति प्राक्पदेऽन्यासु दक्षिणे पश्चिमे पदे ।
उत्तरे च पदं प्रोच्य वाच्यो दिग्बलिमन्त्रकः ॥ १३८ ॥

विमर्शिनी ।

प्रागितीति । प्राग्गतो मन्त्रः । अन्यासु दिक्षु प्राक्पदे प्रागिति स्थाने दक्षिणे पश्चिमे उत्तरे च पदं प्रोच्य उक्त्वा दिग्बलिमन्त्रको वाच्यः ॥ १३८॥

विवरणम् ।

प्रागिति प्राक्पदे[1] इति । प्राग्दिशीत्येतत् स्थान इत्यर्थः । यथा — ये भूता दक्षिणे स्थिता इत्यादि । अन्यास्विति । दिक्ष्विति शेषः ॥ १३८ ॥

वृक्षेषु पर्वताग्रेषु ये त्रिदिक्षु च संस्थिताः ।
भूमौ व्योम्नि स्थिता ये च तेऽपि गृह्णन्त्विमं बलिम्॥१३९॥

विमर्शिनी ।

कोणगतमन्त्रमाह — वृक्षेषु पर्वताग्रेष्विति ॥ १३९ ॥

विनायकाः क्षेत्रपालाः ये चान्ये[2] बलिकाङ्क्षिणः ।
पूर्वाद्याः पार्षदाः सर्वे तेऽपि गृह्णन्त्विमं बलिम् ॥ १४० ॥

विमर्शिनी ।

अष्टाशागतं मन्त्रमाह — विनायका इति ॥ १४० ॥

सामान्येदुग्धसिद्धं पायसमन्येषु मूलमन्त्रेण ।
इष्ट्वा निवेद्य हुत्वा विप्रान् सम्भोज्य किरतु बलिमेवम्॥१४१॥

---

१. 'द इति । प्राग्दशीत्यत्र यत् प्रथमं पदं प्रा' क. ख. ग. घ, च. पाठः,
२. 'न्ये' ङ. पाठः.

विमर्शिनी ।

अन्येषु देवेषु बिम्बे मण्डले च मूलेन देवमिष्ट्वा सामान्यदुग्धसिद्धं सामान्यक्षीरे सामान्याग्नौ श्रपितं पायसं निवेद्य स्वाग्नौ हुत्वा विमानपि सम्भोज्य एवं वक्ष्यमाणमन्त्रेण बलिं किरतु ॥ १४१ ॥

विवरणम् ।

सामान्यदुग्धसिद्धमिति । नात्र स्वयं दोहनमिति भावः । श्रपणं त्विह लौकिकाग्नावेव स्यात् । मूलमन्त्रेणेष्ट्वेति । बिम्बे मण्डले चेति भावः । प्राग्वत्-द्विभागः ॥ १४१ ॥

"देवं रुद्रं पुरस्कृत्येमं बलिं प्रतिगृह्णन्तु सर्वभूतानि पैशाचान्तं यजामहे ।"

विमर्शिनी ।

तन्मन्त्रं लिखति — देवं रुद्रमिति ।

अमुना मनुनाष्टाशास्वेकावृत्त्या बलिं करोतु शिवे ।
रुद्रपदस्थानगतस्वस्वपदेनापि तेन शेषेषु ॥ १४२ ॥

विमर्शिनी ।

शिवेऽमुना मनुनाष्टाशास्वेकावृत्त्या बलिं करोतु । शेषेषु देवेषु रुद्र-पदस्थानगतस्वस्वपदेन तेन मन्त्रेण च ॥ १४२ ॥

इमं स्कन्दं पुरस्कृत्य ये देवा ये च राक्षसाः ।
ये भूता येऽसुराः सर्वे पिशाचाः किन्नरास्तथा ॥ १४३ ॥
गन्धर्वाः पन्नगा नागा ऋषयश्च खगा अपि ।
यक्षाश्च मातरः सर्वे चारकाः[1] परमात्मनः ॥ १४४ ॥
ते सर्वे प्रतिगृह्णन्तु तेभ्यस्ताभ्यो नमो नमः ।
इत्यष्टदिक्षु विकिरेद् बलिं क्रौञ्चनिषूदने ॥ १४५ ॥

विमर्शिनी ।

क्रौञ्चनिषूदने स्कन्दे 'इमं स्कन्दं पुरस्कृत्य' इत्यादिमन्त्रेणाष्टदिक्षु बलिं विकिरेत् ॥ १४३, १४४, १४५ ॥

विवरणम् ।

स्कन्दे बलिमाह — इमं स्कन्दमिति ॥ १४३ ॥

---

१. 'खर्पाः' ज, पाठः

आचम्य नैवेद्यविसर्जनाद्यं
सर्वत्र निर्वर्त्य समुक्तनीत्या।
प्रसन्नपूजामपि संविधाय
प्रजप्य मन्त्रान् प्रकरोतु रक्षाम् ॥ १४६ ॥

विमर्शिनी।

सर्वत्र क्रियाशेषमाह — आचम्येति। सर्वत्र देवेष्वाचम्यान्तः प्रविश्य नैवेद्यविसर्जनाद्यं समुक्तनीत्या निर्वर्त्य प्रसन्नपूजामपि संविधाय स्वीयान् मन्त्रान् प्रजप्य रक्षां करोतु ॥ १४६ ॥

विवरणम्।

अथ सर्वेष्वपि पूजाशेषमाह — आचम्येति। प्रजप्य मन्त्रानिति मूलास्त्रादिग्रहणम्। यद्वा 'सूक्तं पौरुषमैन्दिर'मित्यादिवक्ष्यमाणानां कलशपूजान्तभाजां वा ग्रहणम् ॥ १४६ ॥

रत्नादिकं च शयने विनिधाय वायु-
वह्न्यादिबीजपवनायमनैर्विशोध्य।
सम्पूज्य च स्वहवनोदितमन्त्रकेण
तारेण वैषु सकलेष्वधिवास्य रक्षेत् ॥ १४७ ॥

विमर्शिनी।

रत्नादिकं रत्नन्यासद्रव्यगणं देवस्य शयन एव विनिधाय वायुवह्न्यादिबीजपवनायमनैः शोषणादिभिर्विशोध्य स्वहवनोदितमन्त्रकेण स्वस्वरत्नहोमोपदिष्टमन्त्रेण तारकेण वा सम्पूज्य एषु सकलेष्वेवमधिवास्य रक्षेत्
[॥ १४७ ॥

---

१. 'त् ॥ प्रासादे परितोऽष्टदिक्षु सिकताक्लृप्तेष्वथ स्थण्डिलेष्वाधायाजितपावकं शिखिमुखं कृत्वा सकुम्भार्चनम्। जुहुत्वष्टघृतं पलाशसमिधो मूलेन तावद् घृतं गायत्र्या च हरित्क्रमादिह समिद्भेदोऽथवा गृह्यताम् ॥ एवं शार्ङ्गधरे विधाय परिहोमांस्ताम्रकुम्भं परं तत्सम्पातघटोदकैः समभिपूर्याष्टार्णवर्णैः क्रमात्। एकीभूतचितिं स्वमूलमनुना सङ्कल्प्य तस्मिन् विभुं. प्राच्यावेष्ट्य नवांशुकेन करगुप्तं मण्डपान्तर्नयेत् ॥ इति. ख. ज. पाठः.

विवरणम् ।

रत्नानामधिवासमाह — रत्नादिकं चेति । शयन इति । देवशय्यायामेवेत्यर्थः ॥ १४७ ॥

इतिहासपुराणनृत्तगीता-
दिभिराघोष्य महोत्सवं समन्तात् ।
रजनीमपि जाग्रदेव शेषां
गमयेत् तत्पदसंविमर्शिचेताः ॥ १४८ ॥

विमर्शिनी ।

मण्डपस्य समन्ताद् इतिहासपुराणनृत्तगीतादिभिर्महोत्सवमाघोष्य तत्पदसंविमर्शिचेताः तस्मिन् देवस्वरूपे सम्यग्विमर्शनशीलेन चेतसा युक्त आचार्यः शेषां रजनीं रात्रिमपि जाग्रद् अस्वप्न एव गमयेत् ॥ १४८ ॥

विवरणम् ।

रात्रिशेषकार्यमाह —इतिहासेति । तत्पदसंविमर्शिचेता इति । तत्पदं तस्य देवस्य तदेव स्वरूपं विम्बेऽधिवसतो देवस्य तथाविधोत्सवावस्थं रूपं धिया सम्यग्विमृशन्निति भावः ॥ १४८ ॥

इति तन्त्रसमुच्चयविवरणे पञ्चमः पटलः ।

---

इति तन्त्रसमुच्चये समाप्तिं
समवाप्तः पटलोऽत्र पञ्चमोऽभूत् ।
निजभावनमन्त्रबिम्बपीठा-
द्यधिवासार्चनतद्धुतादियुक्तः ॥ १४९ ॥

विमर्शिनी ।

पटलमुपसंहरति — इतीति । इति तन्त्रसमुच्चये पञ्चमः पटलः समाप्तिं समवाप्तः प्राप्तोऽभूत् । कथंभूतः, निजभावनमन्त्रबिम्बपीठाद्यधिवासार्चनतद्धुतादियुक्तः निजभावना आचार्यस्य सकलीकरणादि मन्त्रबिम्बस्य पीठस्य आदिशब्देन नपुंसकशिलादेश्चाधिवासनं तदर्चनं तद्धोमादि च यानि तैर्युक्तः ॥ १४९ ॥

इति तन्त्रसमुच्चयविमर्शिन्यां पञ्चमः पटलः ।

---

१. 'इति । त' क. ख. ङ, च, पाठः, २. 'वासो दे' क, ङ. 'वासतो दे' ग पाठः.

## अथ षष्ठः पटलः ।

प्रत्यूष एव कृतसांप्रतिकक्रियोऽथ
पीठाधिवाससमये विहिताधिवासम् ।
संशोध्य गेहवपुषं पुरुषं विभूष्य
संस्थाप्य साधु महितं वितनोतु मन्त्री ॥ १ ॥

विमर्शिनी ।

अथ षष्ठं प्रतिष्ठापटलमारभते—प्रत्यूष इति । अथ मन्त्री एवमधिवासानन्तरमुत्तरेद्युः प्रत्यूष एव उषसः पूर्वमेवोत्थायावश्यकादिकं निर्वर्त्य स्नानादि कृत्वा कृतसाम्प्रतिकक्रियः कृतप्राभातिकविधिर्भूत्वा पीठाधिवाससमये विहिताधिवासं पूर्वेद्युः पीठाधिवासानन्तरं भूतसंहारादिभिः शोषणादिभिश्च संशोध्य भूतानि सृष्ट्वा मन्त्रन्यासादिभिः सकलीकृत्य संपूज्य संपातशेषं च समर्प्य वस्त्रेणाच्छाद्याधिवासितं प्रासादं सम्प्रति मुष्ट्यादिभिः संशोध्य गेहवपुषं प्रासादरूपिणं पुरुषं विभूष्य साधु यथोक्तविधिना संस्थाप्य महितं वितनोतु पूजां कुर्यात् ॥ १ ॥

विवरणम् ।

अथ प्रतिष्ठादिनेकार्यं प्रस्तौति — प्रत्यूष एवेति । प्रत्यूषोऽहर्मुखम् । साम्प्रतिकक्रिया सन्ध्योपासनादिः नित्यमन्त्रानुष्ठानादिरपि । संशोध्येति । तदापि मुष्ट्यादिभिः प्रासादशुद्धिरुक्ता । गेहवपुषं पुरुषमिति विग्रहतदात्माद्यनुसन्धानार्थमुक्तं । तदुक्तं – 'पादुकाथकुम्भिजङ्घोर्वि'त्यादि । विभूष्येति हारादिषु वस्त्रमालाद्यलङ्करणमुक्तम् । संस्थाप्येति प्रतिष्ठापनम् । साध्विति पीठप्रतिष्ठादिवदादरार्थमुक्तम् । महितं वितनोत्विति पुनःपूजोक्ता । मन्त्रीति । शिवे प्रासादचित्तरेषु मूलं च तन्मनुं विद्वानित्यर्थः । इहायमाशयः— भूमिमेव उपानपद्मं पीठमनुस्मरन् स्वं स्वं पीठं परिपूज्य प्रासादमूर्तौ तन्मन्त्रेणावाहनादि कृत्वा प्रणवादियुततन्मन्त्रेण तस्मिन् प्रतिष्ठाप्य ध्रुवादिमन्त्रैः स्थिरीकृत्य तन्मन्त्रेण आवाहनादि कृत्वा पूजयेदिति ॥ १ ॥

स्मरजिति मनुलिङ्गे मण्डले चार्चयित्वा
दधिमधुघृतमिश्रं पायसान्नं निवेद्य ।

---

१. 'सानामनन्त' ख. पाठः. २. 'ने' ग. ङ. पाठः. ३. 'कौ' ख. ङ. पाठः, ४. 'नतमु' ख. पाठः. ५. 'वि' ख. पाठः

बलिमपि परितोऽष्टाशाक्रमात् संप्रदाय
प्रचरतु गृहयागं देवदेवं प्रसाद्य ॥ २ ॥

विमर्शिनी ।

शिवे क्रियाविशेषमाह---स्मरजितीति । स्मरजिति पूर्वं मनुलिङ्गे म-ण्डले चार्चयित्वा दधिमधुघृतमिश्रं पायसान्नं निवेद्य परितः पूर्वाद्यष्टाशाक्रमाद् बलिमपि संप्रदाय देवदेवं प्रसाद्य प्रसन्नपूजानन्तरं गृहयागं प्रासादस्थापनादिकं प्रचरतु ॥ २ ॥

विवरणम् ।

शिवेऽधिकमाह—स्मरजितीति । अर्चयित्वेति पीठपूजावाहनादि सर्वमुक्तम् । पायसान्नमिति । द्वो रात्रौ पायसपूजनमप्रधानमित्यपि सूचितम् । बलिमपीति । निवेद्यांशेन बलिरभिप्रेतः । गृहयागं * प्रोक्तम् इति । 'संशोध्य गेहवपुष'मित्याद्युक्तं प्रासादपुरुषयागमित्यर्थः । एनं प्रसाद्येति । गृहयागमित्यतः प्राग् योज्यम् पूजाशेषं समाप्येत्यर्थः ॥ २ ॥

देवभूतपिशाचाश्च गन्धर्वा यक्षसंज्ञकाः ।
पिशिताशाश्च नागाश्च काङ्क्षन्ते मातरो बलिम् ॥ ३ ॥

विमर्शिनी ।

बलिमन्त्रानाह—देवेति । देवादिमातृपर्यन्ता ग्रहा बलिं काङ्क्षन्ते । तत्र 'देवग्रहेभ्यो नमः' इत्यादयो मन्त्राः ॥ ३ ॥

विवरणम् ।

देवभूतपिशाचाश्चेत्ययं बलिमन्त्रः । यद्वा अष्टदिक्षु बलिदेवतो-पदेशः ॥ ३ ॥

आचार्योऽसौ नववसनधृग् गर्भगेहोपविष्टः
स्विष्टात्माभ्यर्चितगुरुगणाधीशनान्दीसुपर्वा ।
कृत्वा पुण्याहमिह कृतरत्नाष्टबन्धानुबन्धं
पीठप्रेज्यां चरतु रचिते पञ्छिलास्थानगर्ते ॥ ४ ॥

*मूले 'देवदेव'मित्यस्य स्थाने प्रोक्तमेनमिति विवरणरीत्या पाठः.

१. 'संज्ञिताः ।' ग पाठः.

विमर्शिनी ।

पुनः सामान्येन रत्नन्यासादिविधिमाह — आचार्य इति । असौ आचार्यः नववसनधृक् नववस्त्रधार्याचम्य गर्भगेहोपविष्टः प्रासादान्तर्गत्वा गर्भगृह उपविश्य गुरुगणपतिवन्दनादिसकलीकरणशङ्खपूरणानन्तरं स्विष्टात्मा कृतात्माराधनः अभ्यर्चितगुरुगणाधीशनान्दीसुपर्वा गुरून् गणपतिं च संपूज्य नान्दीमुखं च कृत्वा इह रत्नन्यासकर्मणि कृतरत्नाष्टबन्धानुबन्धं 'रत्नाष्टबन्धदेवताः प्रीयन्तामि'त्यादिविशेषयुक्तं पुण्याहं कृत्वा पच्छिलास्थानगर्ते नपुंसकशिलाया अधोभागे पीठप्रेज्यां प्रचरतु ॥ ४ ॥

विवरणम् ।

प्रासादे प्रतिष्ठिते ब्रह्मशिलादिप्रतिष्ठा कार्येत्यभिप्रायेणारभते — आचार्योऽसाविति । नववसनधृगित्यावश्यकार्यमुक्तम् । गर्भगेहोपविष्ट इति । गर्भगृहे प्रतिष्ठावटसन्निधौ स्वास्पदे समुपविष्टः सन्नित्यर्थः । स्विष्टात्मेति प्रतिष्ठाशेषतया स्वात्मनः सकलीकरणादिपूर्वकमात्माराधनमुक्तम् । नान्दीसुपर्वाणो नान्दीमुखदेवताः तदर्चनं तावन्नान्दीमुखश्राद्धकरणम् । इह तु अर्थात् तदुद्देशेन क्रियमाणं दानमुक्तम् । सति सम्भवे प्रथमतस्तच्छ्राद्धं कार्यमित्यपि सूचितम् । गुरुगणपतिपूजां विधाय प्रायश्चित्तदानं नान्दीमुखदानं च कृत्वेत्यर्थः । इह कृतरत्नाष्टबन्धानुबन्धं पुण्याहं कृत्वेति अनुबन्धो योजनम् । रत्नाष्टबन्धयोर्मण्डपाद्याहृत्येहोपनिधानम् । यद्वा अनुबन्धो मन्त्रे योजनम् । यथा ओं रत्नाष्टबन्धदेवताः प्रीयन्तामित्यादि । रचिते पच्छिलास्थानगर्ते पीठप्रेज्यां चरत्वित्यन्वयः । पच्छिला ब्रह्मशिला । रचनं शिल्पिभिरेव 'कृत्वा गर्भगृहं कुलाद्रिकृतिकोऽथाव्यमि'त्यादिभाविप्रक्रियया सिद्धे प्रतिष्ठास्थाने गर्भगृहविधानसमय एवं तदुचितनिष्पादनम् । पीठप्रेज्या तदुचितपीठपूजा ॥ ४ ॥

इष्ट्वा ब्रह्मशिलां सुधीः प्रणवतो न्यस्यार्थयेत् त्वांस्थितं-
मन्त्राभ्यां प्रथमार्थितामवरतो न्यस्येत् तदा स्थापिताम् ।
मन्त्रेण प्रथमेन वार्थयतु तद्गर्तान् हरौ शोधयेद्
गन्धैर्गन्धजलैश्च वास्विनलिपिभ्यां मूलतोऽन्येष्वतः ॥ ५ ॥

---

१. 'गेहे' छ, पाठः. २. 'माराध' ख. ज, पाठः. ३ 'स्थापये' च. पाठः. ४ 'व नि' ख. ग. घ. ङ. च. पाठः.

विमर्शिनी ।

ततो ब्रह्मशिलां नपुंसकशिलां प्रणवत इष्ट्वा सुधीः रत्नपीठबिम्बादेः सर्वस्याधारभूतां नपुंसकशिलां ध्यायन् प्रणवतो न्यस्य स्थापयित्वा 'त्वंस्थितं'-मन्त्राभ्यामर्थयेत् प्रार्थयेत् । प्रथमार्थितां 'त्वमेवे'त्यादिना प्रार्थनानन्तरम् अवरतः 'स्थितं चराचरमि'त्यनेन न्यस्येत् स्थापयेत् । तदा स्थापितां 'स्थितं चराचरमि'ति स्थापितां प्रथमेन मन्त्रेण 'त्वमेवे'त्यनेनार्थयतु प्रार्थयतु । पुनस्तद्गर्तान् नपुंसकशिलास्थितान् गर्तान् हरौ वस्विनलिपिभ्याम् अष्टाक्षरद्वादशाक्षरमन्त्राभ्यां गव्यैर्गन्धजलैश्च क्रमेण शोधयेत् क्षालयेत् । अतोऽन्येषु देवेषु मूलतश्च शोधयेत् ॥ ५ ॥

विवरणम् ।

इष्ट्वा ब्रह्मशिलामिति । ब्रह्मशिलामिष्ट्वा प्रणवतः न्यस्य त्वंस्थितंमन्त्राभ्यामर्थयेदित्यन्वयः । यदा ब्रह्मशिलापीठयोर्मण्डपेऽधिवासनं तदा ततः स्वशय्योद्वासनार्घ्यदानादिपूर्वकमानीय गर्भगृहे भद्रासने निधाय सर्वं कार्यम् । 'संस्थाप्यैव यथास्थिती'त्येवं सम्भवे तु सर्वं क्रियामात्रं कर्तव्यमिति बोद्धव्यम् । प्रणवत इत्येतदिष्ट्वेत्यत्रापि सम्बध्यते । प्रणवेनावाहनादिपूर्वकं परिपूज्येति भावः । 'ध्रुवा द्यौ'रित्याद्यभिमर्शनमिह पीठप्रतिष्ठायां[2] चेष्यते । रत्नन्यासानन्तरं वा इह 'ध्रुवा द्यौ'रित्याद्यभिमर्शनम् । यदुक्तम् —

'एवं रत्नादि[3] विन्यस्य ध्रुवसूक्तं जपेदथ'

इति । पुनः प्रणवेन आवाहनादि कृत्वा 'त्वमेव परमा शक्तिः' 'स्थितं चराचरं यस्यामि'ति मन्त्राभ्यामुपस्थानं कार्यमिति । प्रथमार्थिता*मपरतो न्यस्येदिति । प्रणवावाहनाद्यनन्तरं त्वमेव परमेत्यमुना अर्थयित्वा स्थितं चराचरमित्यनेन प्रणवनिष्ठेन प्रतिष्ठापयेत् । पुनरर्थना नास्ति तदा स्थापितां मन्त्रेण प्रथमेन वार्थयत्विति । प्रणवावाहनादि विधाय स्थितं चराचरमित्यनेन प्रणवनिष्ठेन प्रतिष्ठाप्य त्वमेव परमेति प्रार्थयेतेत्यर्थः[4] । तद्गर्तमिति । वस्विनालिपिभ्या-

---

* अवरतः इत्यस्य स्थाने अपरत इति तद्गर्तानित्यस्य स्थाने तद्गर्तमिति च विवरणपाठः·

---

१. 'याव ग' ख. पाठः· २. 'ते' । पुनः प्रणवेन' घ. च. पाठः· ३. 'नि' ख, ग, पाठः· ४. 'थः । गर्तं' ख. च, पाठः·

मित्यन्तं वाक्यम्। तद्गर्तं तस्यां [illegible] पञ्चगव्येन द्वादशाक्षरेण च गन्धजलेन शोधयेत्। ततोऽन्येषु [illegible] ताभ्यां शोधयेत् । गव्यगन्धोदकयोरभ्योक्षणादिसंस्कार [illegible] ॥ ५ ॥

त्वमेव परमा शक्तिस्त्वमेवासनधारिका ।
देवाज्ञया त्वया देवि ! स्थातव्यमिह सर्वदा ॥ ६ ॥

स्थितं चराचरं यस्यां रत्नानां निधिरव्ययः ।
सा त्वं ब्रह्मशिलारूपा तिष्ठात्र धरणी स्थिरा ॥ ७ ॥

इति ।

विमर्शिनी ।

प्रस्तुतौ मन्त्रौ पठ्येते — त्वमेव परमेत्यादि स्थितं चराचरमित्यादि च ॥ ६, ७ ॥

परितोऽष्टसु दिक्षु तत्र गर्तान्
प्रविधायावरणक्रमात् तदन्तः ।
अपरं च नपुंसकाश्मनीह
स्वहुताज्योज्ज्वलमर्पयेदमूनि ॥ ८ ॥

विमर्शिनी ।

तत्र नपुंसकाश्मनि परितोऽष्टसु दिक्ष्वावरणक्रमाद् द्रव्यसङ्ख्यावरण-क्रमेण तदन्तः अपरं च गर्तान् प्रविधाय इह गर्तेष्वमूनि द्रव्याणि स्वहुताज्यो-उज्ज्वलं होमसिद्धेन सम्पातेनोज्ज्वलं यथा भवति तथा[illegible]येत् स्थापयेत् ॥ ८ ॥

विवरणम् ।

परितोऽष्टस्विति । तद्गर्तक्लृप्तिस्त्वपि न्यसनीयद्रव्यवर्गसङ्ख्याधीनतो-पपत्तेरिहैवोच्यते । तदन्तरपरं चेति । ब्रह्मगर्ताभिधानम् । यावन्तो द्रव्यवर्गा-स्तावन्ति परितो गर्तावरणानि । मध्ये त्वेकमेव महद्गर्तमित्यभिप्रायः । स्वहुताज्योज्ज्वलमिति । एषु गर्तेष्वमूनि वक्ष्यमाणद्रव्याणि स्वहोमसिद्ध-सम्पातस्पर्शनपूर्वकं न्यसेदित्यर्थः । गायत्र्यैतत् सम्पातस्पर्शनं भवति । सम्पातयोगतो द्रव्याणां प्रभावद्युत्यादिस्फूर्तिरित्युज्ज्वलग्रहणम् ॥ ८ ॥

रत्नानीशहरौ सबीजमणिधातुस्वर्णपूर्वाण्यथो
दुर्गाशास्त्रजितेषु तानि गणनाथे रत्नबीजक्रमात् ।
गौरीशे मणिधातुबीजसवृषास्त्रस्तोमलोहक्रमात्
सेनान्यां मणिधातुलोहगणबीजास्त्रक्रमाद् विन्यसेत् ॥ ९ ॥

विमर्शिनी ।

द्रव्याणां क्रममाह — रत्नानीति । अथो ईशहरौ रत्नान्येव विन्यसेत् । दुर्गाशास्त्रजितेषु सबीजमणिधातुस्वर्णपूर्वाणि बीजरत्नधातूनि सुवर्णादिलोहानि च , गणनाथे रत्नबीजक्रमात् तानि द्रव्याणि, गौरीशे मणिधातुबीजसवृषास्त्रस्तोमलोहक्रमात् रत्नधातुबीजानि वृषसहितास्त्रसमूहांश्च लोहांश्च, सेनान्यां मणिधातुलोहगणबीजास्त्रक्रमात् रत्नधातुलोहबीजास्त्राणि क्रमाद् विन्यसेत् ॥ ९ ॥

विवरणम् ।

रत्नानीशहराविति । केवलं रत्नान्येवेति भावः । सबीजमणिधातुस्वर्णपूर्वाणि अथो दुर्गाशास्त्रजितेष्वित्येकं वाक्यम् । मणिशब्दो रत्नपर्यायः । लोहानां कमठादीनामप्येकावरणभाक्त्वात् स्वर्णपूर्वाणीत्यभिधानम् । गणनाथे रत्नबीजक्रमात् तानीति । रत्नबीजधातुस्वर्णपूर्वाणीत्यर्थः । सवृषास्त्रस्तोमेति । स्तोमशब्दः समूहवचनः । वाहनारम्भाण्यायुधानीति च तदर्थः ॥ ९ ॥

श्रीशे मूलार्णमूलैर्न्यसतु नवसु दिक्षु क्रमादन्तरन्त-
स्तद्वत् तारेण तानि स्मरमुरदमने तेन संगृह्य विघ्ने ।
मूलेनान्येषु तेनैव तु महिपरिपावाद्यया तत्र दिक्षु
द्रव्याणीशेतरेषु प्रथममथ शिवे द्रव्यमन्त्रांश्च वक्ष्ये ॥ १० ॥

विमर्शिनी ।

न्यासमन्त्रानाह — श्रीश इति । श्रीशे मूलार्णमूलैः मूलाक्षरैर्मूलेन च नवसु दिक्ष्वन्तरन्तः क्रमात् तानि द्रव्याणि न्यसतु । स्मरमुरदमने शिवनामरूणे तारेण तद्वद् अन्तरन्तर्न्यसतु । विघ्ने तेन तारेण संगृह्य गृहीत्वा मूलेन न्यसतु । अन्येषु देवेषु तेन मूलेनैव । महिषरिपौ तु तत्र दिक्ष्वाद्यया त्रिष्टुभा मध्ये मूलेन च न्यसतु । प्रथममादौ ईशेतरेषु शिवादन्येषु द्रव्याणि वक्ष्ये । अथ शिवे द्रव्यमन्त्रांश्च द्रव्याणि मन्त्रांश्च वक्ष्ये ॥ १० ॥

१. 'स्व' घ च. पाठः.

विवरणम् ।

श्रीश इति । प्रागाद्यष्टदिक्षु मूलाक्षरैर्मध्ये मूलेनेत्यर्थः । तेन सङ्गृह्य विघ्ने मूलेनेति वाक्यम् । प्रणवेनादाय मूलेन न्यास उक्तः । अन्येषु तैनैवेति । मूलेनेत्यर्थः । महिषरिपावाद्यया तत्र दिक्ष्विति । अन्यदेवेषु मध्ये दुर्गायां त्रिष्टुभा दिक्षु, मध्ये तु मूलेनेत्यर्थः । प्रथममीशेतरेषु द्रव्याणि वक्ष्ये । अथ शिवे द्रव्यमन्त्रांश्च वक्ष्ये इत्येवं योजना ॥ १० ॥

दुर्गाशार्ङ्गभृतोर्न्यसेदिह यवव्रीही सनिष्पावकौ
बीजानि क्रमशः प्रियङ्गुतिलमाषांश्चापि नीवारकान् ।
शालीसर्षपशालिनस्तिलपदश्यामान् गणाधीश्वरे
शालीराजिमुचोऽथ वैणववतो मध्येऽखिलांश्चार्यके ॥ ११ ॥

विमर्शिनी ।

दुर्गाशार्ङ्गभृतोः इह द्रव्यन्यासे यवव्रीही सनिष्पावकौ निष्पावं च (നിഷ്പാവം = അവര) प्रियङ्गुतिलमाषान् (പ്രിയംഗു = തിന) नीवारकांश्चापि (നീവാരം = വരിനെല്ല്) शालीसर्षपशालिनः शालिभिः सर्षपैश्च युक्तान् । एवं बीजानि न्यसेत् । गणाधीश्वरे तिलपदश्यामान् तिलस्थाने (ശ്യാമം = ചാമ) । आर्यके शालीराजिमुचः शालीसर्षपरहितान् वैणववतः वैणवयुक्तान् मध्येऽखिलान् अष्टबीजानि च सह न्यसेत् ॥ ११ ॥

विवरणम् ।

शालीसर्षपशालिन इति । शालीसर्षपयुतान् एवं नवद्रव्याणि भवन्ति । तिलपदश्यामानिति । तिलस्थाने[2] श्यामा येषामिति समासः । शालीराजिमुच इति । शास्तरि शालिसर्षपवियुक्तान् वैणवान्तान्यष्टद्रव्याणि ॥ ११ ॥

रत्नधातुनवकं निजगर्भन्यासदिष्टमिह विष्णुगणेशे ।
रत्नकानि नव विष्णुसमुक्तान्येव शास्तरि च शुम्भरिपौ च ॥

विमर्शिनी ।

विष्णुगणेशे विष्णुगणेशयोः इह रत्नधातुनवकं रत्ननवकं धातुनवकं[1] च निजगर्भन्यासदिष्टं निजनिजगर्भन्यासे निर्दिष्टम् । शास्तरि च शुम्भरिपौ च विष्णुसमुक्तान्येव नवरत्नकानि ॥ १२ ॥

---

१. 'वकं च' ख. पाठः. २. 'लस्य स्था' क. ग. ङ. पाठः.

विवरणम् ।

रत्नधातुनवकमिति । तदुक्तं — 'वज्रं मौक्तिके'त्यादि 'न्यस्येन्मनोह्वा'मित्यादि चेति ॥ १२ ॥

पुलकं विद्रुममञ्जनसंज्ञं श्यामं ससीसकं न्यसतु ।
आर्यकुमार्योः समनश्शिलहरितालं सगैरिकं सरसम् ॥ १३ ॥

विमर्शिनी ।

आर्यकुमार्योः पुलकं स्वयमेव (വിദ്രുമം — പവിഴം) अञ्जनसंज्ञं स्वयमेव श्यामं स्वयमेव ससीसकं (സീസം — ഈയം) समनश्शिलहरितालं (മനശ്ശില — മനയോല; ഹരിതാലം — അരിതാലം) सगैरिकं (ഗൈരികം — ചെങ്കല്ല്) सरसं रससहितं रसं स्वयमेव एतानि न्यसतु ॥ १३ ॥

दुर्गार्यविघ्नबलिविद्विषि जातरूपं
रूप्यं च ताम्रकमयस्त्रपु पश्चिमान्तम् ।
न्यस्याजिते न्यसतु शेषदिशासु सीसं
स्वर्णोद्भवं कमठशङ्खपयोरुहं च ॥ १४ ॥

विमर्शिनी ।

दुर्गार्यविघ्नबलिविद्विषि दुर्गार्यविघ्नविष्णुषु (ജാതരൂപം — പൊൻ. രൂപ്യം — വെള്ളി.) ताम्रकं (അയഃ — ഇരിമ്പ്. ത്രപു — ചെമ്പ്രാംകൊട്ടി) एतानि पश्चिमान्तं न्यस्य अजिते शेषदिशासु सीसम् उक्तं स्वर्णोद्भवं सुवर्णकृतं कमठशङ्खपयोरुहं च कमठं कूर्मं शङ्खं मध्ये पद्मं च न्यसतु ॥ १४ ॥

विवरणम् ।

जातरूपं हिरण्यम् । अजिते न्यसत्विति । दुर्गादिष्वेषु मध्ये इति भावः । शेषदिशास्विति । वायुसोमेशमध्यादिक्षु[१] ॥ १४ ॥

सीसं तार्क्ष्यारकूटावितरदिशि दरारीषुचापासिशूलं
पाशं दण्डं च मध्ये महिषजिति ससीसारकूटं च कांस्यम् ।
स्वर्णं चार्येऽन्यदिक्षु[२] द्विरदवरमुखेऽथारकूटं सुपित्थं
कांस्य न्यस्येत् त्रिदिक्षु स्वरदकमठचापाम्बुजं हैममन्तः ॥

---

१. 'मध्यादिषु' ख. च. पाठः. २. 'क्षु इति' क. ङ. पाठः. ३. 'क्षप्यथ च गणपतावार' इति विवरणरीत्या पाठः.

विमर्शिनी ।

महिषजिति इतरदिशि वाय्वादिदिक्षु सीसं तार्क्ष्यारकूटौ तार्क्ष्यं गारुडशिला आरकूटं स्वयमेव, मध्ये दरारीषुचापासिशूलं (ദരം=ശംഖം. അരി=ചക്രം. ഇഷു=ശരം. ചാപം=ധനസ്സ്. അസി=ഖഡ്ഗം. പാശം=കയറ്.) दण्डं स्वयमेव, हैमान्येतानि न्यस्येत् । आर्येऽन्यदिक्षु ससीसारकूटं सीसमारकूटं च, (കാംസ്യം=വെള്ളോട്.) स्वर्णं च मध्ये न्यस्येत् । अथ द्विरदवरमुखे गणपतौ त्रिदिक्षु वायुसोमेशानदिक्षु आरकूटं सुपित्थं ( പിത്ഥം=പിച്ചള.) कांस्यं च न्यस्येत् । अन्तर्हैमं स्वरदकमठ-चाषाम्बुजं स्वरदं स्वदन्तं कमठं कूर्मं (ചാഷം=എലി.) पद्मं च न्यस्येत् ॥ १५ ॥

विवरणम् ।

इतरदिशीति । वायुसोमेशदिशां ग्रहणम् । तार्क्ष्यो गरुडः । दरादीनि मध्ये दरः शङ्खः । अरिः चक्रम् । असिः खड्गम् । ससीसारकूटं चेति । आर्ये (ऽन्य)दिक्ष्विति सम्बन्धः । इह मध्यान्ता अन्यदिशो गृह्यन्ते । गणपतावित्यादि वाक्यान्तरम् । त्रिदिक्ष्विति । वायुसोमेशदिक्षु । स्वरदः स्वशृङ्गम् । चाषो मूषिकः । हैममिति । दुर्गायां तार्क्ष्यशङ्खावपि हैममेवेति ज्ञेयम् ॥ १५ ॥

इन्द्रनीलमणिगारुडवैडूर्यारूयमौक्तिकसविद्रुमवज्रम् ।
पुष्यरागमपि दिक्षु हरीशे न्यस्य विन्यसतु काञ्चनमन्तः ॥

विमर्शिनी ।

हरीशे पूर्वादिदिक्षु इन्द्रनीलं स्वयमेव (മണി=മാണിക്യം.) गारुडं गरुडशिला वैडूर्यारूयं स्वयमेव (മൌക്തികം=മുത്ത്. വിദ്രുമം=പവിഴം. വജ്രം=വൈരം.) पुष्यरागं स्वयमेव एतानि न्यस्यान्तः काञ्चनं विन्य-सतु ॥ १६ ॥

न्यस्यतु रत्नानि गुहे वज्रं वैडूर्यमिन्द्रनीलं च ।
शङ्खं स्फटिकं पुष्पं मुक्ताफलविद्रुमाब्जरागं च ॥ १७ ॥

विमर्शिनी ।

गुहे प्रोक्तक्रमेणान्तरन्तः वज्रं वैडूर्यम् इन्द्रनीलं च शङ्खं स्वयमेव स्फटिकं च स्वयमेव (പത്മം=പത്മരാഗം.) मुक्ताफलं विद्रुमम् अब्जरागं पद्मरागम् एतानि रत्नानि न्यस्यतु ॥ १७ ॥

धातून् मनश्शिलामिह हरितालं चाञ्जनं तथा श्यामम् ।
सौराष्ट्रीं सह गोरोचनमाक्षिकगैरिकं न्यसेत् सरसम् ॥ १८ ॥

विमर्शिनी ।

अथ धातूनपि तत्र तथा न्यसेत् । मनश्शिलां हरितालम् अञ्जनं श्यामं सौराष्ट्रीं (സൌരാഷ്ട്രി=തിരുവട്ടപ്പശ.) गोरोचनं स्वयमेव (മാക്ഷികം=മാക്കീരം.) गैरिकं रसं च ॥ १८ ॥

स्वर्णं रजतं ताम्रं पित्तलसंज्ञं त्रपु न्यसेत् तद्वत् ।
सीसायसी सकांस्ये दिक्ष्वष्टास्वन्तरष्टलोहानि ॥ १९ ॥

विमर्शिनी ।

तद्वदेवाष्टासु दिक्षु सुवर्णं रजतं ताम्रं पित्तलं त्रपु सीसम् अयः सकांस्यं च, अन्तर्मध्येऽष्टलोहानि सह न्यसेत् ॥ १९ ॥

यवगोधूमकमाषान् सह तिलमुद्गप्रियङ्गुसिद्धार्थान् ।
शालीमपि विन्यस्येद् दिक्ष्वष्टसु मध्यतोऽष्टबीजानि ॥ २० ॥

विमर्शिनी ।

पुनरष्टदिक्षु यवगोधूमकमाषान् (ഗോധൂമം=കോതമ്പ്.) तिल-मुद्गप्रियङ्गुसिद्धार्थान् शालीमपि मध्यतः अष्टबीजानि सह न्यसेत् ॥ २० ॥

पद्मं गजं मयूरं शक्तिं वज्रं च कुक्कुटं चापि ।
अन्तर्न्यस्यतु हैमान् द्रव्यन्यसनं गुहे विधेयमिति ॥ २१ ॥

विमर्शिनी ।

पुनरन्तः पद्मं गजं (മയൂരം=മയിൽ. ശക്തി=വേൽ.) वज्रं स्वयमेव (കുക്കുടം=കോഴി.) हैमान् हेमनिर्मितान् (न्यस्यतु) । गुहे इति द्रव्यन्यसनं विधेयम् ॥ २१ ॥

विवरणम् ।

गुहे विधेयमितीति । एवं उक्तप्रकारेणेत्यर्थः ॥ २१ ॥

सद्योजातकलाभिरष्टभिरिहेन्द्रादीशनिष्ठं शिवे
वज्रं मौक्तिकपुष्यरागहरिनीलाख्यान्यथ स्फाटिकम् ।
विन्यस्येच्च विडूरजं मरतकं नीलोपलं च क्रमा-
न्मध्ये न्यस्यतु पद्मरागमपि सद्योजातविद्यां जपन् ॥ २२ ॥

विमर्शिनी ।

शिवे अष्टभिः सद्योजातकलाभिः इन्द्रादीशनिष्ठं पूर्वाद्यष्टदिक्षु वज्रं मौक्तिकपुष्यरागहरिनीलाख्यानि हरिनीलम् इन्द्रनीलं स्फाटिकं विडूरजं वैडूर्यं मरतकं स्वयमेव नीलोपलं नीलरत्नं मध्ये सद्योजातविद्यां 'सद्योजात'मन्त्रं जपन् पद्मरागमपि न्यस्यतु ॥ २२ ॥

विवरणम् ।

नीलोपलं नीलरत्नम् ॥ २२ ॥

तथा मनोह्वां हरितालकं न्यसेत्
सौराष्ट्रिकां विद्रुमरोचने पुनः ।
प्रवालकं साञ्जनमाक्षिकं रसं
कलासमस्तात्मकवामविद्यया ॥ २३ ॥

विमर्शिनी ।

पुनस्तया कलासमस्तात्मकवामविद्यया वामदेवकलाभिर्वामदेवेन च (മനോഹ്വാ = മനയോല.) हरितालं सौराष्ट्रिकां विद्रुमरोचने विद्रुमं गोरोचनां च (പ്രവാളകം = പവിഴം) साञ्जनमाक्षिकम् अञ्जनं माक्षिकं च तथा इन्द्रादीशनिष्ठं न्यसेत् ॥ २३ ॥

विवरणम् ।

कलासमस्तात्मकवामविद्ययेति । अत्र बलविकरणाय नमः इत्याद्यवशिष्टमेककोष्ठे स्यात् । यद्वा अष्टधैवेह विभागः ॥ २३ ॥

---

१. 'ष्टमेककोे' क. ख. पाठः.

शालियवौ गोधूमप्रियङ्गुमाषांस्तिलं च नीवारम् ।
निष्पावसर्षपौ च न्यसतु ततः सकलभीममन्त्रेण ॥ २४ ॥

विमर्शिनी ।

ततः सकलभीममन्त्रेण कलासहितेन भीममन्त्रेण अघोरकलाभिः अघोर-मन्त्रेण च शालियवौ गोधूमप्रियङ्गुमाषान् तिलं नीवारं च निष्पावसर्षपौ च तद्वदुक्तक्रमेण न्यसतु ॥ २४ ॥

विवरणम् ।

सकलभीममन्त्रेणेति । अघोरकलाभिर्दिक्षु समस्तेन तेन मध्ये ॥ २४ ॥

कलाभिर्नारीभिर्वृषपरशुरुद्राक्षवलयं
त्रिशूलं दिक्ष्वन्तः कमलमपि पुंसा कनकजम् ।
विदिक्ष्वैशानीभिर्न्यसतु रजतायस्त्रपु यथा-
क्रमं ताम्रं मध्ये सकलमनुना काञ्चनमपि ॥ २५ ॥

विमर्शिनी ।

ततो नारीभिः नरसम्बन्धिनीभिः तत्पुरुषकलाभिश्चतसृभिर्दिक्षु कनकजं वृषपरशुरुद्राक्षवलयं (വൃഷം = കാള. പരശു = കഠാരം. രുദ്രാക്ഷ വലയം = രുദ്രാക്ഷമാല.) त्रिशूलं च, पुनरन्तः कनकजं कमलं पुंसा तत्पुरुषेण च न्यसतु । ततो विदिक्षु ऐशानीभिः कलाभिः रजतम् अयः त्रपु ताम्रं च यथाक्रमं, मध्ये सकलमनुना समस्तेशानमन्त्रेण काञ्चनमपि न्यसतु ॥ २५ ॥

विवरणम् ।

कलाभिर्नारीभिरिति । नरः पुरुषः । तत्पुरुषकलाभिरित्यर्थः । विदिक्षु ऐशानीभिरिति । कलाभिरित्यनुषङ्गः । वामदेववद्विभागः । सकल-मनुनेति । समस्तेनेशानेनेत्यर्थः ॥ २५ ॥

सम्पातदोष्णा हवनाणुनाभि-
मृश्याणिमाद्यष्टकरूपमेतत् ।
इष्ट्वादिनास्योपरि *पीठमिष्टं
संस्थापयेत् साणुगतत्त्वशक्त्या ॥ २६ ॥

विमर्शिनी ।

ततः[1] सर्वेषु अणिमाद्यष्टकरूपं देवस्याणिमाद्यष्टैश्वर्यात्मकम् एतद् द्रव्यजातं संपातदोष्णा संपातलिप्तेन करेण हवनाणुना स्वस्वरत्नहोममन्त्रेण अभिमृश्य स्पृशन् जप्त्वा आदिना प्रणवेन इष्ट्वा अस्योपरि एवम्भूताया नपुंसकशिलाया उपरि इष्टं पूजितं पीठं साणुगतत्त्वशक्त्या संस्थापयेत् । साणुगतत्त्वशक्त्येति पञ्चतत्त्वानां शक्तिपुटितत्वमुक्तम् । संस्थापयेदिति पञ्चतत्त्वानां पुरः पीठमन्त्राणामुच्चारणं सूचितम् ॥ २६ ॥

विवरणम् ।

सम्पातदोष्णेति । सम्पाताक्तेन हस्तेन । हवनाणुनेति । सर्वेषु गायत्र्या, दुर्गायां त्रिष्टुभेत्यर्थः । अभिमर्शनं स्पृष्ट्वानुमन्त्रणम् । अणिमाद्यष्टकरूपमेतदिति । अष्टद्रव्याणामणिमाद्यष्टैश्वर्यशक्तित्वं मध्यद्रव्यस्य तत्सप्तष्ट्यात्मकत्वं च तदा प्रतिपत्तव्यत्वेनोक्तम् । तदुक्तम् —

'ईशित्वादिक्रमाच्छक्तिं ध्यात्वाष्टार्णैः प्रविन्यसेत् ।
वायुव्योमान्तरस्थानि यासां बीजानि वै विदुः[2]' ॥

इति । ईशित्वादिग्रहणमणिमादिविकल्पार्थम् । यादिहान्तान्यासां बीजानि । मध्यगतस्य तु यथास्वं शक्तिबीजम् । तासामेवं पूजेष्यते । एतदादिना इष्ट्वेत्यन्वयः । प्रणवेनेत्यर्थः । अस्योपरि पद्ममिष्टमिति । तदापि शक्त्याबाह्य पूजाभिहिता । साणुगतत्त्वशक्त्येति । प्रणवशक्तिबीजपूर्वकं शक्तिबीज[3]पुटितपञ्चतत्त्वानि शक्तिबीजं प्रणवं चोक्त्वा प्रतिष्ठापनमभिप्रेतम् । पञ्चतत्त्वैः शक्त्या च यथोपदेशं प्रयुक्तयेति चार्थः ॥ २६ ॥

---

* पद्ममिष्टमिति विवरणरीत्या पाठः.

---

१. 'इष्ट्वाभिम', २. त्वान्मा य' क. ज पाठः ३. 'जि' क. ख. घ. ङ. पाठः.

शक्तिं स्वबीजकुसुमार्पणतोऽनुवेश्य
न्यस्यार्णपीठमनुबीजतदङ्गकानि ।
इष्ट्वा प्रतिष्ठितिकृते परिपूज्य पीठं
बीजार्चितं परिवृतं वसनेन रक्षेत् ॥ २७ ॥

विमर्शिनी ।

पुनः स्वबीजकुसुमार्पणतः शक्तिमनुवेश्य स्वस्वशक्तिबीजेन यथोपदेशमावाहनं कृत्वा अर्णपीठमनुबीजतदङ्गकानि पूर्ववल्लिपिपीठमन्त्रान् शक्तिबीजं तदङ्गकानि च न्यस्य इष्ट्वा तदनु प्रतिष्ठितिकृते बिम्बप्रतिष्ठार्थं पीठं परिपूज्य बीजार्चितं स्वशक्तिबीजेनार्चितं वसनेन वस्त्रेण परिवृतं पीठं रक्षेत् अस्त्रत्रितालादिना रक्षां कुर्यात् ॥ २७ ॥

विवरणम् ।

शक्तिमनुवेश्येत्यावाहनमुक्तम् । न्यस्यार्णपीठमनुबीजतदङ्गकानीति । प्रणवरुद्धया शक्त्या व्यापय्य शक्तिरुद्धलिपिन्यासं तत्त्वन्यासं चोभयथापि कृत्वा धर्मादिपीठमन्त्रानपि विन्यस्य शक्तिन्यासं तदङ्गन्यासं च कुर्यादित्यर्थः । मूर्तिदशायां शक्तिबीजस्य तद्धृदये तदङ्गानामाधारत्रये च न्यासः । पीठदशायां च शक्तिबीजस्य तन्मध्ये तदङ्गानां दलकेसरकार्णिकासु च न्यासः । इष्ट्वेति न्यस्तमन्त्रैः पूजोक्ता । ततोऽर्घ्यदानाद्यपि कार्यम् । प्रतिष्ठितिकृते[3] परिपूज्य पीठमिति । इष्ट्वेत्यपि सम्बन्धनीयम् । प्रतिष्ठितये कृतं प्रतिष्ठितिकृतं नपुंसकोपलं तत्रेष्ट्वेति । नपुंसकशिलायामिदानीं लिपिपङ्कजपूजानेन सूचिता । प्रतिष्ठितिकृते परिपूज्य पीठमिति बिम्बप्रतिष्ठार्थतया पुनरपि पीठपूजा[4] पूजापटलभाविनी कार्येत्यर्थः । प्रतिष्ठाया दूरभावित्वात् प्रतिष्ठितिकृत इत्यभिधानम् । बीजार्चितमिति । यद्वक्ष्यति 'तदुपधां प्रकृतिं प्रतर्प्ये'ति । परिवृतं वसनेनेति । रक्तांशुकेनेति ज्ञेयम्[5] । तदुक्तम् —

'रक्तेन वाससाच्छाद्य रक्षां कृत्वा बहिर्व्रजेद् ।'

इति । रक्षेदिति । अस्त्रेण तालत्रयादिकमौचित्याद् द्वारपिधानं चोक्तम् ॥ २७ ॥

---

१. 'बीजाङ्गैः समभिपूज्य समर्च्य पीठं बीजाणुना समभिवाह्य समर्च्य र',
२. 'नः बी' च. पाठः. ३. 'ते इष्ट्वे', ४ 'ठे पीठपू' ग. ख. ७. पाठः. ५. 'थः । बीजार्चितमिति', ६. 'यम् । रक्षे' घ. च. पाठ.

रत्नन्यासक्रमसुमहिते स्थापिते स्थापनार्थं
ब्रह्मग्राण्णि प्रचरतु शिवे पीठपूजां यथोक्ताम् ।
पीठे यन्त्रोपरि परिगते च स्वपीठीयशक्तिं
सङ्कल्प्यैतत्समुदितदिशा न्यस्य सम्पूज्य रक्षेत् ॥ २८ ॥

विमर्शिनी ।

शिवे तु पूर्वं स्थापिते पुना रत्नन्यासक्रमसुमहिते रत्नन्यासपरिपाट्या सुतरां पूजिते ब्रह्मग्राण्णि नपुंसकशिलायां यथोक्तां स्थापनायोक्तां पीठपूजां प्रचरतु । यन्त्रोपरि परिगते स्थिते पीठे स्वपीठीयशक्तिं स्वपीठयोग्यां शक्तिम् एतत्समुदितदिशा पीठस्थापनोक्तमार्गेण संकल्प्यावाह्य न्यस्य संपूज्य रक्षेत् ॥

विवरणम् ।

शिवे तु भेदं दर्शयति — रत्नन्यासक्रमसुमहिते इति । ब्रह्मग्राण्णि स्थापिते रत्नन्यासक्रमसुमहित इत्यन्वयः । ब्रह्मग्रावा ब्रह्मशिला, स्थापित इति । पुरैव शिल्पिभिरिदानीं स्वेनैव वा[1]ऽत्र स्थापिते । पुनरिदानीमेवं प्रतिष्ठापित इति भावः । रत्नन्यासक्रमसुमहित इति रत्नन्यासविधानपूर्वकमणिमादिप्रतिपत्त्यनन्तरं प्रणवेन पूजित इत्यर्थः । स्थापनार्थं पीठपूजामित्यन्वयः । यथोक्तामिति । 'परिपूज्य पीठं बीजार्चित'मित्येवमुक्तामित्यर्थः । यद्वा लिपिपङ्कजादिपूजाभिप्रायमेतत् । यन्त्रोपरि परिगत इति पुरैव शिल्पिभिरिदानीं स्वेनैव वा यन्त्रोपरि स्थापित इति । प्रतिष्ठायतनपर्यन्ते सुसमवेतं यन्त्रं बद्ध्वा तदुपरि पीठं निधेयम् इत्यप्यर्थोक्तमिति ज्ञेयम् । स्वपीठीयशक्तिं सङ्कल्प्येति 'शक्तिं स्वबीजकुसुमार्पणतोऽनुरञ्जयेत्' तदुक्तम् । एतत्समुदितादिशा न्यस्येति । अनया 'न्यस्यार्णपीठमनुशक्तितदङ्गकानी'त्येवं समुदितया दिशेत्यर्थः । रक्षेदिति ब्रह्मशिलायाः पीठस्य च तालत्रयादिरक्षोक्ता । परिवृतं वसनेनेत्येतदिहापि समानम् । नपुंसकशिलायामपीष्यत एतत् । तदुक्तम् —

'छादयेन्महता पश्चात् पटेन धवलेन च'

इति ॥ २८ ॥

प्रासादं परितोऽष्टदिक्षु सिकताक्लृप्तेष्वथ स्थण्डिले-
ष्वाधायाजितपावकं शिखिमुखं कृत्वा सकुम्भार्चनम् ।
जुह्वत्वष्टशतं पलाशसमिधो मूलेन तावद् घृतं
गायत्र्या च हरित्क्रमादिह समिद्धेदोऽथवा गृह्यताम् ॥ २९ ॥

---

1. 'व वा स्था' क. ख., 'वा स्था' ख. घ. ङ. पाठः.

विमर्शिनी।

विष्णौ तु परिहोमाः कर्तव्या इत्याह — प्रासादमिति । शार्ङ्गधरे अथ रत्नन्यासानन्तरं प्रासादं परितः प्रासादस्य परितोऽष्टदिक्षु सिकताक्लृप्तेषु स्थण्डिलेषु स्थण्डिलानि कृत्वा तत्र सिकताश्च विन्यस्य तेषु अजितपावकं वैष्णवाग्निम् आधाय । अजितपावकमित्यनेन पक्षद्वयं द्योत्यते । तत्राग्रतोऽग्निं जनयित्वा तमग्निं विभज्याष्टसु स्थण्डिलेषु निधाय होमान् कुर्यादिति केचित् । उल्लेखादिक्रमेणाग्निमाधाय मूलेनावाह्य सम्पूज्य होमान् कुर्यादिति केचित् । शिखिमुखम् अग्निमुखं सकुम्भार्चनं दक्षिणतः कलशपूजासहितं कृत्वा मूलेनाष्टशतं पलाशसमिधो मूर्तिपा जुहुतु, गायत्र्या तावद् घृतं च । अथेह परिहोमे समिद्भेदः हरित्क्रमाद् दिक्क्रमात् प्रायश्चित्तादिहोमवत् स्वस्वदिग्योग्याः समिधः गृह्यन्तां परिगृह्यन्तां वा ॥ २९ ॥

विवरणम्।

अथ विष्णावधिकमाह — प्रासादं परित इति । अजितपावकमिति छेदः । प्रणीय वैष्णवं वह्निमिति । मण्डपादाचार्यकुण्डाद् इह मूलेन अग्निमष्टसु दिक्षु प्रणीय आधायेत्यर्थः । शिखिमुखं अग्निमुखं पलाशसमिधो मूलेन अष्टशतं जुहुत्वित्यन्वयः । मूर्तिपा इति शेषः । मूर्तिपानां चतुष्ट्वेऽन्येषामपि दीक्षितानां चतुर्णां सद्योवरणं कार्यमिति बोद्धव्यम् । तावद्घृतं गायत्र्येति । जुहुत्विति सम्बद्ध्यते । इह हरित्क्रमात् समिद्भेदो गृह्यतां वेति । हरितो दिशः । यदुक्तम् —

'पलाशखदिराश्वत्थप्लक्षन्यग्रोधबिल्वजाः ।
औदुम्बराः सकाष्मर्यस्सर्वाः पालाश एव वा' ॥

इति । यद्वा,

'पलाशखदिराश्वत्थप्लक्षन्यग्रोधजास्तथा ।
काष्मर्यो रोहिताश्चैव बिल्वोदुम्बरजाः क्रमात् ॥'

इति । नवहोमाभिप्रायमेतत् । यदुक्तं—

'प्रणीय वैष्णवं वह्निमैशान्यां मूलविद्यया ।'

इत्यादि ॥ २९ ॥

१. 'इति ॥ २९ ॥ तत्र' च. ञ. पाठः.

एवं शार्ङ्गधरे विधाय परिहोमांस्ताम्रकुम्भं परं
तत्सम्पातघटोदकैः समभिपूर्याष्टार्णवर्णैः क्रमात् ।
एकीभूतचितिं स्वमूलमनुना सङ्कल्प्य तस्मिन् विभुं
प्राच्यावेष्ट्य नवांशुकेन करगुप्तं मण्डपान्तर्नयेत् ॥ ३० ॥

विमर्शिनी ।

एवं परिहोमान् विधाय तत्संपातघटोदकैरष्टार्णवर्णैरष्टाक्षरस्याक्षरैः क्रमात् परमन्यं ताम्रकुम्भं सम्पूर्य तस्मिन् एकीभूतचितिं विभुं स्वमूलमनुना संकल्प्यावाह्य प्राच्य नवांशुकेनावेष्ट्य करगुप्तं वामकरे स्थापितं दक्षिणकरेणाच्छादितं तं कलशं मण्डपान्तर्नयेद् आनीय क्वचित् स्थापयेत् ॥ ३० ॥

विवरणम् ।

ताम्रकुम्भं परमिति । प्राचीनाग्निसन्निधावैशदिशि वा स्वस्तिकपीठे पठिमिष्ट्वा परं ताम्रकुम्भं संस्कृत्ये तस्मिन् कूर्चं सरत्नं निक्षिप्य तद्धोमसम्पातकलशोदकैस्तारुद्धाष्टाक्षरवर्णैर्दिक्क्रमेण परिपूर्य प्रणवपूजयैकीकृत्य स्वमूलमनुना विभुमावाह्य पूजयेदिति । तत्सम्पातघटोदकैरिति स्वं स्वं सम्पातं कलशेषु निषिच्य किञ्चिदिष्ट्वा मूलमन्त्रशताभिमन्त्रणं सामान्यसिद्धं कार्यमित्यभिप्रेतम् । करगुप्तमिति । यदुक्तं —

'करगुप्तं तदादाय सपिधानं सवस्त्रकम् ।'

इति । मण्डपान्तर्नयेदिति । नीराजनादियोगः सामान्यसिद्ध एव । मण्डपे तु तदभिषेकसमयः प्राप्तश्चेन्नीत्वाभिषेक एव कार्यः । न चेच्छय्यासन्निधौ यथावकाशं स्वस्तिकपीठे निधेय इत्येतदर्थादेव लभ्यते । हरिहरादिष्वपि सति सम्भवे परिहोम इष्यते । तदुक्तं —

'परिहोमेषु मूलेन गायत्र्या च सकृद् घृतम् । '

इत्यादि । स्कन्दे तु बहुबेरविधौ वक्ष्यति — 'अभितः प्रासादमष्टासु दिक्षि'त्यादि । इति ॥ ३० ॥

तत्राधिबिम्बं परिपूज्य पीठमावाह्य मूलेन कृताङ्गक्लृप्तिः ।
अर्घ्यादि दत्त्वा परिहोमसिद्धतोयेन सिञ्चेत् स्नपने ध्रुवेण ॥ ३१ ॥

---

१. 'स्तिकपीठमिष्ट्वा', २. 'स कू', ३. 'प्य किंचि' क. ख. पाठ.
४. 'का' ख. पाठः. ५. 'अथाधि' इति मूलकोशे विवरणटीका च पाठः.

विमर्शिनी ।

तत्र अधिबिम्बं बिम्बे पीठं परिपूज्य मूलेनावाह्य कृताङ्गक्लृप्तिः सकलीकरणकृद् भूत्वा अर्घ्यादि दत्त्वा स्नपनकाले ध्रुवेण परिहोमसिद्धतोयेन सिञ्चेत् ॥ ३१ ॥

विवरणम् ।

अथ सर्वेष्वपि 'परिवृतं वसनेन रक्षेत्' 'सम्पूज्य रक्षेदि'त्युक्तशेषं प्रस्तौति- अथाधिबिम्बमिति । प्रासादतो मण्डपं प्राप्य बिम्बसन्निधावुपविश्य सकलीकृतात्मा भूत्वेत्यर्थसिद्धम् । अधिबिम्बमिति तत्तद्विम्बे शय्यायामिति भावः । अर्घ्यादि दत्त्वा स्नपने ध्रुवेण सिञ्चेदित्यन्वयः । अर्घ्यादिग्रहणं यथास्वं पाद्यादेरप्युपलक्षणम् । सेकः सेचनमात्रम् । यदुक्तं—

'कर्मार्चायां तथा मूर्ध्नि सिञ्चेदोमित्युदाहरन् ।'

इति । यद्वा भद्रपीठे नीत्वाभिषेक एव विद्येश्वरकलशैरप्यभिषेकविधाविति ज्ञेयम् ॥ ३१ ॥

सर्वेषु तत्तन्मनुभिः समुक्ष्य
विद्येशकुम्भोपभृताभिरद्भिः ।
संस्नाप्य वा ताभिरथांशुकाद्यैः
संभूष्य संपूजयतूपहारैः ॥ ३२ ॥

विमर्शिनी ।

अथ सर्वेषु देवेषु विद्येशकुम्भोपभृताभिरद्भिः स्वस्वविद्येश्वरकलशैः तत्तन्मनुभिर्विद्येशमन्त्रैः समुक्ष्य ताभिः संस्नाप्य वा अथ अंशुकाद्यैः संभूष्य उपहारैः संपूजयतु ॥ ३२ ॥

विवरणम् ।

सर्वेष्विति । न हरावेवेति भावः । तत्तन्मनुभिरिति तत्तद्विद्येश्वरमन्त्राभिप्रायम् । विद्येशकुम्भोपभृताभिरिति । शय्यासन्निधावेव विद्येशकुम्भेषु पुरैव पूजयित्वा सम्भृताभिरित्यर्थः । प्रोक्षणेऽभिषेके च नीराजनं पुनर्व्यापकन्यासाद्यपि कार्यम् । अथांशुकाद्यैरिति । स्नपनसमये प्राग्वाससः आर्द्रीभावादिति भावः । यदुक्तं —

---

१. 'त्वेत्येतदर्थं' ख च छ पाठः. २. 'स्नाने' घ. च. पाठः. ३. 'यास्तथा' ख घ. च. छ. पाठः ४. 'ति क्रिया । भद्र' ख. पाठः. ५. 'रित्यभि' क. ङ पाठः.

'विसृज्य वाससी पूर्वे वस्त्राभ्यां छादयेत् पुनः ।'

इति । किरीटकटकादीनामालेपनमालादीनां चादिशब्देन ग्रहणम् । सम्पूजयात्विति प्रसन्नपूजान्तमभिप्रेतम् । तदा प्रासादे नेतुमनुज्ञापनं विधाय लयाङ्गं कुर्यात् ॥ १२ ॥

ततो मण्डले दीप्यमाने च वह्नौ
विधाय प्रसूनाञ्जलिं प्रीणयित्वा ।
चितिं तोरणादिस्थितां कुण्डसंस्थां
समुद्वासयेन्मण्डलस्थां च बिम्बे ॥ १३ ॥

विमर्शिनी ।

ततो निवेद्य प्रसन्नपूजानन्तरं मण्डले दीप्यमाने वह्नौ च प्रसूनाञ्जलिं विधाय प्रीणयित्वा तयोः स्थितं देवं प्रसाद्य तोरणादिस्थितां तोरणध्वजद्वारकलशादिषु गतां कुण्डसंस्थां कुण्डस्थाग्निगतां मण्डलस्थां च क्रमेण चितिं चैतन्यकलां बिम्बे समुद्वासयेत् ॥ १३ ॥

विवरणम् ।

ततो मण्डल इति । चक्राब्जभद्रकादौ । प्रीणयित्वेति मानसपूजाभिप्रायम् । उद्वासनानुज्ञार्थमेतद् भवति । चितिं तोरणादिस्थितामिति । तोरणध्वजतोरणकलशद्वारकलशादिगताम् । तत्तद्देवताचैतन्यमित्यर्थः । चितिमित्यनेनैव प्रणवपुष्पाराधनमात्रेण निष्कळीकरणमप्युक्तम् । कुण्डसंस्थां चितिमिति । सर्वकुण्डेषु प्रणवेन निष्कळने कृते दिक्कुण्डाग्नीन् निजनिजकुण्डाद्युद्वासनपूर्वकं प्रागुक्ततद्विहारक्रमवैलोम्येनाचार्यकुण्डे समुद्वास्य पुनः प्रणवेनेष्ट्वा उद्वासनं कार्यम् । प्रागेव वा दिक्कुण्डाग्न्युद्वासनमिष्यते । अत एव दीप्यमाने च वह्नौ इत्येवं निर्देशः । मण्डलस्थां चेति । पीठपरिवारादिविलापनपूर्वकं प्रणवेन निष्कळीकृत्येति भावः । स्कन्दे तु कौमारकलशे तदीयपीठो[3]द्वासनमेवोद्धरणसमये कार्यमित्यवगन्तव्यम् । वक्ष्यति हि 'स्वानिद्राघटयुक्तितोऽले'ति स्वघटः, स्कन्दे कौमारकलश'मिति । समुद्वासने कृते व्यापकमङ्गन्यासं च कुर्यात् । 'समुद्वास्य लयाङ्गकृदि'ति उच्यते ॥ १३ ॥

कुम्भेशनिद्राघटयोर्विधाय
पुष्पाञ्जलिं तद्गतपीठशक्तिम् ।

१. 'तास्त' घ. ङ च पाठः. २ 'कृदिविशा' घ च. पाठः. ३. 'मेवैतदुद्धारण' ङ. पाठः.

द्वयोः समुद्धास्य लयाङ्गकृद् द्वौ
नीराज्य सूद्धार्य च मूर्तिपाभ्याम् ॥ ३४ ॥

घृतादिपात्राण्यपरैर्विधार्य च
द्विजैस्ततो मङ्गलबीजरोहजाम् ।
शय्यागतां चापि विलाप्य चेतनां
व्यापय्य बिम्बे विलयाङ्गमाचरेत् ॥ ३५ ॥

विमर्शिनी ।

कुम्भेशनिद्राघटयोः पुष्पाञ्जलिं विधाय तद्द्वयंपीठशक्तिं कुम्भेशनिद्राघटयोः पीठशक्तिं तयोर्द्वयोः समुद्धास्य लयाङ्गकृद् भूत्वा नीराज्य मूर्तिपाभ्यां द्वौ सूद्धार्य सुस्थिरं धारयित्वा अपरैर्द्विजैः घृतादिपात्राणि बिम्बस्य परितः स्थापितानि द्रव्याण्यपि विधार्य धारयित्वा ततो मङ्गलबीजरोहजां शय्यागतां च चेतनां बिम्बे विलाप्य विलयाङ्गमाचरेत् ॥ ३४,३५ ॥

विवरणम् ।

कुम्भेशनिद्राघटयोरिति । कुम्भेशग्रहणं वर्धन्युपलक्षणम् । निद्राघटग्रहणं च स्कन्दे कौमारकलशोपलक्षणम् । सूद्धार्य चेत्यर्घ्यदानपुरस्सरमिति भावः । वर्धनी त्वग्रे स्वात्मानमावर्तयमानेन धारां प्रवर्तयमानेन नेया । वक्ष्यति च — 'स्यान्नीराजनमग्रतः करकधारे'ति ॥ ३४ ॥

घृतादिपात्राणीति । शय्यापूजोक्त्यनन्तरं 'गाङ्गेयरूप्यमये'त्यादिश्लोकैरुक्तानीति भावः । अष्टमङ्गलान्येकस्मिन् तण्डुलशालिनि पात्रे कृत्वाग्रतो नेयानीति ज्ञेयम् । मङ्गलबीजरोहगामिति । यदुक्तम् अङ्कुरात्मान् देवमूर्ध्नि निक्षिप्येति । शय्यागतां चापीति । मण्डपशक्तिमपि दिगधीश्वरानपि दिशास्वित्युक्तदिक्पालविलापनपूर्वकमित्यभिप्रायः ॥ ३५ ॥

नीराज्यार्घ्यमपि प्रदाय शयनादुत्तिष्ठमन्त्रं जपन्नुत्थाप्य प्रतिमां निधाय मनुविद् याने विनिर्गत्य च ।
वाद्यैः शाकुनसूक्तकैः परिजपन् स्वस्त्यादियुक्ते तथा-
तोदेवादि निजं प्रदक्षिणगतिः प्रासादमासादयेत् ॥ ३६ ॥

विमर्शिनी ।

अथ नीराज्यार्घ्यमपि प्रदाय उत्तिष्ठमन्त्रं जपन् प्रतिमां शयनादुत्थाप्य मनुविद् 'रथे तिष्ठन्नि'त्यादिमन्त्रज्ञो गुरुः याने ब्राह्मणैः कल्पिते रथा-

१. 'नि' क. ग. पाठः. २. 'गा' क. ग. घ. पाठः.

दिके निधाय तस्मान्मण्डपाद् विनिर्गत्य वाद्यैः शङ्खादिसर्ववाद्यैः सह शाकुनसूक्तके 'कनिक्रदत्' 'प्रदक्षिणिदि'ति सूक्ते स्वस्त्यादियुक्ते 'स्वस्तिनो मिमीताम्' इत्यादिभिर्युक्ते च, 'अतो देवा' दि निजं निजं च सूक्तं तथा-पारेजपन् प्रदक्षिणगतिर्भूत्वा प्रतिमां प्रासादमासादयेत् प्रापयेत् ॥३६ ॥

विवरणम् ।

नीराज्यार्घ्यमपि प्रदायेति । नीराजनविधानं प्रागुक्तं—'शुद्धैतैजस पात्रक' इत्यादि । सर्वत्रोपचारेण अर्घ्यदानमवबोद्धव्यम् । निधाय मनुविधान इति । यानस्य वाहनमनुना पूजोक्ता । यद्वा 'रथे तिष्ठ'न्नित्यनेन यान-मारोहयेदिति । (वि) निर्गत्य चेति । मण्डपतः प्रधानद्वारा देवं निष्क्रमयन् निर्गत्येति भावः । वाद्यैरिति । सहार्थे तृतीया । वेदघोषजयशब्दाद्युपलक्षण मेतत् । शाकुनसूक्तके स्वस्त्यादियुक्त इति । 'कनिक्रदत्' ('प्रदक्षिणि त्') 'स्वस्ति' सूक्तानि तथातो देवादि निजमिति । पारिजपन्निति योज्यम् । निजमिति विष्णौ 'अतो देवा– ' इति सूक्तम् । शिवे पञ्चब्रह्माणि, शिवइरौ तु उभयमित्यादि । प्रदक्षिणगतिः प्रासादमासादयेदिति । सभाद्वारान्तर्गत्वा-न्तर्मण्डपस्थानस्य बाह्यमार्गेण प्रदक्षिणतया गत्वा प्रासादसन्निधिं प्राप्नुयाद-त्यर्थः ॥ ३६ ॥

स्यान्नीराजनमग्रतः करकधारार्घ्यं वहन् देशिको
बिम्बस्वापघटौ घटेशयजमानौ चेति याने क्रमः ।
दत्त्वा द्वार्युपचारतोऽर्घ्यमुपनीय न्यस्य भद्रासने
पश्चात् त्रिः करकोदकेन परिषिञ्चेद् बिम्बतत्पीठके ॥ ३७ ॥

विमर्शिनी ।

याने गमने अग्रतो नीराजनं, पुनः करकधारा कर्करीधाराप्रसरः, पुनरर्घ्यं वहन् देशिकः, ततो बिम्बस्वापघटौ बिम्बं तत्पृष्ठतो निद्राकलशश्च पुनः घटेशयजमानौ कुम्भेशस्तत्पृष्ठतः कर्ता च इति क्रमः स्यात् । द्वारि उपचारतः स्वम्वांपचारमन्त्रेणार्घ्यं दत्त्वा उपनीय पीठसमीपं नीत्वा पश्चात् पीठस्य पृष्ठभागे भद्रासने भद्रपीठे विन्यस्य बिम्बतत्पीठके बिम्बं तत्पीठं च सह करकोदकेन त्रिः परिषिञ्चेत् ॥ ३७ ॥

---

१. 'कादीनि' क. ग. पाठः. २. 'ल' क. ख. ङ. पाठः.

विवरणम्

बिम्बनयने वर्धन्यादीनां प्रागुद्धार्यतयोक्तानां बिम्बान्वयभाजां क्रममुपदिशति — स्यान्नीराजनमग्रत इति । ततः करकधारा ततोऽर्घ्यं वहन् देशिक इत्येवं योजना । स्वापघटो निद्राकलशः । स्कन्दे तु कौमारकलशं निद्राकलशानन्तरमिति बोद्धव्यम् । नीराजनसन्निधौ मङ्गलधारका बिम्बसन्निधौ अभितो घृतादिपात्रधारका इति च बोद्धव्यम् । गुरुर्बिम्बं स्पृशन् इयात् । तदुक्तम् —

"आचार्यस्त्वग्रतो गच्छेदर्घ्यहस्तः समाहितः ।
वाहयन्मूर्तिपैर्दिक्स्थैर्हृष्टो देवं च संस्पृशन् ॥"

इति ॥

"पुरोदिङ्नीयते देवो रथमारोप्य लोकवत् ।
तथा याने शयानोऽपि जीर्णोद्धारे विपर्ययः ॥"

वक्ष्यति च—'वसनसंवीतं शिरः पूर्वकं नीत्वे'ति दत्त्वा द्वार्युपचारतोऽर्घ्यमिति । विश्रान्त्यङ्गमेतत् । यदुक्तं—

"द्वारदेशे प्रदायार्घ्यं विश्राम्य द्वारसम्मुखम् ।"

इति । उपनीयेति । मूलेन प्रासादान्तर्द्वारशाखाद्यस्पर्शेन प्रवेश्य प्राक्स्थापितपीठसन्निधिं प्रापय्येत्यर्थः । न्यस्य भद्रासने पश्चादिति । तदुक्तं —

"श्वभ्रस्य पृष्ठे विन्यस्य फलकोपरि देशिकः ।"

इति । विश्रान्त्यर्थमर्घ्यदानमिहापीष्यते । त्रिःकरकोदकेनेति । करकधारया बिम्बपीठे परितः प्रदक्षिणतया स्वास्त्रेण सेकं कुर्वंस्तदुदकं क्षपयेदित्यर्थः ॥ ३७ ॥

तत्रोपविश्य सकलीकृतचर्चितात्मा
सम्प्रीणितस्वगुरुत्रयगणाधिनाथः ।
विप्रान् प्रतर्प्य तपनीयगवादि दत्त्वा
मौहूर्तिकोत्तमसमुक्तविविक्तलग्ने ॥ ३८ ॥

---

१ 'अर्घ्यकादिपत्र' घ. च पाठ: . २. 'नान्तर्द्वा' क. पाठः .

विवरणम् ।

मूलाभिहूतिलिपितत्त्व[1]षडध्वकादि
न्यासार्चनासुमहितं मनुबिम्बमेतत्
ध्यात्वा विराजमपि खं च तथैव पीठं
बीजार्चितं प्रकृतिरूपमिलात्मकं च ॥ ३९ ॥

स्वेनौजसा तदुभयं व्यतिषज्य तिष्ठ-
[2]न्नीराज्य चारत्रहूतपीठपटोऽग्रसंस्थ[3]ः ।
तत्तत्प्रतिष्ठितिसमुक्तमनुप्रजापी
कृत्वा परिभ्रमणमायतनोपरि त्रिः ॥ ४० ॥

दोर्भ्यां गृहीतमनुबिम्बमिदं स्वपीठे
न्यस्येन्नपुंसकशिलाकलिताब्जनालम् ।
प्राक् प्रष्ठपार्ष्णिकनिजाणुगुणादिहूति-
मूलाहितापघनभावितपारमात्म्यम् ॥ ४१ ॥

सूद्यद्दशार्हमनुपञ्चदशाभिवाह-
व्याप्तिस्वमूलमहितीकृतिजागरूकम् ।
तारोपचारमनुतत्त्वमुखः प्रतिष्ठा-
मन्त्रोऽणुरुद्रशरतत्त्वमनुध्रुवान्तः ॥ ४२ ॥

विमर्शिनी ।

'तत्रोपविश्ये'त्यादि '.स्वमूलमहितीकृतिजागरूकमि'त्यन्तमर्धादिकं श्लोकचतुष्कम् । न्यस्येदित्यनया क्रियया सहान्वयः कर्तव्यः । अथ गुरुस्तत्र गर्भगृह उपविश्य सकलीकृतचर्चितात्मा स्वस्य सकलीकरणाद्यात्माराधनपर्यन्तं कर्म विशेषतस्तदा कृत्वा सम्प्रीणितस्वगुरुत्रयगणाधिनाथः गुरून् गणपतिं च यथाविधि सम्पूज्य तपनीयगवादि दत्त्वा सुवर्णगोभूम्यादिदानैर्विप्रान् बहून् ब्राह्मणान् प्रतर्प्य प्रकर्षेण प्रीणयित्वा मौहूर्तिकोत्तमसमुक्तात्रिविक्रमे मुहूर्तदर्शिनां वरिष्ठेन मुहूर्तदक्षिणापरिग्रहानन्तरं सम्यक् सम्प्रसादमुक्ते निर्दोषे राश्युदये 'प्राक् प्रष्ठपार्ष्णिके'ति 'सूद्यद्दशार्हे'ति च वक्ष्यमाणाभ्यां श्लोकार्धाभ्यां निर्दिश्यमानप्रकारेण कृतपरावाहनं कृतावस्थावाहनं च मूलाभिहूतिलिपितत्त्वषडध्वकादिन्यासार्चनासुमहितं मूलाभिहूत्यां मूलमन्त्रावाहने

---

1. 'मनूत्तमादि' ख. पाठः २, 'ि ध्याय भक्तजनतानुजिघृक्षया ' । त. ख. पाठः. ३. 'स्थमू ' क. पाठः

लिपिन्यासेन तत्त्वन्यासेन षडध्वकादिन्यासेन, आदिशब्दाद् मूलमन्त्रस्योक्तविशेषन्यासैश्च तथार्चनया तारोपचारमूलतदक्षराङ्गायुधभूषणादिभिर्बिम्बहृत्पूजया च सुमहितं सुतरां पञ्चोपहारैः पूजितम् एतद् मनुबिम्बं विराजं विराट्पुरुषाख्यस्थूलविग्रहं खम् आकाशात्मकं च ध्यात्वा तथैव बीजार्चितं स्वस्वशक्तिबीजेन आवाह्य न्यस्य सम्पूजितं पीठं प्रकृतिरूपं मूलप्रकृत्यात्मकम् इलात्मकं पृथिवीरूपं च ध्यात्वा तदुभयं बिम्बं पीठं च स्वेनौजसा व्यतिषज्य अन्योन्यं मेलयित्वा तिष्ठद् आप्रलयं स्थीयमानं च ध्यात्वा अग्रसंस्थः स्वयमग्रभागे स्थित्वा अस्त्रहृतपीठपटः अस्त्रमन्त्रेण त्यक्तपीठाच्छादनवस्त्रो भूत्वा उभयत्र नीराज्य तत्तत्प्रतिष्ठितिसमुक्तमनुप्रजापी तत्तद्देवस्य प्रतिष्ठायां स्वस्वागमोक्तमन्त्रप्रजापी भवन् आयतनोपरि प्रतिष्ठास्थानस्योपरि भागे त्रिः परिभ्रमणं कृत्वा दोर्भ्यां गृहीतमिदं मनुबिम्बं स्वपीठे नपुंसकशिलाकलिताब्जनालं नपुंसकशिलया सम्बद्धं पद्मनालं यथा भवति तथा न्यस्येत् प्रतिष्ठां कुर्यात् । प्राक् प्रष्ठेत्यादिना पूर्वोक्तं मनुबिम्बं विशिनष्टि। प्राक् 'मूलाभिहूतिलिपी'त्याद्युक्तमूलमन्त्रावाहनात् प्राक् । प्रष्ठपार्ष्ठिकनिजाणुगुणादिहूतिमूलाहितापघनभावितपारमात्म्यम् । प्रष्ठोऽग्रगः । पार्ष्ठिकः पृष्ठगतः । निजाणुः निजमूलमन्त्रः । आद्यन्तगतेन निजमूलमन्त्रेणोपलक्षितः गुणादिः गुणसंख्य आदिः गुणाः त्रयः आदिः प्रणवः तेन हूतिरावाहनं तेन मूलाहितापघनेन च अपघनोऽङ्गं मूलकृताङ्गन्यासेन च भावितपारमात्म्यं प्रापितपरमात्मभावम् : मूलपुटितप्रणवत्रयेण परावाहनं मूलाङ्गन्यासं च कृत्वेत्यर्थः । सुद्दशार्हमनुपञ्चदशाभिवाहव्याप्तिस्वमूलमहितीकृतिजागरूकं च मनु बिम्बमिति सम्बन्धः । सुद्यन्तः शोभनमुद्यन्तः तुरीयातीतादिक्रमेण द्रुच्छन्तो दशार्हा अवस्थावाहनयोग्या मनवः तेषां पञ्चकेन दशाभिवाहः । अवस्थावाहनं तेनावस्थावाहनेन तदनन्तरं तैस्तैर्मन्त्रैः व्याप्त्या व्यापकेन च तत्तदनन्तरं स्वस्वमूलमन्त्रेण महितीकृत्य । पूजया च जागरूकम् उद्बुद्धम् । अत्र प्रतिष्ठानुष्ठानग्रन्थस्य क्रमव्यत्यासः स्वगुरुमुखादेव तत्क्रमोऽवगन्तव्य इति ज्ञापनार्थम् । पुनः प्रतिष्ठामन्त्रं विशिनष्टि — तारेति । तारोपचारगनुतत्त्वमुखः तारोपचारमूलमन्त्राः अखिलतत्त्वमन्त्राश्च मुखे आदौ यस्य स तथोक्तः, अणुरुद्धशरतत्त्वमनुध्रुवान्तः मूलपुटितानि पञ्चतत्त्वानि मूलमन्त्रः प्रणवश्चान्ते यस्य प्रतिष्ठामन्त्रस्य स तथोक्तः प्रतिष्ठामन्त्रः 'यज्ञायज्ञादिपुंसूक्तमि'त्यादि श्लोकेन वक्ष्यमाणो मन्त्रः ॥ ३८-४२ ॥

विवरणम् ।

इदानीं प्रतिष्ठाविधानमुपदिशति — तत्रोपविश्येत्यादिश्लोकपञ्चकेन । तत्रोपविश्येति स्वासपदे समुपवेशनमुक्तम् । सकलीकृतचर्चितात्मेति । चर्चनं गन्धाद्यलङ्करणम् । यद्यपि 'विद्यात्माभ्यर्चितगुरुगणाधीशे'त्येवं पुरोक्तं, तथैव इदानीमप्यवतिष्ठते, न तु स्वात्मनो लयाङ्गन्यासोऽपि कृतः तथापीदानीं पुनस्सकलीकरणालङ्करणं देवोऽहमित्येवं भावनादृढतार्थमिति बोद्धव्यम् । सम्प्रीणितस्वगुरुवर्यगणाधिनाथ इति गुरुगणपतिपूजोक्ता । यद्वा स्वगुरुवर्यः स्वात्मीयजीवावाहनादिरहस्योपदेशगुरुः स्वगणाधिनाथश्च प्रासाददक्षिणद्वारि नित्यसन्निहितो गणपतिः । यदुक्तं—'विघ्नेशापचितिं विधाय यमदिग्द्वारी'ति तयोर्विशेषतः पूजयमुक्ता । विप्रान् प्रतर्प्य तपनीयगवादि दत्त्वेति । तपनीयं हिरण्यम् । गौः । क्षेत्रफलद्रुमाणाम् आदिपदेन परिग्रहः । मौहूर्तिकोत्तमसमुक्तविविक्तलग्ने इति । स्वपीठे न्यस्येदित्युपरि सम्बन्धः । मौहूर्तिकोत्तमेन समुक्ते विविक्ते निरूप्य निर्धृते निर्मले राश्युदये प्रतिष्ठापयेदित्यर्थः । मूलाभिहूतीति । मूलेनाभिहूतिः आह्वानमावाहनम् । लिपिन्यासो मूलपुटितलिपिन्यासः । तत्त्वन्यासः षडध्वन्यासश्च दशावृत्त्यष्टावृत्यादिन्यासानामङ्गायुधादिन्यासस्य चादिशब्देन ग्रहणम् । अर्चना मूलाक्षराङ्गायुधपूजा । सुमाहितम् एतैः सम्यग्वर्धितम् एतद् बिम्बम्, विराजमपि स्वं च ध्यात्वेत्यन्वयः । लिप्याद्युक्तन्यासजातेन परिपूर्णभूमा पुरुषो बिम्बं संवृत्तमिति विराजं ध्यात्वेत्युक्तम् । तस्यानवच्छिन्नरूपस्याकाशाकारेणावच्छेदापेक्षं खं च ध्यात्वेति । एतत् पीठं, तथैव बीजार्चितं प्रकृतिरूपमिलात्मकं चेति । ध्यात्वेत्यनुषङ्गः । बीजं स्वं शक्तिबीजं तेन तथैवार्चितं बिम्बोक्तविधया पूजितम् । स्वबीजावाहनतत्पु[1] लिपितत्त्वादिन्यासतदर्चनाभिः सुमहितमित्यर्थः । परिपूर्णभूमेयं विराड्रूपपुरुषोचितेति प्रकृतिरूपं ध्यात्वेत्युक्तम् । तस्ये पृथिव्याकारेण अवच्छेदापेक्षमिलात्मकं च ध्यात्वेत्येतत् । किञ्च बिम्बपीठयोः पुरुषप्रकृतिरूपतया भोक्तृभोग्यतयावस्थानम्, आकाशपृथिवीरूपेण धार्यधारकतयावस्थानमप्युक्तम् । तदुभयं स्वेनौजसा व्यतिषज्य तिष्ठदिति । ध्यात्वेत्यनुषज्यते । व्यतिषङ्गः परस्परानु[3]गमः । बिम्बपीठरूपेण मिथस्सन्निकर्षातिशयेऽपि स्वौजसा मिथो व्याप्त्यतिशयः स्यादिति स्वेनौजसा व्यतिषज्येत्येवमभिधानम् । अयमभिप्रायः—पुरुषरूपस्य स्थूलसूक्ष्मपरात्मकस्य बिम्बस्य प्रकृतिरूपे स्थूलसूक्ष्मपरात्मके पीठे भोक्तृतया

---

१. 'मादीनाम्' ग. घ. च पाठः. २. 'त्र' क. छ. पाठः. ३. 'रमनु' व. पाठः

कात्स्न्र्येन व्याप्तिः । पीठस्य चैवंविधस्यैवंविधे बिम्बे भोग्यतया कात्स्न्र्येन व्याप्तिः । किञ्च प्राधान्येनैवं भोक्तृभोग्यत्वनियमः. किन्तु पीठस्य भोग्यत्वेऽपि तदुचितात्मयोगान्मात्रया भोक्तृतयापि बिम्बे व्याप्तिः स्यात् । बिम्बस्य च तदपेक्षया पीठे च व्याप्तिः । सोऽयमेवंविधो मिथोऽनुगम इह व्यतिषङ्गेऽभिप्रेयते । तदा च मूर्तरूपता बिम्बपीठरूपयोः पुरुषप्रकृत्योः प्रकृष्टतमः सन्निकर्षः स्वेन तथाविधेन भावेन तु प्रकृष्टतमो मिथोऽनुगमलक्षणः संयोगो भवति । तदेतदुक्तं स्वेनौजसा व्यतिषज्येति । किञ्च स्थूलसूक्ष्मपररूपाणाम् उभयभाजामंशानां तत्तदुचितभावलक्षणतेजोविशेषैर्बिम्बपीठवपुषो र्मिथो व्याप्तिरपि ध्येयेति स्वेनौजसेत्युक्तम् । किंच आकाशपृथिवीरूपयोर्बिम्बपीठयोः धार्यधारकतया सन्निकर्षातिशयेऽपि धार्यमाणस्य बिम्बस्य तदोचितभरेण पीठे तस्य च धारयमाणस्य तदोचितभरेण बिम्बे च व्याप्त्यतिशयः स्यादिति स्वेनौजसा व्यतिषज्येत्युक्तम् । शेषं सर्वं पूर्ववत् । तिष्ठासायामपि तयोरेवमभिमानानुसन्धानार्थमिदानीमेव तिष्ठदित्युक्तम् । किंच अनयोः स्थापनकालादारभ्य आकल्पान्तमेवमेवावस्थानं चिन्तनीयमित्यभिप्रायेण तिष्ठदित्येवं निर्देशः । वक्ष्यति च '---आकल्पान्तस्थास्नुभावेन भक्त्ये'त्यादि । नीराज्येति' । बिम्बपीठयोर्नीराजनमभिप्रेतम् । मन्त्रावाहनन्यासपूजानन्तरमेवं प्रतिपत्ताववस्थितो विप्रतर्पणं मौहूर्तिकनियोजनं च विधाय नीराजयेदिति प्रयोगक्रमः । असुहृतपीठपट इति । तदास्त्रेण पीठाच्छादनपटमुद्धरेत् । शिवे तु ब्रह्मशिलाच्छादनपटोद्धरणमिति ज्ञेयम् । अग्रसंस्थ इति । पुरतस्तिष्ठन्नित्यर्थः दानाद्यनन्तरमुत्थाय नीराजनादि विदध्यादिति भावः । तत्तत्प्रतिष्ठितीति । तत्तत्प्रतिष्ठित्यै समुक्तम् आगमेषु इहैव वा वक्ष्यमाणं मन्त्रं प्रजपन्नित्यर्थः । प्रणवोपचारार्धङ्गमनुजपसमये बिम्बसमुद्धृत्यादि विदधत् प्रतिष्ठामनुजपसमये प्रतिष्ठाप्य शेषं प्रणवान्तं जपन्नुभयोरैकात्म्यलक्षणं सम्बन्धं भावयेतेति बोद्धव्यम् । कृत्वेति । तस्य प्रतिष्ठायतनस्योपरि त्रिः प्रदक्षिणतया परिभ्रमणं बिम्बस्य कृत्वेत्यर्थः । दोर्भ्यां गृहीतमनुबिम्बमिति । भद्रपीठात् समुद्धृति समय एव गुरुः दोर्भ्यां बिम्बपादभागं गृह्णीयात् । मूर्तिपास्तु बलिनः

१. 'दुभयं स्वे', २. ३. 'भरणे' क. ङ. पाठः. ४. 'न्यसनपू' क. ख. ङ. पाठः ५. 'ति' घ. च. पाठः. ६. 'नमु', ७. 'न्त्रं प्र' क. ङ. पाठः. ८. 'धंशम' घ. पाठः.

सम्भूय तदुपरिभागं तदनुकूलतया गृह्णीयुरिति भावः । नपुंसकशिला-कलिताब्जनाळमिति तत्कालविशेषणम् । नपुंसकशिलायां कलितं संस्पृष्टं यस्य अब्जनालं पादपद्मसम्बन्धि नाळम् । न्यासकाले तत्तथाविधमिदं बिम्बं न्यस्येदिति । परावाहनं बिम्बस्य विशेषेणोपदिशति — प्रागिति । मूलाभिहूतीत्याद्युदीरितमन्त्रावाहनतोऽपि पूर्वमित्यर्थः । गुणादिः प्रणवः, तस्य विशेषणं प्रष्ठपार्ष्ठिकनिजाणुमिति । प्रष्ठोऽग्रगामिनीति पुरस्सरः : पार्ष्ठिकः पृष्ठे पश्चाद्भागगतश्च निजाणुः स्वं स्वं मूलं यस्य तथोक्तः । मूलपुटितः प्रणवः तेन हूतिराह्वानमावाहनं मूलेनाहितोऽपघनो विग्रहोऽङ्गं च तेन भावितं सम्पादितं पारमात्म्यं परमात्मभावो यत्र तद् बिम्बं तथोक्तम् । मूलेन विग्रहो मूलावयवैश्चाङ्गमिति विवेकः । प्रणवत्रयादिपूर्वकेण मूलपुटितेन परमात्मन् आगच्छेत्यादि-धर्मशालिना प्रथमस्तावद् बिम्बे परावाहनं विधाय तेनैव व्यापय्य प्रणव-तदङ्ग[2]प्रणवान् मूलरुद्धान् मूर्धभ्रूमध्यहृन्नाभिमूलाधारेषु विन्यस्य मूलार्णतदङ्ग-न्यासं कुर्यात् । पुनस्तैरर्चयेच्चेति भावः । क्रमगोपनार्थं प्रयोग-क्लृप्तिगोपनार्थं चैवमभिधानम् तदनन्तरं कर्तव्यमवस्थावाहनमपि तथोपदिशति — सूद्यदिति । सूद्यद्भिः सम्यगुच्चार्यमाणैर्दशार्हमनुभिरवस्थोचितमन्त्रैः पञ्चानां तुरीयातीततुरीयसुषुप्तिस्वप्नजाग्रल्लक्षणानामवस्थानामावाहं[3] आवाहनं, व्याप्तिः, तेन तेन मन्त्रेणैव व्यापकं, स्वमूलमहितीकृतिः स्वमूलेन पूजा, तैर्जागरूकं परमात्मभूतस्य तुरीयावस्थाद्यवतरणक्रमेण जाग्रदवस्थापन्नतया जागरणशीलं बिम्बमिति । तदनन्तरं मूलाभिहूतीत्यादि कार्यम् । स्वमन्त्रमहितीकरणे च मूलन्यासतदङ्गन्यासाववस्था मन्त्रमूलाङ्गैरर्चनं च कार्यमिति ज्ञेयम् । प्रतिष्ठा-मन्त्रास्तु वक्ष्यन्ते । तेषां प्रतिष्ठासमये प्रयोगप्रकारमपि दर्शयति — तारोप-चारेति । तारोपचारादिपदानि बहुवचनान्तान्यभिप्रेतानि । प्रणवोपचारमूलानि त्रिरुक्त्वा तत्त्वमन्त्रान् पृथिव्यन्तान् सकृदुच्चरेत् । एवं मुखे आदितः स्यात् । ततः स स प्रतिष्ठामन्त्रः । तदन्ततश्च मूलपुटितपञ्चतत्त्वानि सृष्टिक्रमेण त्रिवारं पुनर्मूलं प्रणवं च त्रिवारमुच्चरेदिति भावः ॥ ४२ ॥

तारादिपञ्चनिजतत्त्वककुन्तमूर्त्या-
त्मान्तस्थशान्तमुखबीजपरम्भुवांशैः ।

---

१ 'रूपत' घ. च पाठः. २. 'दंश' ख. ग. घ. च पाठः. ३. 'हनं व्या' घ. च पाठः. ४. 'परात्मा' क. ङ. पाठः. ५. 'सतदंशन्यासाव' ख. पाठः. ६. 'सावस्था'. क. ङ., 'सावस्थाद्यवतरमन्त्र' ग. पाठः ७. 'श्च स्वमू' घ. च. पाठः.

ङेन्तस्वरूपिमनुशिष्टनमोन्ततुर्या-
तीतादिजागरपरैश्च दशार्णवः स्युः ॥ ४३ ॥

विमर्शिनी ।

अवस्थावाहनमन्त्रानुद्धरति — तारादीति । तारादिपञ्चनिजतत्त्वक-ङेन्तमूर्त्यात्मान्तस्थशान्तमुखबीजपरध्रुवांशैः तारादि मूलमन्त्रस्य तारादिबीजानि, ततः सृष्टिक्रमात् प्राप्तानि निजनिजपञ्चतत्त्वानि, तेषां के मूर्धन्यूर्ध्वभागे ङेन्ताश्चतुर्थ्येकवचनान्ताः स्वस्वमूर्तयः, ततः आत्मान्तस्थाः आत्मने इत्यन्ते स्थिताः शान्तमुखाः शान्तादिकाः बीजपराः बीजशब्दावसानाः ध्रुवांशाः ध्रुवस्य प्रणवस्यांशाः शान्तशक्तिनादबिन्दुबीजशब्दा ये तैरुपलक्षिताः । तथाच ङेन्तस्वरूपिमनुशिष्टनमोन्ततुर्यातीतादिजागरपरैश्च ङेन्तस्वरूपि चतुर्थ्येकवच-नान्तं स्वरूपीति पदं मनुशिष्टं मूलमन्त्रस्य बीजोपरिगतं शिष्टं नमश्शब्दश्चान्ते येषां तुरीयातीतादिजागरपराणां तुरीयातीततुरीयसुषुप्तिस्वप्नजाग्रत्पदानां ते तथोक्ताः । तैश्चोपलक्षिता दशार्णवः अवस्थामन्त्राः । 'ओं षों नमः पराय परमे-ष्ठ्यात्मने वासुदेवाय शान्तात्मने तुरीयातीतस्वरूपिणे नमो नारायणाय नमः', 'ओं यं नमः पराय पुरुषात्मने संकर्षणाय शक्त्यात्मने तुरीयस्वरूपिणे नमो नारायणाय नमः' इत्यादयो वैष्णवावस्थावाहनमन्त्राः । तथा शैवेऽपि 'ओं हौं नमः शिवाय शान्त्यतीतात्मने ईशानाय शान्तात्मने तुरीयातीतस्वरूपिणे नमः शिवाय नमः' इत्यादि । तथा शिवनारायणादिष्वप्यूह्यम् ॥ ४३ ॥

विवरणम् ।

अवस्थावाहनमन्त्रानप्युद्धरति — तारादीति । विष्णुशिवादिविषये तारादीनि पञ्चनिजतत्त्वानीति समासः । शिवनारायणदुर्गादिविषये तारादि च पञ्च निजतत्त्वानि चेति । तारोऽत्र तत्तन्मूलमन्त्रस्य आद्योऽवयवः सन् प्रणवः शिवनारायणदुर्गादिषु मूलस्य च बीजत्वाद् आदिशब्देन तद्बीजग्रहणम् । एतच्च मनुशिष्टेति निर्देशादेवं गम्यते । पञ्चनिजतत्त्वानि षों नमः पराय परमेष्ठ्यात्मने इत्येवमादीनि । ततो ङेन्ता मूर्तय आत्मा च । मूर्तयः पञ्च यथास्वं वासुदेवादयः ततस्ताद्दगात्मान्ते स्थितो येषां शान्तादिबीजपराणां ध्रुवांशानां ते तथोक्ताः । शान्तशक्तिनादबिन्दुबीजानि पञ्चप्रणवांशाः ।

१. 'स' ख. ग. च. पाठः. २. 'शा' ग. ङ. क. पाठः. ३. 'चरमाणां' ख. च. ब. पाठः. ४. 'वान्तांशा' ग. पाठः.

ङेन्तस्वरूपीत्येतच्च मनुशिष्टं च नमश्चेति समासः । तान्यन्ते येषां तुर्यातीतादीनां जागरचरमाणां तानि तथोक्तानि। ङेन्तस्वरूपेति। तुरीयातीतस्वरूपिणे इत्यादिषु स्वरूपिणे इत्येतत् मनुशिष्टम्। मूलमन्त्रस्य तारादीत्युपात्तशेषावयवः । यथा नमो नारायणाय शिवनारायणाय नमः इति। तुर्यातीताद्याः—तुरीयातीतं तुरीयं सुषुप्तिः स्वप्नो जाग्रदिति पञ्चावस्थाः । विष्णौ तावद् —ओं श्रों नमः पराय परमेष्ठ्यात्मने वासुदेवाय शान्तात्मने तुरीयातीतस्वरूपिणे नमो नारायणाय नमः इत्यादि । दुर्गायां ओं ह्रीं दुं श्रौं नमः पराय श्रेष्ठशक्त्यात्मने सें दुर्गायै शान्तात्मने तुरीयातीतस्वरूपिण्यै दुर्गायै नमः इत्यादि इति । आदौ प्रणवत्रयम् अन्ते तुरीयातीतात्मन् आगच्छेत्याद्यावाहनधर्मयोगश्च सामर्थ्यतो लभ्यते । तत्तदावाहनानन्तरं तत्तन्मन्त्रेण व्यापकं सर्वान्ततश्च द्वाभ्यां व्यापकं द्वाभ्यां हृदि न्यासं पञ्चमेन व्यापकं च कृत्वा मूलव्यापकार्णान्न्यासं च कुर्यात् । दशार्णवः स्युरित्यवस्थामन्त्रा इत्यर्थः ।। ४३ ।।

यज्ञायज्ञादि पुंसूक्तकमपि शिवनारायणे पौरुषाख्यं
त्रैलोक्याणुर्जिनार्णादिरपि मुररिपौ तारकारौ ध्रुवाणुः ।
दुर्गासूक्तं कुमार्यां द्विरदवरमुखे बीजमृक् च प्रतिष्ठा-
मन्त्रो ब्रह्माणि पञ्च स्मरजिति विहितो गोप्तृसंज्ञः प्रभेशे ।।

विमर्शिनी ।

प्रतिष्ठामन्त्रानाह — यज्ञायज्ञादीति । शिवनारायणे यज्ञायज्ञादि पुंसूक्तकमपि 'यज्ञायज्ञा वः' इत्यादि पुरुषसूक्तं च प्रतिष्ठामन्त्रो विहितः । मुररिपौ पौरुषाख्यं पुरुषसूक्तं त्रैलोक्याणुः 'ओं त्रैलोक्ये'त्यादि वक्ष्यति । जिनार्णादिः गायत्रीद्वादशाक्षराष्टाक्षरषडक्षरादिः । तारकारौ ध्रुवाणुः । ध्रुवाणुः प्रणवः 'ध्रुवा द्यौरि'त्यपि । कुमार्यां — दुर्गासूक्तं पञ्चदुर्गाः । द्विरदवरमुखे बीजमृक् च बीजं स्वबीजं 'गणनां त्वे' त्यृक् च । स्मरजिति पञ्चब्रह्माणि । प्रभेशे गोप्तृसंज्ञः'गोप्तारमि'त्यादि 'तारोपचा(रादी' ? रे )त्यादि श्लोकार्धोक्तमन्त्रैः पुटितश्च ।। ४४ ।।

विवरणम् ।

इदानीं प्रतिष्ठामन्त्रानुपदिशति — यज्ञायज्ञादीति । हरिहरे 'यज्ञायज्ञा वो अग्नये पुरुषसूक्तं च प्रतिष्ठामन्त्रः । पौरुषाख्यं पुरुषसूक्तम् । जिनार्णादिरिति । षडर्णद्वादशार्णाष्टार्णानां आदिशब्देन ग्रहणम् । ध्रुवाणुरिति

१. 'न्तं स्व' ख. ग. पाठः. २. 'तुरीयाती' क. ङ. पाठः. ३. 'ष्टम्' क. ख. ङ. पाठः. ४. 'तुरीयाती' क. ख. ङ. च. पाठः. ५. 'नुदिश' क. ख. ङ. पाठः.

ध्रुवा द्यौरि'ति मन्त्रः प्रणवोऽपि । तदुक्तं — 'ध्रुवाद्यौरिति मन्त्रवित्' 'समग्रं स्थापयेदर्चामि'ति, 'स्थापयेत् प्रणवेन त्वि'ति च । दुर्गासूक्तं — 'जातवेदसे सुनवामे'त्येतत् ॥ ४४ ॥

आदायाश्चितमन्त्रलिङ्गकमजेनास्थाप्य वामाणुना
ब्रह्मग्राण्यथ तन्निरोधविधिमप्याधाय घोराणुना ।
सान्निध्यं प्रणमन् समर्थ्य पुरुषेणेशेन सूनार्चनं
कुर्याच्चेति शिवप्रतिष्ठितिविधौ कर्मक्रमः कीर्तितः ॥ ४५ ॥

विमर्शिनी ।

'ब्रह्माणि पञ्च स्मरजिती'ति शिवोक्ते विशेषमाह — आदायेति । अञ्चित(मन्त्र)लि(ङ्ग ? ङ्गकं) यथोक्तन्यासेन सकलीकृतं यथोक्तप्रकारेण पूजितं च शिवलिङ्गम् अजेन 'सद्योजात' मन्त्रेणादाय वामाणुना 'वामदेव'मन्त्रेण ब्रह्मग्राण्णि नपुंसकशिलायामास्थाप्य । आस्थाप्येत्यनेन प्रतिष्ठायाः सामान्यकर्माणि मन्त्राश्च सूचिताः । घोराणुना 'अघोरेण' तन्निरोधनविधिं स्थिरीकरणमप्याधाय निरोधनमुद्रां च दर्शयित्वा प्रणमन् पुरुषेण 'तत्पुरुषेण' सान्निध्यं प्रार्थ्य सान्निध्यमुद्रां च दर्शयित्वा ईशेन सूनार्चनं पुष्पाञ्जलिं च कुर्यात् । शिवप्रतिष्ठितिविधौ इति विशेषात् कर्मक्रमः कीर्तितः ॥ ४५ ॥

विवरणम् ।

इह 'ब्रह्माणि पञ्च स्मराजिती'ति यदुक्तं तत्र प्रयोगक्लृप्तिं दर्शयति — आदायेति । प्रणवोपचारमूलानि त्रिरुक्त्वा तत्त्वमन्त्रानप्युक्त्वा सद्योजातेन लिङ्गं भद्रपीठादुद्धरन् आददीत । पीठाधिकरणताभावेऽपि पुरुषाकाशानुसन्धानं कार्यमेवेत्यञ्चितविशेषणेनोक्तम् । वामाणुना ब्रह्मग्राण्यास्थाप्येत्यन्वयः । निरोधविधिमप्याधाय घोराणुनेति निरोधमुद्रयेति भावः । ईशेन सूनार्चनं कुर्याच्चेति पुष्पाञ्जल्यभिप्रायम् । मूलपुटितान्येतानि पञ्च स्युः । वामदेवमूलपुटितमुक्त्वा पुनर्मूलं प्रणवं च त्रिरुच्चरेत् ॥ ४५ ॥

ओं त्रैलोक्यविक्रान्ताय त्रिविक्रमाय विष्णवे नमः ।
गोप्तारं विश्वगोप्तारं शास्तारं शाम्भवं प्रभुम् ।
अमेयमद्भुतं शान्तं स्थापयाम्यहमच्युतम् ॥ ४६ ॥

इति ।

विमर्शिनी ।

ततः प्रस्तुतं त्रैलोक्याणुं गोप्तृसंज्ञाणुं च पठति — ओं त्रैलोक्येति । गोप्तारमित्यादि च ॥ ४६ ॥

---

१. 'रित्यादिम' ख, ग, घ, च. पाठः. २. 'शाम्भवं' ख. पाठः.

तल्लम्बसूत्रेण समं प्रकल्प्य
दोर्भ्यां स्पृशन् बिम्बपदाब्जपीठम्।
जपन् ध्रुवा द्यौरिति सुप्रतिष्ठं
कृत्वाग्रतो विश्वमनु पठेच्च ॥ ४७ ॥

विमर्शिनी।

ततः सामान्येन क्रियाशेषमाह— तल्लम्बसूत्रेणेति। तद् बिम्बं लम्बसूत्रेण बिम्बस्य नासिकाग्रे पीठस्य पुरोभागकोणद्वये च स्थापितं सूत्रं लम्बसूत्रं तेन समं यथा भवति तथा वलनं परिहृत्य प्रकल्प्य दोर्भ्यां बिम्बपदाब्जपीठं बिम्बपदाम्बुजं पीठं च स्पृशन् 'ध्रुवा द्यौरि'त्यादि जपन् सुप्रति-(ष्ठितं ! ष्ठं) निश्चलं कृत्वाग्रतः स्थित्वा विश्वमनुं 'विश्वतश्चक्षुरि'ति मन्त्रं पठेद् उच्चरेत् ॥ ४७ ॥

विवरणम्।

तल्लम्बसूत्रेण समं प्रकल्प्येति। लम्बसूत्रम्। बिम्बाग्रतः तच्छिरस्सन्निधेर्लम्ब्यमानं तदीयसुषुम्नासीम्नि पार्श्वसूत्रसीम्नि च समलग्नं चेत् तद् बिम्बं ऋजुसंस्थितं स्यादिति भावः। बिम्बपदाब्जपीठं दोर्भ्यां स्पृशन् 'ध्रुवा द्यौरि'ति जपन्। सुप्रतिष्ठं कृत्वेति सम्बन्धनीयम्। बिम्बपदाब्जं तत्स्पृश्यमानपीठोपर्युद्देशं च एकतया हस्तद्वय्या प्रतिष्ठितिकरणधिया स्पृशन्नित्यर्थः। कृत्वेति भावयित्वेत्यर्थः। अग्रतो विश्वमनुं पठेच्चेति। पुरस्तिष्ठन् 'विश्वतश्च'ति मन्त्रं साञ्जलिर्निवेदयेदित्यर्थः ॥ ४७ ॥

ब्रह्मप्राण्णि स्थापयित्वोक्तनीत्या
लिङ्गं स्थाणौ स्थापयेच्च स्वपीठम्।
तत्रोमा शक्तीषुतत्त्वादिनाष्टा-
र्णेनौमेयेनान्तवामध्रुवेण ॥ ४८ ॥

विमर्शिनी।

ततः शिवे विशेषमाह — ब्रह्मप्राण्णीति। स्थाणावुक्तनीत्या ब्रह्मप्राण्णि लिङ्गं स्थापयित्वा तत ओमा ओंकारेण शक्तीषुतत्त्वादिना भुवनेश्वरीं पञ्चतत्त्वानि चादौ युक्तेन अन्तवामध्रुवेण अवसाने 'वामदेवेन' 'ध्रुवा द्यौरि'ति प्रणवेन च औमेयेन उमायाः अष्टाक्षरेण स्वपीठं स्थापयेत् ॥ ४८ ॥

---

१. 'ल्प्य मूलेन कृत्वा कुसुमाञ्जलिं च।', २. 'जप्त्वा ध्रुवा द्यौः सुदृढीकरोतु॥' ख. पाठः। ३. 'म्नासूत्रसी' ख. च. घ. ४. 'समं स्थि' क. ग. ङ. पाठः। ५. 'र्भ्यां संस्पृ' क. ङ. पाठः।

विवरणम् ।

शिवे पीठस्य यन्त्रोपरिगतत्वात् तत्प्रतिष्ठामिदानीमाचष्टे — ब्रह्मग्रा ग्णीति । तत्र पीठं औमेयेन अष्टार्णेन स्थापयेच्चेत्यन्वयः । तत्रेति स्थापितलिङ्गायां प्रतिष्ठायतनभुवीत्यर्थः । औमेयाष्टार्णं कर्मशेषे वक्ष्यति । 'तारस्सशक्तिवाग्भव' इत्यादि । स्थापयेदिति । यन्त्रादू बलिभिः सुकुशलैर्मूर्तिपैस्ताल्लिङ्गपरिलम्बनक्रमेण अवतारयन् दोर्भ्यामादाय प्रतिष्ठापयेदिति भावः । ओमेति । प्रणवेन सहप्रणवमादौ त्रिरुक्त्वेति यावत् । यद्वा उमेत्युमाप्रणवोऽभिप्रेयते । शक्तिर्हृल्लेखा । इपुतत्त्वानि च शक्तिपुटितानि स्युः । अन्ते वामो वामदेवो ध्रुवः प्रणवश्च यस्य अष्टार्णस्य तत्तथोक्तम् । प्रणवात् पूर्वं शक्तिरपीष्यते । उक्तनीत्येत्यनेन विराट्प्रकृत्याद्यनुसन्धानं तदोजोऽव्यतिषङ्गानुसन्धानं चास्मिन् समये कार्यमित्युक्तम् ॥ ४८ ॥

सद्येन स्वहृदम्बुजादथ समादाय प्रसूनाञ्जलिं
कुर्वंस्थापितलिङ्गके शिवमहः प्रावेश्य वामाणुना ।
मुद्रामाकलयन् निरोधनमघोराख्याणुना सन्निधिं
पुंसाधाय शिवात्मकेन मनुना मन्त्री समभ्यर्चयेत् ॥ ४९ ॥

विमर्शिनी ।

अथ मन्त्री आवाहनोपदेशज्ञः स्वहृदम्बुजात् 'सद्येन' शिवमहः शिवमयं तेजः आदाय 'वामा'णुना स्थापितलिङ्गके प्रसूनाञ्जलिं कुर्वन् प्रावेश्य योजयित्वा 'अघोरा'ख्याणुना निरोधनमुद्रामाकलयन् बन्धयन् निरोधनं स्थिरीकरणं चाधाय पुंसा 'तत्पुरुषेण' सन्निधिं तन्मुद्रया आधाय शिवात्मकेन 'ईशानेन' मनुना समभ्यर्चयेत् ॥ ४९ ॥

विवरणम् ।

पीठे शिवभागलक्षणस्य लिङ्गस्य स्थितिकरीं क्रियामाह — सद्येनेति । समादायेति । शिवमह इति सम्बध्यते । स्थापितलिङ्गके प्रसूनाञ्जलिं वामाणुना कुर्वन्नित्यन्वयः । प्रसूनमञ्जलिपुटे गृहीत्वा हृदयादादानमित्यर्थाद् गम्यते । लिङ्गके लिङ्गस्य मूर्धोद्देशे अघोराख्याणुना निरोधनमुद्रामाकलयन् इति । आधायेति सम्बन्धनीयम् । मुद्राकलनं निरोधमुद्राबन्धनम् । अत एव समादाने प्रावेशने च

---

१. 'तत्पीठं' ख. घ. च. पाठः. २. 'न्' क. ग. ङ. पाठः.

आवाहनमुद्रयेति लभ्यते । पुंसा सन्निविनाभावेति । ... शिवात्मकेनेति । ईशानेन । इह सद्योजातस्य भगवतो ... मूरुपुटितत्वं सभादानादिषु ओं भगवन्नागच्छ ... भव, ओं सन्निहितो भव, इत्येवंयोगश्चेत्येतत् सर्वं ... विद्वानिति वा पाठः । शिवभागविशेषवपुषः स्वपीठ... न्यतिपङ्गं विद्वानिति च तदभिप्रायः । तल्लम्बसूत्रेणेत्येतदवधार्य पीठमवतारयेत् । इदानीमीशानेन सम्पूज्य रोम्र्यां स्पृशन्नित्यादि विदध्यादिति ज्ञेयम् ॥ ४९ ॥

बीजेन पीठं प्रकृतिस्वरूपं मूलेन बिम्बं पुरुषात्मकं च ।
इष्ट्वाष्टबन्धं सकलेषु कुर्यात् स्थेम्ने मिथः सङ्कलनस्य धाम्नोः ॥५०॥

विमर्शिनी ।

ततः सर्वतोऽष्टबन्धं स्थापयेदित्याह — बीजेनेति । सकलेषु प्रकृतिस्वरूपं पीठं बीजेन स्वस्वशक्तिबीजेन पुरुषात्मकं बिम्बं मूलेन चेष्ट्वा धाम्नोस्तेजसोः मिथोऽन्योन्यं संकलनस्य सम्मेलनस्य स्थेम्ने स्थिरतायै अष्टबन्धं कुर्यात् ॥ ५० ॥

विवरणम् ।

अथ प्रतिष्ठादृढताद्यर्थमष्टबन्धकरणमिति, तदभिधत्ते — बीजेनेति । इष्ट्वेत्यावाहनतदुचितन्यासाङ्गन्यासपूर्वकन्यस्तमन्त्रार्चनमभिप्रेतम् । वक्ष्यति हि — 'बीजेनावाह्य पीठे प्रकृतिमि'त्यादि । सकलेष्विति । विष्ण्वादिषु शिवे चेत्यर्थः । धाम्नोर्मिथस्सङ्कलनस्य स्थेम्ने इत्यनन्तरं फलमुक्तम् । बिम्बपीठविवरगूहनं तद्विवरपूरितरत्नादिपरिरक्षणं पुनर्बिम्बासञ्चलनदिगाश्रयपरिहारादिः इत्येतत् सर्वं स्थूलं फलम् । यद्वा पीठसमवायिनीनां नवशक्तीनां बिम्बमयमष्टबन्धः । वक्ष्यति हि—'आत्मनवशक्त्या आत्माष्टबन्धं विदु'रिति । तासां स्वास्पदे स्थापनं तासामेव च बिम्बात्मनि देवे तत्तच्छक्त्युचितवैमल्यकरणाभिमतसर्जनादिफलवितरणसामर्थ्योचिततया ताभिस्संयोजनं च बाह्यं फलमिति । धाम्नोरिति स्वेनौजसेत्युक्तयोः बिम्बपीठौजसोस्तेजोविशेषरूपयोर्ग्रहणम् । यद्वा बिम्बपीठात्मनोः पुरुषप्रकृतिलक्षणयोरन्यपदेश्यरूपयोस्तेजसोरिति । तयोश्च स्वौजसा व्यतिपङ्गः एव । प्रतिष्ठाप्रक्रमादारभ्येदानीमपि

१. 'णादिसा' ख, पाठः. २. 'जोरूपविशेषयो', ३. 'रप' क. ख. पाठः.

सम्यगनुसन्धीयमानस्सङ्कलनमित्युच्यते । तस्य स्थेमा स्थायिता या बिम्बपीठाव-स्थानं शैथिल्याभावः । धाम्नो रित्यनेनैतदपि सूचितम् । प्रागुक्ताकाशपृथिवीभाव-नायां तद्गतनिरतिशयभास्वरतेजोमात्रापरिमाणविशेषरूपतया तयोरेव पूजोचिता । अत्यन्तपारिच्छिन्नताद्बिम्बपीठाकारेणावस्थानमपि भावनीयमिति । तदुक्तं —

> "आकाशं तस्य मूर्तिः स्यात् पृथिवी तस्य पीठिका ।
> विग्रहं कल्पयेत् तस्य तैजसैः परमाणुभिः ॥"

इति । स्थेम्न इति नवशक्त्यनुगतायास्तत्सामान्यशक्तेर्व्यापारोऽयमिति भावः ॥ ५० ॥

> संपातं नवशक्तिजं सुमहिते सिक्त्वाष्टबन्धे तथा
> रत्नैस्तद्विवरं सहेमसिकतैरापूर्य तत्रापि च ।
> वस्त्राद्यैः परिभूष्य शक्तिपुरुषौ तारोपचारासना-
> भीज्याशक्तिमनुध्रुवेण कलयेत् तत्राष्टबन्धं दृढम् ॥ ५१ ॥

विमर्शिनी ।

तत्क्रियाप्रकारमाह — संपातमिति । नवशक्तिजं पूर्वं नवशक्तिहोमेन गृहीतं संपातं सुमहिते नवशक्तिभिः पूजितेऽष्टबन्धे सिक्त्वा तथा सहेम-सिकतैः हेम्ना सिकतादिभिश्च युक्तैः रत्नैः तद्विवरं तन्नालरन्ध्रमापूर्य तत्रापि च सिक्त्वा शक्तिपुरुषौ शक्तिपुरुषात्मकौ पीठदेवौ वस्त्राद्यैः परिभूष्य तारोप-चारासनाभीज्याशक्तिमनुध्रुवेण प्रणवोपचारपीठमन्त्रपूजामन्त्रशक्तिमन्त्रमूलम-न्त्रप्रणवैः तत्र पीठबिम्बसन्धौ दृढं तदुभयं निश्चलं यथा भवति तथाष्टबन्धं कलयेत् बन्धयेत् ॥ ५१ ॥

विवरणम् ।

अष्टबन्धप्रकारमेव विवृणोति — सम्पातमिति । सुमहितेऽष्टबन्धे नवशक्तिजं सम्पातं सिक्त्वेत्यन्वयः । फडन्तप्रणवप्रोक्षणतालत्रयादिशोषणादि-शक्तिमाणायामतद्व्यापकनवशक्तिन्यासतत्पूजनं सुमहित इत्यभिप्रेतम् । नव-शक्तिभिः तत्सम्पातस्पर्शनं भवति पुनस्तन्मन्त्रैः पूजा जपश्चेष्यते । तथा तद्विवरं रत्नैः प्रपूर्य । तत्रापि चेति । सुमहिते सम्पातं सिक्त्वेत्यनुकृष्यते ।

---

१. 'नमुच्य' घ. च. पाठः. २. 'धात्' ङ ग. पाठः ३. 'बध्यते' क. ङ. पाठः.

तद्विवरं तद्बिम्बपीठविवरम् । तत्रापीति । तद्विवरे रत्नानामनियमः सहेमसिक-
तैरिति । रत्नहेमपूर्णेऽपि विवरपरिजिहीर्षया सिकतापूरणमित्यर्थाल्लभ्यते ।
तद्विवरेऽपि नवशक्त्यादिपूजापूर्वकं तन्मन्त्रैस्तन्न्यासक्रमेण तत्सम्पातशेषस्पर्शनं
विधाय तत्पूजां कुर्यात् इति शक्तिपुरुषौ वस्त्राद्यैः परिभूष्येति । पीठबिम्बयोः
शक्तिपुरुषप्रतिपत्तिरनुवर्तत एव । वीजेन पीठमित्यादि ह्युक्तम् । पुरुषस्य
वस्त्रद्वयेन शक्तेरेकेन चालङ्करणम् । गन्धानुलेपनमालादीनामादिशब्देन ग्रहणम् ।
तारोपचारयोस्त्रिर्वचनम् । आसनार्भाज्यमनवः धर्मादिसमष्ट्यन्तमनवः ।
शक्तिमनवः नवशक्तिमन्त्राः । शक्तिबीजं च पुनर्भुवः प्रणवः । नवशक्तयस्तु
शक्तिबीजपुटितास्त्रिरावर्तनीयाः । तदाशक्तिसमये च अष्टबन्धकलनं तदुभयाग्र-
सन्धानं च बिम्बपराग्भागे कार्यमिति सम्प्रदायः । बिम्बपीठयोः नीराजनपूर्वक-
मेतदिष्यते ॥ ५१ ॥

> कृत्वा ध्रुवात्ममनुमर्शनमादिनाभि-
>
> व्याप्य द्विधा प्रकृतिपूरुषयोर्विभाव्य ।
>
> अन्योन्यसङ्कलनमातनुयात् स्वमूल-
>
> मन्त्राभिवाहनसहावयवक्रियाद्यम् ॥ ५२ ॥

विमर्शिनी ।

ध्रुवात्ममनुमर्शनं 'ध्रुवा द्यौरि'त्यादिमन्त्रैरभिमर्शनं स्थिरीकरणं च
कृत्वा आदिना प्रणवेन द्विधा पीठमूलादिबिम्बाग्रान्तं बिम्बाग्रादिपीठमूलपर्यन्तं
च अभिव्याप्य प्रकृतिपुरुषयोरन्योन्यसङ्कलनं विभाव्य ध्यात्वा स्वमूलमन्त्रा-
भिवाहनसहावयवक्रियाद्यं मूलमन्त्रावाहनं सकलीकरणम् आद्यशब्देनोपहा-
रदानपूजां च आतनुयात् ॥ ५२ ॥

विवरणम् ।

कृत्वा ध्रुवात्ममनुमर्शनमिति । 'ध्रुवा द्यौः' इत्यादिभिर्दोर्द्वयेनाभिमृ-
शंस्तमष्टबन्धं सुप्रतिष्ठं विभाव्य पुनरात्ममनुभिर्नवशक्तिमनुभिर्मर्शनं कुर्यात् ।
शक्तिबीजेन तदष्टबन्धे भागाद्वि परितो व्याप्य नवशक्तिमन्त्रैर्दिङ्मध्येषु
तस्मिन्विन्यस्य शक्तिबीजेन व्यापयेदिति भावः । आदिना द्विधाभिव्याप्येति ।
प्रणवेन पीठमूलादि बिम्बमूर्धान्तं तदादि पीठमूलान्तं च त्रिवारं व्यापकमुक्तम् ।

---

१. 'पूरणे' क. ख. ग. ङ. पाठः. २. 'मृश्य तदष्ट' क. पाठः. ३. 'भिरभिमर्श' क. ङ. पाठः. ४. 'मन्त्रं दिक्ष्व' ग. घ. च. पाठः.

तदा प्रतिपत्तिमप्युपदिशति—प्रकृतिपुरुषयोरन्योन्यसङ्कलनं विभाव्येति । स्वेनौज-सेत्यत्र प्रतिपत्तिः इदानीं तथा क्रियेति भेदः । इह भोग्यावस्थस्यामृतमयप्रभाकारेण भोक्त्रवस्थस्य चाग्निमयप्रभाकारेणेतरस्मिन्ननुगमश्चिन्त्यते । दुर्गायाश्च भोक्तृ-भावापेक्षया पुरुषरूपत्वम् । तत्पीठशक्तेरपि तदीयभोग्यभावापेक्षया प्रकृति-रूपत्वमप्युपपन्नमेव । स्थेम्न इत्युक्तत्वात् स्थेमानमपि पीठबिम्बसंयोगलक्षणेऽष्टबन्धे शक्तिव्यापकनवशक्तिन्यासशक्तिव्यापकेन विभाव्येत्यपि गम्यते । आतनुयादि-त्यादि वाक्यान्तरम् । सहावयविक्रिया सकळीकरणम् । प्राक्शक्तिबीजमूलमनु-नवशक्तिमनुभिः पीठबिम्बाष्टबन्धेषु समर्चनं पुनर्बिम्बे मन्त्रावाहनन्यासानन्तरं मूलाङ्गैः समर्चनं चोक्तम् ॥ ५२ ॥

नीराज्य मूर्ध्नि कृतहेम्नि घटेश्वरेणा-
सिच्य त्रितत्त्वमनुभिर्न्यसनं च कृत्वा ।
निद्राघटेन च तथाखिलतत्त्वमन्त्रै-
रासिच्य तन्न्यसनचर्चितमातनोतु ॥ ५३ ॥

विमर्शिनी ।

पुनर्नीराज्य कृतहेम्नि मूर्ध्नि बिम्बमूर्ध्नि हिरण्यं न्यस्य त्रितत्त्वमनुभिः घटेश्वरेण कुम्भेशेनासिच्य सिक्त्वा तन्न्यसनं च चकारेण पूजां च कृत्वा तथा नीराजनादिपुरस्सरमखिलतत्त्वमन्त्रैर्निद्राघटेन चासिच्य तन्न्यसनचर्चितं तत्त-न्न्यासं मूलमन्त्रसम्बन्धिनो न्यासांश्च तथा पूजां च आतनोतु ॥ ५३ ॥

विवरणम् ।

मूर्ध्नि कृतहेम्नीति बिम्बविशेषणम् । बिम्बमस्तके हेम निधाय तस्मिन् बिम्बे त्रितत्त्वमनुभिः कुम्भेशेनाभिषिच्य तदाधारेषु त्रितत्त्वन्यासं मूलार्णाङ्गन्यासं च कृत्वा त्रितत्त्वमूलाङ्गैः पुष्पाराधनं विदध्यात् । निद्राघटेन च तथेति । नीराजनादिपूर्वकमित्यर्थः । तन्न्यसनचर्चितमिति । तत्त्वन्यासमूलार्णाङ्गन्यासं तदाराधनं चाचरेदित्यर्थः ॥ ५३ ॥

१. 'यां च' घ. च. पाठः. २ 'ण सिक्त्वा त्रि', ३. 'मूलैरा' इति मूलकोशपाठः. ४. 'लाङ्ग' क. ख. पाठः. ५. 'लाङ्गैः पु' क. ख, 'लगैः पु' ख, पाठः.

ततो मधुक्षीरसुसंभृताभ्यां
नीराजयेन्मूर्ध्नि शिवे घटाभ्याम् ।
दूर्वाङ्कुरैः कादिषु सर्पिरादीन्
समर्पयेत् तन्मनुभिर्मुरारौ ॥ ५४ ॥

विमर्शिनी ।

ततः शिवे मधुक्षीरसुसंभृताभ्यां घटाभ्यां मूर्ध्नि नीराजयेत् । मुरारौ सर्पिरादीन् पूर्वं शय्यानिकटस्थापितान् कादिषु पञ्चस्थानेषु तन्मनुभिः पञ्चतत्त्वैर्दूर्वाङ्कुरैः समर्पयेत् । तथेतरेष्वपि स्वस्वस्थाननिहितैरुपहारैः स्वस्वमन्त्रैः समर्पयेत् ॥ ५४ ॥

विवरणम् ।

इदानीं 'घृतादिपात्राण्यपरैर्विधार्य चे'ति यद्बिम्बेन सहान्तरानेवतयोक्तं तत्प्रतिपत्तिमाचष्टे — ततो मधुक्षीरसुसम्भृताभ्यामिति । तन्मनुग्रहणमिहापि योज्यम् । कादिषु सर्पिरादीनिति । यथोपकल्पनमिति भावः । यथा हि पुरोक्तं 'मौलिपदपार्श्वयुगाग्रभाञ्जीति' । हरिहरादिषु हरिवत् स्कन्दविघ्नयोः शिववदित्यर्थादवसेयम् । इदानीं जीवावाहनमिष्यते । वक्ष्यति चैतदत्यन्तगोपनार्थतया कर्मशेषे 'स्थूलात्मतोन्मेषविधायिके'त्यादि । स्कन्दशास्त्रोभेदोऽपि तत्रैव वक्ष्यते — 'स्वनिद्राघटयुक्तितोऽत्रे'त्यादि । सूक्ष्मावाहनमपि द्वादशाक्षरप्रासादादिभिरिष्यते । वक्ष्यति च जीवोद्वासनविधौ — 'स्थूलं च सूक्ष्मं च परं च रूपमि'त्यादि ॥ ५४ ॥

स्थूलात्मकं त्रितनुसंपुटितेन रूप-
मावाह्य मूलमनुना मनुबिम्बकेऽश्व ।
विन्यस्य तत्तदणुसिद्धषडध्वकाद्यं
स्वस्वाणुना सुमहितीकृतमातनोतु ॥ ५५ ॥

विमर्शिनी ।

स्थूलावाहनमाह — स्थूलात्मकमिति । अथ 'स्थूलात्मतोन्मेषविधायिका चिदावाहनासुन्यसनादि कृत्वा ।' इति [illegible]शपटलान्ते [illegible]चयिष्य[illegible]णं

जीवावाहनं प्राणन्यासादिकं च कृत्वा तदनन्तरं त्रितनुसंपुटितेन त्रितनुः प्रणवसंपुटितेन मूलमनुना मूलमन्त्रेण स्थूलात्मकं रूपं मनुबिम्बे आवाह्य तत्तदणुसिद्धषडध्वकाद्यं तत्तन्मन्त्रोक्तषडध्वादिकं विन्यस्य स्वस्वाणुना सुमहितीकृतं पूजितमावनोतु ॥ ५५ ॥

विवरणम् ।

अथ स्थूलावाहनमाह—स्थूलात्मकमिति । रूपमावाह्येति सम्बध्यते । त्रितनुसम्पुटितेनेति । प्रणवपुटितेन मूलेन प्रणवत्रयादिपूर्वकत्वं स्थूलात्मन् आगच्छेत्यादि योगश्च न्यायसिद्ध एव । सुमहितीकृतमिति । तन्मन्त्रमूलाङ्गैः पूजितमित्यर्थः ॥ ५५ ॥

स्तोत्रावाहनमाचरेदथ शिवे यस्येतिपूर्वाणुना
सेनान्यामपि शीघ्रमादिमनुनोमावाहयाम्यन्वितम् ।
आयात्वित्युदितप्रतिष्ठितिविधेः प्रागेव वेहार्यके
श्रीशे बिम्बविशुद्धिविध्यवसितौ वावाहयाम्यादिना ॥५६॥

यस्य सिंहा रथे युक्ता व्याघ्रभूतास्तथानुगाः ।
ऋषयो लोकपालाश्च देवस्कन्दस्तथा वृषः ॥ ५७ ॥

प्रिया गणो मातरश्च सोमो विष्णुः पितामहः ।
नागा यक्षाः सगन्धर्वा ये च दिव्या नभश्चराः ॥ ५८ ॥

तमहं त्र्यक्षमीशानं देवं स्थाणुमुमापतिम् ।
आवाहयामि सगणं सपत्नीकं वृषध्वजम् ॥ ५९ ॥

आगच्छागच्छ भगवंस्थिरो भव शिवो भव ।

ध्रुवो भव प्रसन्नो भव नमोऽस्तु ते । ओं ह्रौं नमः शिवाय । ओं जूं सः । शिव शर्व सर्वदात्र सान्निध्यं कुरु कुरु । अधिष्ठाय तिष्ठ स्वाहा । निरोधनं च नो भव पूजां प्रतिगृह्णातु भवान् । मन्त्रपूतमिदमर्घ्यमिदं पाद्यम् इदमाचमनीयम् एतदासनं ब्रह्मणा विहितं स्वयं स्वाहा । इति ।

शीघ्रमायातु भद्रं ते स्कन्दकुमार! सुपध्वज! ।
मयूररथयुक्तश्च वारणानुचरो गुहः ॥ ६० ॥

अभ्नाद्यप्रियशीलस्तु शक्तितोमरवज्रधृक् ।
कार्त्तिकेय ! सुरश्रेष्ठ ! असुरेन्द्रप्रमर्दन ! ॥ ६१ ॥

ओमावाहयामि ॥

आयातु शास्ता सगणो मुदे नो
हयेन नागानुचरेण शीघ्रम् ।
भवात्मजो वारिनिधीश्वरोऽयं
स्वकेतुना कृष्णनिभेन गोप्ता ॥ ६२ ॥

ओमावाहयामि ॥

आवाहयाम्यमरवृन्दनताङ्घ्रियुग्मं
लक्ष्मीपतिं भुवनकारणमप्रमेयम् ।
आद्यं सनातनतनुं प्रणवासनस्थं
पूर्णेन्दुभास्कर²हुताशसहस्रभासम् ॥ ६३ ॥

ध्येयं परं सकलतत्त्वविदां च वेद्यं
धाराहकापिलनृकेसरिसौम्यमूर्तिम् ।
श्रीवत्सकौस्तुभमहामणिभूषिताङ्गं
कौमोदकीकमलशङ्खरथाङ्गहस्तम् ॥ ६४ ॥

सर्वत्रगोऽसि भगवन् ! किल यद्यपि त्वा-
मावाहयामि हि यथा व्यजनेन वायुम् ।
गूढो यथैव दहनो मथनादुपैति
ह्यावाहितोऽपि हि तथा त्वमुपैषि चार्चाम् ॥ ६५ ॥

मालाधराच्युत ! विभो ! परमार्थमूर्ते !
सर्वज्ञ ! नाथ ! परमेश्वर ! सर्वशक्ते ! ।
आगच्छ मे कुरु दयां प्रतिमां भजस्व
पूजां गृहाण मदनुग्रहकाम्ययाद्य ॥ ६६ ॥

विमर्शिनी ।

अथ स्तोत्रावाहनं कुर्यादित्याह — स्तोत्रावाहनमिति । अथ स्थूला-
वाहनानन्तरं शिवे यस्येतिपूर्वाणुना 'यस्य सिंहा रथे युक्ताः' इत्यादिना मन्त्रेण

---

१. 'स', २. 'रसहस्रहुताशनभा' क. पाठः. ३. 'रथ' ख. पाठः.

स्तोत्रावाहनमाचरेत् । सेनान्यां शीघ्रमादिमनुना 'शीघ्रमायातु भद्रं त' इत्यादिमनुनापि ओमावाहयाम्यन्वितम् 'ओमावाहयामी'त्यवसाने युक्तं यथा भवति तथा । आर्यके उदितप्रतिष्ठितिविधेः प्राग्वा इदानीं वा आयात्विति 'आयातु शास्ता सगण' इत्यादिना । अथ श्रीशे बिम्बविशुद्धिविध्यवसितौ वा बिम्बशुद्धिविधानानन्तरं वा संप्रति वा आवाहयाम्यादिना 'ओं आवाहयाम्यमरवृन्दनते'त्यादिना च । इतरेषु स्वस्वागमेऽन्वेष्टव्याः स्तोत्रावाहनमन्त्राः ॥ ५६ --- ६६ ॥

विवरणम् ।

ओमावाहयाम्यन्वितमिति । शिवादिष्वपि समानम् । आर्यके उदितप्रतिष्ठितिविधेः प्रागिहैव वा । 'आयात्वि'ति स्तोत्रावाहनमादधीतेति योजनीयम् । प्राक् चे'न्मूलाभिहृती'त्युक्तमूलावाहनन्यासार्चनानन्तरम्[1]इति ज्ञेयम् । श्रीशे बिम्बविशुद्धिविध्यवसितौ वा[2] इहैव वेति योजनीयम् । बिम्बशुद्ध्यन्ते चेद् बिम्बकलशाभिषेकं कृत्वे[3]ह्येहिपूर्वमन्त्रेणे[4]त्येतदवसरे कार्यमिति ज्ञेयम् ॥ ५६–६६ ॥

इति संस्थाप्य बिम्बेषु विश्वतश्चक्षुरादिभिः ।
उपतिष्ठेत लोकादिमन्त्रैश्च स्वागमोदितैः ॥ ६७ ॥

लोकानुग्रहहेत्वर्थं स्थिरीभव सुखाय नः ।
सान्निध्यं च तथा देव ! प्रत्यहं परिकल्पय ॥ ६८ ॥

मा भूत् प्रजाविरोधोऽस्मिन् यजमानः समृद्ध्यताम् ।
सभूपालं तथा राष्ट्रं सर्वोपद्रववर्जितम् ॥ ६९ ॥

क्षेमेण वृद्धिमतुलां सुखमक्षयमश्नुताम् ।
पूजां गृहाण सततं मामुद्धर नमोऽस्तु ते ॥ ७० ॥

इति ।

सर्वमन्त्रादिसंयुक्तो लोकानुग्रहकाम्यया ।
अत्र लिङ्गे महादेव ! सन्निधौ भव सर्वदा ॥ ७१ ॥

---

१ 'रमेतदिति' ग. घ. ङ. च. पाठः. २. 'बिम्बविशु' ध. च. पाठः. ३. 'ह्येहि' क. ग. ङ. पाठः. ४. 'रित्यृचा' ख. पाठः.

यावच्चन्द्रश्च सूर्यश्च यावत् तिष्ठति मेदिनी ।
तावत् त्वयात्र लोकेश ! स्थातव्यं सर्वदा विभो ! ॥ ७२ ॥

विमर्शिनी ।

इति । इति विम्बेषु देवेषु संस्थाप्य सम्यक् प्रतिष्ठां कृत्वा विश्वतश्चक्षुरादिभिः स्वस्वागमोदितैर्लोकादिमन्त्रैः 'लोकानुग्रहहेत्वर्थमि'त्यादिमन्त्रैरुपतिष्ठेत उपस्थानं कुर्यात् । शिवोपस्थाने 'सर्वमन्त्रादिसंयुक्त' इति मन्त्राभ्यां चोपस्थानं कुर्यात् ॥ ६७—७२ ॥

विवरणम् ।

विश्वतश्चक्षुरादिभिरिति । 'सूक्तं पौरुषमैन्द्रिमि'त्यादि वक्ष्यमाणमन्त्रैरपि यथायोगमुपस्थानमुक्तम् । स्वागमोदितैरिति यथालाभमिति भावः । लोकानुग्रहहेत्वर्थमित्यादयस्तु सर्वेष्वप्युचिता एव । दुर्गायां तु सान्निध्यं च सदा देवीत्यूह्यमिति ॥ ६७—७२ ॥

श्रीसूक्तं त्रिष्टुबृचं पुंसूक्तरथन्तराख्यगायत्राणि ।
शाक्करशिवसङ्कल्पौ दुर्गायां पाठयेत् प्रतिष्ठासियुतम् ॥ ७३ ॥

विमर्शिनी ।

उपस्थाने दुर्गायां विशेषमाह — श्रीसूक्तमिति । श्रीसूक्तं त्रिष्टुबृचमिति 'तामग्निवर्णामि'त्यादीनामप्युपलक्षणम् । पुंसूक्तरथन्तराख्यगायत्राणि पुरुषसूक्तं, रथन्तरं गायत्रं च सामनी । शाक्करशिवसङ्कल्पौ, शाकरं साम, शिवसङ्कल्पः 'येनेदं भूतमि'त्यादिसूक्तं, प्रतिष्ठासियुतं 'प्रतिष्ठासि प्रतिष्ठां गच्छे'-त्यादियजुषा युतम् । एतान् मन्त्रान् स्वयं पठेन् मूर्तिपैः पाठयेच्च ॥ ७३ ॥

विवरणम् ।

रथन्तरगायत्रे सामनी बिम्बशुद्धावुक्ते । महानाम्नीषु साम शाक्करमिष्यते । 'येनेदं भूतमि'त्यादि खिलसूक्तं शिवसङ्कल्पः । प्रतिष्ठासियुतमिति । 'प्रतिष्ठासि प्रतिष्ठायन्तो भूयाः स्म' इत्यादि पाठयेदिति रथन्तराद्यभिप्रायम् । स्वयमुपस्थानमेवं[3] सम्भवे सतीष्यते । पाठयेदित्यनेनैव 'सूक्तं पौरुषमैन्द्रिमित्यादीनामपि यथायोगं परैर्वाचनमपि सूचितमिति ॥ ७३ ॥

---

१ 'ध्यं स', २. 'प्रार्थयेत्' क. पाठः. ३. 'व' कः ख.,ग.,ङ. पाठः.

मूलेनोङ्कारोपचारान्वितेन
मन्त्री मन्त्रावाहनं संविधाय ।
तत्साकल्यं मातृकातत्त्वमन्त्र-
वर्णाङ्गन्यासादिभिः कल्पयेच्च ॥ ७४ ॥

विमर्शिनी ।

ततो मन्त्रावाहनं कुर्यादित्याह --- मूलेनेति । मन्त्री मन्त्रचैतन्यानुप्रवेशकुशलो गुरुः ओङ्कारोपचारान्वितेन मूलेन मन्त्रावाहनं संविधाय मातृकातत्त्वमन्त्रवर्णाङ्गन्यासादिभिस्तत्साकल्यं तस्य देवस्य साकल्यं सकलभावं कल्पयेच्च ॥ ७४ ॥

विवरणम् ।

मन्त्री मन्त्रावाहनमिति तात्पर्यार्थमुक्तम् । यद्वा उपस्थानानन्तरं मन्त्रप्राणायामाक्षराङ्गन्यासादिभिर्विशेषतोऽपि मन्त्रदेवतात्मानुसन्धानं विधायैवमावाहयेदिति सूचितम् । मन्त्री तत्साकल्यमिति चान्वयः । ध्यानाधिवासन्यस्तमन्त्रवित्तथा तत्साकल्यमिति । तथा चोक्तम् ---

"अर्चायां यानि तत्त्वानि पूर्वंन्यस्तानि वै क्रमात् ।
विन्यस्य तानि सर्वाणि शक्तिबीजैर्नियोजयेत् ॥
मूलेन विद्यया चैव साङ्गेन सकलं क्रमात् ।"

इति । विद्याग्रहणमिह दुर्गाभिप्रायमिति ॥ ७४ ॥

ततः क्रमेण प्रसमर्प्य मन्त्री
पाद्यादितत्तद्विहितोपहारान् ।
समर्च्य देवं परमान्नमस्मै
निवेद्य भक्त्या परितोपयच्च ॥७५ ॥

विमर्शिनी ।

ततो मन्त्री पूजापटले वक्ष्यमाणं पूजाविधिं पूजासम्बन्धं च जानन् गुरुः पाद्यादितत्तद्विहितोपहारान् क्रमेण स्वस्वोक्तक्रमेण (प्र)समर्प्य देवं समर्च्यास्मै परमान्नं पायसं निवेद्य भक्त्या सहितस्तं परितोषयेच्च ॥ ७५ ॥

---

१. 'लिप्या सार्धं तत्त्वमन्त्राक्षराङ्गन्यासं कृत्वाथोपहारान् प्रदद्यात् ॥ ७४ ॥
२. 'दूर्वाङ्कुरैः कादिषु सर्पिरादीन् समाहृतांस्तन्मनुभिः समर्प्य ।
समर्च्य' ख. पाठः.

विवरणम् ।

तत्त्वाद्विहितेति । पाद्यार्घ्याचमनादिकल्पस्येत्यादि पूजापटलभाविविभागाभिप्रायम् । यद्वा नात्रैषां प्रतिनिधानमुचितमित्यभिप्रेतम् । स्नानं तु मानसमेव भवति । मन्त्रीत्युपचारमन्त्रेण तत्तत्समर्पणान्तेनेति भावः । समर्च्य देवमिति विग्रहपूजैव भवति । परमान्नं पायसम् । भक्त्या निवेद्येति । 'श्रद्धाभक्तिपवित्रितोपहरणैरि'त्येतदभिप्रेतम् । यद्वा, भक्तिर्भावो देवात्मनि सम्भवी विभा(गः ? वः) । तया भक्त्योपलक्षिततया निवेद्येति । देवान्तर्गतेषु स्थूलसूक्ष्मपरभागेषु निवेद्यान्तर्गतानां रससोमप्रकृत्यंशानां क्रमेण समर्पणम् । तदा च तदन्तर्गतावान्तरभागेषु तत्त्वसमष्टिव्यष्टिप्राणादिशक्तिष्वपि रसाद्यवान्तरांशानामपि समर्पणं कार्यमिति भावः । परितो(ष्ये ? षयेच्चे)ति । निवेद्यसमये रसाद्यनुभवक्रमेण स्वरूपानन्दनिर्वृतिपर्यन्तमनुसन्धानमुक्तम् । यद्वा पुनः प्रसन्नपूजापि कार्येत्युक्तम् ॥ ७५ ॥

आराध्य योगकमलं नियमार्चनार्थ-
मावाह्य मूलमनुना सकलं विभाव्य ।
देवं समस्तपरिवारसमेतमेतं
भक्त्या स्वकल्पकथितक्रमतो यजेत ॥ ७६ ॥

विमर्शिनी ।

अथ नियमार्चनार्थं नित्यपूजायै योगकमलं योगपद्मपीठमाराध्य मूलमनुना तमावाह्य सकलं विभाव्य समस्तपरिवारसमेतमेतं देवं स्वकल्पकथितक्रमतः पूजापटले वक्ष्यमाणक्रमेण भक्त्या सह यजेत ॥ ७६ ॥

विवरणम् ।

योगकमलं योगपीठम् । नियमार्चनार्थमिति नित्यपूजार्थम् । नित्यपूजा तावद् इदानीमेव प्रवर्तनीयेति भावः । समस्तपरिवारसमेतमिति । यथोक्तम्—

"अनन्ताद्यैरुमाद्यैश्च शक्राद्यैः कुलिशादिभिः ।
ध्यात्वा तु संवृतं देवं गन्धाद्यैः परिपूजयेत् ॥"

इति । येषामेकबेरविधौ परिवारानभ्युपगमः तेषामपि इदानीमेवं कार्यमिति चाभिप्रेतम् । एतं देवं भक्त्येति । पूर्ववन्मूलावाहनसमय एव परसूक्ष्मस्थूल-

१. 'वामादि' क. ख. घ. ङ. च. पाठः. २. 'प्रेति' ग. घ. च, पाठः. ३. 'णं तेन' क, ख. ङ. पाठः. ४. 'क' क. ङ. पाठः. ५. 'भोगे सा दे' क. ग., 'भोगैः सा दे' ख. ग. पाठः.

रूपविभावना । पुनर्विंग्रहपूजायां तेषामपि पूजेत्येतत् सर्वं कार्यमिति भावः । स्वकल्पकथितक्रमत इति । पूजापटलभांविप्रकारेणेत्यर्थः । पुष्पावरणपुष्पपूरणाद्यभिप्रायमेतत् ॥ ७६ ॥

निवेद्य हृद्यं बहु पायसाद्यं
देवाय सन्तर्प्य तमग्निरूपम् ।
द्वाःस्थादिकांस्तत्परिवारमुख्या-
नभ्यर्च्य तेभ्यो विकिरेद्‌ बलिं च ॥ ७७ ॥

विमर्शिनी ।

पायसाद्यं हृद्यं बहु निवेद्यं देवाय निवेद्य अग्निरूपं तं सन्तर्प्य द्वाःस्थादिकान् तत्परिवारमुख्यान् तत्परिवारेषु मुख्यान् प्रधानभूतानभ्यर्च्य तेभ्यो बलिं विकिरेच्च ॥ ७७ ॥

विवरणम् ।

सन्तर्प्य तमग्निरूपमिति । वक्ष्यति च 'परिसमूहनपूर्वविधावधा'वित्यादि ॥ ७७ ॥

तत्तद्‌द्वारपवाहनद्विपमुखेशाशेशमात्रार्यकान्
दुर्गाषण्मुखशेषभुङ्निजसभाद्वाःस्थान् समर्च्य क्रमात् ।
इष्ट्वाष्टध्वजनायकानथ महापीठे तदीयावृती-
ज्यान्ते पारिषदाधिपं च धिनुयादेषात्र लघ्वी विधा ॥ ७८ ॥

विमर्शिनी ।

तत्क्रममाह — तत्तदिति । तत्तद्‌द्वारपवाहनद्विपमुखेशाशेशमात्रार्यकान् द्वारपाः द्वास्थाः वाहनं गरुडादि द्विपमुखो गणपतिः ईशो दक्षिणामूर्तिः आशेशाः लोकपालाः तान् दुर्गाषण्मुखशेषभुङ्निजसभाद्वाःस्थान् शेषभुक् निर्माल्यधारी निजनिजसभागता द्वाःस्थाश्च तानपि क्रमात् समर्च्य अष्टध्वजनायकान् कुमुदादीन् ध्वजेशानपि इष्ट्वा महापीठे महाबलिपीठे तदीयावृतीज्यान्ते तदीयावरणपूजानन्तरं पारिषदाधिपं हरिसेनादिकं धिनुयात् । एषा अत्र लघ्वी अल्पा विधा क्लृप्तिः ॥ ७८ ॥

विवरणम् ।

'द्वाःस्थादिकांस्तत्परिवारमुख्यानि'त्येतद्विवृणोति — तत्तद्‌द्वारपेति ।

१. 'क्रिया' क. पाठः.

तस्य तस्य देवस्य द्वारपालादीन् जलगन्धादिभिः पूजयेत् । तत्तद्ग्रहणादुत्सव-पटलभावी क्रम एषां भवति । द्विपमुखो गणपतिः । ईशः दक्षिणामूर्तिः । आशेशाः लोकपालाः । आर्यकः[2] शास्ता । अष्टध्वजनायकाः बहिः कुमुदनन्त्यादि-प्रथमावरणदेवताः । तदावृतिस्तदीयाष्टमूर्तयः[3] । पारिषदाधिपो हरिसेनहरसेनादिः । धिनुयादिति[4] । समर्च्य धिनुयादिति सम्बध्यते । सकृत् सकृत् बलिदानेन प्रीणयेदिति भावः । लघ्वी विधा बलिप्रकारः । परिवारमुख्यग्रहणात् सर्वत्र पारिषदानपेक्षेति[5] ज्ञेयम् । क्षेत्रपाले पात्रशेषार्पणं भूतबलिन्यायसिद्धमिति ॥ ७८ ॥

प्रदक्षिणीकृत्य कृतप्रणामः
सम्प्रार्थ्य यावन्मनुनाग्रसंस्थः ।
आचम्य सर्वान् परिवारमुख्या-
नन्तः प्रविष्टो विसृजेन्निवेद्यम् ॥ ७९ ॥
यावदत्र जगन्नाथो बिम्बमाश्रित्य तिष्ठति ।
तावदत्रैव रक्षार्थं यूयं तिष्ठत सर्वदा ॥ ८० ॥

इति ।

विमर्शिनी ।

पुनः प्रदक्षिणीकृत्य कृतप्रणामः अग्रसंस्थः सन् यावन्मनुना 'यावदत्रे'-त्यादिमन्त्रेण सर्वान् परिवारमुख्यान् प्रार्थ्याचम्यान्तः प्रविष्टो निवेद्यं विसृजेत् ॥ ७९, ८० ॥

विवरणम् ।

कृतप्रणाम इति । अग्र(मण्डप ? संस्थः) उपचारेणेति बोद्धव्यम् । अग्रसंस्थः यावन्मनुना सर्वान् परिवारमुख्यान् संप्रार्थ्येत्यन्वयः । प्रासादद्वार-बहिरब[6]लिपीठसन्निधौ तन्मुखतयैव सर्वपारिषदाभिमुखतया साञ्जलिस्तिष्ठन्निति भावः । आचम्य अन्तःप्रविष्टो निवेद्यं विसृजेदित्यन्वयः ॥ ७९, ८० ॥

ततोऽस्य गण्डूषसमर्पणाद्यं
कृत्वार्चयित्वा परितोष्य देवम् ।
संस्पृश्य तन्मूर्धनि मन्त्रदोष्णा
स्वकल्पसिद्धान् प्रजपेच्च मन्त्रान् ॥ ८१ ॥

---

१. 'तस्य दे' क. ङ. पाठः. २. 'र्यः शा' ग. घ. च. पाठः ३. 'यास्त्वष्ट' ख. ग. घ. च. पाठः. ४. 'ति सम्ब' क. घ. ङ. च. पाठः. ५. 'नवेक्ष्येति' घ, 'नपेक्ष्येति' च. पाठः. ६. 'रबलि' च. पाठः.

विमर्शिनी ।

ततोऽस्य देवस्य गण्डूषसमर्पणाद्यं कृत्वा अर्चयित्वा देवं परितोष्य तन्मूर्धनि मन्त्रदोष्णा न्यस्तमन्त्रेण करेण संस्पृश्य स्वकल्पसिद्धान् मन्त्रान् प्रजपेच्च ॥ ८१ ॥

विवरणम् ।

तन्मूर्धनि मन्त्रदोष्णा संस्पृश्येति । प्रागवसानार्घ्यादेतत् किञ्चित् सम्पूज्य कार्यम् । मन्त्रदोष्णेति । दक्षिणकरतलमस्त्रेण संक्षाल्य तेन व्यापय्य गन्धाक्तिं सुधूपितं विधाय तत्र मन्त्रं विन्यस्य किञ्चित् सम्पूज्य मूलेनाभिमन्त्र्य तन्मन्त्रहस्तं देवमूर्ध्नि नीचीनं विधायेति तत्प्रकारः । यदुक्तं —

'स्वहस्ते सकलं ध्यायेन्मण्डलादिकमादराद् ।'

इत्यादि ॥ ८१ ॥

सूक्तं पौरुषमैन्दिरं शरमनून् मूलत्रयं चाजिते
सश्रीरुद्रनृसूक्तकं हरिहरे मूलं जिनार्णं गुहे ।
श्रीसूक्तादिकमुक्तमेव महिषारातौ यथाशक्त्यथ
स्वं स्वं मूलमनुं समाहितमना मन्त्री जपेत् सर्वतः ॥ ८२ ॥

विमर्शिनी ।

जप्तव्यान् मन्त्रानाह — सूक्तमिति । तत्र जपे अजिते पौरुषं सूक्तम् ऐन्दिरं श्रीसूक्तं शरमनून् पञ्चतत्त्वानि मूलत्रयं द्वादशाक्षराष्टाक्षरषडक्षराणि समाहितमना मन्त्री जपेत् [1]। हरिहरे सश्रीरुद्रनृसूक्तकं श्रीरुद्रं पुरुषसूक्तं च । गुहे मूलं जिनार्णं गायत्रीम् । महिषारातौ श्रीसूक्तादिकं 'श्रीसूक्तं त्रिष्टुबृचम्' इत्यादिश्लोकोक्तमेव । अथ सर्वतः मन्त्री स्वस्वागमोक्तमन्त्रज्ञः स्वं स्वं मूलमनुं च यथाशक्ति जपेत् ॥ ८२ ॥

विवरणम् ।

ऐन्दिरं सूक्तं श्रीसूक्तम् । मूलत्रयं षडष्टद्वादशाक्षरम् । नृसूक्तं पुरुषसूक्तम् । श्रीसूक्तादिकमुक्तमेवेति । यत्प्रागुक्तं — 'श्रीसूक्तं त्रिष्टुबृचम्' इत्यादि । स्वं स्वं मूलमिति यथाशक्त्याष्टरयेति भावः । सर्वत इति । विष्ण्वादिषु गणपतौ शास्तरि चेत्यर्थः । मन्त्रीति । तत्तद्राय्ग्याद्युचितजपोऽपि तयोः सूचितः ॥ ८२ ॥

---

१. 'मन्त्रितं त' घ. च. पाठः. २. 'षं मू' क. घ. ङ. पाठः.

आवृत्याङ्गसमन्वितं प्रजपतु प्रासादपञ्चाक्षर-
ब्रह्मव्योममनून् समृत्युजिदनुष्टुब्रुद्रकं चास्त्रकम् ।
श्रीकण्ठीयमघोरवज्रकरमासूक्तं पुनः शाकुन-
स्वस्त्याख्यानि समाहितः सशिवसङ्कल्पं समूलं शिवे ॥

विमर्शिनी ।

अथ शिवे मन्त्री शैवागमोक्तमन्त्रविशेषज्ञः समाहितो भूत्वा प्रासाद-पञ्चाक्षरब्रह्मव्योममनून् प्रासादं पञ्चाक्षरं पञ्चब्रह्म व्योमव्यापि दशाक्षरं चतुश्शताक्षरं च अङ्गसमन्वितं स्वस्वाङ्गैः सहितमावृत्य जपतु । समृत्युजिदनुष्टुब्रुद्रकं मृत्युञ्जयेन त्र्यम्बकानुष्टुभा श्रीरुद्रेण च सहितमस्त्रकं पाशुपतम् । श्रीकण्ठीयं प्रोमिति बीजम् । अघोरवज्रकरमासूक्तम् अघोरास्त्रं प्रणवपुटितहुंफट्कारं वज्रमन्त्रं रमासूक्तम् । पुनः शाकुनस्वस्त्याख्यानि शाकुनं 'कनिक्रदा'दि । 'स्वस्ति नो मिमीताम्' इत्यादि स्वस्त्याख्यम् । सशिवसंकल्पं 'येनेदं भूतमि'त्यादि । समूलं मूलमन्त्रस्यावृत्त्या जप उक्तः ॥ ८३ ॥

विवरणम् ।

आवृत्येति । त्रिपञ्चवारमिति भावः । ब्रह्मेति पञ्चब्रह्मग्रहणम् । व्योममनुपदेन व्योमव्यापिद्वयमुक्तम् । रुद्रपदेन शतरुद्रीयग्रहणम् । अस्त्रकं पाशुपतद्वयम् । श्रीकण्ठीयमिति । वज्रको वज्रमन्त्रः ॥ ८३ ॥

द्विद्व्येकोद्विदुरेषुतत्त्वमनुभिर्व्यापय्य मन्त्री चिद-
र्चार्चाविष्टरपीठिकायतनसंयोगं विभाव्य क्रमात् ।
ब्रह्माध्वेद्धचितादिनोदवपरिव्याप्त्याभिपूर्याखिलं
काण्डं तत् परिकल्पयेदथ महासालात्मनावस्थितम् ॥

विमर्शिनी ।

अथ चिद्बिम्बादीनामैक्यस्वरूपं रहस्योपदेशमाह — द्विद्व्येकेति । अथ मन्त्री द्विद्व्येकोद्विदुरेषुतत्त्वमनुभिः द्विद्व्येकक्रमेण भेदितैः पञ्चतत्त्वमन्त्रैः चिदर्चार्चाविष्टरपीठिकायतनसंयोगं चिदर्चयोः चैतन्यबिम्बयोः अर्चाविष्टरयोः प्रतिमापीठयोः पीठिकायतनयोः पीठतद्गतस्थानयोश्च संयोगं सम्यगन्योन्यमेलनं क्रमाद् विभाव्य विशेषेण भावयन् व्यापय्य पुनः आदिना प्रणवेन उदवपरिव्याप्त्या ऊर्ध्वगतेनाधोगतेन च व्यापकेन हेतुना ब्रह्माध्वेद्धाचिता ब्रह्मा-

---

१. 'न्त्रै' ख. पाठः. २. 'त्या' क. पाठः. ३. 'नुसंव्याप्त्यात्र चिन्मन्त्रबिम्बार्चावि' ख. पाठः.

ध्वनि सुषुम्नायां दीप्तेन चैतन्येन अखिलं काण्डं ब्रह्माण्डमपि तत्प्रसरेणाभिपूर्य तद् ब्रह्माण्डमप्यथ महासालात्मना महामर्यादारूपेणावस्थितं च परिकल्पयेत् ॥ ८४ ॥

विवरणम् ।

द्विद्वयेकेति । संयोगो मेलनम् । विष्णौ तावत् परमेष्ठिपुरुषतत्त्वाभ्यां सकृद्बिम्बे व्यापयंस्तद्गतचैतन्यस्य बिम्बेन तादात्म्यलक्षणं संयोगं भावयेत् । विश्वनिवृत्तितत्त्वाभ्यां बिम्बाग्रादिपीठमूलान्तं[1] सकृद्व्यापयन् बिम्बपीठयोः पुरुषप्रकृत्यादिभावतोऽर्थसिद्धं प्रागुदीरितरूपं संयोगं भावयेत् । पुनः सर्वतत्त्वेन पीठाग्रादिगर्भगृहादिरूपप्रासादप्रान्तपर्यन्तधियाँ[2] व्यापयंस्तयोराश्रयाश्रयिभावलक्षणं संयोगमपि भावयेत् । मन्त्रीति शिवे पञ्चब्रह्मभिरेतदिति सूचितम् । स्कन्दे क्षेत्रज्ञयुतेन तत्त्वद्वयेन चिदर्चासंयोजनमित्यप्युक्तम्[3][4] । यद्वा एतेषु त्रिषु व्यापकेषु क्रमेण प्रणवेन मूलेन शक्त्या च पुटनमुक्तम् । द्विद्व्येकोद्विदुरेत्यत्र द्वे द्वे एकमित्येवं भिदुरैरिति वार्थः । द्वे द्वे तत्त्वे सम्भूयैकमेकं भवतीति । मन्त्रीति परमेष्ठिपुरुषौ पुरुषविश्वावित्येवं पूर्वपूर्वानुषंगक्रमेणेयमेकतापत्तिरित्युक्तम् । आयतनपदेन गर्भगृहालिन्दयोर्ग्रहणम् । चत्वार्येवं व्यापकानि स्युः । चतुर्थेऽपि व्यापके[5] शक्तिपुटितत्वमिति ज्ञेयम् । गर्भगृहालिन्दयोरावार्यावारकतया रक्ष्यरक्षकतया वावस्थानादस्ति भेदः[6] । यत उक्तम् —

'बिम्बपीठगृहालिन्दप्राङ्गणेषु यथायथम् ।
खननादिविधिं कुर्याद् '

इति । गर्भगृहादिमहामर्यादान्तं वा क्षेत्रमायतनमभिप्रेतम् । तदा च चतुर्व्यापकाभ्युपगमे प्रासादतलभूमेः तद्बाह्यभूमेश्च चतुर्थः संयोग इति । संयोगो वायं पूर्वपूर्वस्योत्तरोत्तरस्मिन् अंशैरनुगमोऽभिप्रेतः । वक्ष्यति च 'कृत्वा चिच्चैत्यसम्मेलनमि'ति । बिम्बचित्संयोगमपि दर्शयति — ब्रह्माध्वेद्धचितेति । बिम्बविग्रहान्तर्गता सुषुम्ना ब्रह्माध्वा तत्रेद्धा सूत्ररूपेण स्फीतदीप्तितया मूलाधाराद्याद्वादशान्तमवस्थिता । विद्देवस्य[7] स्वरूपचैतन्यं चिदर्चेति चित्पदोक्तम् । ब्रह्माध्वेद्धचिता अखिलं काण्डं कस्यं ब्रह्मणोऽण्डं अबाद्यावरणावृतमभिपूर्येति । सुषुम्नान्तर्हृदब्जे प्रागावाहितजीवचितोऽवस्थानम् । वक्ष्यति च —

---

१. 'बिम्बादिपीठान्तं' क. ङ. पाठः. २ 'हप्रान्त' घ. च. पाठः. ३. 'यापि व्या', ४. 'नमप्यु', ५. 'पु व्या' क. ङ. पाठः. ६. 'वा संस्था' घ. च. पाठः. ७. 'तस्य' क. ख. ग. ङ. च. पाठः.

'सुषुम्नयावेश्य दशासु चित्तादीद्धां चितिं हृत्कमले निदध्याद् ।'

इति । तस्या मूलाधारान्तं द्वादशान्तावधि च सूत्ररूपेणानुगमस्तावत् स्वभावसिद्ध एवेति । एतदभिप्रायेणैव च ब्रह्माध्वेद्धचितेति सिद्धवन्निर्देशः । जीवावाहनविधौ तदीयहृद्वर्तिचैतन्यस्यामूलाधारमाद्वादशान्तं चानुगतिरपि स्वभावतया चिन्तनीयेत्यप्यर्थात् सूचितम् । एवं च 'नीत्वा कमप्यात्मपदं पदादेरि'त्येतदुपपन्नं भवति । कथमभिपूर्येति । उच्यते । उदवपरिव्याप्त्येति । उव्याप्तिः द्वादशान्ततोऽप्युपरि स्तूपिकादिक्रमेण व्याप्तिः । अवव्याप्तिर्मूलाधारतोऽपि अधो ब्रह्मशिलाधारशिलादिक्रमेण व्याप्तिः । परिव्याप्तिश्च समन्ततो गर्भगृहालिन्दादिक्रमेण व्याप्तिः । तया त्रिविधया व्याप्त्यानवच्छिन्नतया प्रवर्तमानया ब्रह्माण्डमन्तर्बहिरभिपूर्येति । बिम्बस्थ सुषुम्नातः समन्तात् प्रसरन्तीभिस्तदीयस्थूलविग्रहभूतप्रासादव्यापिनीभिर्नाडीभिर्व्याप्तिपरिमाणं निस्सृत्य परिव्याप्तिरिष्यते । यद्वा द्वादशान्तनिस्सृतैव चित् परिव्याप्तावपि स्यात् । यतो वक्ष्यति —'तारेण तेजस्तदिदाभमन्तरि'त्यादि । प्रणवं त्रिवारमुच्चरंस्त्रिधा व्याप्तिं तदीयमुद्राभिर्भावयन् ब्रह्माण्डं तया चिता परिपूर्णं भावयेत् । अथ तन्महासालात्मनावास्थितं भावयेदिति । तत्तथाविधं ब्रह्माण्डमेवानवच्छिन्नमपि महामर्यादारूपेणावच्छिन्नाकारं तत्तेजोगर्भमवस्थितं तदीयमुद्रया विदध्यात् । यद्वा तदिति तथावस्थितं चिद्रूपं गृह्यते । महासालशब्देन च तदवधिकमायतनं सपरिषत्कं गृह्यते । वक्ष्यति च वहिष्ठप्राकारनिष्ठमिति । तेन ग्रस्तं समस्तं परिवारजातमिति च पूर्ववत् तद्भावनाप्रकारः । इह च यावन्महासालावधिकं विष्वग्व्याप्तिपरिमाणं तावदुपरि तावदधश्चापि परिमाणमपि भावनीयम् । ब्रह्मानन्ततत्परिषदास्पदोपपत्तेरिति बोद्धव्यम् ॥ ८४ ॥

कृत्वा *चिद्बिम्बसम्मेलनमिति सुदृढं तल्लयाङ्गादि कृत्वा
संरक्ष्याक्षय्यदीपाक्षतकुसुमजलाद्यं समापाद्य चान्तः ।
गत्वा द्वारं च बद्ध्वा बहिरथ नियतार्चास्थितिः स्थापकेन
प्रादक्षिण्यप्रणामादिकृदभिमतमाराधनुयाद् देवमेवम् ॥ ८५ ॥

१. 'भिर्निस्सृ' ग. घ. च. पाठः. २. 'या परि' क. पाठः. ३. 'ण विच्छि' घ. च. पाठः. ४. 'इह च ... बोद्धव्यम्' घ. च. पाठयोर्नोपलभ्यते. ५. 'पि व्याप्तिप' क. ग. ङ. पाठः. ६. 'दायस्प' क. ङ. पाठः.

* 'चिच्चैत्यसम्मेलनम्' इति विवरणानुसारी पाठः.

विमर्शिनी ।

इति उक्तेन प्रकारेण चिद्बिम्बसम्मेलनं चैतन्यबिम्बयोः संमेलनमैक्यं सुदृढं कृत्वा तल्लयाङ्गादि तस्य लयाङ्गादि कृत्वा संरक्ष्य अक्षय्यदीपाक्षतकुसुमजलाद्यम् अनश्वरं दीपम्[1] अक्षतकुसुमजलगन्धादि च पूजासाधनं चान्तः समापाद्य बहिर्गत्वा द्वारं च बद्ध्वा संघट्य्य अथ स्थापकेन यजमानेन सह नियतार्चास्थितिः नित्यपूजार्थं क्षेत्रधनादिकल्पनाकृद् भूत्वा[2] प्रादक्षिण्यप्रणामादिकृद् भवेत् । एवं पटलषट्कोक्तप्रकारेणाभिमतं विष्ण्वादिस्वेष्टदेवं प्रतिष्ठाप्याराध्नुयात् निजपूजादिकं कुर्यात् ॥ ८५ ॥

विवरणम् ।

चिच्चैत्यसम्मेळनमितिः । कृत्वेत्युक्तोपसंहारः । चिदेवचैतन्यं, चैत्यं बिम्बपीठादिप्राकारावधिकं च सपरिधरकं क्षेत्रम् । सम्मेळनमेवं द्विधोक्तम् । संयोजनं सुदृढमिति । त्रिपञ्चावृत्याद्यभिप्रायं सुदृढप्रातिपत्त्यभिप्रायं वा । तल्लयाङ्गादि कृत्वेति । पुनः किञ्चित् सम्पूज्यावसानीयमर्घ्यं दत्त्वा लयाङ्गन्यासं तत्पादाब्जं स्पृशन् मूलावर्तनं तत्प्रसादकुसुमोपादानं च कुर्यात् । संरक्ष्येति । पुष्पास्त्रप्रविमोचनं स्वास्त्रेण तालत्रयादिकं बिम्बस्य तदीयक्षेत्रस्य चोक्तम् । अन्तरक्षय्यदीपाक्षतकुसुमजलाद्यं च समापाद्येति । गर्भगृहे एवाक्षय्यं त्र्यधिकदिनपर्याप्तं प्रदीपमक्षतं पुष्पनिचयं कुम्भादिगतं जलं गन्धं धूपदीपाविति सर्वं सम्यक् सम्पादयेत् । बहिर्गत्वा द्वारं च बद्ध्वेति । मूबीजेनैतदिष्यते । अथ स्थापकेन नियतार्चास्थितिरिति । प्रतिदिननिवेद्यादिमानमेककालं द्विकालं त्रिकालं वा पूजनमिति सर्वं यजमानेन सह नियतं विधेयमित्यर्थः । प्रादक्षिण्यप्रणामादिकृदिति । स्थापकेन सह देवं प्रदक्षिणं विधायाग्रतो मण्डपे नमो ब्रह्मण्यदेवाय नमश्शिवाय साम्बायेत्यादिभिर्नमस्कारं विदध्यात् । पुनः स्वात्मनि मानसपूजानिष्कळीकरणलयाङ्गन्यासतालत्रयादिकमादिशब्देनोक्तम् । अभिमतमिति । स्थापकस्याभिमतं विष्णुं शिवमन्यं वा । एवमिति । भूपरिग्रहादीयदन्तविधानानुवादः । आराधनं यजनं यदुक्तं 'क्रियतां विष्णुयागो मे' इत्यादि ॥ ८५ ॥

स्वर्णानां शतकं ददातु गुरवे सद्यः प्रतिष्ठाकृते
दात्रादात्मनःप्रसादजननी[3] या दक्षिणा सोत्तमा ।
गोभूम्यादिसमर्पणप्रमुखतोऽप्येनं समाराध्नुया-
न्मूर्तीशानपि तद्दशांशपरिदत्त्यान्यांश्च तद्भागतः ॥ ८६ ॥

---

१. 'पाक्ष' क. पाठः. २. 'दि स्वेन यजमानेन सह नियतार्चास्थितिमिद्ध' क. ख. पाठः. ३. 'यावद्दातृपरिगृहीतृपरितुष्टीष्टोत्तरा दक्षिणा । गो' ख. पाठः.

विमर्शिनी ।

ततः कर्ता गुरवे दक्षिणां दद्यादित्याह — स्वर्णानामिति । स्वर्णकर्षाणां शतकं प्रतिष्ठाकृते गुरवे सद्यस्तदानीमेव ददातु । या दात्रादातृमनःप्रसादजननी दातुः प्रतिग्रहीतुश्च मनःप्रसादसम्पादनी सा उत्तमा दक्षिणा स्यात् । गोभूम्यादिसमर्पणप्रमुखतः आदिशब्देन रत्नपट्टवस्त्रादिकं गृह्यते । समर्पणप्रमुखतः पादशुश्रूषात्मनिवेदनादिनाप्येनं समाराध्नुयात् । मूर्तीशानपि तद्दशांशपरिदत्त्या गुरुदक्षिणाया दशांशप्रमाणेन । अन्यान् परिकर्मिणश्च तद्भागतः तद्दशांशेन ॥ ८६ ॥

विवरणम् ।

अथेदानीं गुर्वादीनां दक्षिणामभिधत्ते — स्वर्णानामिति । प्रतिष्ठाकृते गुरवे स्वर्णानां शतकं सद्यो ददात्वित्यन्वयः । स्थापक इति शेषः । तुलापरिमितं हिरण्यं सुवर्णमित्यभिधीयते । तावच्छक्त्यभावविषये कथमित्याह — दात्रादातृमनःप्रसादजननीति । दाता यजमानः । आदाता च गुरुः । सोत्तमेति । परिमाणतो न्यूनत्वेऽपि सोत्तमैवेति भावः । प्रमुखशब्देन गृहनिर्माणक्षेत्ररचनादिकमुक्तम्[1] । प्रीतिदानमेतदभिप्रेतम् । यदुक्तं — 'प्रीतिदानं च दातव्यमि'ति । समाराध्नुयादिति । देवोऽयमिति बुद्ध्या पूजयेत् । यद्वा दानप्रकारसूचनमेतत् । यजमानो गणपतिं सम्पूज्य प्रदीपमलङ्कृत्य गुरुं समाचान्तं प्राङ्मुखमुपवेश्यानुलेपनालङ्करणदानपूर्वकं जलगन्धादिभिः सम्पूज्य सगन्धपुष्पं दक्षिणां दद्यात् । मूलमन्त्रेण नमस्कारं कृत्वाभिवाद्यं प्रत्यभिवादितस्तदाशिषोऽपि लभेतेति । मूर्तीशानपि तद्दशांशपरिदत्त्येति । परिदत्तिर्दानम् । वरणवत् समूर्तिप एव गुरुरुक्तरीत्याराधनीय इति बोद्धव्यम् । अन्यानिति । परिकर्मिसदस्यादीन् ॥ ८६ ॥

कृत्वा त्रेधा स्वसम्पादितवसुनिचयं नित्यपूजादिसिद्ध्यै
भागं देवाय भागं प्रदिशतु गुरवे दक्षिणां स्थापनार्हाम् ।
तस्मै तत्रोपयुक्तं सकलमपि समर्प्याथ तार्तीयमंशं
तत्कर्ता पुत्रभार्याद्यनुगतपरिपुष्ट्यै स्वयं चाददीत ॥ ८७ ॥

विमर्शिनी ।

प्रकारान्तरेण दक्षिणायाः क्लृप्तिमाह — कृत्वेति । स्वसम्पादितवसुनिचयं स्वेनार्जितमर्थसमूहं त्रेधा कृत्वा भागमेकमंशं देवाय नित्यपूजादिसिद्ध्यै ।

---

१. 'क्तम् । समा' घ. च. पाठः.

आदीति विशेषपूजोत्सवादिकं गृह्यते । तद् साधयितुं प्रदिशतु । भागं द्वितीयमंशं गुरवे स्थापनार्हां प्रतिष्ठायां योग्यां दक्षिणां प्रदिशतु । तस्मै गुरवे तत्रोपयुक्तं सकलं धनमपि समर्प्य अथ तार्तीयमंशं तत्कर्ता स्वयं पुत्रभार्या-द्यनुगतपरिपुष्ट्यै पुत्रभार्याभ्रात्रादीनामनुगतानां परिपोषणाय आददीत परिगृह्णीयात् ॥ ८७ ॥

विवरणम् ।

प्रकारान्तरमभिधत्ते -- कृत्वा त्रेधेति[1] । यदुक्तं — 'त्रिधा कृत्वात्मनो वित्तमि'त्यादि । देवायेति । प्रदिशत्विति सम्बध्यते ॥ ८७ ॥

होमादिकर्तॄन् परिकर्मिणश्च
सदस्यपारायणिकादिकांश्च ।
स्वदक्षिणांशैरथ गायकादीन्
वस्त्रादिनान्यानपि सन्धिनोतु ॥ ८८ ॥

विमर्शिनी ।

तत्पक्षे गुरुः स्वदक्षिणांशैः होमादिकर्तॄन् परिकर्मिणः आदेशकारिणश्च सदस्यपारायणिकादिकांश्च सदस्याः साक्षिणः पारायणिकाः वेदादिजपकारिणः आदिशब्देन मन्त्रजापकाश्च तान् सन्धिनोतु प्रसादयेत् । अथ गायकादीन् अन्यांश्च वस्त्रादिनापि ॥ ८८ ॥

विवरणम् ।

स्वदक्षिणांशैरिति । स्वैर्गुर्वादिकल्पितदक्षिणाया अंशैस्तैस्तदुचितै-र्भागैरित्यर्थः । सन्धिनोतु प्रीणयतु ॥ ८८ ॥

नोद्घाटयेद् द्वारमहस्त्रयेऽत्र
कृत्वाग्रतः स्थण्डिलमादधीत ।
नित्यार्चनं स्वार्हहुतादियुक्तं
संस्नाप्य तुर्येऽह्नि यजेच्च बिम्बे ॥ ८९ ॥

विमर्शिनी ।

कृत्यशेषमाह — नोद्घाटयेदिति । अत्र प्रतिष्ठानन्तरम् अहस्त्रये दिवसत्रये द्वारं नोद्घाटयेद् न विवृतं कुर्यात् । अग्रतः स्थण्डिलं कृत्वा[2] स्वार्ह-

1. 'ति । दे' घ. च. पाठः. 2 'स्वदु' क. पाठः.

हुतादियुक्तं स्वयोग्यपूजाहोमादिना सह नित्यार्चनमादधीत । तुर्येऽह्नि चतुर्थे दिवसे संस्नाप्य वक्ष्यमाणविधिना कलशैरभिषिच्य बिम्बे यजेच्च ॥ ८९ ॥

विवरणम् ।

नोद्घाटयेद् द्वारमहस्त्रयेऽपीति । प्रागबद्धं प्रासादीयं द्वारं देवस्य यथोवस्थानं सम्पादितं तथैव त्रिरात्रं भाव्यम् । तादृगवस्थानहृद्ध्यर्थमधिवासादिवदिति द्वारानुद्घाटनम् । अत एव बिम्बं आवाहनोपहारसमर्पणादिभिर्भक्तजनावलोकनादिभिश्च व्याक्षेपाकरणमिति । यद्वा दिव्यजनपूजावसरोऽयमिति । तदुक्तम् —'यत्र नवास्पदे स्थाप्यते तत्र देवासुरगन्धर्वराक्षसाः पितरो नागा यक्षविद्याधराद्या देवगणास्त्रिरात्रं भगवन्तं नारायणं भक्त्या पूजयन्ति यथा 'राजानं राज्याभिषिक्तमि'ति । कृत्वाग्रतः स्थण्डिलमिति । मण्डपे स्थण्डिलं विधाय स्वस्तिकादि विरचय्य तत्रेत्यर्थः । कौतुकं वा स्वस्तिकेऽस्मिन् व्रीह्यादिपीठे न्यसनीयम् । तदुक्तम् — 'स्वाहेहुतादियुक्तमि'ति । देवोचितपूजाङ्गहोमपरिषद्बलिविप्रभोजनोपेतम् । संस्नाप्येति । स्नपनपटलमाविविधानेन द्रव्यकलशैरिति शेषः ॥ ८९ ॥

इत्यवोचाम विश्वेशमन्त्रबिम्बप्रतिष्ठितिम् ।
अथ तत्परिवाराणां प्रतिष्ठां संप्रचक्ष्महे ॥ ९० ॥

विमर्शिनी[1] ।

इति उक्तप्रकारेण विश्वेशमन्त्रबिम्बप्रतिष्ठितिं विश्वेशानां सर्वानामपि देवानां मन्त्रबिम्बस्य प्रतिष्ठामवोचाम उक्तवन्तो वयम् । अथ तत्परिवाराणाम् इन्द्रादिलोकपालादीनां प्रतिष्ठां संप्रचक्ष्महे ब्रूमहे । परिवारप्रतिष्ठा चतुर्थदिवसात् प्रागेव कर्तव्येत्यभिप्रायः ॥ ९० ॥

*

इन्द्रादिदिङ्नायकपीठिकाः प्राक्
सदर्भमृत्त्वक्सलिलैर्विशोध्य ।
संक्षाल्य संशोध्य च धारणाभिः
स्वमन्त्रतादात्म्यमपि प्रकुर्यात् ॥ ९१ ॥

१. 'शोप' ग. पाठः.   २. 'धानद' ग. ङ. पाठः.

* ९० तमश्लोकविवरणव्याख्या नोपलभ्यते ।

विमर्शिनी ।

तत्र प्राक् प्रथमम् इन्द्रादिदिङ्नायकपीठिकाः पूर्वद्वारेऽन्यदिग्द्वारे-ऽपीन्द्रादीनाम् इन्द्र एवादिभूतानां(?) दिङ्नायकानां दिगीशानां पीठिकाः कारयित्वा परिगृह्य ताः सदर्भमृत्त्वक्सलिलैर्विशोध्य संघृष्य संक्षाल्य धारणाभिः प्राणायामैश्च संशोध्य स्वमन्त्रतादात्म्यमपि स्वस्वमन्त्रेण प्राणायामाङ्गन्यासा-दिकमपि प्रकुर्यात् ॥ ९१ ॥

विवरणम् ।

इन्द्रादिदिङ्नायकपीठिका इति । 'दण्डेऽर्धेऽन्तर्गतं मण्डलम्' 'भक्तायामग्रभूमाविषुभि'रित्येवं तक्षपटलोक्तानामन्तर्मण्डलबलिपीठानामिदं ग्र-हणम् । प्राक्सदर्भमृत्त्वक्सलिलैर्विशोध्येति । स्वास्पदेषु तक्षभिः स्थापिता-नामेतदुच्यते । प्रथमं ताम्रदर्भमृत्स्वग्भिर्विघृष्य सलिलैर्विशोधयेत् । सति सम्भवे स्थलशुद्धिरप्युचिता । संक्षाल्येति । जलाधिवासविधौ वरुणमन्त्रपूजित-जलैरिति शेषः । संशोध्य च धारणाभिरिति शोषणादिचतुष्कमुक्तम् । जीवो-द्वासनभूताप्ययादि तु सर्वं यथायोगं कार्यम् । स्वमन्त्रतादात्म्यमपि प्रकुर्यादिति । तत्तद्दिगीशमन्त्रप्राणायामव्यापकादिकं, तेन पूजनमर्घ्यदानं चोक्तम् । बिम्बेन सहाधिवासोपपत्तौ—

"पाथोदर्भकधेनुबालघृतमासूशांबुभिः श्रीपतौ"

इत्याद्युक्तनयेन घृताभ्यञ्जनाद्यपि कार्यम् । बिम्बेपरितोऽष्टदिक्षु जलेऽधिवासः । पुनरेकैककलशेन स्वमन्त्रपूजितेन बिम्बशुद्धिः पुण्याहप्रोक्षणं च । मण्डपे वेदि-पर्यन्तेऽष्टदिक्षु कचिदन्यत्र वा स्वस्तिकपीठेष्वाधाय धारणादिसंशोधनं कार्यम् । तदुक्तम् —

"घृतेनाभ्यज्य सर्वास्तान् क्षालयेच्छुद्धवारिणा ।
एककुम्भविधानेन स्नपनं चापि कारयेत् ॥
निजमन्त्रेण देवेन्द्रं तत्र चैवाधिवासयेत् ।
विन्यस्यैवं यथायोगं ... ... ... ॥"

इति ॥ ९१ ॥

---

१. 'शे म' च. पाठः. २. 'पत्तौ च पाथो' ङ. पाठः. ३. 'पतेः इ' क. पाठः. ४. 'नादि का' घ. च. पाठः. ५. 'म्बं प' घ. पाठः. ६. 'शुद्धिं पु' क. ख. ग. ङ. पाठः. ७. 'धारधारणासं' च. पाठः. ८. 'संरोध' घ. पाठः.

स्वस्वोत्तरे स्थण्डिलमारचय्य
सोल्लेखनाद्यत्र निधाय वह्निम् ।
तद्दक्षिणे पूर्णघटे स्वमन्त्रै-
स्तं तं यजेत् स्वाङ्गदिगीशयुक्तम् ॥ ९२ ॥

विमर्शिनी ।

ततः स्वस्वोत्तरे स्वस्य स्वस्य स्थानस्योत्तरे स्थण्डिलमारचय्यात्र सोल्लेखनादि उल्लेखनादिभिः सहितं यथा तथा वह्निं निधाय तद्दक्षिणे पूर्णघटे पीठपूजापुरस्सरं पूर्णे कलशे स्वमन्त्रैः स्वस्वमन्त्रेण तं तं लोकपालं स्वाङ्गदिगीशयुक्तं स्वस्वाङ्गैर्लोकपालैस्तदस्त्रैश्च परिवृतं यजेत ॥ ९२ ॥

विवरणम् ।

स्वस्वोत्तरे स्थण्डिलमिति । तत्तत्पीठोदग्भागे होमार्थं स्थण्डिलं विधाय तस्य तद्बलिपीठस्य चान्तरे स्वस्तिकपीठे कलशं च न्यसेत् । निधाय वह्निमिति । परिधानादर्वाचीनं सर्वं कृत्वेति भावः । तद्दक्षिण इति । पीठेज्यादिपूर्वकं कुम्भसंस्कारादि सर्वं विधाय जलैस्सम्पूर्य पल्लवाद्यलङ्कृते तं तं दिगीशं तस्मिन्नावाह्य पूजयेत् । स्वाङ्गदिगीशयुक्तमिति तदीयावरणपूजोक्ता । यदुक्तम् । 'पूजामूलाङ्गलोकपैरि'ति । 'ओं इन्द्राय सुराधिपतये नमः' इत्यादयो दिगीशमनवः । 'ओं हृदयाय नमः । इन्द्राय शिरसे स्वाहा । सुराधिपतये शिखायै वषट् । नमः कवचाय हुम् । ओं इन्द्राय नेत्राभ्यां वौषट् । सुराधिपतये नमः अस्त्राय फट्' एवमङ्गानि ज्ञेयानि । तत्तत्सन्निधौ तत्तदायुधमपि पूजनीयम् । दिगीशग्रहणं वज्राद्यावरणोपलक्षणम् इति ॥ ९२ ॥

स्वगृह्यक्लृप्त्याभिमुखं विधाय
पक्वं च पञ्चप्रणवादिकेन ।
इन्द्रक्रतुंनःप्रमुखेन तत्त-
द्दिश्येन मन्त्रेण ततो जुहोतु ॥ ९३ ॥

विमर्शिनी ।

पुनः स्वगृह्यक्लृप्त्या परिधिस्थापनाद्यभिमुखं विधाय ततः पञ्चप्रण-

१. 'संस्थाप्य तद्दक्षिणतो घटं च सम्पूर्य तत्तन्मनुना यजेत ॥' ख. पाठः. २. 'टैः' क. पाठः. ३. 'दङ्ग' क, 'ताङ्ग' ग. पाठः. ४. 'त् । विधाय' ख. घ. ङ. पाठः. ५. 'दि पूर्वं' च. पाठः. ६. 'ते तं दि' ङ. पाठः. ७. 'अङ्ग' ख. घ. ङ. च. पाठः. ८. 'नादिपू' घ. च. पाठः. ९. 'रणम् ।' च, 'रणलक्षणं' घ. पाठः.

वादिकेन पञ्चप्रणवादौ योजितेन तत्तद्दिश्येन तत्तद्दिग्भवेन इन्द्रक्रतुंनःप्रमुखेन 'इन्द्रक्रतुं न आभरे'त्याद्येन मन्त्रेण पक्वं जुहोतु ॥ ९३ ॥

विवरणम् ।

स्वगृह्यक्लृप्त्यग्निमुखं विधायेति । यत् परिधानात् पूर्वमन्वाधानं-परिसमूहनादिकं, यच्चोत्तरं परिधानोऽग्न्यलङ्करणं पीठपूजादिपूर्वकमिध्महोमादिकं तत्सर्वं सहोक्तमिति ज्ञेयम् । पञ्चप्रणवादिकेनेति । पञ्चप्रणवपूर्वकम् 'इन्द्रक्रतुं न आभरे'त्यृचमुक्त्वा स्वाहेति पूर्वदिगग्नौ जुहुयादित्यादि ॥ ९३ ॥

प्राचीन्द्रक्रतुमाश्रयाशदिशि चाग्निंदूतमर्कोद्भवे
नाकेपूर्वसुपर्णमाशरधुरीणे मोषुणःपूर्वकः ।
यंरक्षन्ति जलाधिराजि पवमाने वायवायाह्यणुः
सोमंराजपुरःसरो हिमरुचौ स्यात् त्र्यम्बकं त्र्यम्बके ॥

विमर्शिनी ।

दिग्भवान् पक्वमन्त्रानाह — प्राचीति । प्राचि प्राग्गते होमे तु 'इन्द्रक्रतुं' मनुः स्यात् । आश्रयाशदिशि अग्निदिशि 'अग्निं दूतमि'ति च । अर्कोद्भवे यमे नाकेपूर्वसुपर्णं 'नाके सुपर्णमि'ति । आशरधुरीणे राक्षसश्रेष्ठे निर्ऋतौ मोषुणःपूर्वकः 'मो षु णः परापरे'ति । जलाधिराजि वरुणे 'यं रक्षन्ती'ति । पवमाने वायौ 'वायवायाहि दर्शते'ति । हिमरुचौ सोमे सोमंराजपुरस्सरः 'सोमं राजानमि'त्याद्यः । त्र्यम्बके ईशाने 'त्र्यम्बकं यजामह' इति च ॥ ९४ ॥

विवरणम् ।

आश्रयाशोऽग्निः । अर्कोद्भवो यमः । नाकेपूर्वसुपर्णमिति । 'नाके सुपर्णमुप यत '। आशरधुरीणो निर्ऋतिः तत्र । 'मो षु णः परापरा' । पवमानो वायुः । सोमं राजपुरःसर इति 'सोमं राजानं वरुणम्' । त्र्यम्बकमिति । 'त्र्यम्बकं यजामहे' । यदि मण्डपे पीठानामधिवासः तदाचार्यकुण्ड एवं तत्त्वहोमविधौ तत्तद्धोमसमये प्रत्येकमष्टाष्टवारम् आज्यं हुत्वा तत्सम्पातस्पर्शनाद्यपि पीठेषु कार्यम् । प्रागेव च बिम्बानयनात् पीठानि स्वस्वास्पदसमीप एव भद्रासनेषु नीत्वा विन्यसेत् । प्रतिष्ठानन्तरं चैवं दिशाहोमान् विधाय पीठप्रतिष्ठापनादि कुर्यादिति प्रयोगक्रमः ॥ ९४ ॥

---

१. 'नादिपरि'. घ. ङ. पाठः. २. 'नायलं' घ. च. पाठः. ३. 'म्बान' ङ. पाठः. ४. 'न्तरमेव दि' ङ. पाठः.

द्रव्याणि तत्तदधिवाससमीरितानि
चत्वारि वात्र जुहुयुर्दिगधीशमन्त्रैः ।
पूर्णां च तत्तदणुभिः समिधोऽत्र होम्याः
शर्वाधिवासविहिता द्विजवृक्षजा वा ॥ ९५ ॥

विमर्शिनी ।

पूजाहोमान्ते अत्र तत्तदधिवाससमीरितानि तस्य तस्य देवस्याधिवासोक्तानि वा चत्वारि समिदाज्यचरुराज्यानि (?) वा द्रव्याणि दिगधशिमन्त्रैरुत्सवे वक्ष्यमाणैः इन्द्रादीनां मन्त्रैर्मूर्तिपा जुहुयुः । तत्तदणुभिः तस्य तस्य देवस्य पूर्णाहुत्युक्तैर्मन्त्रैः पूर्णां च जुहुयुः । अत्र सर्वदेवेषु शर्वाधिवासविहिताः शिवस्याधिवासोक्ता वा द्विजवृक्षजाः पालाश्यो वा समिधो होम्याः ॥ ९५ ॥

*

होमान्ते बलिपीठमर्चितपयोजान्तासने स्वे पदे
संस्थाप्य स्वदिगीशनाममनुनात्रावाह्य तेनाथ तम् ।
ताराङ्गैः सकलीकृतं स्नपितयेत् संपातकुम्भाम्भसा
न्यस्याङ्गानि समर्च्य शेषहविषा दत्त्वा बलिं तोषयेत् ॥

विमर्शिनी ।

होमान्ते 'दण्डेऽर्धेऽन्तर्गतं मण्डलम्' (श्लो० ७३) इत्यादिद्वितीयपटलोक्ते स्वे पदे स्थाने अर्चितपयोजान्तासने पद्मपर्यन्तं पूजिते पीठे स्वदिगीशनाममनुना संस्थाप्याथात्र तेनैव मनुना तमावाह्य ताराङ्गैः प्रणवविहिताङ्गैः सकलीकृतं तं सम्पातकुम्भाम्भसा स्नपितयेत् स्नपितं कुर्यात् । पुनरङ्गानि न्यस्य समर्च्य शेषहविषा स्विष्टकृदवदानानन्तरं पात्रान्तरस्थापितेन हविषा बलिं दत्त्वा तोषयेत् प्रसन्नपूजां कुर्यात् ॥ ९६ ॥

विवरणम् ।

अर्चितपयोजान्तासन इति । एतदग्नौ कलशेऽपि समानम् । स्वे पदे इति स्थाने । 'ध्रुवा द्यौरि'ति जपोऽत्राप्युचित एव । ताराङ्गैरिति विकल्पा-

---

१. 'ईशाधिवासविहिताः समिधोऽत्र होम्याः प्रागादि-
दिक्षु निखिलेषु पलाशजा वा ॥ हो' ख. पाठः.

२. 'त' ख. पाठः.

* ९५ तमश्लोकविवरणव्याख्या नोपलभ्यते.

भिप्रायम् । प्रणवेन वा ह्रस्वदीर्घस्वरमध्यगतनमोन्तस्वाख्यया वा प्रागुदीरितान्येव वा अङ्गानीति तदभिप्रायः । शेषहविषेति । स्विष्टकृत्समय एवोद्धृतेनेति भावः ।

'हविषा पात्रलग्नेन सम्पूज्य विकिरेद् बलिम् ।'

इति चोक्तम् । सर्वान्ते 'यावदत्र जगन्नाथ' इत्यर्थनापि कार्या । प्रागारभ्य वाग्रबलिपीठादारभ्य वा सर्वमेतत् कार्यमिति ॥ ९६ ॥

**संशोध्य संस्थाप्य च वीरभद्र-**
**विघ्नेशमातॄरपि पीठिकासु ।**
**मध्यादिकुम्भैर्नवभिः स्वमन्त्रैः**
**सिक्त्वार्चयित्वा विकिरेद् बलिं च ॥ ९७ ॥**

विमर्शिनी ।

मातृणां क्रियामाह — संशोध्येति । वीरभद्रविघ्नेशमातॄरपि संशोध्य इन्द्रादीनामुक्तक्रमेणैव संशोध्याग्निमाधाय तद्दक्षिणे नवकं वीरभद्रगणपति-ब्रह्माण्यादिभिः मध्यादिक्रमेणावाह्य सम्पूज्याग्नौ वीरभद्रगायत्र्या पक्वहोमानन्तरं वीरभद्रादितत्तन्मन्त्रैरष्टाष्टशश्चतुर्द्रव्यं पृथक् पृथग् हुत्वा तत्तत्संपातं तत्तत्कलशे सिक्त्वा होमान्ते पीठिकासु च स्वस्वहोममन्त्रैः संस्थाप्य नवभिर्मध्यादिकलशैः स्वस्वमन्त्रैः सिक्त्वा अर्चयित्वा बलिं च विकिरेत् ॥ ९७ ॥

विवरणम् ।

संशोध्येति । दर्भमृत्त्वक्सलिलैर्वारुणजलैर्धारणाभिश्चेति भावः । तत्तन्मन्त्रसकलीकरणाद्यपीष्यते । पीठिकास्विति । पृथक्पीठसम्भवे तेष्वेकपीठसम्भवे तु तदंशरूपेषु पीठेष्वित्यभिप्रायः । मध्यादिकुम्भैरिति । मातृपीठशोधनाद्यनन्तरं तत्रैवोदग्भागे नव कलशान् परिपूर्य मध्ये वीरभद्रं प्राग्गणपतिमग्न्यादिसप्तकलशेषु ब्रह्माण्यादिसप्त पूजयेत् । वीरभद्रादीनां उत्सवपटलभाविनो मनवः, तदीयबीजैरेव च षड्दीर्घयोगिभिरङ्गानि । परिवारेज्योपपत्तौ तु प्रत्येकमङ्गावरणं सहैकमेव लोकपालास्त्रायुधावरणमिति ॥ ९७ ॥

**ब्रह्माणी माहेशी कौमारी वैष्णवी च वाराही ।**
**इन्द्राणी चामुण्डी शिवगणपत्योस्तु मातरो मध्ये ॥ ९८ ॥**

---

१. 'गतमोन्तस्थाख्यया' च. पाठः. २. 'स्वाख्यतया' ख. घ. पाठः. ३. 'तान्येवा' क. ख. ग. पाठः. ४. 'भ्याग्र' क. ग., 'भ्य चा' ख. पाठः. ५. 'वे तु' क. ग. घ. पाठः.

विमर्शिनी ।

ता मातृः पठति — ब्रह्माणीति । शिवगणपत्योर्वीरभद्रगणपत्योर्मध्ये ब्रह्माण्याद्या मातरः स्युः ॥ ९८ ॥

विवरणम् ।

शिवगणपत्योस्त्विति । शिवो वीरभद्रः ॥ ९८ ॥

निर्माल्यभाजमुदवासयुतोक्तशुद्धि-
शुद्धं स्वमन्त्रमयमुत्तरनालपीठम् ।
हुत्वा घृतं स्वमनुना समिदादियुक्तं
मन्त्री स्वपीठ उदितौ कृतसंप्रतिष्ठः ॥ ९९ ॥

सिक्त्वा स्वसिद्धकलशेन समर्प्य देव-
पूजावशिष्टकुसुमप्रमुखैर्निवेद्य ।
दत्त्वा बलिं च परितोष्य *समर्प्य तस्मै
देवोपभुक्तमखिलं पुनरर्थयेत ॥ १०० ॥

विमर्शिनी ।

निर्माल्यधारिणो विधिमाह — निर्माल्यभाजमिति । देवस्य निर्माल्यं भजतीति निर्माल्यभाक् तं मन्त्रीति मन्त्राणां क्रियाणां च तारतम्यं विद्वान् गुरुः उदवासयुतोक्तशुद्धिशुद्धं जलाधिवाससहितैरुक्तैः बिम्बशुद्धिभिः शुद्धं भूतसंहारशोषणाद्यनन्तरं स्वमन्त्रमयं स्वमन्त्रप्राणायामपूजनादिभिः कृताधिवासं स्वमनुना समिदादिचतुर्द्रव्ययुतं घृतं हुत्वा पुनरुदितौ प्रासादस्योदितिवास्तुस्थाने उत्तरनालपीठं उत्तरभागे नालोऽम्बुमार्गो यथा भवति तथा कृतसंप्रतिष्ठः कृतप्रतिष्ठाविधिर्भूत्वा स्वसिद्धकलशेन स्वस्वमन्त्रसाधितकलशेन सिक्त्वा देवपूजावशिष्टकुसुमप्रमुखैः देवस्य पूजाया अवशिष्टैः पुष्पगन्धादिभिः समर्च्य निवेद्य बलिं च दत्त्वा परितोष्य तस्मै निर्माल्यधारिणे देवोपभुक्तमखिलं समर्प्य पुनः अर्थयेत प्रार्थयेत् ॥ ९९ , १०० ॥

---

१. 'ष्ठम्' इति मूलकोशपाठः.

२. 'सं स्वं स्वं' ख. पाठः.

* समर्प्येति स्थाने समर्च्येति विवरणपाठः.

विवरणम् ।

उदवासयुतोक्तशुद्धिशुद्धमिति । प्राक्सदर्भमृत्त्वक्सलिलैर्विशोधनं भूतसंहारपूर्वकं वरुणपूजादिभाजि जलेऽधिवासनं पुनर्भूतसर्गादिकरणं तदास्पदसन्निधौ निधाय भूतसंहारशोषणादि भूतसर्गलिपिभावनाश्चेत्येतत् सर्वमभिप्रेतम् । बिम्बपरिग्रहविधौ वा दर्भादिभिः संशोध्य घृताभ्यञ्जनं क्षाळनमपि कृत्वा बिम्बसन्निधावेव जलेऽधिवास्य बिम्बशुद्धावेककलशेनाभिषिच्य पुण्याहं विधाय मण्डपेऽपि देवोपान्ते क्वचित् स्वस्तिकपीठे निधायोक्तरीत्या ध्यानाधिवासमाचरेत् । तत्त्वहोमविधौ च स्वावसरे स्वमन्त्रहोमः इति । समिदादियुक्तं घृतं हुत्वेत्यन्वयः । समिदाद्यमधिवासोक्तद्रव्यं चतुर्द्रव्यमेव वा । मन्त्रीति । गायत्रीसद्भावे तया पक्वं तदभावे स्वमन्त्रेणैव । तेनैव तु पूर्णाहुतिरिति भावः । उदितौ स्वपीठे कृतसम्प्रतिष्ठमिति । उदितिपदमस्यायतनम् । तत्र प्रणवतन्मन्त्रप्रणवेन दक्षिणाभिमुखं प्रतिष्ठाप्य "ध्रुवा द्यौ"रिति जपेत् । मण्डपे चेद् बलिपीठैस्सहानीय स्वायतनसान्निधौ भद्रपीठे विधाय काले प्रतिष्ठापयेत् ॥ ९९ ॥

स्वासिद्धकलशेन सिक्त्वेति । तदास्पदोदग्भागे होमो द्वयोर्मध्ये च होममध्ये च कलशपूजा तेन कलशेन प्रतिष्ठित आवाहनादि कृत्वाभिषिञ्चेत् । देवपुजावशिष्टकुसुमप्रमुखैः समर्च्येति । प्रागेव प्रासादे देवपूजायामवशिष्टं गन्धकुसुमादि निवेद्यं चैतदर्थं सम्भृत्य, तदीयकवाटबन्धनादि कार्यमित्यर्थादवसेयम् । पद्मान्तं पीठम् । मन्त्रांस्तु वक्ष्यति ॥

विष्वक्सेनोन्तवोङ्कारो नमोऽन्तः परिकीर्तितः ।
क्लीं मुण्डिन्यै नम इति मुण्डिनीमनुरीरितः ॥
चण्डेश्वरस्य मन्त्रोऽथ धुनिचण्डहुर्मन्त्रकम् । इति ।
तस्य विं वां नमः ष्वं वीं स्वाहेति च यथाक्रमम् ।
क्सें वूं वषट् तथा विष्वग्वैं हुमित्यपि कल्पयेत् ॥
सेनवः फडितीमानि पञ्चाङ्गानि मदर्चने ।

इति । चण्डेश्वरस्य मन्त्रवर्णैः षडङ्गानि मुण्डिन्या स्वबीजेन षड्दीर्घभाजा षडङ्गानि । शेषाणां प्रणवनतिमध्ये चतुर्थ्यन्ताख्या मनवः । प्रणवेन वा

---

१. 'नाश्चैतत्' क. ङ. च. पाठः. २. 'द्याधि' क. ख. पाठः. ३. 'निधाय' ख. ग. च. पाठः. ४. 'मस्त्रक' ग. ङ. च. पाठः. ५. 'ति च' ख. पाठः.

षड्दीर्घयुग्मान्तस्थेन स्वचतुर्थ्यन्तेन स्वनाम्ना वाञ्ञानीति । निवेद्य दत्त्वा बलिं चेति । निवेद्यमध्य एव बलिः । वक्ष्यति च — 'अन्नाद्यं विनिवेद्य तत्र विकिरेदि'[1]ति । परितोष्येति प्रसन्नपूजोक्ता । देवोपभुक्तमखिलं तस्मै समर्प्येति । यदुक्तं —

"देवोपयुक्तं यद् द्रव्यं प्रासादाभ्यन्तरे स्थितम् ।
तच्चण्डाय प्रदातव्यम् —"

इति । प्रसन्नार्घ्यदानानन्तरं प्रागेव देवोपयुक्तं कुसुमादि पात्रान्तर उद्धृतं समर्पणीयम् । प्रार्थनानन्तरमवसानीयार्घ्यदानादि कृत्वा पुनर्देवोपयुक्तं निवेद्याद्यखिलं समर्प्य तालत्रयादिं विदध्यात् । तदुपयुक्तेन कथं भाव्यमिति, तदप्युक्तम्—

"उपसंगृह्य[2] नैवेद्यमगाधेऽम्भसि निक्षिपेत् " ।

इति । निर्माल्यभुग्भावविषयमेतदिति मन्तव्यम् । इति । यदि वाहनमण्डपे मुखमण्डपे वा प्रतिष्ठाप्यते तदापि तद्बिम्बस्य दर्भादिशोधनजलाधिवासकलशधारणादिकं[3] संस्कारं पूजाप्रतिष्ठापनावाहनादिस्नाननिवेद्यबलिदानरूपं कर्म स्यात् । एवं द्वाःस्थादिष्वप्यूहनीयम् ॥ १०० ॥

**यावदत्र जगन्नाथो बिम्बमाश्रित्य तिष्ठति ।**
**तावदत्रैव रक्षार्थं त्वं तिष्ठस्व प्रवर्दन ।॥ १०१ ॥**

इति ।

विमर्शिनी ।

।र्थनामन्त्रः — यावदत्रेति ॥ १०१ ॥

**विष्वक्सेनो नरकदमने धूर्तसेनः कुमारे**
**शर्वे चण्डेश्वर इह पुनर्मुण्डिनी चण्डिकायाम् ।**
**विघ्ने कुम्भोदरसमभिधश्चण्डसेनो हरीशे**
**भूताधीशे पुनरभिहितो घोषवाञ्छेषभोगी ॥ १०२ ॥**

---

१. 'दित्यादि । प' , २. 'संहृत्य नै' ख. ग. घ. च. पाठः. ३. 'दिसं' ५. च. पाठः. ४. 'स्नपन' ख. ग. घ. च. पाठः. ५. 'तर्जन' म. पाठः. ६. 'जी' क. पाठः.

विमर्शिनी ।

विष्वगादेः निर्माल्यधारिणां नामानि कथयति— **विष्वक्सेन** इति । नरकदमने विष्णौ विष्वक्सेनः शेषभोगी निर्माल्यधारी । कुमारे धूर्तसेनः । इह शर्वे चण्डेश्वरः । चण्डिकायां दुर्गायां पुनर्मुण्डिनी शेषभोगिनी । विघ्ने कुम्भोदरसमभिधः कुम्भोदरः । हरीशे चण्डसेनः । भूताधीशे घोषवांश्च ॥ १०२ ॥

प्राक् पञ्चगव्यं परिपूज्य ताम्र-
पात्रे स्वपीठाधिपमन्त्रकेण ।
हुत्वाष्टयुक्तं शतमाज्यमस्मिन्
संपातमायोज्य सवह्निवीर्यम् ॥ १०३ ॥

तत्पीठमध्ये भुवि शक्तिगर्भे
गर्भं निशि न्यस्य तदीशमस्मिन् ।
आवाह्य संपूज्य ततः प्रसाद्य
संरक्ष्य तक्ष्णा रचयेच्च पीठम् ॥ १०४ ॥

विमर्शिनी ।

अथ महाबलिपीठप्रतिष्ठामाह — प्रागिति । महापीठरचनात् पूर्वं ताम्रपात्रे पञ्चगव्यं स्वपीठाधिपमन्त्रकेण परिपूज्य तथाग्निमाधाय तथाष्टयुक्तं शतमाज्यं च तेनैव हुत्वा अस्मिन् गर्भपात्रे सवह्निवीर्यमग्निगतचैतन्येन सह संपातमायोज्य तत्पीठमध्ये महापीठस्य मध्यस्थाने भुवि शक्तिगर्भे पीठपूजानन्तरं शक्तिमावाह्य सम्पूज्य तस्या गर्भस्थाने निशि गर्भं गर्भपात्रं यथोपदेशं न्यस्य तदीशं तत्पीठाधिपं तस्मिन् आवाह्य सम्पूज्य ततो निवेद्य अनन्तरं प्रसाद्य संरक्ष्य तक्ष्णा पीठं रचयेत् कारयेच्च ॥ १०३, १०४ ॥

विवरणम् ।

इदानीं महाबलिपीठप्रतिष्ठां प्रस्तौति—प्रागिति । पुरैव तन्निर्मित्सावसरे इति भावः । बलिपीठास्पदस्योदग्भागे क्वचिदन्यत्र वा होमः । तद्दक्षिणतः स्वस्तिके गर्भसम्भरणं च कार्यम् । स्वपीठाधिपमन्त्रकेणेति हुत्वे-

स्यत्रापि योज्यम् । सवह्निवीर्यमित्यग्न्युद्वासनमुक्तम् । सम्पाते हुतभस्मादियोगोऽपि सूचितः ॥ १०३ ॥

तदिति । पञ्चगव्यं गर्भमिति च तस्य तत्कालविशेषणम् । पीठमध्ये भुवीति । तदायतने उपानह्युपपीठापेक्षायां तस्मिन् वा निर्भित्ते तद्रूपायां भुवि तदायतनमध्योद्देश इत्यर्थः । शक्तिगर्भ इति । स्थलशुद्धिर्यथायोगं कार्या । ततो विष्टरं न्यस्य पीठमिष्ट्वा शक्तिमावाह्य सम्पूज्य तस्या गर्भाशय इत्यर्थः । यदुक्तं- 'गर्भाकारेऽत्र गर्ते न्यसत्वि'ति । तदीशमिति । स्वपीठाधिपम् । संरक्ष्येति तालत्रयादिकमुक्तम् । पीठमिति । तन्महाबलिपीठं केवलं निजमण्डपसाहितं वेति भावः ॥ १०४ ॥

आदायारचितं विशोध्य बलिपीठं दर्भमृत्सादिकै-
राज्याभ्यक्त्यभिषिक्तिकृत् सलिलवासे स्नापयित्वाम्बुभिः ।
कृत्वा शुद्धिघटाभिषेकमपि पुण्याहावसानं तत-
स्तद्भूतप्रलयोदयादि निजमन्त्रैन्यासनिष्ठं चरेत् ॥ १०५ ॥

विमर्शिनी ।

पुनरारचितं यथावन्निर्मितं बलिपीठमादाय परिगृह्य दर्भमृत्सादिकैः दर्भमृत्त्वग्भिर्विशोध्य आज्याभ्यक्त्याभिषिक्तिकृद् आज्येनाभ्यज्य चूर्णैरुद्वर्त्याभिषेककृच्च भूत्वा सलिलवासे जलाधिवासकाले अम्बुभिः स्नापयित्वा शुद्धिघटाभिषेकं सप्तशुद्धिभिः बिम्बशुद्धिकलशैर्वाभिषेकमपि पुण्याहावसानं कृत्वा ततस्तद्भूतप्रलयोदयादि तत्स्थभूतसंहारादिकं निजमन्त्रन्यासनिष्ठं निजेन मन्त्रेणावाहनन्यासादिनिष्ठं चरेत् ॥ १०५ ॥

विवरणम् ।

आरचितं बलिपीठमादायेति । तक्ष्णा कर्त्रे समर्पितं ततः प्रदक्षिणपूर्वकं प्रणवेन दर्भेण स्पृशन् परिगृह्येत्यर्थः । दर्भमृत्सादिकैर्विशोध्येति । दर्भमृत्त्वग्भिरेव वा बिम्बोक्तद्रव्यैर्वेति भावः । "पाथो दर्भकधेनुचालघृतमासूराम्बुभिः श्रीपता" वित्यादि ह्युक्तम् । विशोध्येत्यनेनैव विधिवत् स्थलशुद्धिरपि गृह्यते । तन्मण्डपे सति तु तस्य त्रिगुणदर्भमालापरिवेष्टनमपि कार्यम् । दर्भमृत्त्वगादिशोधनादि तु सर्वं तदीयपरिपीठानामपि कार्यम् । वक्ष्यति हि – 'प्रागाद्यैस्समसंस्कृतै'रिति । आज्याभ्यक्त्याभिषिक्तिकृदिति । दर्भमृत्त्वग्भिरेव विशोधनेऽपि कार्यमाज्याभ्य-

१. 'न्त्रं' क. ख. पाठः.

ज्ञनमिति भावः । मासूरपिष्टाद्युद्वर्तनमुष्णजलक्षालनं च कृत्वा शुचिजलैरभिषेकोऽयमभिप्रेतः । सलिलवास इति बिम्बीयपीठवदेव तदवबोद्धव्यम् । कृत्वा शुद्धिघटाभिषेकमपीति । एतदपि पीठवदेव इहावाह्य साङ्गीकरणादि कृत्वेत्या- युक्तमनुसरणीयम् । पुण्याहावसानमिति । जलगन्धाद्युपहरणपूर्वकं नीराज्य पुण्याहमपि प्रकुर्यादिति भावः । ध्यानाधिवासमाह — तद्भूतप्रलयेति । 'कृत्वा पाणितले जल'मित्यादि बिम्बोक्तं सर्वमिहाप्यनुसरणीयम् । पीठमात्रस्यैवेह सर्वं संस्कारजातमिष्यते । तदीयपीठे तु धारणामात्रं शक्तिमन्त्रेण पूजनं च कार्यम् । मातृकान्यासानन्तरं निजमन्त्रोदयपञ्चान्तपीठन्यासादिपूर्वकं तन्मन्त्रप्राणायामं तत्पुटितमातृकान्यासं तत्त्वन्यासं च विधाय तन्मन्त्रं हृदि विन्यस्य प्रणवेन दीर्घस्वरान्तर्गतेन स्वनाम्ना वाङ्गं विदध्यात् । परिपीठानां तु दर्भैरेव प्रधानस्पर्शनेन तदेकीभूतानां सहैव भूतसंहारादि सर्वं लभ्यते । लिपिन्यासादि तु यथासम्भवं प्रत्येकं कार्यमिति बोद्धव्यम् ॥ १०५ ॥

आस्थाप्यार्चितविष्टरे परिषदध्यक्षं स्वनामाणुना
प्रागाद्यैः समसंस्कृतैः स्वपरिवारैरर्चयित्वामृतम् ।
अन्नाद्यं विनिवेद्य तत्र विकिरेत् तस्मै च तेभ्यो बलिं
नैवेद्यं प्रविसृज्य साधु परिशोध्याराध्य संरक्षतु ॥ १०६ ॥

विमर्शिनी ।

पुनरर्चितविष्टरे पूजिते पीठे स्वनामाणुना स्वनाममन्त्रेण परिषदध्यक्षं बलिपीठाधिपम् आस्थाप्यावाह्य प्रागाद्यैः समसंस्कृतैः पीठाधिपसमकालं संस्कृतैः स्वपरिवारैरावृतं तमर्चयित्वा अन्नाद्यमन्नं विनिवेद्य तत्र तदनन्तरं तस्मै तेभ्यश्च बलिं विकिरेत् । पुनर्नैवेद्यं प्रविसृज्य साधु निर्माल्यं परिशोध्य आराध्य प्रसन्नपूजां कृत्वा संरक्षतु ॥ १०६ ॥

विवरणम् ।

अर्चितविष्टर आस्थाप्येति । तत्र पीठपूजां विधाय मूर्तिं सङ्कल्प्य स्वमन्त्रेणावाहनं सकलीकरणं च कुर्यात् । प्रागाद्यैः स्वपरिवारैरावृतमर्चयित्वेति । तत्सकलीकरणानन्तरं प्रागादिषु परिपीठेषु तत्तन्मन्त्रैः पुष्पाराधनं कुर्वंस्तं तं सन्निहितं विभाव्य पाद्याद्यर्घ्यादि वा यथास्वं दत्त्वा गन्धपुष्पादिभिरलङ्कृत्य

१. 'मप्यनु' ख. घ. च. पाठः. २. 'द्भ्येभ्यश्च विशोध्य सम्यगभिपूज्याच्छादयेद्गुरुः ॥ ओं नम आ' ख. पाठः.

तन्मन्त्राङ्गैर्विग्रहपूजां परिपीठदेवताभिरावरणपूजां च कुर्यात् । परिपीठदेवताश्च उत्सवपटले वक्ष्यन्ते — 'बलिपीठस्य समन्तादि'त्यादि । प्रागाद्यैरित्यनेनैतदप्युक्तम् । प्रासादगतदेवाभिमुखोऽसौ बलिपीठाधिपः, तदभिमुखाश्च परिपीठदेवताः । तासां च प्राङ्मुखे प्रत्यङ्मुखेऽपि बलिपीठाधिपे प्राग्दिश्येवारम्भ इति । शिवे पिङ्गलः स्कन्दे जयत्सेनो गणपतौ रुद्रवक्त्रजोऽप्यधोदिग्बुद्ध्या कुमुदकैः सह पूज्यते । समसंस्कृतैरिति । दर्भमृत्सादिभिर्विशोध्येत्याद्युक्तं संस्कारजातं बलिपीठाधिपेन सहैषां कार्यमित्यभिप्रायः । अन्नाद्यं विनिवेद्येति । तस्मै बहुभक्ष्ययुतं हविर्निवेद्येत्यर्थः । अत्र तस्मै इति । तत्र पीठ एव तस्मै निजपीठेषु तेभ्यश्च प्रागादिपरिवारेभ्यः तदन्नशेषेण बलिं दद्यात् । पीठाधिपाय सप्तवारं द्वादशवारं वा, परेभ्यस्त्रिवारमिति ज्ञेयम् । साधु परिशोध्येति तन्निर्माल्यपरिहारपूर्वकं क्षालनमुक्तम् । आराध्येति तैस्सह प्रसन्नपूजोक्ता । संरक्षस्त्विति तालत्रयादिकमुक्तम् । वस्त्रेणाच्छादनमपीष्यते । बिम्बेन सहाधिवासोपपत्तौ तु बिम्बेन सह परिग्रहो जलाधिवासस्तच्छुद्धिरपि स्यात् । पुनर्ध्यानाधिवासस्तु बिम्बाधिवासमण्डप एव वा तदुपमण्डपे वा कृते कार्यः बलिपीठमण्डपे तु स्थलशुद्धिर्दर्भमृदादिभिस्तदीयपीठशुद्धिश्चैव कार्येति ॥ १०६॥

उत्पाद्यानलमग्रतो नवघटांस्तद्दक्षिणे सर्पिषा
धान्यैर्गन्धजलेन वा स्वमनुभिः सम्पूर्य सम्पूज्य तान् ।
गायत्र्या निजया विधाय विधिवत् पक्वं तदीशाणुना
सर्पिः साष्टशतं जुहोतु परिपीठेशाणुभिश्चाष्टशः ॥ १०७ ॥

विमर्शिनी ।

तस्याग्रतः कुण्डेऽनलमुत्पाद्य जनयित्वा तद्दक्षिणे नवघटान् सर्पिषा वा धान्यैर्वा गन्धजलेन वा स्वमनुभिः स्वस्वाधिपमन्त्रेण परिवारमन्त्रैश्च सम्पूर्य तथा तान् सम्पूज्य निजया पीठाधिपगायत्र्या विधिवत् (विधाय) पक्वं जुहोतु । पुनस्तदीशाणुना साष्टशतं परिपीठेशाणुभिः परिवारपीठेशमन्त्रैरष्टशश्च सर्पिर्जुहोतु ॥ १०७ ॥

विवरणम् ।

अधिवासहोममाह — उत्पाद्यानलमिति । अग्रत इति । बलिपीठसम्मुखोद्देशारन्वितकुण्डे यद्वा सभादौ बलिपीठोदग्भागे वा । तदुक्तम् —

१. 'के स' ख. ग. घ. ङ. च. पाठः. २. 'त्रित्रि' ख. ग. घ. च. पाठः
३. 'त्रा सं', ङ. पाठः ४. 'ति व' ख. ग. घ. च. पाठः,

"मण्डपं मण्डितं तत्र गोमयालेपनादिभिः ।
शोधयित्वा तु कुम्भेशं पूजयेद् वर्धनीमपि ॥
कुण्डेऽग्निं जनयेत् पीठसमीपे गुरुरुत्तरे ।" इति ।

बिम्बाधिवासोक्तरीत्याग्निजननं कुर्यात् ।

शिवे षडक्षरस्यैव पञ्चाङ्गैर्नेत्रवर्जनात् ।
पञ्चैव वा क्रियाः कुर्यात् क्रमान्नामावसानिकाः ॥

तस्मिन्नग्नौ देवस्य वा पीठाधिपस्य वा स्वावरणयुतस्य पूजा भवति ! नवघटांस्तद्दक्षिण इति । मध्येऽष्टदलं पद्मं परितोऽष्टौ स्वस्तिकानि च विधाय व्रीहिवस्त्रादिभिस्तत्र पीठं विरचय्य तत्र नवकं पूजयेत् । सर्पिषा धान्यैर्गन्धजलेन वेति नवस्वपि विकल्पः । यद्वा मध्यममेषामन्यतमेन परिकुम्भान घृतादिभिः । तदुक्तम् —

"घृतेन मधुनैलाभ्यां दध्ना तोयैर्गुडेन च ।
पयसा गन्धतोयैश्च सर्वान् वा शालितण्डुलैः ॥"

इति ।

"अन्तर्गन्धोदकं दिक्षु घृतं मधु च तैलकम् ।
दधि गन्धोदकं गौळं पयो गन्धोदकं क्रमात् ॥" इति ।
"नवैतान्येककान्येव शुद्धोदकलशान्वये ।
पञ्चकानि पृथक् पद्मेष्वथवा नवकानि तु ॥"

इति । दिशाहोमविधौ अग्नेरुदग्भागे कलशपूजा चेद् इहाप्येवं स्यात् । यदुक्तम् —

"अग्नेरुत्तरसंस्थे तु मण्डले कर्णिकागतम् ।"

इत्यादि । शिवादिषु तु पीठाधिपकलश एव पूर्वं पिङ्गलादीनधोभाग आवाह्य सम्पूज्य तदुपरि हरसेनादीनावाह्य पूजयेत् । तदुक्तम् —

"पिङ्गलं तदधोभागे तास्मन्नेव समर्चयेत् ॥"

---

१. 'म्बोक्त' २. 'साव' क. पाठः.

इति । गायत्र्या निजयेति । देवस्य भूताधिपस्य वा गायत्री निजा गृह्यते । योऽग्नौ पूजितस्तस्य गायत्री भवति । पीठाधिपस्य गायत्र्यभावे तदीयमनुरेव ग्राह्यः । विधिवदिति । परिधानादिकं स्वपीठपूजापूर्वकमावाहनादिकं प्रणवव्याहृतिपीठमन्त्राज्यहोमादिकं चोक्तम् । पीठाधिपादिहोमे वच्चन्मन्त्रेणैव पूर्णाहुतिः ॥ १०७ ॥

तन्मन्त्रेण समिद्घृतचरुलाजान् सर्षपान् ससक्तुयवान् ।
सतिलदधिदुग्धमाध्वीपुष्पफलान् पाञ्चरात्रिकेऽत्र विधौ ॥१०८॥

विमर्शिनी ।

अत्र पाञ्चरात्रिके विधौ । अत्र विष्णुशिवभेदेन द्विविधा तन्त्रपद्धतिः । तत्र पाञ्चरात्रादयो वैष्णवागमाः पाशुपतादयः शैवागमाश्च । तयोर्मार्गयोर्मध्ये पञ्चरात्रसम्बन्धिनि विधौ तन्मन्त्रेण पीठाधिपमन्त्रेण समिद्घृतचरुलाजान् सर्षपान् ससक्तुयवान् सक्तुसहितयवांश्च सतिलदधिदुग्धमाध्वीपुष्पफलान् दधीनि क्षीराणि मधूनि, पुष्पे पद्मानि गृह्यन्ते, फले कदलीफलानीति सम्प्रदायः । एतेषां संख्यानुक्तितः पूर्वोक्तप्रकारेण पीठाधिपमन्त्रेणाष्टशतं तत्परिवारमन्त्रैरष्टशश्चेत्यायाति ॥ १०८ ॥

विवरणम् ।

तन्मन्त्रेणेति । पीठाधिपमन्त्रेण । पालाश्य एव समिधः । पाञ्चरात्रिके विधाविति । वैष्णवदौर्गादिषु ॥ १०८ ॥

पाशुपते समिदन्नं घृतधानालाजतिलफलीकरणम् ।
दधिमधुघृतान्युडुम्बापूपान् पृथुकान् पयश्च तत्र हुनेत् ॥ १०९॥

विमर्शिनी ।

तत्र पाशुपते विधौ समिदन्नं घृतधानालाजतिलफलीकरणं, फलीकरणं पूपविशेषः दधिमधुघृतानि उडुम्बापूपकान् पयश्च एतानि पूर्वं व्याख्यातानि यथोक्तसङ्ख्यं हुनेच्च ॥ १०९ ॥

विवरणम् ।

पाशुपत इति । शैवस्कन्दादिषु ॥ १०९ ॥

बलिपीठतद्घटेषु प्रसमर्प्याज्यं प्रपूज्य भूतेशम् ।
सावरणं तं बलिमपि दद्यात् तस्मै च दिग्गणेभ्यश्च ॥ ११० ॥

विमर्शिनी ।

बलिपीठतद्घटेषु बलिपीठेषु तत्कलशेषु च सम्पाताज्यं प्रसमर्प्य बलिपीठे सावरणं भूतेशं प्रपूज्य तस्मै च दिग्गणेभ्यश्च बलिमपि दद्यात् ॥ ११० ॥

विवरणम् ।

बलिपीठतद्घटेष्विति । नवसु बलिपीठेषु च नवसु कलशेषु च प्राक्तनाज्याहुतिसम्पातं निजानिजेषु सामेदादिहुतसम्पातं तु विभज्य नवस्वप्य-र्पयेदिति बोद्धव्यम् । पुनः पुष्पाञ्जलिः तत्तन्मन्त्रजपश्च सामान्यसिद्ध एव । बलिमपि दद्यादिति । प्राग्वन्निवेद्यमपीति भावः ॥ ११० ॥

ओं नम आद्याश्चतसृषु हरौ हरेऽष्टासु दिक्षु बलिमन्त्राः ।
दशमूर्त्याद्या द्वितये ये भूताद्यास्तु वेह सकलेषु ॥ १११ ॥

विमर्शिनी ।

तत्र हरौ चतसृषु दिक्षु ओंनमआद्याश्चत्वारो बलिमन्त्राः । हरे अष्टासु दिक्षु दशमूर्त्याद्या द्वितये द्विविधाः । इह सकलेष्वपि देवेषु ये भूताद्या वा । प्रथममत्र हरौ चतुरो मन्त्रान् पठति । पुनः शिवे दशमूर्त्यादि-द्वितयं मन्त्रं पठति । 'ये भूताद्या' इत्युत्सवबलौ वक्ष्यते च ॥ १११ ॥

विवरणम् ।

हरौ चतसृषु दिक्षु ओं नम आद्या बलिमन्त्राः । हरेऽष्टासु [1]दिक्षु दशमूर्त्याद्या द्वितये बलिमन्त्रा इति च सम्बन्धनीयम् । द्वितय इति प्रथमा-बहुवचनम् । इह सकलेषु ये भूताद्यास्तु वेति पृथग्योज्यम् । हरिहरयोरधिक-तयायं मन्त्रो विकल्प्यते । शेषेषु त्वयमेव मन्त्रो भवति । यद्वायामिहाशयः —

---

1. 'द्या विष्णौ चतसृषु दिक्ष्वीश्वरे त्वष्टासु । द' ख. पाठः

स्कन्दे गणपतौ च शिववदेते द्वितयेऽपि स्युः । दुर्गायां तु अष्टमूर्तिपार्षदेभ्यः सद्भ्योऽसद्भ्य इत्यूहेनैत एव द्वितये स्युः । हरिहरे तु यथास्वं विकल्प इति । तथा च सकलेष्वपि ये भूताद्यास्तु वेति विकल्पोऽनुगृह्यते । उत्सव पटलवक्ष्यमाणवदिह पञ्च नव वा दिशो ग्राह्या इति ॥ १११ ॥

ओं नमः प्राच्येभ्यो भूतेभ्यो विश्वभूतेभ्यो नमोऽस्तु विश्वरूपेभ्यो विविधरूपेभ्यश्च वो नमो नमः । ओं नमो दाक्षिणेभ्यश्च शार्ङ्गधन्वनो हाहाभ्यश्च सर्वेभ्यो भूतेभ्यो नमो नमः । ओं नमः पाश्चात्येभ्यो भूतेभ्यो भैरवेभ्यो विष्णुपालकेभ्यो वियद्गृहोदरवर्तिभ्यो हुं फट् गच्छत स्वाहा विष्णुगणानामतो बालिमुपहरामि भद्रं नो ददत प्रीणयत स्वाहा । ओं नमो विष्णुभूतेभ्य उदीच्येभ्यः सकलजन्तु-हितकरेभ्यः स्वाहा इति ।

दशमूर्तिपार्षदेभ्यः सद्भ्योऽसद्भ्यः सदसद्भ्यः सर्वगणेभ्यो नमो नमः स्वाहा । प्राग्गणेभ्यो बहुरूपेभ्यो विरूपेभ्यो विश्वरूपेभ्यो सद्भ्योऽसद्भ्यः सदसद्भ्यः सर्वगणेभ्यो नमो नमः स्वाहा आग्नेय्यां गणेभ्य इत्यादि* ।

निर्माल्यं व्यपनीय प्राच्यांच्छाद्याधिवासयेद् रात्रौ ।
प्रातस्तनार्चनान्ते देवं तत्स्थापनाय चार्थयतु ॥ ११२ ॥

विमर्शिनी ।

ततः क्रियाशेषमाह — निर्माल्यमिति । निर्माल्यं पीठगतं निर्माल्यं व्यपनीय प्राच्यं वस्त्रेणाच्छाद्य रात्रावधिवासयेत् । प्रातस्तनार्चनान्ते देवस्य प्रातःकालपूजान्ते तत्स्थापनाय बलिपीठप्रतिष्ठायै देवम् अर्थयतु प्रार्थ-येत् ॥

विवरणम् ।

प्राच्येति प्रागवत् प्रसन्नपूजोक्ता । आच्छाद्येति रक्तवस्त्राच्छादनमभि-प्रेतम् । तदुक्तं — 'पीठं रक्तेन वेष्टयेदि'ति । रात्रावधिवासयेदिति ।

---

१. 'ये स्युः' क. ङ. पाठः. २. 'पारिष' ख. ग. पाठः.

* 'एतदनन्तरं ख. पाठे' उत्पाद्ये'त्यादिश्लोकचतुष्टयं दृश्यते । तत्रापि क्वचित् क्वचित् पाठा भिन्नाः ।

पीठनवकं कलशनवकं चैवं रात्रावधिवासयेदित्यर्थः । प्रातस्तनार्चनान्त इति सामान्यतोऽभिधानम् । बिम्बप्रतिष्ठापनानन्तरमेव दिशाहोमेऽतीते यदि महाबलिपीठप्रतिष्ठासम्भवः तदा आराध्य योगकमलं नियमार्चनार्थ' मित्येतदेव प्रातस्तनमर्चनम् । तदवसाने चान्तर्मण्डले[1]बलिपीठस्थापनार्थं महाबलिपीठ-स्थापनार्थं चार्थना कार्या । यदा द्वितीये तृतीये वा दिन एतत्सम्भवः तदा 'कृत्वाग्रतः' स्थण्डिलमादधीतेयेतत् प्रातस्तनमर्चनं, तदन्ते च प्रासादद्वार-सन्निधिमासाद्य मनसानुज्ञापयेत् । तुर्यदिने दिनान्तरे वा यदि तद्दिने प्रातरर्चनं विधाय अर्थना कार्या । वक्ष्यति च—'कुर्यात् तुर्यदिनात्यये यदी'ति ॥ ११२॥

निर्माल्यं व्यपनीय सम्यगभिषिच्येष्ट्वाम्बुजान्तासनं
मन्त्री मन्त्रमयं प्रकल्प्य बलिपीठं तत्र तन्मन्त्रतः ।
संस्थाप्य ध्रुवमन्त्रजापमपि कृत्वावाह्य साङ्गीकृतं
मध्यस्थास्नुघटाम्भसा समभिषिच्याद्यङ्गकानि न्यसेत् ॥११३॥

विमर्शिनी ।

पुनर्निर्माल्यं व्यपनीय सम्यगभिषिच्य अम्बुजान्तासनं 'पद्माय नमः' इति पर्यन्तं पीठमिष्ट्वा मन्त्री प्रतिष्ठाकर्मणः तन्मन्त्राणामतिदेशं जानन् बलिपीठं मन्त्रमयं प्रकल्प्य तत्र पूजिते पीठे तन्मन्त्रतः संस्थाप्य ध्रुवमन्त्रजापं 'ध्रुवा द्यौरि'ति मन्त्रजपं कृत्वावाह्य साङ्गीकृतं तन्मध्यस्थास्नुघटाम्भसा पूजितनवकमध्यस्थब्रह्मकलशेन समभिषिच्य च आद्यङ्गकानि प्रणवेनाङ्गानि च चरेत् ॥ ११३ ॥

विवरणम् ।

मन्त्री तत्र तन्मन्त्रतः संस्थाप्येत्यन्वयः । प्रणवपञ्चतत्त्वादित्वं प्रणवान्तत्वं च तन्मन्त्रस्य मन्त्रिशब्दोक्तम् । यद्वा मन्त्रान्तरमपि—

"ओं विश्वाय विश्वरूपाय सर्वभूतसुखाय च ।
देवभूतमहापीठं स्थापयाम्यहमों नमः ॥"

इति । तदीयपीठे शक्तिभावना सामान्यसिद्धा । यदा त्वन्यत्र मण्डपेऽधिवास-स्तदातोऽपि विधिवदानीयैवं प्रतिष्ठाप[3]ना स्यात् । तदा च तदीयपीठिकायां

१. 'ष्ठानन्त' ख. ग. घ. च. पाठः. २. 'ले ब' क. ङ. पाठः. ३. 'पनं' ख. पाठः.

नवगर्तेषु निजदेवोक्तनवरत्नन्यासोऽपीष्यते । तदा प्रागेवाङ्कुरार्पणं विधाय ह्योधिवासे योज्यते । तदुक्तं —

"बीजाङ्कुरध्वजारोहबलिमङ्गलपूर्वकम् ।"

इति । बलिपीठमण्डपेऽपि सति सम्भवे तोरणध्वजस्थापनाद्यपीष्यते तदप्युक्तं —

"पीठं तु मध्यतः कृत्वा कुर्यान्मण्डपमुज्ज्वलम् ।
तोरणध्वजसंयुक्तं द्वारकुम्भैरलङ्कृतम् ॥"

इति । तत्रैवाग्निजननादिसम्भवे कुम्भेशवर्धन्यावपि स्यातामिति । मध्यस्थानुघटाम्भसेति । ह्योधिवासितनवकगतमध्यमकलशग्रहणमेतत् । नीराजनादि सर्वं सिद्धमेव । आद्यङ्गकानीति । प्रणवाङ्गानि । यद्वा अ आ इत्यादिवर्णयुगलैर्देनत्यन्ताख्यागर्भैरङ्गान्यभिप्रेतानि ॥ ११३ ॥

मूर्तीरष्ट यथाक्रमं स्वकलशैः संस्थाप्य संस्नाप्य ताः
प्राग्वत् प्राच्र्य तदावृतं तदधिपं तस्मै निवेद्याग्रतः ।
पीठोपर्युपपीठकेषु च बलिं दत्त्वा विशोध्याखिलं
सम्पूज्य प्रणिपत्य यावदिति सम्प्रार्थ्याभिरक्षां चरेत् ॥११४॥

विमर्शिनी ।

पुनः परितः स्थित्वा अष्ट मूर्तीर्यथाक्रमं प्रागादिप्रादक्षिण्येन स्वस्वमन्त्रैः संस्थाप्य स्वस्वकलशैः संस्नाप्य तदावृतं तदधिपं प्राग्वत् प्राच्र्य तस्मा अग्रतः पूर्वं निवेद्य पीठोपरिभागे उपपीठकेषु च बलिं स्वस्वमन्त्रतो दत्त्वा अखिलं निर्माल्यं विशोध्य सम्पूज्य प्रसाद्य प्रणिपत्य 'यावदत्र जगन्नाथ' इति प्रार्थ्याभिरक्षां तालत्रयादिकं चरेत् ॥ ११४ ॥

विवरणम् ।

संस्थाप्य स्वकलशैस्संस्नाप्येति सम्बन्धनीयम् । तस्मै निवेद्याग्रत इति । पुरतो निवेद्यं सम्पाद्यं 'अन्नाद्य विनिवेद्येयाद्युक्तरीत्या निवेदनीयमित्यर्थः' । सम्पूज्येति प्रसन्नपूजोक्ता । यावदिति । 'यावदत्र जगन्नाथ' इत्यादि पूर्वोक्तमनुग्रहणम् ॥ ११४ ॥

---

१. 'रं कु' घ. पाठः. १. 'सर्वे प्रसि' ख. घ. ङ. च. पाठः.

तुर्येऽहन्याभिषिच्य देवमभिपूज्यावस्रुतप्रोक्षणं
कृत्वा स्थापितपीठिकास्थपरिवारेभ्यः प्रदद्याद् बलिम् ।
कुर्यात् तुर्यदिनात्यये यदि महापीठप्रतिष्ठापनं
तत्तुर्येऽह्न्यभिषिच्य देवमिह तच्छेषोक्षणाद्यं चरेत् ॥ ११५ ॥

विमर्शिनी ।

तुर्येऽहनि देवप्रतिष्ठायाश्चतुर्थे दिवसे देवं यथोक्तकलशैरभिषिच्याभिपूज्यावस्रुतप्रोक्षणं देवस्य कलशाभिषेके तच्छिष्टमवस्राव्य तेन अवस्रुतेन प्रोक्षणं कृत्वा स्थापितपीठिकास्थपरिवारेभ्यः स्थापितासु पीठिकासु स्थितेभ्यः परिवारेभ्यो बलिं प्रदद्यात् । महापीठप्रतिष्ठापनं तुर्यदिनात्यये चतुर्थदिवसादूर्ध्वमेव कुर्याद् यदि तत्तुर्येऽह्नि तस्यापि चतुर्थदिवसे देवं यथोक्तकलशैरभिषिच्य इह महापीठे तच्छेषोक्षणाद्यं तच्छेषेणोक्षणं बलिं चाचरेत् ॥ ११५ ॥

विवरणम् ।

तुर्येऽहनीति । बिम्बप्रतिष्ठादिनापेक्षयैतदिति ज्ञेयम् । पीठिकास्थपरिवारेभ्य इति इन्द्रादिपीठिकानां महाबलिपीठतत्परिपीठिकानां च ग्रहणम् । अत एवावस्रुतप्रोक्षणमप्यासु सर्वासु भवति । सद्यो बलिरिहाभिप्रेतः । पीठिकाः संक्षाल्य स्वमन्त्रपुष्पाराधनतः तं तं विभाव्य पाद्यार्घ्याचमनं दत्त्वा तन्मन्त्रतोऽवस्रावप्रोक्षणं विधाय संक्षाल्य जलगन्धादिपूजापूर्वकं देवं निवेद्य शेषेण बलिं विकीर्य सकृज्जलं दत्त्वाराध्य प्रणमेदिति तत्प्रकारः । यद्वा भूतबलिरेवेष्यते । वक्ष्यति च स्नपनपटलान्ते 'सावस्रुतोक्षं परिषद्बलिं चे'ति । यदा तु महाबलिपीठे परिपीठिकाभावः, यदुक्तं —

"वर्जिताः पीठिकाश्चाष्टौ मध्यमाधमयोस्तथा ।"

इति, तदैकमेव कलशमग्नेर्दक्षिणतः सम्पूजनीयम् । होमे बलौ च न विशेषः । शिवादिषु तु मध्यमकलशेन हरसेनादिपीठेऽभिषिच्यते । नैव कुमुदके पिङ्गलादिबुद्ध्याप्यभिषिञ्चेदिति बोद्धव्यम् । कुर्याच्चतुर्यदिनात्यये यदीति । दिशाहोमेष्वपि समानमेतत्[1] । तत्तुर्येऽह्न्यभिषिच्येति । न देवार्थमेतत् किं तु परिवारार्थमिति ज्ञेयमिति ॥ ११५ ॥

---

१. 'परिपीठाभा' ख. ग., 'परिवाराभा' घ. च. पाठः.

वक्ष्ये ध्वजप्रतिष्ठामङ्कुररोपं तदर्थमत्रादौ ।
कृत्वा तदर्हकाले वाहनमावासयेज्जले लौहम् ॥ ११६ ॥

विमर्शिनी ।

परिवाराणां प्रधानभूतस्य बलिपीठस्य प्रतिष्ठामुक्त्वा तादृशस्य ध्वजस्यापि प्रतिष्ठामाह — वक्ष्य इति । ध्वजप्रतिष्ठां वक्ष्ये, अहमिति शेषः । तदर्थं ध्वजप्रतिष्ठां कर्तुम् आदौ यथोक्तदिने अङ्कुररोपं बीजवापं कृत्वा लौहं लोहमयं वाहनं तदर्हकाले

"त्रिरात्रमश्मनो लोहमेकरात्रं मणिं निशाम् ।"

इत्येकरात्रस्यैव लौहस्य विधानाद् अधिवासदिवसात् पूर्वेद्युर्गृहीत्वा जले आवासयेत् ॥ ११६ ॥

विवरणम् ।

अथ ध्वजप्रतिष्ठामपि वक्तुमारभते — वक्ष्य इति । तदर्हकाल इत्यध उपरि च सम्बन्धनीयम् । वाहनपीठाधिपादीनामधिवासो देवाधिवासमण्डप एव कर्तव्यः । तथाङ्कुरारोपणेऽपि । यदाह — 'मण्डपमपि च यथोक्तमि'ति । यद्वा स्वायतनैशभागेऽधिवासमण्डपः । तदुक्तम् —

"प्रैशान्यां दिशि कुर्वीत मण्डपं चतुरश्रकम् ।"

इति । तत्समीपे क्वचिदन्यत्र वा बीजाङ्कुरमण्डपः स्यात् । लौहं वाहनमिति द्रव्यनियमोऽप्युक्तः । स च प्रतिष्ठाधस्तृतीयदिने प्रातरेव बिम्बपरिग्रहोक्तनयेन परिगृह्य तदैव संस्कृतजले तटाकादौ कटाहादौ वाधिवासनीयः । तथोक्तं—

"त्रिरात्रमश्मनो लोहमेकरात्रं मणिं निशाम् ।"

इति ॥ ११६ ॥

मण्डपमपि च यथोक्तं कृत्वा संस्कृत्य तत्र शय्यां च ।
निद्राकलशसमेतां कृत्वा परिपूजयेद् विधिवत् ॥ ११७ ॥

विमर्शिनी ।

मण्डपमपि [1]यथोक्तं देवाधिवासमण्डपवत् कृत्वा संस्कृत्य तत्र निद्राकलशसमेतां शय्यां च कृत्वा विधिवत् पीठपूजानन्तरं प्रकृतिमप्यावाह्य पूजयेत् ॥ ११७ ॥

१. 'न्यामपि' क. ख. ग. ङ. पाठः.

विवरणम् ।

यथोक्तं संस्कृत्येत्यन्वयः । द्वितीयदिन एतद् भवति । कुम्भेशादिपूजा शय्याशिरस्समीपकृतकुण्डेऽग्निजननं च बिम्बोक्तवत् कार्यम् । कुण्डे तु देवस्य वाहनस्य वा पूजा स्यात् । विधिवदिति शय्यायां शक्तिपूजनमुक्तम् । निद्राकलशे वाहनस्यैव पूजा ॥ ११७ ॥

विष्णौ तु वज्रगारुडमौक्तिकशङ्खाब्जरागकलशेषु ।
दिक्पतित्रिपतीन् प्रयजेच्छयनचतुर्दिङ्महेशदिक्स्थेषु ॥ ११८ ॥

विमर्शिनी ।

कलशपूजायां विष्णौ विशेषमाह— विष्णाविति । तुर्विशेषद्योतकः । शयनचतुर्दिङ्महेशदिक्स्थेषु शयनस्य चतसृषु दिक्ष्वीशकोणस्थिते च वज्रगारुडमौक्तिकशङ्खाब्जरागकलशेषु वज्रेण गरुडशिलया मौक्तिकेन शङ्खाख्यरत्नेन पद्मरागेण च क्रमाद् युक्तेषु कलशेषु पञ्चसु क्रमेण दिक्पतिविपतीन् इन्द्रादिदिक्पालान् गरुडं चावाह्य पूजयेत् ॥ ११८ ॥

विवरणम् ।

दिक्पतिविपतीनितीन्द्रयमवरुणसोमा गरुडश्चोक्ताः । प्रत्येकं पीठमिष्ट्वा कलशे संस्कृतपूरिते तत्तन्मन्त्रेणावाह्य सावरणं पूजा कार्या । नेह विष्वक्सेनकलशः[1] पूजेष्यते ॥ ११८ ॥

शय्याग्रे नव कलशानापूर्य सहेमरत्नगन्धोदैः ।
वाहनमन्तस्थघटे परितः शर्वे तु दिक्पतींश्च यजेत् ॥ ११९ ॥

विमर्शिनी ।

शिवे विशेषमाह — शय्याग्र इति । शर्वे तु शय्याग्रे सहेमरत्नगन्धोदैः हेमरत्नगन्धसहितैर्जलैः नव कलशानापूर्य अन्तस्थघटे मध्यकलशे वाहनमृषभं परितो घटेषु दिक्पतीनिन्द्रादीनष्टौ च यजेत् ॥ ११९ ॥

विवरणम् ।

शय्याग्र इति । यद्दिक्संमुखं वाहनं तद्दिग्भागे मण्डपवेद्यामेवेति भावः । यदुक्तं— "वृषाग्रे स्थण्डिलं कृत्वा" इति । सहेमरत्नगन्धोदैरिति ।

---

१. 'पाजिते' ग. पाठः.

मध्ये स्वं स्वं सङ्घातपठितं रत्नजातमितरेषु यथालाभमिति ज्ञेयम् । विष्णौ शर्व इति चाभिधानमितरेषूहनार्थं, दौर्गे विष्णुवद् इतरेषु शिववदिति । तेषु प्रधानकलशे स्वं स्वं वाहनं पूजयेत् ॥ ११९ ॥

संस्थाप्य पञ्चापरधाम्नि कुम्भान्
क्वाथोदमृद्धान्यकगव्यगन्धैः ।
मध्याद्युदङ्निष्ठतया प्रपूर्य
यजेत विष्णौ नवकं परेषु ॥ १२० ॥

विमर्शिनी ।

वाहनस्य बिम्बशुद्धिकलशपूजामाह — संस्थाप्येति । अपरधाम्नि अन्यस्मिन् गृहे विष्णौ पञ्च कुम्भान् संस्थाप्य क्वाथोदमृद्धान्यकगव्यगन्धैः कषायेण मृज्जलेन धान्यजलेन गव्येन गन्धजलेन च मध्याद्युदङ्निष्ठतया क्रमात् प्रपूर्य यजेत । परेषु देवेषु यथोक्तप्रकारेण नवकं च प्रपूर्य यजेत ॥ १२० ॥

विवरणम् ।

बिम्बशुद्धिकलशपूजामाह — संस्थाप्येति । अपरधाम्नीति । मण्डपान्तरे क्वचिदन्यत्र वेत्यर्थः । क्वाथादिकं वैष्णवे स्नपने ज्ञेयम् धान्यं स्वक्षकुरोक्तं ग्राह्यम् । नवकं परेष्विति । गन्धोदेन वा स्वस्वोक्तबिम्बशुद्धिकलशद्रव्यैर्वा पूरणमभिप्रेतम् ॥ १२० ॥

बिम्बं बिम्बवदम्बुनः समुपनीयास्थाप्य पीठेऽक्षिकृद्
गोदः क्षालनपूर्वकृत् कलशतोयैः स्नापयेत् स्वोदितैः ।
पुण्याहावधिकं विधाय शयने विन्यस्य तत्त्वाप्ययं
कृत्वा धारणया विशोध्य तनुयात् तत्तत्त्वसृष्ट्यादिकम्
॥ १२१ ॥

विमर्शिनी ।

बिम्बं वाहनबिम्बं बिम्बवद् देवबिम्बवद् अम्बुनो जलात् समुपनीय स्नानमण्डपं नीत्वा पूजिते पीठे आस्थाप्याक्षिकृद् यथोक्तक्रमेण नेत्रोल्लेखनं कृत्वा गोदः नेत्रपटं हृत्वा गामपि दर्शयित्वा दत्त्वा क्षालनपूर्वकृत् स्वस्वद्रव्यैः

---

१. 'तामितरेतरेषु' क. घ. ङ. पाठः.

स्वस्वोक्तक्रमेण क्षालनं कृत्वा पुनः स्वोदितैः 'संस्थाप्य पञ्चापरधाम्नि' इत्यादि श्लोकोक्तैः कलशतोयैः संस्नापयेत् । पुनरुपहारसमर्पणमपि पुण्याहावधिकं विधाय ततो मण्डपं नीत्वा शयने विन्यस्य शाययित्वा तत्त्वाप्ययं प्रोक्तक्रमेण तत्त्वसंहारं कृत्वा धारणया शोषणादिभिर्विशोध्य तत्तत्त्वसृष्ट्यादिकं तत्त्वसृष्टि-मन्त्रप्राणायामादिकं तनुयात् ॥ १२१ ॥

विवरणम् ।

बिम्बमिति । वाहनविम्बम् । विम्बवदिति तत्तद्बिम्बोक्तप्रकारेणेत्यर्थः । 'समभिवाह्याराध्ये'ति यावदेतदनुवर्तनीयम् । अम्बुन इति । अधिवासो यत्र जले कृतस्तत इत्यर्थः । पीठे संस्थाप्येति तत्पूजादि प्रागेव कार्यम् । सर्वेषु स्वायतनसम्मुखतया स्थापनं विष्णौ प्राङ्मुखतया वा । यदुक्तं—'न्यस्येत् त्रिधाम्नि हरिदिङ्मुखमि'ति । अक्षिकृदिति । बिम्बोक्तवदाज्यमध्वभ्यञ्जनोद्वर्तन-क्षालनमपि कार्यम्. बिम्बवदिति ह्युक्तम् । सर्वेष्वपीह बिम्बशुद्धिस्नपनतः प्रागेव नेत्रोन्मीलनं, तच्च मधुमन्मन्त्रजप्तेन मध्वाज्येन हेमशलाकया निजनेत्र-मन्त्रेण कार्यम् । पुनस्तेनैव पूरणं च । गोद इति । गां दर्शयेत् । तां च कर्ताचार्याय दद्यात् । तथा चोक्तम् 'गामग्रगाम्' इत्यादि । क्षालनपूर्व-कृदिति । बिम्बवदित्यनुवर्तते यदुक्तं — 'दर्भाद्यैः परिहृष्य शोधयतु दुर्गाया'मित्यादि । पुण्याहावधिकं विधायेति । तदानीमावाहनाद्यमपि बिम्ब-वत् कार्यम् । यथोक्तम् — 'आवाह्य साङ्गीकरणादि कृत्वे'त्यादि । विघ्ना-दिष्वावाहनादि कृत्वैतत्स्नपनम् । पुनर्वस्त्रभूषणादि दत्त्वा जलगन्धादिभिः सम्पूज्यार्घ्यं दत्त्वा नीराज्य पुण्याहं कुर्यात् । पुनः शाकुनस्तावितसूक्तं जपन् मण्डपे नीत्वा शय्यायां स्वायतनसम्मुखतया शाययेत् । तत्त्वाप्ययं कृत्वेति । वाहनबलिपीठादिविषये देवस्यैव मूलमन्त्रविधानेनात्मनः सकलीकरणादि कार्यमिति बोद्धव्यम् । 'कृत्वा पाणितले जल'मित्यादि सर्वमिहानुसरणीयम् । तत्त्वसृष्ट्यादिकमिति । लिपिन्यासस्तन्मन्त्रन्यासः पीठपूजा मूर्तिभावना पञ्चतत्त्वैरावाहनतन्न्यासौ व्यष्टिसमष्टिभावनेत्येतत् सर्वमादिशब्देनोक्तम् ॥ १२१ ॥

तत्तद्वाहनमन्त्रतः समभिवाह्याराध्य गत्वा बहिः

सम्मृष्ट्यादिविशुद्धतत्स्थललसत्पीठादिकं पूर्ववत् ।

संस्कृत्य ध्वजदण्डमर्पणमपि प्राशाय दर्भादिभिः
संक्षाल्य ध्वजदण्डपीठदृषदोः पुण्याहमप्याचरेत् ॥ १२२ ॥

विमर्शिनी ।

ततः पूजिते पीठे तत्तद्वाहनमन्त्रतः समभिवाह्याराध्य बहिर्गत्वा संमृष्ट्यादिविशुद्धतत्स्थलसत्पीठादिकं मुष्ट्यादिभिः शोधिते ध्वजस्थाने प्रकाशमानं पीठादिकं पीठं नपुंसकशिलां च पूर्ववत् पूर्वोक्तक्रमेण संस्कृत्य दर्भादिभिः दर्भमृत्त्वग्भिर्ध्वजदण्डमर्पणं ध्वजदण्डस्य शोषणमपि प्राशाय संक्षाल्य ध्वजदण्डपीठदृषदोः ध्वजदण्डस्य पीठस्य च पुण्याहमप्याचरेत् ॥ १२२ ॥

विवरणम् ।

समभिवाह्येति । लिपितत्त्वन्यासाद्यपि कार्यम् । आराध्येति वाहनबिम्बे पूजोक्ता । स्वस्तिकेऽष्टदलकमले वापि पूजेष्यते । वक्ष्यति च — 'इष्ट्वा वाहनमण्डलादिष्वि'ति । स्कन्दे तु पङ्कदलमण्डलं भवतीति । वाहने कर्तव्यमुक्त्वा तदायतने तदाह — गत्वा बहिरिति । सम्मृष्ट्यादिविशुद्धेति तदायतने मुष्ट्यादिभिः स्थलशुद्धिरुक्ता । तत्स्थलेति तदायतनाभिप्रायम् । पीठादिकमिति तदीयपीठतदुचितनपुंसकशिलयोर्ग्रहणम् । पूर्ववदिति । बिम्बोक्तवत् । यदुक्तं — 'पीठं ब्रह्मशिलायुत'मि'त्यादि । दर्भादिभिरिति दर्भमृत्त्वग्ग्रहणम् । संक्षाल्येति वारुणजलैः सेचनमप्युक्तम् । ध्वजदण्ड(पिण्ड ? पीठ)दृषदोरिति ध्वजदण्डतदीयपीठयोः, औचित्यात् नपुंसकशिलायाश्च पुण्याहः स्यात् ॥ १२२ ॥

दण्डं धारणया विशोध्य महितीकृत्यादिना मूलम-
ध्याग्रस्थान् वृषषण्मुखौ च निजनाम्ना मारुतं चाश्वनु[3] ।
पीठाद्यं च तथा विशोध्य महितीकृत्य स्वशक्त्यादिभिः
संरक्ष्याखिलमन्त्ररेत्य तनुयात् तत्तत्त्वहोमादिकम् ॥ १२३ ॥

विमर्शिनी ।

दण्डं धारणया शोषणादिभिर्विशोध्य आदिना प्रणवेन महितीकृत्य सम्पूज्य तस्य मूलमध्याग्रस्थान् मूलमध्याग्रेषु वृषषण्मुखौ मारुतं च निजनाम्ना

---

१. 'स्नपन' क. पाठः. २. दण्डदृषदो' ख. च. पाठः. ३. 'प्र' क. पाठः.

'ओं ऋषभाय नमः' 'ओं स्कन्दाय नमः' 'ओं वायवे नमः' इति नाममन्त्रैः अङ्गतु पूजयेत् । पुनः पीठाद्यं च तथा शोषणादिभिः संशोध्य स्वस्व-शक्त्या महितीकृत्य आदितः प्रणवेन नपुंसकशिलां च तथा महितीकृत्य अखिलं संरक्ष्य मण्डपान्तरेत्य गत्वा तत्तत्स्वहोमादिकं तनुयात ॥ १२३ ॥

विवरणम् ।

महितीकृत्यादिनेति प्रणवप्राणायामः । तदंशानां त्रिस्थानेषु न्यासो व्यापकं तेन पूजनं चोक्तम् । मूलमध्याग्रस्थानिति । शिबविषयमेतत् यदुक्तं —

"दण्डस्य मूले मध्येऽग्रे वृषषण्मुखमारुतान् ।
तत्तन्मन्त्रेण सम्पूज्य गीतवाद्यादिमङ्गलैः ॥
वृषकुम्भं समानीय ध्वजोपान्ते तु विन्यसेत् ।

इति । 'वृषषण्मुखौ स्वमनुभिः शम्भौ यजेन्मारुतम्' इति वा पठनीयम् । विष्णवादिष्वेवं पूजायां वृषस्थाने स्वं स्वं वाहनं योज्यम् । तथा विशोध्येति । धारणाभिरिति भावः । स्वशक्त्या महितीकृत्येत्यादि । प्रणवेन नपुंसकशिला पूजनीया । आदित इति । पूर्वमेव । तत्त्वहोमापेक्षयैतदुक्तम् । अन्तरेत्येत्यादि वाक्यान्तरम् ॥ १२३ ॥

स्वस्वेशोदितपञ्चतत्त्वमनुभिर्हुत्वा निजोक्तक्रमात्
सर्पिः प्राप्य ततोऽधिवासहवनाद्यं कल्पयेत कल्पवित् ।
इष्ट्वा वाहनमण्डलादिषु बलिं दत्त्वा प्रसाद्य स्तुतिं
कुर्याद् देवमपि प्रपूज्य शिरसुधात् प्रासादसंस्थं ततः ॥ १२४ ॥

विमर्शिनी ।

स्वस्वेशोदितपञ्चतत्त्वमनुभिः स्वस्वतन्त्रोक्तैः पञ्चतत्त्वमन्त्रैः निज-निजोक्तक्रमात् हुत्वा सर्पिः सम्पातं वाहनबिम्बे प्राप्य ततः कल्पवित् स्वस्वागमोक्तं कर्मविशेषं विद्वानाचार्यः अधिवासहवनाद्यम् अधिवासहोम-शान्तिहोमाद्यं कल्पयेत् कुर्यात् । ततो वाहनमण्डलादिषु, आदिशब्देन

ब्राह्मणभोजनं विवक्षितं, तेष्विष्ट्वा बहिर्बलिं दत्त्वा अन्तः प्रविश्य प्रसाद्य स्तुतिं कुर्यात् । ततः प्रासादसंस्थं देवमपि प्रपूज्य धिनुयात् प्रीणयेत् ॥ १२४ ॥

विवरणम् ।

तत्त्वहोममाह — स्वस्वेशोदितेति । निजोक्तक्रमादिति । शिव उद्घातावृत्त्या शेषेष्वष्टोत्तरशतावृत्त्येत्यभिप्रायः । प्राप्येति तत्सम्पातस्पर्शनादिकमुक्तम् । अधिवासद्रवनाद्यमिति । तत्सम्पातस्पर्शनं प्रणवशक्तिप्रणवैर्ध्वजदण्डतत्पीठनपुंसकशिलानामष्टशो हुत्वा तत्सम्पातस्पर्शनं प्रणवेन रत्नहुतं चोक्तम् । कल्पविदित्यग्निमुखादिहोमक्रमविदित्यर्थः । वाहनमण्डलादिष्विति गुरुकुण्डे द्विजेषु चेति भावः । यथोक्तं —

'हुत्वांशेन निजाग्नौ सदक्षिणं भोजयेदुदग्विप्रान् ।'

इति । प्रसाद्येति वाहनादिषु प्रसन्नपूजोक्ता । स्तुतिं कुर्यादिति । वक्ष्यमाणमन्त्रेणेति भावः । धिनुयादिति प्रसन्नपूजाभिप्रायम् ॥ १२४ ॥

वह्निं विहृत्य जुहुयुर्गुरुमूर्तिपालाः
पक्वं जिनार्णमनुना ध्वजवाहनस्य ।
देवस्य वाथ सकलेषु समिद्घृताद्यं
वाहाणुना स्वभुवि दिग्भिदुरेण तेन ॥ १२५ ॥

विमर्शिनी ।

अधिवासहोमादौ विशेषमाह — वह्निं विहृत्येति । गुरुमूर्तिपालाश्च यथोक्तक्रमेण वह्निं विहृत्य ध्वजवाहनस्य देवस्य वा जिनार्णमनुना गायत्र्या पक्वं जुहुयुः । अथ सकलेषु देवेषु समिद्घृताद्यं द्रव्यं स्वस्ववाहाणुना जुहुयुः । स्वभुवि विष्णौ दिग्भिदुरेण अनन्तरवक्ष्यमाणदिग्भेदयुक्तेन तेन वाहाणुना जुहुयुः ॥ १२५ ॥

विवरणम् ।

इदानीमधिवासहोमक्लृप्तिमभिधत्ते — वह्निं विहृत्येति । अथ सकलेषु वाहाणुना समिद्घृताद्यमित्यन्वयः । जुहुयुरित्यनुषङ्गः । स्वभुवि दिग्भिदुरेण तेनेति । विष्णौ दिग्भेदभिन्नेन वाहाणुना जुहुयुरित्यर्थः ॥ १२५ ॥

पूर्वादिमध्यान्तिमपञ्चकुण्ड-
क्रमोदितैः कादिकपञ्चवर्गैः ।
स्याद् वैनतेयाय पदं द्विठान्तं
मन्त्रः सयुक्तो मधुकैटभारौ ॥ १२६ ॥

विमर्शिनी ।

'दिग्भिदुरेणे'त्युक्तमेवाह — पूर्वादीति । मधुकैटभारौ विष्णौ पूर्वादि-मध्यान्तिमपञ्चकुण्डक्रमोदितैः पूर्वादिचतुर्दिक्षु मध्ये च पञ्चसु कुण्डेषु क्रमेणोक्तैः कादिकपञ्चवर्गैः कचटतपवर्गैः सहितं द्विठान्तं स्वाहान्तं वैनतेयायेति पदं वाहनमन्त्रः सयुक्तः स्यात् । 'ओं कं खं गं घं ङं वैनतेयाय स्वाहा' इत्यादयो मन्त्राः ॥ १२६ ॥

विवरणम् ।

दिङ्निबन्धनं भेदमेव दर्शयति — पूर्वादीति । कादिकैः पञ्चवर्गैरुप-लक्षितं द्विठान्तं वैनतेयायेत्येतत् पदमिति व्याख्येयम् । यथा ओं कं खं गं घं ङं वैनतेयाय स्वाहेत्यादि ॥ १२६ ॥

ध्वजवासिभ्यो भूतेभ्यो नम इत्यष्टदिक्षु बलिमन्त्रः ।
ध्वजवाहनभूत इति श्रीरमणे वाहनस्य नुतिमन्त्रः ॥ १२७ ॥

विमर्शिनी ।

श्रीरमणे विष्णौ अष्टदिक्ष्वपि 'ध्वजवासिभ्यो भूतेभ्यो नमः' इति बलिमन्त्रः स्यात् । 'ध्वजवाहनभूतोऽसावि'ति नुतिमन्त्रः स्तुतिमन्त्रः स्यात् ॥ १२७ ॥

विवरणम् ।

बलिं दत्त्वेत्यत्र मन्त्रमाह — ध्वजवासिभ्य इति । स्तुतिं कुर्यादित्यत्र स्तुतिमाह — ध्वजवाहनभूत इति । नुतिः स्तुतिः । शिवे — 'वाहनाय महाशम्भो'रित्यनेन स्तुतिः स्यात् ॥ १२७ ॥

ध्वजवाहनभूतोऽसौ विष्णोर्विष्णुपराक्रमः ।
सुपर्णः प्रीयतां मह्यं विनताकुलनन्दनः ॥ १२८ ॥

इति ।

---

१. 'तद्वि' क. पाठः. २. 'क्रम' क. ङ. पाठः.

विमर्शिनी ।

तमेव पठति — ध्वजेति ॥ १२८ ॥

प्रातः प्रसाद्य भगवन्तमुपेत्य केतुं
नान्दीमुखादिसहितं विहितक्रमेण ।
संस्थाप्य पादृषदं प्रसमर्प्य सर्पिः
सर्वत्र विन्यसतु तत्र सहेमरत्नम् ॥ १२९ ॥

विमर्शिनी ।

एवमधिवासं कृत्वोत्तरेद्युः प्रातर्भगवन्तं देवं परिपूज्य प्रसाद्य केतुं केतुस्थानमुपेत्य विहितक्रमेण देवप्रतिष्ठायामुक्तक्रमेण नान्दीमुखादिसहितं नान्दीमुखपुण्याहादिभिः सह पादृषदं नपुंसकशिलां संस्थाप्य सर्पिः संपातं (प्र)समर्प्य सर्वत्र देवेषु तत्र नपुंसकशिलायां सहेमरत्नं सुवर्णसहितरत्नानि विन्यसतु ॥ १२९ ॥

विवरणम् ।

प्रातः प्रसाद्य भगवन्तमिति तदनुज्ञापनार्थनैमित्तिकपूजोक्ता । नान्दीमुखादिसहितमिति संस्थाप्येत्यत्र क्रियाविशेषणम् । विहितक्रमेणेति 'आचार्योऽसौ नववसनधृगित्याद्यु'क्तं सर्वं गृह्यते । प्रणवेनैव नपुंसकशिला स्थाप्यते । तत्र च तद्गर्तमूलोद्देश आधारशिलां संस्थाप्य तत्राधारशक्तिमिष्ट्वा तदुपरि सुवर्णकूर्मं सुवर्णकञ्चे संस्कृतं निधाय तन्मन्त्रेण सम्पूज्य तदुपरीयं नपुंसकशिला स्थापनीया । तदुक्तम् — 'हेमकूर्मं निधायादावि'ति । प्रसमर्प्य सर्पिरिति । रत्नेषु तद्धोमसम्पातस्पर्शनमुक्तम् । सर्वत्रेति । शिवादिषु । सहेमरत्नमिति । पच्छिलाया मध्यगर्ते इति भावः । रत्नं चैतन्मौक्तिकम् । यद्वा देवेरत्नन्यासे मध्यविहितं 'मध्ये न्यसतु पद्मरागमपी'त्यादि ॥ १२९ ॥

पूर्वादिमध्यनिष्ठं कार्यैर्वर्गैः क्रमेण विन्यस्येत् ।
वैडूर्यपुष्यमौक्तिकगारुडमाणिक्यसंज्ञितानि हरौ ॥ १३० ॥

---

१. 'सवर्णकमले' च. छ. पाठः. २. 'वन्या' ग. घ. च. छ. पाठः. ३. 'क्ष' इति मूलकोशपाठः.

विमर्शिनी ।

तत्र हरौ तु वैडूर्यपुष्यमौक्तिकगारुडमाणिक्यसंज्ञितानि पञ्चरत्नानि काद्यैर्वर्गैः 'ओं कं खं गं घं ङं नम' इत्यादिमन्त्रैः पूर्वादिमध्या निष्ठं क्रमेण विन्यसेत् ॥ १३० ॥

विवरणम् ।

काद्यैर्वर्गैरिति । यथा ओं कं खं गं घं ङं नमः इति । वैडूर्यं पूर्वंगतं इत्यादि । वैनतेयपदं च सर्वत्र योज्यम् । लोहादिन्यासोऽपि सति सम्भव इष्यते । तदुक्तम् --

"वैडूर्यं पुष्यकं चैव मौक्तिकं चैव गारुडम् ।
माणिक्यं मध्यमे न्यस्य पञ्चलोहं तथैव च ॥
पञ्च धान्यानि बीजानि पञ्चवर्गेण विन्यसेत् ।

इति । लोहादिपञ्चकानि च हरौ स्वरत्नन्यासे चतुर्दिङ्मध्योक्तानि ग्राह्याणि । शिवादिष्वपि रत्नलोहादिपञ्चकानि स्वस्वरत्नन्यास एवोक्तानि उचितानि । वाहनमूलेनैव सर्वेषु रत्नन्यासः । तदुक्तम् —

'एवं संस्थाप्य मूलेन पूजयित्वा विधानतः ।'

इति । पुनस्तत्र पद्मान्तं पीठमिष्ट्वा वस्त्रेण तां नपुंसकशिलां तं च ध्वजदण्डं प्रणवपूजितमाच्छाद्य तारुत्रयादि कुर्यात् । वक्ष्यति च — 'अभीष्टपीठे वत्केतुदण्डमि'ति ॥ १३० ॥

गत्वा मण्डपमखिलं प्रोद्वास्य न्यस्य तण्डुलसुपूर्णे ।
पात्रे सपताकाद्यं वाहनबिम्बं समस्तमानाय्य ॥ १३१ ॥

गर्भालयं समेत्य प्रसाद्य देवं तदग्रसन्निहितात् ।
वाहनतः सपताके वाहनमावाह्य वाहने मन्त्री ॥ १३२ ॥

केतुस्थानमुपेत्य ध्वजकलशाद्यैः समन्वितं सकलैः ।
प्राज्ञान् प्रसाद्य *विप्रांस्तदाज्ञया स्थापनं प्रकुर्वीत ॥ १३३ ॥

---

१, 'वमुक्ता' ख. घ. च. पाठः.

*. 'विप्रान् सुविलग्ने' इति विवरणपाठः.

विमर्शिनी।

पुनः सर्वेषु देवेष्वपि मण्डपं गत्वा अखिलं तत्रत्यं तोरणध्वजादिकं प्रोद्वास्य तण्डुलसुपूर्णे पात्रे सपताकाद्यं पताकाघण्टास्रक्सहितं वाहनबिम्बं न्यस्य तत् समस्तं मूर्तिपैरानाय्य देवस्य गर्भालयं समेत्य देवं संपूज्य प्रसाद्य मन्त्री आवाहनमन्त्रज्ञो गुरुः (देवा ? तद)ग्रसन्निहितात् देवस्य परिवारत्वेनाग्रतः स्थितात् वाहनतो वाहनात् सपताके वाहने पताकासहिते वाहनबिम्बे वाहनं स्वस्ववाहनमावाह्य संपूज्य पुनः ध्वजकलशाद्यैर्निद्राकलशकुम्भेशादिभिः सकलैः समन्वितं यथा भवति तथा केतुस्थानमुपेत्य प्राज्ञान् विदुषो विप्रान् प्रसाद्य तदाज्ञया तेषामनुज्ञया स्थापनं च प्रकुर्वीत ॥ १३१ — १३३ ॥

विवरणम्।

अखिलं प्रोद्वास्येति। वाहनं सम्पूज्य बिम्बविहितक्रमेण सर्वं वाहनमुद्वासयेत्। यथोक्तम् —'ततो मण्डले दीप्यमाने न वह्नावि'त्यादि। तण्डुलसुपूर्णपात्रे सपताकाद्यं वाहनबिम्बं न्यस्येत्यन्वयः। यदाह —'घण्टास्रगुज्ज्वलपताक'मिति। समस्तमानाय्येति। 'स्यान्नीराजनमग्रत' इति पुरोक्त एवेह क्रमः। किं तु यद् ध्वजकलशं पञ्चकं नवकं वा तत् तथैव नेयम्। तत्पृष्ठत एव कुम्भेशो नेतव्यः। समस्तग्रहणेनैतत् सर्वमुक्तम् ॥ १३१ ॥

गर्भालयं समेत्येति। निद्राकलशादि सर्वं ध्वजास्पदसन्निधावेव स्वस्तिकपीठेषु निधेयम्। यदुक्तं —

'वृषकुम्भं समानीय ध्वजोपान्ते तु विन्यसेत्।'

इति। वक्ष्यति च —'ध्वजकलशाद्यैस्समन्वितं सकलैरि'ति। प्रसाद्य देवमिति। देवे किञ्चित् पूजोक्ता। तदग्रसान्निहिताद् वाहनतः इति। देवस्य पुरोभागे नित्यसन्निहितात् तदानीं च तत्र कल्पितपीठे तन्मन्त्रावाहनादिक्रमतः सन्निहितादित्यर्थः। मन्त्रीति। वाहनमनुपुटितैः पञ्चतत्त्वैः शङ्खेन गन्धाक्षतकुसुमगर्भेणावाहनमुक्तम्। पुनस्तन्न्यासस्तु अर्थसिद्ध एव। सपातक इति। वाहनेऽभिवाह्य तच्छेषेण पताकायामपि वाहनाङ्कितायामावाहनमुक्तम्। यद्वा मन्त्रीति पुनर्मन्त्रावाहनन्यासपूजनमुक्तम्। अथवा मन्त्रीति 'कनिक्रदत् स्वस्ति'-

१. 'भवनाय्य' ख. पाठः.

सूक्तादिजपेन केतुस्थानोपगमनमुक्तम् । देवे तदग्रवाहने च लयाङ्गादि विधाय नीराजनपूर्वकं वाहनादिपात्रयुक्तः परिमण्डपान्तर्बहिरपि प्रदक्षिणं विधाय ध्वजस्थानमपि प्रदक्षिणं कुर्यात् ॥ १३२ ॥

सुविलग्न इति मौहूर्तिकानुज्ञापनसप्युक्तम् । स्थापनं प्रकुर्वीतेति ॥ १३३ ॥

तत्र ध्वजाग्रेऽर्चितयोगविष्टरे
तद्वाहनं क्लसपराभिवाहनम् ।
संस्थापयेदाद्युपचारमूलतः
सपञ्चतत्त्वाणुनिजाणुतारतः ॥ १३४ ॥

विमर्शिनी ।

तत्र स्थापनकाले अर्चितयोगविष्टरे ध्वजाग्रे केतोरग्रे पीठपूजानन्तरं क्लसपराभिवाहनं कृतपरावाहनादिकं तद्वाहनम् आद्युपचारमूलतः, आदिशब्द उभयथा योज्यः; आदौ प्रणवोपचारमूलानन्तरं सपञ्चतत्त्वाणुनिजाणुतारतः, निजाणुशब्दश्च द्विधा योज्यः, निजाणुपुटितपञ्चतत्त्वानन्तरं निजाणुप्रणवेन संस्थापयेत् । निजाणुरिति वाहनमन्त्रो मूलमन्त्रश्च गृह्यते ॥ १३४ ॥

विवरणम् ।

कथमित्याह — तत्रेति । वाहनस्य ध्वजदण्डाग्रे तस्य च तदायतनगर्ते स्थापनं तस्मिन् सुविलग्ने कार्यमिति भावः । अर्चितयोगविष्टर इति । पद्मान्तं पीठमिष्ट्वा शक्त्या पूजनमपि सूचितम् । क्लसपराभिवाहनमिति । तन्मन्त्रपुटितेन प्रणवेन परावाहनं, तन्न्यासपूजनं त्वर्थसिद्धम् । आद्युपचारमूलत इति । प्रणवोपचारादेव मूलमनुग्रहणम् । पञ्चतत्त्वाणवश्च तन्मन्त्रपुटिताः स्युः ॥ १३४ ॥

विन्यस्तमन्त्रमभिपूज्य निजाणुना त-
मासिच्य वाहनघटीभृतवारिणाथ ।
कृत्वा सजीवकरणं प्रविधाय मन्त्र-
न्यासार्चनाद्यमिह सुस्थितमारचय्य ॥ १३५ ॥

१. 'स्थानोद्गमन' ख. पाठः. २. 'वावाह' ग. पाठः. ३. 'डान्वितवा' ख. पाठः.

संस्थाप्य सम्मुखमदक्षिणपार्श्वलम्बि-
घण्टास्रगुज्ज्वलपताकमभीष्टपीठे ।
तत्केतुदण्डमभिक्लृप्तमनुप्रतिष्ठं
संभाव्य साध्वभिमृशन् प्रजपेद् ध्रुवाणुम् ॥ १३६ ॥

विमर्शिनी ।

विन्यस्तमन्त्रं मन्त्रन्यासानन्तरमभिपूज्य वाहनघटीभृतवारिणा वाहनकलशस्थजलैः निजाणुना स्वमन्त्रेण तमासिच्याथ सजीवकरणं जीवावाहनाद्यं च कृत्वा मन्त्रन्यासार्चनाद्यं मन्त्रावाहनन्यासपूजाद्यं प्रविधाय इह ध्वजाग्रे सुस्थितं कीलस्थापनादिना सुस्थिरमारचय्य अभीष्टपीठे पूजितपीठे गर्ते अदक्षिणपार्श्वलम्बिघण्टास्रगुज्ज्वलपताकम् अदक्षिणे उत्तरे वामे वा पार्श्वे लम्बिन्यो घण्टस्रगुज्ज्वलपताका च यस्मिंस्तत् केतुदण्डं देवस्य सम्मुखं यथा भवति तथा संस्थाप्य अभिक्लृप्तमनुप्रतिष्ठं पूर्वोक्तमन्त्रैः प्रतिष्ठितं साधु संभाव्यं ध्यात्वा तदभिमृशन् ध्रुवाणुं 'ध्रुवा द्यौरि'त्याद्यान् मन्त्रान् प्रजपेत् ॥ १३५, १३६ ॥

विवरणम् ।

विन्यस्तमन्त्रमिति ध्रुवादिजाप[1]तन्मन्त्रावाहनसकलीकरणं चोक्तम् वाहनघटभृतवारिणा निजाणुना तमासिच्येत्यन्वयः । तन्मन्त्रव्यापक न्यासपूजनादि सर्वमर्थसिद्धम् । कृत्वा सजीवकरणमिति । तत्र विशेषं तद वसर एव वक्ष्यामः । मन्त्रन्यासार्चनाद्यमिति पुनर्मन्त्रावाहनन्यासपूजाद्यभिप्रायम् । सुस्थितमारचय्येति । तदीयनाळध्वजाग्ररन्ध्रे कीलयोजनादिभिरिति भावः ॥ १३५ ॥

तत्केतुदण्डं समिष्टपीठे सम्मुखं संस्थाप्येत्यन्वयः । प्रागेव कृतपूजे तदायतने तद[2]ग्रप्रतिष्ठितवाहनध्वजदण्ड प्रासादस्थदेवसम्मुखतद्वाहनतया तदुचितयन्त्रोत्थापनाद्युपायैर्बलवद्भिः सुकुशलैः समोर्ध्वतया संस्थापितं कृत्वेत्यर्थः । संस्थाप्येत्यनेनैव तन्मूले तदीयपीठयोजनं तदुचितवेदिविरचनं चोक्तम् । अदक्षिणपार्श्वलम्बिघण्टास्रगुज्ज्वलपताकमिति भूतकालविशेषणम् । वाहनस्थापनानन्तरमेव तदुपदण्डे पताका माला घण्टा च तत्तन्मन्त्रैर्लम्बनीयेति

---

१. 'जप' 'र' घ. ङ. च. पाठः २ 'म' ख. घ. ङ. च. छ. पाठः. ३'मण्डपं' क. पाठः.

भावः । अदक्षिणपदेन वाहनवामभागेऽभिप्रेतः । यदा पताकापि प्रधानभूतैव तदा तद्दक्षिणपदेन ध्वजदण्डस्य सौम्यभाग एव गृह्यते । अभिकल्प्यमनुप्रतिष्ठं सम्भाव्येति । तद् ध्वजदण्डं स्पृशन् प्रागुक्तमनुजातं जपंस्तं तैस्संस्थापितमपि प्रतिष्ठितं भावयेदित्यर्थः ॥ १३६ ॥

विन्यस्तवाहनमनुं[1] दिगधीशकुम्भैः
सिक्त्वाग्रतस्तमधिवेदि तदीयमन्त्रैः ।
अस्त्रोदकेन परिषिच्य घटेशनिद्रा-
कुम्भाम्भसा समभिषिञ्चतु च क्रमेण ॥ १३७ ॥

विमर्शिनी ।

विन्यस्तवाहनमनुं वाहनमन्त्रावाहनविन्यासानन्तरं (तं) दिगधीश-कुम्भैः विष्णौ चतुर्भिरन्येष्वष्टभिश्च तदीयमन्त्रैः अधिवेदि वेद्यामेवाग्रतः सि-क्त्वा पुनः अस्त्रोदकेन कर्करीजलेन[2] परिषिच्य परितः सेचयित्वा क्रमेण घटे-शनिद्राकुम्भाम्भसा च समभिषिञ्चतु ॥ १३७ ॥

विवरणम् ।

विन्यस्तवाहनमनुमिति । पुनस्तदग्रगतवाहने तन्मन्त्रावाहनन्यासः । तद्दण्डे च प्रणवव्यापकं त्रिस्थानेषु तदङ्गन्यासो वाहनषण्मुखमारुतन्यासोऽङ्ग-न्यासश्चोक्तः । अधिवेद्यग्रतः तद्दिगधीशकुम्भैस्तदीयमन्त्रैस्सिक्त्वेति । पञ्चके नवके व वा प्राग्विनियुक्तवाहनकुम्भस्य परिकलशा दिगधीशकुम्भा उक्ताः। वेद्यां ध्वजदण्डपुरोभागे तद्गतवाहनाभिषेकक्रिया तैर्नीराजनपूर्वकं क्रमेणेन्द्रादि-पूजितमन्त्रैरभिषिञ्चेदित्यर्थः । पुनर्न्यासनीराजनादिकं वाहने स्यात् ॥ १३७ ॥

तच्चन्मनुन्यसनपूर्वकमर्चयित्वा
तस्मै निवेद्य च हविर्विकिरेद् बलिं च ।
अन्नं विसृज्य परिशोध्य भुवं प्रसाद्य
बद्धाञ्जलिः स्वमनुना स्तुतिमादधीत ॥ १३८ ॥

---

१. 'मुं' क. पाठः. २. 'तं' ख. पाठः.

विमर्शिनी ।

तदा तदा तत्तन्मनुन्यसनपूर्वकमर्चयित्वा तस्मै हविर्निवेद्य बलिं च विकिरेत् । अनं निर्माल्यं विसृज्य भुवं परिशोध्य प्रसाद्य प्रसन्नपूजानन्तरं स्वस्वमनुना स्तुतिं चादधीत ॥ १३८ ॥

विवरणम् ।

तत्तन्मनुन्यसनपूर्वकमिति । कुम्भेशानन्तरं त्रितत्त्वन्यासो निद्राकलशानन्तरं पञ्चतत्त्वादिन्यासश्चोक्तः । यद्वा तत्तन्मनुन्यसनमिति तत्तद्वाहनमन्त्रावाहनन्यासाभिधानमेतत् । पीठोक्तवासिवेश्चबलिक्रमः । प्रसाद्येति प्रसन्नपूजोक्ता ॥ १३८ ॥

ओं नमोऽष्टकुलनागभूषणाय नागशोणितलिप्ताङ्गाय समस्तपातालवासिजनविक्षोभणकराय देवदानवगन्धर्वोरगमथनाय मातुरर्थे नागमोहनाय हन हन विघ्नं नाशय स्वाहा ॥

विमर्शिनी ।

विष्णौ वाहनस्य स्तुतिमन्त्रं पठति — ओं नम इत्यादि ॥

नमस्तेऽस्तु त्रिणेत्राय ध्वजाधिपतये नमः ।
नन्दिने तु नमस्तुभ्यमुत्सवस्य प्रसिद्धये ॥ १३९ ॥

विमर्शिनी ।

शिवे च पठति — नमस्त इत्यादि ॥ १३९ ॥

गत्वा गर्भगृहं यथोचितविभूत्याराध्य देवं स्वयं
कुर्वीत ध्वजवाहनाद्यपरिवाराणां समन्ताद् बलिम् ।
नीत्वा त्रीणि दिनानि तुर्यदिवसे संलोप्य देवं सुधीः
कुर्यादेतदवस्तुतोक्षणबली चैवं ध्वजस्थापनम् ॥ १४० ॥

---

१. 'यथाविभवमाराध्य प्रबाधेश्वरं कु' ख. पाठः  २. 'स्या' क. पाठः.

विमर्शिनी ।

पुनर्गर्भगृहं गत्वा यथोचितविभूत्या स्वशक्तियोग्येन विभवेन देवं स्वयं, स्वयंशब्दस्याव्ययत्वादत्र द्वितीयाविभक्त्यन्तत्वमवगन्तव्यम् । आराध्य ध्वजवाहनाद्यपरिवाराणां ध्वजवाहनसहितानां परिवाराणां पूर्ववत् समन्ताद् बलिं कृत्वा त्रीणि दिनानि नीत्वा गमयित्वा सुधीः कलशानां युक्तिविशेषं जानन्नाचार्यः तुर्यदिवसे चतुर्थे दिवसेऽहनि देवं संस्नाप्य एतदवस्रुतोक्षणबली अवस्रावप्रोक्षणं भूतबलिं च कुर्यात् । एवं ध्वजस्थापनम् , उक्तमिति शेषः ॥ १४० ॥

विवरणम् ।

यथोचितविभूत्येति पूजानिवेद्ययोर्विस्ताराभिप्रायम् । ध्वजवाहनाद्य परिवाराणामिति भूतबल्यभिप्रायम् । तदा च सभातो निष्क्रम्यैव वा महाबरणादर्वागेव वा ध्वजबलिर्भवति । कुर्यादेतदवस्रुतोक्षणबली चेति । ध्वजस्यैवार्थादवस्रुतप्रोक्षणम् । बलिस्त्वयमपि भूतबलिरेव । यदा तु महाबलिपीठस्थापनानन्तरमेव तद्दिने परदिनेषु वा ध्वजप्रतिष्ठासम्भवः, तदा'गत्वा गर्भगृहं यथोचितविभूत्ये'त्येतदसम्भवो देवप्रतिष्ठातुर्यदिनस्नपनावस्रुतप्रोक्षणं सर्वबलिपीठानां ध्वजदण्डस्यापि कार्यम् । वक्ष्यति च — 'सावस्रुतोक्षं परिषद्बलिं च कृत्वे'ति । एवं ध्वजस्थापनमिति प्रकरणोपसंहारः ॥ १४० ॥

इति तन्त्रसमुच्चयविवरणे षष्ठः पटलः ।

इति तन्त्रसमुच्चये रहस्या-
गमसारः पटलः समापि षष्ठः ।
प्रकटीकृतपादपीठपीठ-
प्रतिमावारकपीठिकाप्रतिष्ठः ॥ १४१ ॥

पटलमुपसंहरति — इतीति । (इति) एवं तन्त्रसमुच्चये षष्ठः पटलः समापि समाप्तोऽभूत् । कथंभूतः, रहस्यागमसारः रहस्यानामागमानां सारभूतः प्रतिष्ठाकथनात् । प्रकटीकृतपादपीठपीठप्रतिमावारकपीठिकाप्रतिष्ठः प्रकाशीकृतया नपुंसकशिलापीठप्रतिमानां तदावरणपीठानां च प्रतिष्ठया युक्तः ॥

इति तन्त्रसमुच्चयविमर्शिन्यां षष्ठः पटलः ।

१ 'वेऽह', क. पाठः. २. 'जस्यापि' ख. ग. पाठः.

## अथ सप्तमः पटलः ।

अथाखिलेशार्चनमुच्यतेऽधुना
पुमर्थसर्वस्वविधायि यज्वनाम् ।
तदीयसंस्थापनकर्म यत्कृते
समीरितं स्वागमसारसङ्ग्रहात् ॥ १ ॥

विमर्शिनी ।

प्रतिष्ठितस्य देवस्य पूजाया अवश्यकर्तव्यत्वात् प्रतिष्ठानन्तरमेव पूजाविधानं सप्तमेन पटलेनाभिदधानस्तत्सङ्गतिं योजयति — अथाखिलेति । अथ प्रतिष्ठाकथनानन्तरम् अधुना इदानीं प्राप्तकालत्वाद् अखिलेशार्चनम् अखिलेशानां विष्णवादिकानां सप्तानां देवानामर्चनमुच्यते । अस्माभिरिति शेषः । तदर्चनं यज्वनां यजमानानां पुमर्थसर्वस्वविधायि पुरुषार्थचतुष्टयस्यापि सम्पादनस्वभावम् । यत्कृते यस्यार्चनस्यापेक्षया तदीयसंस्थापनकर्म तत्प्रतिमानां सम्यक् प्रतिष्ठाकर्म स्वागमसारसङ्ग्रहात् स्वस्वागमानां सारं संगृह्य समीरितं सम्यग्विभज्योक्तम् ॥ १ ॥

विवरणम् ।

अथ प्रतिष्ठायामेव 'आराध्य योगकमलं नियमार्चनार्थं' 'कृत्वाग्रतः स्थण्डिलम् 'इत्येवं प्रवर्तिताया नित्यपूजाया विधानं वक्तुमारभते — अथाखिलेशार्चनमिति । पुमर्थसर्वस्वविधायीति कर्तुस्तद्वंश्यानाञ्च धर्मार्थादिपुरुषार्थानां तदवान्तरभेदानाञ्च सम्पादकम् । देवस्य नित्यपूजायास्तत्प्रतिष्ठाशेषत्वेऽप्यस्ति प्राधान्यमिति भावः । यद्वा नित्यपूजेयं यज्वनामेवाभिप्रेयते, यद् ग्रन्थारम्भ उक्तं 'नित्यं समाराध्नुयामि'ति । तया चोक्त्या देवस्य नित्यपूजैवोक्ता स्यात् प्रकाराविशेषात् । तस्याश्च स्वयमेव प्राधान्यमिति । प्राधान्यमेव दर्शयति — तदीयसंस्थापनकर्मेति । यत्कृत इति यदर्थतया । स्वागमसारसंग्रहादित्याखिलेशार्चनमित्यत्रापि योज्यम् ॥ १ ॥

स्नात्वाचम्य विधानतः सुरगृहं सम्प्राप्य सम्पूज्य च
द्वास्थावन्तरुपेत्य देवमभिवन्द्यापास्य निर्माल्यकम् ।
बिम्बाद्यं मनुविद् विशोध्य सलिलैराराध्य पुष्पैर्लिपि-
न्यासान्तं विदधीत दर्शितदिशासीनः स्वयं दक्षिणे ॥ २ ॥

विमर्शिनी ।

नित्यपूजारम्भे परिपाटीमाह — स्नात्वेति । विधानतः स्नात्वा विधानत आचम्येति मन्त्रस्नानं मन्त्राचमनं चोक्तम् । सुरगृहं देवालयं सम्प्राप्य द्वास्थौ स्वस्वमन्त्रेण संपूज्य चकारात् तदनुज्ञां गृहीत्वान्तरुपेत्य देवमभिवन्द्य मनुविद् निर्माल्योपासनादिमन्त्रज्ञो गुरुः निर्माल्यमपास्य बिम्बाद्यं बिम्बपीठगर्भगृहादिकं सलिलैर्विशोध्य पुष्पैराराध्य स्वयं दक्षिणे भाग आसीनः दर्शितदिशा अधिवासपटलोक्तमार्गेण लिपिन्यासान्तं विदधीत ॥ २ ॥

विवरणम् ।

स्नात्वाचम्य विधानत इति ।

अस्त्रेणादाय मृत्स्नां शुचिसलिलतटे न्यस्य संप्रोक्ष्य भङ्क्त्वा
द्वेधैकांशान्मलस्नानकृदुचितमनुर्न्यस्तमन्त्रोऽपरांशम् ।
त्रेधा भङ्क्त्वाभिजप्यास्त्रमनुमपरतस्तैः क्रमाच्चोयगस्सन्
दिग्बन्धं दिव्यतीर्थानयनमपि चरेद्विग्रहालेपनञ्च ॥

मन्त्री मूलकृताघमर्षणविधिः स्नातोऽथ मूलाङ्गकैः
प्रोक्ष्यान्याम्बरधृक् कृताचममनुन्यासोऽरुणोपास्थितिम् ।
कृत्वा कल्पविदासनादिमनुभिस्सन्तर्प्य हुत्युक्तव-
द्देवादीनपि भूय आत्मह्रततत्तीर्थो लयाङ्गं चरेत् ॥

इति । संप्रोक्ष्येति । अस्त्रेणेत्यनुषङ्गः । मलस्नानकृदिति । यथोक्तम् —

"कक्षपक्षादिरन्ध्रेषु समालिप्य मृदैकया ।
मृदाखेणैव तत्स्नानं मलस्नानं विदुर्बुधाः ॥"

---

१. 'सलिलैर्विशोध्य कुसुमं चाराध्य तद्दक्षिणे
स्वासीनः कथितक्रमेण लिपिविन्यासान्तिमं प्राचरेत् ॥ प्र' ख. पाठः.

२. 'मृत्सां' ग. घ. च. छ. पाठः.

इति । उचितमनुरिति च तत्कालविशेषणम् । प्रणवोऽस्त्रं वोचितो मनुरभिप्रेतः । मज्जेत्रिरोमित्यप्युक्तम् । न्यस्तमन्त्र इति । पुनरुत्तीर्य मूलमन्त्रस्य प्राणायामादिपूर्वकमक्षराङ्गन्यास उक्तः । अस्त्रमनुमपरत इति । तानंशानस्त्रमूलमन्त्रप्रणवैः क्रमादभिजप्येत्यर्थः । तैरिति । तैरभिजप्तांशैस्तैरेव च मन्त्रैरित्यर्थः । तत्रास्त्रजप्तेनांशेन पूर्वादिदिक्षु क्षेपेण तद्बन्धनं, मूलजप्तेन मूलेनैव तत्र जले समालोडनेन दिव्यतीर्थभावना । द्वादशान्तादादित्यमण्डलाद्वा मन्त्रमयतीर्थावाहनमप्यानयनपदेन सूचितम् । विग्रहालेपनञ्चेति । प्रणवजप्तेन प्रणवेन मूर्धादिस्वविग्रहे समालेपनमुक्तम् । तदुक्तम् — 'आलिप्यापादत' इति । यद्वा जलेन सहाभिषेकः । यदप्युक्तं —

'ब्रह्मजप्तेन मूर्धादिपादान्तमभिषेचयेत्' ।

इति । प्रोक्ष्येति तत्रैव स्थित्वात्मन्यभिषेक उक्तः । मैन्त्रीति तत्तद्देवमन्त्रविदित्युक्तम् । अरुणोपस्थितिस्सूर्योपस्थानम् ।

कल्पविदिति यथोक्तम् —

"तैरेव प्रोक्षणं कृत्वा ततः कुर्यादुपस्थितिम् ।
अर्कमण्डलमध्ये तं देवं ज्योतिर्मयं विभुम् ॥

ध्यात्वार्घ्यं विधिवद्दद्यान्मूलमन्त्रमनुस्मरन् ।
तेनैवोपस्थितिं कुर्याद्" ॥

इति । हुत्युक्तवदिति । वक्ष्यति च — 'सतारनूरादिकपीठिकाणुभि'रित्यादि । प्रणवव्याहृतयस्तु न तर्पणे स्युरिति ज्ञेयम् । देवादीनपीति । संग्रहतो विस्तारतो वा देवर्षिपितर इति ।

"पित्रादयस्त्रिभिः मानैर्ब्रह्माद्या मार्जनैस्त्रिभिः ।
सूर्यसोमौ परैः प्राणापानौ नासत्यदस्रकौ ॥

हृदीश्वरो महाविष्णुर्वा मूर्धनि सदाशिवः ।
स्मर्तव्यो वा सदा विष्णुर्मन्त्रिणाचामकर्मणि ॥"

---

१. 'तम' क. ङ. पाठः. २. 'मिति अप्यु' ख. घ. ङ. च. पाठः. ३. 'पूर्वम', ४. 'जप्तं' ग. पाठः. ५. 'तन्त्री' च. पाठः.

इति । पित्रादय इति पितरः पितामहाः प्रपितामहाश्च । ब्रह्माद्या इति ब्रह्मा विष्णू रुद्रश्च, ब्रह्मा दक्षोऽग्निश्च वा । पैरिति चक्षुषोर्नसोः श्रोत्रयोश्च स्पर्शनैः । शिवस्कन्दादिष्वीश्वरस्सदाशिवश्च, विष्णुदुर्गादिषु महाविष्णुस्सदाविष्णुश्च । मन्त्रिणेति । मनसा ओं पितरस्तृप्यन्त्वित्याद्यनुस्मरणमुक्तमिति । सम्पूज्य च द्वास्थाविति । तत्तन्मन्त्रेण पुष्पाराधनपूर्वकमर्घ्यदानं वन्दनञ्चोक्तम् । तदनुज्ञापनार्थमेतत् । द्वास्थौ च बहिरन्तर्वोभयतोऽपि वा सम्भविनौ गृह्येते । वक्ष्यति च — 'प्रासादान्तर्बहिरि,त्यादि । अन्तरुपेत्येति । विधानत इत्यनुषङ्गः । यथोक्तं—

"वायुना द्वारमुद्घाट्य दक्षिणाङ्घ्रिपुरस्सरम् ।
निभृतं प्रविशेदन्तरग्रसूत्रमनाक्रमन् ॥"

इति । देवमभिवन्द्येति ।

"योनीतान्तर्मुखावस्थं ध्रुवेणोभयतोमुखीम् ।
नीत्वावस्थां प्रदीपञ्च दर्शयेन्मङ्गलानि च ॥
नेत्रेण पुष्पं त्वाराध्य दत्त्वार्घ्यमुपचारतः ।
अभिवाद्याभिवन्द्याथानुज्ञां गृह्णीत तांरतः ॥"

इति । नेत्रेण दर्शयेदिति योज्यम् । अपास्य निर्माल्यकमिति मनुविद्विधानत इति च योज्यम् । वक्ष्यति च —

"निर्माल्यं व्यपनीय विश्वमनुना विष्णौ परेष्वस्त्रतो मन्त्री";

इति । तच्च निर्माल्यं तत्तन्निर्माल्यधारिण्यर्घ्यपूर्वकं विनियोज्य पुनरेव तदीयनिर्माल्यापाँसनादिकमिति ज्ञेयम् । समर्प्य तस्मै देवोपभुक्तमाखिलमिति चोक्तम् । मनुविद् विशोध्य सलिलैरिति । लौकिकमार्जनसंक्षालनानन्तरमस्त्रेण सोपानादि सर्वं संक्षालयेत् । यदुक्तं —

"मण्डपादिबहिस्सर्वं मार्जनं क्षालनं तथा ।
परिवारकैस्तु कर्तव्यं बलिपीठान्तमेव च ॥"

इति ।

---

१. 'व विष्णु', २. 'ष्पमा' क. पाठः. ३. 'वसाना' क. ग. घ. च. पाठः. ४. नतलादि' ख. ग. ङ. च. पाठः. ५. 'चारकै' ख. घ, ङ. च. पाठः.

'सम्मार्ज्यालेपयेत् तत्र प्रोक्षयेद् गन्धवारिणा' ।

इति च । ततः कटाहसंभृतेन शोषणादिसंस्कृतेन जलेन पीठं बिम्बं पुनः पीठञ्च निजानिजाख्रेण संक्षाल्य पुनः स्वस्वोचितैर्मूलपञ्चतत्त्वादिमनुभिः पुरुषरुद्रसूक्तादिभिश्च बिम्बं शक्तिश्रीसूक्तादिभिश्च पीठमभिषिञ्चेदिति भावः । आराध्य पुष्पैरिति । सद्यो बिम्बे पुष्पचूडनं विधाय मूलेन बिम्बे शक्त्या पीठे च पुष्पाराधनं विदध्यात् । तदुक्तम् —

'अशून्यमस्तकं लिङ्गमभिषेकार्चनादिषु' ।

इत्यादि । स्वयं दक्षिण आसीनो दर्शितदिशा लिपिन्यासान्तं विदधीतेत्यन्वयः ।

'विदिक्सूत्रं परित्यज्य दक्षिणं पार्श्वमाश्रितः' ।

इति चोक्तम् । दक्षिणशब्देन देवस्य याम्यदिग्भाग उक्तः । तदाभिमुख्योपपत्तेर्दक्षिणदिक्सूत्रपरित्यागोऽपि लभ्यते । तत्र स्वासने प्राङ्मुखतयोदङ्मुखतया वासनं स्यात् । दर्शितदिशेति ध्यानाधिवासप्रकरण इति भावः ॥ २ ॥

**प्रत्यक्चितिं परिजपन्नहहेति मूल-**
**चक्रादुदस्य परमात्मनि संविलाप्य ।**
**मन्त्रात्मना परिणमय्य सुधीर्हृदब्ज-**
**मध्ये सुयोजयतु सादिमनुप्रजापी ॥ ३ ॥**

विमर्शिनी ।

सुधीः बुद्धिकौशलयुक्तो गुरुः अहहेति परिजपन् प्रत्यक्चितिं जीवात्मानं मूलचक्राद् मूलाधाराद् उदस्य ऊर्ध्वं नीत्वा परमात्मनि संविलाप्य मन्त्रात्मना परिणमय्य मूलप्राणायामेन मन्त्रमूर्तिरूपत्वं भावयित्वा सादिमनुप्रजापी आदिः प्रणवः मनुः मूलमन्त्रः प्रणवसहितमूलं जपन् हृदब्जमध्ये हृदयकमलकर्णिकायां सुयोजयतु सुस्थितं यथा भवति तथा योजयेत् ॥ ३ ॥

विवरणम् ।

अथ तत्र यत्प्रादिष्टं 'तदनु पवनयामाद्यर्चनाख्यासमानक्रमत' इति तदुक्तेरयमवसर इत्याशयेनाह — प्रत्यक्चितिमिति । अहहेति परिजपन् मूलचक्रात् प्रत्यक्चितिमुदस्य परमात्मनि संविलाप्येति योजना । प्रत्यक्चितिः

१. 'दि' क. पाठः.

स्वजीवचैतन्यं मूलचक्रे मूलाधारपद्मं परमात्मा द्वादशान्तपद्मेऽवस्थितः । सादि-मनुप्रजापीति । आदिः प्रणवः । सुधीरित्यस्यायमाशयः — प्रत्यक्चिति[2] कुण्डलि-न्यभिन्नमहद्धेत्युद्बोध्य प्रणवेनोदानमुद्रयो[3]र्ध्वं नयन् बीजबिन्द्वाद्यंशबिलयक्रमेण शान्तदशायां द्वादशान्तस्थपरमात्मनि सम्यग्विलयं नीत्वा पुनश्शान्तशक्त्या-द्यंशप्रसरक्रमेण मूलमन्त्रमुखरंस्तदाकारेण परिणामं नयन्नानीतिमुद्रया हृदि योजयेदिति ॥ ३ ॥

तस्यैश[4]लैङ्गिकविराण्मयविग्रहात्म-
भावक्रमात् परिणतिं विदधद् विधाय ।
मूलेन वायुयमनत्रितयं तदाधा-
रार्थं प्रविन्यसतु चात्मनि योगपीठम् ॥ ४ ॥

विमर्शिनी ।

तस्य आत्मनः ऐशलैङ्गिकविराण्मयविग्रहात्मभावक्रमात् परसूक्ष्म-स्थूलस्वरूपमूर्तित्वेन परिणतिं परिणामं विदधत् कुर्वाणो मूलेन वायुयमनत्रितयं प्राणायामत्रयं विधाय तदाधारार्थं तस्योपाधिसिद्धये चात्मनि स्वशरीरे योग-पीठं प्रविन्यसतु । इह पीठन्यासे मन्त्रा वक्ष्यमाणायाः पीठपूजाया अव-गन्तव्याः ॥ ४ ॥

विवरणम् ।

तस्येति । ऐशलैङ्गिकविराण्मयविग्रहात्मशब्दैः समष्टिमयानां परसूक्ष्म-स्थूलरूपाणामात्मनां ग्रहणम् । मूलेन वायुयमनत्रितयमिति । अयमेवंविध एव प्राणायामः 'तदनु पवनयामे'ति पुरोक्त इति प्रतिपत्तव्यम् । सो[5]ऽयं मन्त्रोदय-प्राणायामः ॥ ४ ॥

न्यस्येद् गुरून् मूर्धनि मूलचक्रे
गणेश्वरं चाहृदयं तदादि ।

---

१. 'द्मेऽव' ङ छ. पाठः. २. 'तिकु' ख. ग. घ. च. पाठः. ३. 'नादाय समु' क. 'नोदासमु' ख. ग. ङ. छ. पाठः ४. 'तच्चाद्यगात्मतनुतत्परिषत्प्रपञ्चभावेन तत्परि' ख. पाठः. ५. 'यो' ङ. पाठः.

आधारशक्त्यादि गणं क्रमेण
तथा पृथिव्यन्तिममूर्ध्वमूर्ध्वम् ॥ ५ ॥

विमर्शिनी ।

गुरून् मूर्धनि न्यस्येत् । मूलचक्रे मूलाधारे गणेश्वरं च, तदादि मूलाधारादि आहृदयं हृदयान्तम् ऊर्ध्वमूर्ध्वमाधारशक्त्यादि पृथिव्यन्तिमं गणं च क्रमेण न्यस्येत् ॥ ५ ॥

ऊर्वंसयुग्मोरुषु नाभिमूल-
पार्श्वास्यपार्श्वेषु च दक्षिणादि ।
अष्टौ प्रविन्यस्यतु धर्मपूर्वान्
सत्त्वादिकं व्यापितयेह मध्ये ॥ ६ ॥

विमर्शिनी ।

ऊर्वंसयुग्मोरुषु ऊरावंसयुग्मे ऊरौ च नाभिमूलपार्श्वास्यपार्श्वेषु नाभिमूले पार्श्वे आस्ये पार्श्वे च दक्षिणादि क्रमेण धर्मपूर्वान् धर्मज्ञानादीनष्टौ प्रविन्यस्यतु । सत्त्वादिकं व्यापितया व्यापकत्वेन इह मध्ये धर्माद्यष्टानां मध्यप्रदेशे च ॥ ६ ॥

विवरणम् ।

दक्षिणादीति । दक्षिणोर्वादीत्यर्थः । प्रादक्षिण्येनैषां न्यास इति भावः ॥ ६ ॥

हृत्पुण्डरीकेऽर्चनवक्ष्यमाण-
न्यायेन पद्मादिसमष्टिनिष्ठम् ।
विन्यस्य तस्मिन् परिकल्पयेच्च
मान्त्रं चिदानन्दघनं महस्तत् ॥ ७ ॥

विमर्शिनी ।

हृत्पुण्डरीके हृदयपद्मे अर्चनवक्ष्यमाणन्यायेन पूजायां वक्ष्यमाणरीत्या पद्मादिसमष्टिनिष्ठं पद्मादिसमष्टिपर्यन्तं सर्वं विन्यस्य तस्मिन् मान्त्रं मन्त्रसम्बन्धि चिदानन्दघनं घृतकाठिन्यवच्चैतन्यामृतसान्द्ररूपं तत् प्रस्तुतं महस्तेजः परिकल्पयेच्च ॥ ७ ॥

---

८. 'ष न्या' क. ङ. पाठः.

विवरणम् ।

हृत्पुण्डरीक इति । सत्यनन्ते तं पद्मञ्च मध्ये तदीयदलकेसरेषु अथ आरभ्य विष्वङ्मण्डलद्वयं तृतीयं कर्णिकायामेवैवमात्मन्यासो, नवशक्तीस्त्वथ आरभ्याष्टदलेषु कर्णिकायाञ्च मध्ये समष्टिं न्यसेदिति । तस्मिंस्तन्मान्त्रं महः परिकल्पयेच्चेत्यन्वयः ॥ ७ ॥

तत् तेजः प्रियदर्शनं विभुमभिध्यार्याचयित्वा धिया
सञ्जप्याप्ययवर्त्मना मनुममुं तेजोमयं भावयेत् ।
धाम्नोऽस्मात् परचित्सुधाद्रवमयात् तेजःकणं स्वाञ्जलौ
मन्त्री पिङ्गलया निपात्य करयोस्तद्भावनां प्राचरेत् ॥८॥

विमर्शिनी ।

तदेव तेजः प्रियदर्शनं मनोहररूपं विभुं देवम् अभिध्याय ध्यात्वा धियार्चयित्वा मानसपूजां कृत्वा । मानसपूजामन्त्रास्तन्मुद्राश्च द्वादशात् पटलाद् ग्राह्याः । अमुं मनुम् अप्ययवर्त्मना प्रातिलोम्येन संजप्य अमुं देवं तेजोमयं भावयेत् । मन्त्री मन्त्रतेजसोरेकरूपत्वं जानन् परचित्सुधाद्रवमयात् परचैतन्यामृतद्रवरूपाद् अस्माद् धाम्नः तेजसः तेजःकणं तेजोलेशं स्वाञ्जलौ पिङ्गलया पिङ्गलाद्वारेण निपात्य पातयित्वा करयोः तद्भावनां मन्त्रभावनां प्राचरेत् ॥ ८ ॥

विवरणम् ।

तदिति । निगमागमादिप्रसिद्धं यद्वा 'मन्त्रात्मना परिणमय्य' 'तस्ये'त्येवं प्रकृतं परामृश्यते । मान्त्रशब्देनैव मूलोच्चारणेनेति लभ्यते । परिकल्पयेदिति तत्रावाहनमुद्रया कल्पनामात्रमुक्तम् । यद्वा द्वादशान्तात्प्रणवोपचाराद्यावाहन-धर्मेणावाहनमुक्तम् । मूर्तिरपि पूर्वं कल्पिता चेत्तस्यामावाह्य व्यापकाङ्गन्यासाद्यपि कार्यम् । प्रियदर्शनं विभुमिति तत्कालविशेषणम् । पक्षत्रयेऽपि समानमेतत् ।

---

१. 'य स्वयं मन्त्रवित्
कर्मात्मा हृदयाम्बुजाग्रदलसंस्थः कर्णिकासंस्थितम् ।
तारोच्चारपरिस्रवाद्भिरमृतै रक्तारविन्दोत्करा-
दर्घ्यैर्हैरुपहारकैर्निजमहाभूतात्मकैस्तं यजेत् ॥
यो ब्रह्मायणना समर्प्य परमायात्मानमप्यात्मने
सञ्ज' ख. पाठः. २. 'पूर्वक' क. घ. पाठः.

अर्चयित्वा धियेति प्रणवं शक्तिं वोच्चरन् द्वादशान्तादमृतमयं जलगन्धादि विभाव्य तेन मानसपूजोक्ता । सञ्जप्याप्ययवर्त्मना मनुमिति । अप्ययः संहारः । अष्टार्णषडर्णयोरक्षरवैलोम्यमितरेषां पदवैलोम्यम् । अमुमिति प्रकृतविभोर्ग्रहणम् । मन्त्रीति सकृन्मनसा मन्त्रोच्चारणमुक्तम् । यद्वोक्ताप्यय-भेदविदित्यर्थः । करयोस्तद्भावनामिति । मन्त्रभावनां सकलविग्रहन्यासजप-पूजादिशेषतयेति भावः । स्वदेहस्य तदाधारभावना स्वान्तर्मुखजीवचिद्रूपस्य तद्भावना हृदयभावनेत्यप्यर्थात्सूचिता[1] ॥ ८ ॥

व्यापय्य तारपुटितेन मनूत्तमेन
दोष्णोः क्रमेण तलपृष्ठकपार्श्वकेषु ।
ताराभिरुद्धमनुवर्णगणं सहार्दं
न्यस्येत् स्वकल्पकथितक्रमतोऽङ्गुलीषु ॥ ९ ॥

विमर्शिनी ।

तारपुटितेन मनूत्तमेन मूलेन दोष्णोः करयोस्तलपृष्ठकपार्श्वकेषु क्रमेण व्यापय्य ताराभिरुद्धमनुवर्णगणं प्रणवपुटितान् मूलमन्त्राक्षरान् सहार्दम् अन्ते नमोयुक्तानङ्गुलीषु स्वस्वकल्पकथितक्रमतो न्यस्येत् ॥ ९ ॥

विवरणम् ।

तारपुटितेनेति । नमोन्तेनेत्यपि द्रष्टव्यम् । सहार्दमिति । नमोन्तम् ।

'न्यासोऽङ्गुष्ठे प्रदेशिन्या तेनाङ्गुलिषु दोस्तले ।
स्यादनामिकया प्रायो देहे साङ्गुष्ठया तया ॥'

इति ॥ ९ ॥

सृष्टिर्दक्षिणतर्जनीप्रभृतिवामैतद्विरामा स्थिति-
स्तर्जन्यादिकानिष्ठिकाद्वितयनिष्ठाष्टाक्षरे संहृतिः ।
सृष्टिन्यासविपर्यया त्रयमिदं सृष्टिस्थिर्दिभ्यां युतं
न्यस्येत् सृष्टिवदष्ट पञ्च युगपज्ज्येष्ठाद्यमङ्गानि च ॥ १० ॥

---

१. 'मपू' छ. पाठः. २. 'तम्' ख. छ. पाठः.

विमर्शिनी ।

तद् विवृणोति — सृष्टिरिति । हरावित्यध्याहर्तव्यम् । हरावष्टाक्षरे मन्त्रे दक्षिणतर्जनीप्रभृतित्रामैतद्विरामा दक्षिणतर्जन्यादिवामतर्जन्यन्ता सृष्टिः । तर्जन्यादिकनिष्ठिकाद्वितयनिष्ठा दक्षिणतर्जन्यादितत्कनिष्ठान्ता वामतर्जन्यादि-तत्कनिष्ठान्ता च स्थितिः । सृष्टिन्यासविपर्ययेण वामतर्जन्यादिदक्षिणतर्जन्यन्ता संहृतिः । इदं त्रयं सृष्टिस्थितिसंहारान् पुनरपि सृष्टिस्थितिभ्यां युतं न्यसेत् । अष्टाङ्गानि सृष्टिवत् सृष्टिन्यासस्थानेषु पञ्चाङ्गानि ज्येष्ठाद्यं युगपद् न्यस्येत् ॥ १० ॥

विवरणम् ।

स्वकल्पकथितक्रमत इत्येतदेव विवृणोति — सृष्टिरिति । तर्जन्यादि-कनिष्ठिकाद्वितयनिष्ठा स्थितिरिति दक्षिणवामतर्जनीप्रभृतितदुभयकनिष्ठिका-न्तेत्यर्थः । सृष्टिन्यासविपर्ययात् संहृतिरिति । वामतर्जनीप्रभृति दक्षिणतर्ज-न्यन्तेत्यर्थः । अष्टाक्षरपदेन विष्णुहरिहरदुर्गाशास्तृमूलग्रहणम् । वक्ष्यति च — 'श्रीशश्रीशशिवार्यकेषु' इत्यादि । सृष्टिस्थितिभ्यां युतमिति । सम्भूय पञ्च न्यासा भवन्ति । सृष्टिवदष्टाङ्गानि पञ्चाङ्गानि युगपज्ज्येष्ठाद्यमिति योज्यम् । युगपदिति ज्येष्ठाद्वयाद्यङ्गुलियुगलेषु पञ्चस्विति भावः ॥ १० ॥

पञ्चार्णे युगपच्छिवे पुरुषघोरौ सद्यवामेशकां-
स्तर्जामध्यमयोर्न्यसेत् सहकनिष्ठानामिकाङ्गुष्ठयोः ।
मन्त्रार्णानिषुजेऽग्रजादितलनिष्ठं सार्यविघ्ने गुहे
षण्मन्त्रानपि वेति सुम्भजिति दुर्गापञ्चकं चातलम् ॥ ११ ॥

विमर्शिनी ।

शिवे पञ्चार्णे पञ्चाक्षरविधाने पुरुषघोरौ सद्यवामेशकांश्च तत्पुरुषाघो-रसद्योजातवामदेवेशानसंज्ञा मूर्तीः 'मं तत्पुरुषाय नम' इत्यादिभिः 'मं तत्पुरुषतर्जनीभ्यां नम' इत्यादिभिर्वा मन्त्रैस्तर्जामध्यमयोः सहकनिष्ठाना-मिकाङ्गुष्ठयोश्च तर्जनीमध्यमाकनिष्ठानामिकाङ्गुष्ठानां युग्मेषु युगपन्न्यस्येत् । इषुजे मन्त्रार्णान् मन्त्रस्य षडक्षरान् अग्रजादितलनिष्ठम् अङ्गुष्ठाद्यङ्गुलीषु तले

१. 'यात्' ख. ग. घ. च. छ. पाठः.

च । सार्यविघ्ने गुहे षण्मन्त्रानपि इति वा, स्कन्दस्य मूलाक्षरवद् न्यस्येद् वा । वेति समुच्चयार्थः । शुम्भजिति दुर्गापञ्चकं पञ्चदुर्गाश्च अतलं तलरहितम् अङ्गुष्ठाद्यङ्गुलीष्वेव ॥ ११ ॥

विवरणम् ।

पुरुषघोराविति । तत्तद्वर्णपूर्वकानिति ज्ञेयम् । सार्यविघ्ने गुहे षण्मन्त्रानपीति वेत्यन्वयः । इति वेत्येवं वा अग्रजादि तलनिष्ठं वेत्यर्थः । शुंभजिति दुर्गापञ्चकञ्चातलमिति वेत्यनुषङ्गः । अतलं तलरहितम् अग्रजादिकनिष्ठिकान्तमित्यर्थः ॥ ११ ॥

अङ्गुष्ठादितलान्तं न्यसतु षडङ्गानि दोर्युगे युगपत् ।
दोर्भावनेत्यभाषि प्रायः सर्वत्र मूलमन्त्रविधौ ॥ १२ ॥

विमर्शिनी ।

सर्वत्र षडङ्गानि दोर्युगे करद्वये युगपद् अङ्गुष्ठादितलान्तं न्यसतु । सर्वत्र मूलमन्त्रविधौ दोर्भावना करभावना इति एवं प्रायः समभाषि उक्तम् ॥ ९२ ॥

विवरणम् ।

प्राय इति न्यासान्तरसद्भावोऽपि सूचितः । यथा पञ्चार्णे युगपदित्ययं स्थितिन्यास एवं तत्र पूर्वं सर्गादिचतुष्कमपि स्यात् । मन्त्रार्णानिषुज इत्ययं सर्गन्यासः । तत्र पुनः स्थित्यादित्रयमपि स्यादित्यादि । सर्वत्रेति । विष्णुशिवादिषु ॥ १२ ॥

आभ्यां कराभ्यां निजमूलतस्त्रि-
र्व्यापय्य देहे सकलीकरोतु ।
षडध्वभिर्वा लिपितत्त्वमन्त्रैः
स्वमन्त्रविन्यासमिह ब्रवीमि ॥ १३ ॥

विमर्शिनी ।

आभ्यां कराभ्यां निजमूलतो देहे त्रिर्व्यापय्य षडध्वभिर्वा पूर्वोक्तैः षडध्वन्यासैर्वा लिपितत्त्वमन्त्रैरेव वा सकलीकरोतु । इह पूजायां स्वमन्त्रविन्यासमेवाहं ब्रवीमि ॥ १३ ॥

विवरणम् ।

निजमूलत इति करव्यापकवत् प्रणवपुटितत्वं नमोन्तत्वञ्चेष्यते । क्रिष्टितत्त्वमन्त्रैः षडध्वभिरपि वेति सोपस्कारमन्वयः । स्वमन्त्रविन्यासमिश्रमन्यत् सर्वमधिवासविधावेवोक्तमिति भावः ॥ १३ ॥

श्रीशश्रीशशिवार्यकेषु मनुवित् काक्ष्यास्यहृन्नाभिषु
न्यस्येत् सध्वजजानुपत्सु मनुवर्णांस्तारुद्धान् क्रमात् ।
नत्यन्तानिति सृष्टिरत्र हृदयान्ता नाभिपूर्वा स्थितिः
संहारश्चरणादिकस्त्रयमिदं न्यस्येत् ससृष्टिस्थिति ॥ १४ ॥

विमर्शिनी ।

श्रीशश्रीशशिवर्यकेषु विष्णौ शिवनारायणे शास्तरि च काक्ष्यास्यहृन्नाभिषु मूर्धनेत्राननहृदयनाभिषु सध्वजजानुपत्सु लिङ्गे जानुनोः पादयोश्च तारुद्धान् प्रत्यक्षरं प्रणवपुटितान् नत्यन्तान् नमोन्तांश्च मनुवर्णान् मन्त्राक्षरान् न्यस्येद् इति सृष्टिः । अत्र एषु स्थानेषु नाभिपूर्वा नाभ्यादिपादान्ता मूर्धादिहृदयान्ता च स्थितिः । चरणादिकः पादादिमूर्धान्तः संहारः । इदं त्रयं सृष्टिस्थितिसंहाररूपं ससृष्टिस्थिति पुनरपि सृष्टिस्थितिभ्यां सहितं यथा तथा न्यस्येत् । क्रमादिति सृष्ट्यादित्रयेऽपि क्रमेणैव मन्त्राक्षरा न्यस्तव्या इत्यर्थः । मनुविदित्यस्यायमभिप्रायः — वैष्णवाष्टाक्षरेऽष्टावेव वर्णाः । शिवनारायणे त्वेकादशाक्षरे मूले आदिमं प्रणवम् अन्तस्थं नमस्कारं च हित्वा अष्टौ वर्णा ग्राह्याः । शास्तरि पुनर्नवाक्षरे मूले आदिमं प्रणवं वर्जयित्वाष्टौ ग्राह्या इति ॥ १४ ॥

विवरणम् ।

मनुविदिति । श्रीशशिवे मूलार्णेषु प्रणवनमसोरितरेष्वभितो योगः । आर्यके प्रणवस्य शेषेषु योगश्चोक्तः । ध्वजो गुह्यम् । इति सृष्टिरिति । एवं सर्गन्यास इत्यर्थः । नाभिपूर्वा हृदयान्ता स्थितिरिति नाभिगुह्यजानुपत्सु मूर्धाक्ष्यास्यहृत्सु चेत्यर्थः । संहारश्चरणादिक इति पादादिमूर्धान्तेषु न्यासः । ससृष्टिस्थितीति प्राग्वदिह पञ्च न्यासाः स्युः ॥ १४ ॥

---

१. 'सशिरोदृग्वक्त्रहृन्ना' ख पाठः.

योज्या मूर्धनि मध्यमा नयनयुग्मे तर्जनीमध्यमे
साङ्गुष्ठोपकनिष्ठिका वचसि हृद्यङ्गुष्ठयुक्तर्जनी ।
नाभौ सावरजाग्रजा प्रथमजान्या वा शिवे जानुनो-
र्व्यग्र्या वा व्यनुजा तु वा पदयुगेऽङ्गुल्यः समस्ताः सदा ॥ १५ ॥

विमर्शिनी ।

उक्ते न्यासेऽङ्गुलिनियममाह—योज्येति । मूर्धनि मध्यमाङ्गुली योज्या । मध्यमाङ्गुल्या मूर्धनि न्यस्येदित्यर्थः । नयनयुग्मे तर्जनीमध्यमे योज्ये । वचसि आस्ये साङ्गुष्ठोपकनिष्ठिका अङ्गुष्ठानामिके । हृदि अङ्गुष्ठयुक्तर्जनी अङ्गुष्ठतर्जन्यौ । नाभौ सावरजाग्रजा कनिष्ठाज्येष्ठे । शिवे लिङ्गे प्रथमजा वा अन्या अङ्गुष्ठरहिता वा, जानुनोः व्यग्र्या अङ्गुष्ठरहिता वा व्यनुजा कनिष्ठिकारहिता वा पदयुगेऽपि समस्ता अङ्गुल्यो योज्याः । सदा स्थितिसंहारयोरपि तथा स्थानेष्वङ्गुल्यो योज्या इत्यर्थः ॥ १५ ॥

विवरणम् ।

योज्येति । एतत् सर्वत्र योज्यम् । प्रथमजान्या वा शिवे इति । गुह्येऽङ्गुष्ठं वा प्रदेशिन्यादिचतस्रो वेत्यर्थः । जानुनोर्व्यग्र्या वा व्यनुजास्तु[1] वेति वाक्यम्[2] । गुह्येऽङ्गुष्ठं चेत् जानुनोरितराश्चतस्रः । गुह्ये ताश्चेज्जानुनोरकनिष्ठिकाश्चतस्र इति भावः । पदयुगे अङ्गुल्यः समस्ताः सदेति । पक्षद्वयेऽपीति भावः ॥ १५ ॥

मूर्धेक्षणास्ये हृदि नाभिगुह्य-
पादेषु दुम्भद्द्विषि मन्त्रवर्णान् ।
निर्बीजके सप्त सबीजकेऽष्टौ
मन्त्रे न्यसेज्जानुयुतेषु तेषु ॥ १६ ॥

विमर्शिनी ।

दुर्गायां मन्त्राक्षरस्थानान्याह—मूर्धेति । दुम्भद्द्विषि निर्बीजके दुम्बीजेन रहिते मन्त्रे सप्त मन्त्रवर्णान् मूर्धेक्षणास्ये मूर्धनेत्राननेषु हृदि नाभिगुह्यपादेषु न्यसेत् । सबीजके दुम्बीजसहिते मन्त्रे अष्टौ वर्णान् गुह्यानन्तरं जानुयुतेषु तेषु न्यसेत् ॥ १६ ॥

---

१. 'स्तु इति मूलकोशपाठः. २. 'क्यस्य गु' क. पाठः.

आस्ये हृदङ्घ्रिध्वजमूर्धसु प्रा-
ग्याम्याप्यसौम्योर्ध्वमुखेष्वपीशे ।
न्यस्येत् षडर्णे नरघोरसद्य-
वामेशकान् स्वाक्षरतत्पदाढ्यान् ॥ १७ ॥

विमर्शिनी ।

ईशे षडर्णे नरघोरसद्यवामेशकान् तत्पुरुषाघोरसद्योजातवामदेवेशानान् स्वाक्षरतत्पदाढ्यान् स्वाक्षरैर्मूलमन्त्रस्य स्वीयैः स्वीयैरक्षरैः तत्पदैस्तत्तत्तत्पुरुषादिपदैस्तद्वक्त्रादिपदैश्च युक्तान् आस्ये वक्त्रे हृदङ्घ्रिध्वजमूर्धसु हृदयपादगुह्यमूर्धसु प्राग्याम्याप्यसौम्योर्ध्वमुखेषु पूर्वदक्षिणपश्चिमोत्तरोर्ध्ववक्त्रेष्वपि न्यस्येत् । अयमत्र न्यासक्रमः सूत्रन्यासे — 'मं तत्पुरुषवक्त्राय नमः' 'शिं अघोरहृदयाय नमः'[1] 'यं सद्योजातपादाभ्यां नमः' 'वां वामदेवगुह्याय नमः' 'नं ईशानमूर्ध्ने नमः' इति । वक्त्रन्यासे 'मं तत्पुरुषपूर्ववक्त्राय नमः' 'शिं अघोरदक्षिणवक्त्राय नमः' 'यं सद्योजातपश्चिमवक्त्राय नमः' 'वां वामदेवोत्तरवक्त्राय नमः' 'नं ईशानोर्ध्ववक्त्राय नमः' इति ॥ १७ ॥

विवरणम् ।

स्वाक्षरतत्पदाढ्यानिति । स्वाक्षराणि पञ्चार्णवर्णास्तेषाञ्च द्वितीयतृतीयपञ्चमचतुर्थप्रथमक्रमेणेह योगः । तत्पदानि मुखहृदयपादगुह्यमूर्धानः पूर्वदक्षिणपश्चिमोत्तरोर्ध्ववक्त्राणि च ॥ १७ ॥

ईशानादिषु योज्या ज्येष्ठाद्याः केवलाः स्युरङ्गुलयः ।
ज्येष्ठोपगृहीता वा सोपग्राह्या तु तर्जन्या ॥ १८ ॥

---

1. 'नृ' ॥

कःस्यात्मान्तुपदेषु केन्द्रयमसोमाप्यानवेष्वप्यम्-
नीशादीनथ वा न्यसेत् स्मररिपौ स्कन्देऽथ कारयत्मसु ।
गुह्ये जानुपदाग्रयोश्च मनुवर्णान् षण्मनूंश्च न्यसेत्
षण्मन्त्रान् गणपेऽप्यजानुषु सनाभिष्वेषु तानार्यके ॥
स्वमूलमन्त्रन्यसनं समासादित्युक्तमष्टार्णदशाङ्गकाथम् ।
कल्पान्तरोद्दिष्टविधिप्रपञ्चादिङ्मात्रसिद्ध्यै कथयामि किञ्चित् ॥
आधार' ख० पाठः.

विमर्शिनी ।

तत्राङ्गुलीनियममाह — ईशानादिष्विति । ईशानादिषु ईशानतत्पुरुषाघोरवामदेवसद्योजातेषु । ज्येष्ठाद्याः अङ्गुष्ठतर्जनीमध्यमानामिकाकनिष्ठिका अङ्गुलयः केवलाः स्युः । ज्येष्ठोपगृहीता वा अङ्गुष्ठेन युक्तास्तर्जन्याद्या वा । सा तु ज्येष्ठा पुनस्तर्जन्योपग्राह्या योज्या ॥ १८ ॥

विवरणम् ।

ईशानादिष्विति । स्थितिपक्षे सर्गपक्षेऽपि समानमेतदिति बोद्धव्यम् ॥ १८ ॥

ईशाङ्गुष्ठादिक्लृप्त्या करयुजि वपुषीशानमूर्धाभिक्लृप्त्या
न्यस्येद्वा पञ्चमूर्तीः स्मरजिति महिषारौ तथा पञ्चदुर्गाम् ।
कास्ये हृद्गुह्यजान्वङ्घ्रिषु च मनुलिपीः षण्मुखे षण्मनून् स-
द्वैपास्येऽस्मिन्नथार्ये न्यसतु विगतजानुष्वमून् नाभिमत्सु ॥

विमर्शिनी ।

शिवे पक्षभेदमाह — ईशाङ्गुष्ठेति । स्मरजिति उक्ताः पञ्चमूर्तीः करयुजि करयोर्न्यासे ईशाङ्गुष्ठादिक्लृप्त्या च क्रमेण वपुषि देहे सूत्रन्यासे वक्त्रन्यासे च ईशानमूर्धाभिक्लृप्त्या 'नं ईशानमूर्ध्ने नमः' इत्यादि 'नं ईशानोर्ध्ववक्त्राय नम' इत्यादिक्लृप्त्या च न्यस्येद्वा । महिषारौ तथा मूर्धादिक्रमेण पञ्चदुर्गा न्यसेत् । षण्मुखे कास्ये मूर्धाननयोर्हृद्गुह्यजान्वङ्घ्रिषु च मनुलिपीः मन्त्राक्षरान् न्यसेत् । सद्वैपास्येऽस्मिन् गणपतिस्कन्दयोः षण्मन्त्रांश्च उक्तेषु षट्सु स्थानेषु न्यस्येत् । अथार्ये अमून् स्वषण्मन्त्रान् विगतजानुषु नाभिमत्सु षट्सु स्थानेषु न्यसतु ॥ १९ ॥

विवरणम् ।

मतान्तरं करन्यासे देहन्यासे च दर्शयति — ईशाङ्गुष्ठादिक्लृप्त्येति । उभयोरपि सर्गक्रमेण न्यासोऽयमुक्तः । महिषारौ तथा पञ्चदुर्गामिति । सैदुर्गायाः । मनुलिपीरिति । मन्त्रवर्णान् । षण्मनून् सद्वैपास्येऽस्मिन्निति । षण्मुखे गणपतौ च । आर्ये इति । कास्यहृन्नाभिगुह्यपादेषु षण्मनूनित्यर्थः ॥ १९ ॥

---

१. 'क्षे च समा' क. ख. पाठः.

आधारहृद्वदनदोःपदमूलनाभौ
कण्ठे सनाभिहृदयस्तनपार्श्वपृष्ठे ।
कास्येक्षणश्रवणगन्धवहे च दोःप-
त्सन्ध्यङ्गुलीषु हृदि धातुषु सानिलेषु ॥ २० ॥

मूर्धेक्षणास्यहृदयोदरसोरुजङ्घा-
पादद्वयेषु लिपिशो न्यसतु क्रमेण ।
गण्डांसकोरुचरणेषु रथाङ्गशङ्ख-
श्रीमद्गदाम्बुजपदेषु समाहितात्मा ॥ २१ ॥

विमर्शिनी ।

विष्णावष्टाक्षरवर्णैर्दशावृत्तिन्यासमाह --- आधारेति । आधारहृद्वदनदोःपदमूलनाभौ मूलाधारे हृदये वदने च करचरणयोर्मूलेषु चतुर्षु नाभौ च अष्टाक्षरस्य लिपिशः अक्षरशः क्रमेण न्यसतु इति प्रथमावृत्तिः । कण्ठे सनाभिहृदयस्तनपार्श्वपृष्ठे नाभौ हृदये स्तनयोः पार्श्वयोः पृष्ठे च इति द्वितीया । कास्येक्षणश्रवणगन्धवहे च मूर्ध्नि आस्ये नेत्रयोः श्रोत्रयोः नासिकयोश्च इति तृतीया । दोःपत्सन्ध्यङ्गुलीषु करयोः पदयोश्च प्रत्येकं सन्धित्रये पञ्चस्वङ्गुलीषु चतस्र आवृत्तयः । एवं सप्तावृत्तयो गताः करयोः । हृदि हृदये, एवं धातुषु त्वगसृङ्मांसमेदोस्थिमज्जाशुक्लेषु सानिलेषु अनिलसहितेषु, प्राणे चेत्यर्थः । अत्र तु 'ओं ओं ओं त्वगात्मने नमः' 'ओं नं ओं असृगात्मने नमः' इत्यादयो मन्त्रा ऊहनीयाः । इत्यष्टम्यावृत्तिः । मूर्धेक्षणास्यहृदयोदरसोरुजङ्घापादद्वयेषु मूर्ध्नि नेत्रद्वये वक्त्रे हृदये जठरे ऊरुद्वये जङ्घाद्वये पादद्वये च नवम्यावृत्तिः । गण्डांसकोरुचरणेषु गण्डद्वयेऽंसद्वये ऊरुद्वये चरणद्वये च चतुरो वर्णान् न्यस्य रथाङ्गशङ्खश्रीमद्गदाम्बुजपदेषु रथाङ्गादिस्थानेषु चक्रे शङ्खे कौमोदक्यां पद्मे च स्वस्वमुद्राभिः सह चतुरो वर्णान् न्यस्येत् । एषा दशम्यावृत्तिः । समाहितात्मा अष्टार्णद्वादशार्णयोर्मन्त्रयोर्योगं,

---

१. 'षु च च' क. पाठः.

"ततोऽष्टाक्षरपूर्त्यर्थं स्मर्तव्यो द्वादशाक्षरः"

इति प्रपञ्चसारोक्तस्थितिं जानन्नित्यर्थः ॥ २०, २१ ॥

विवरणम् ।

विष्णौ न्यासान्तरं दशावृत्तिरूपमाह — आधारेति । दोःपदमूलेति स्तनपार्श्वेतीक्ष्णश्रवणगन्धवहेति दोःपदिति च द्वयं द्वयं गृह्यते । हृदि धातुषु सानिलेष्विति । हृद्येवं न्यासः । तत्र च त्वगादिसप्तधातुषु प्राणे चेति भावः ॥ २० ॥

रथाङ्गं चक्रम् । पदशब्दः स्थानवचनः । चक्रादीनां तत्तन्मुद्रया न्यासः । समाहितात्मेति तादृग्विधमूर्तिदशानुसन्धानमुक्तम् ॥ २१ ॥

न्यस्याष्टार्णदशाङ्गमित्यलिककुक्ष्योर्हृद्गलेऽर्काक्षरै-
र्न्यस्येद् दक्षिणपार्श्वकांसगलवामैतत्त्रयीपृष्ठके ।
मूर्तीः केशवपूर्विकाः ककुदि चार्कार्णं च के विन्यसेत्
तद्भावप्रतिपत्तये परिजपेन्मन्त्रं किरीटात्मकम् ॥ २२ ॥

विमर्शिनी ।

इत्यष्टार्णदशाङ्गम् अष्टार्णस्य दशाङ्गाभिधानं न्यासं न्यस्य अलिककुक्ष्योः फालजठरयोः हृद्गले हृदये गले च दक्षिणपार्श्वकांसगलवामैतत्त्रयीपृष्ठके दक्षिणभागगतपार्श्वांसगलेषु वामत एतत्त्रय्यां पार्श्वांसगलेषु च पृष्ठे च ककुदि गलपृष्ठे च अर्काक्षरैः द्वादशाक्षरस्य द्वादशभिरक्षरैः बीजमूर्तैः सह केशवपूर्विका मूर्तीः चक्रपूजायां प्रोक्ताः क्रमेण न्यस्येत् । के मूर्ध्नि अर्कार्णं द्वादशाक्षरं स्वयं च विन्यसेत् । तद्भावप्रतिपत्तये विष्णोस्तादात्म्यप्राप्तये किरीटात्मकं मन्त्रोद्धारं वक्ष्यमाणं मन्त्रं परिजपेत् ॥ २२ ॥

विवरणम् ।

इत्यष्टार्णदशाङ्गं न्यस्येत्यन्वयः । अर्काक्षरैः केशवपूर्विका मूर्तीर्न्यस्येद् अर्कार्णं च के विन्यसेदित्यन्वयः । यत्पुरोक्तं विष्णुमधुसूदनावित्यादि तत्र केशवादिचतुष्कं पुनर्विष्ण्वाद्यष्टकं चेति केशवादिद्वादश मूर्तयः स्युरिति ज्ञेयम् । अर्काक्षरपदेन द्वादशार्णस्याक्षराणां ग्रहणं तैस्सहिता द्वादश मूर्तीरित्यर्थः । वामैतत्त्रयीति वामपार्श्वांसगलग्रहणम् । किरीटमनुः कर्मशेषे वक्ष्यते ॥ २२ ॥

आत्मास्यांसोरुयुग्मे षडथ सगलनाभिद्विपार्श्वाख्यपृष्ठा-
त्मोद्देशे कास्यदृङ्नोयुजि करपदसन्ध्यग्रकेषु स्मरारौ ।
न्यस्येत् कास्यात्मकुक्ष्यूरुपदसरसिजे हृत्प्रदेशास्यटङ्कै-
णाभीतीष्टे मुखांसात्मपदसरसिजोरूदरे मन्त्रवर्णान् ॥ २३ ॥

विमर्शिनी ।

शिवे गोलकान्यासमाह— आत्मेति । अथ स्मरारौ षण्मन्त्रवर्णान् आत्मास्यांसोरुयुग्मे हृदये वक्त्रे अंसयोरूर्वोः न्यस्येदिति प्रथमावृत्तिः । सगलनाभिद्विपार्श्वाख्यपृष्ठात्मोद्देशे गले नाभौ पार्श्वयोः पृष्ठे हृदये च द्वितीयावृत्तिः । कास्यदृङ्नोयुजि मूर्ध्नि आस्ये नेत्रयोर्नासिकयोश्च तृतीया । करपदसन्ध्यग्रकेषु करयोः पदयोः सन्धिपञ्चकेष्वग्रेषु च चतस्र आवृत्तयः । एवं सप्तावृत्तयो गताः । कास्यात्मकुक्ष्यूरुपदसरसिजे मूर्ध्नि आस्ये हृदये जठरे ऊरुद्वये पादद्वये चाष्टमी । हृत्प्रदेशास्यटङ्कैणाभीतीष्टे हृदये आस्ये कुठारे मृगे अभीतौ वरदे च नवमी । तत्रायुधचतुष्के तत्तन्मुद्राभिः सह न्यासः कर्तव्यः । मुखांसात्मपदसरसिजोरूदरे मुखे अंसद्वये[1] हृदये पादद्वये ऊरुद्वये जठरे च दशमी चावृत्तिः ॥ २३ ॥

विवरणम् ।

शिवेऽपि तथा न्यासान्तरमाह — आत्मास्येति । आत्मेति हृदयम् । कास्यदृङ्नोयुजीति । मूर्धास्यनेत्रद्वयनासिकाद्वयेषु । करपदेति द्विद्विग्रहणं । पञ्च सन्धयोऽभिप्रेयन्ते । टंकादिपदैः परशुमृगाभयवरदानां ग्रहणम् । तत्तन्मुद्रादिभिश्च तेषां न्यासः ॥ २३ ॥

मूलेनोर्ध्वाधःक्रमाद् गोलकावद्
व्याप्य न्यस्येत् पूरुषाघोरवामान्[2] ।
सद्येशौ फालांसयुक्कुथिहृत्स्व-
प्वेतत्स्फूर्त्यै स्थाणुमन्त्रं जपेत् त्रिः ॥ २४ ॥

---

१. 'दये पदद्वये च' क. पाठः. २. 'रसद्यान् । वामेशौ' ख. पाठः.

विमर्शिनी ।

पुनर्मूलेन ऊर्ध्वाधःक्रमात् ऊर्ध्वमुखमधोमुखं च गोलकावत् गोलकास्थापनवद् व्याप्य फालांसयुक्कुक्षिहृत्सु फाले अंसयोः कुक्षौ हृदये च पूरुषाघोरवामान् सद्येशौ च न्यसेत् । एतत्स्फूर्त्यै एतन्मन्त्रमूर्तिस्फुरणाय स्थाणुमन्त्रं 'नमोऽस्तु स्थाणुभूताये'ति मन्त्रं त्रिः त्रिष्कृत्वा जपेत् ॥ २४ ॥

विवरणम् ।

ऊर्ध्वाधःक्रमादिति । पादतलादिकेशान्तं तदादि पादतलान्तं च ॥

हृत्फालान्तशिखासु बाहुयुगमध्ये लोचने दोस्तले
सर्वेषु स्वषडङ्गकानि विनिमय्याक्ष्यस्त्रयोस्तु क्रमम् ।
लक्ष्मीनाथषडास्यकुम्भरिपुमूलेष्वेषु निर्नेत्रकं
पञ्चाङ्गानि पिचण्डपृष्ठसहितेष्वष्टाङ्गकानि न्यसेत् ॥ २५ ॥

विमर्शिनी ।

अथ सामान्येनाङ्गन्यासमाह — हृदिति । हृत्फालान्तशिखासु हृदये फालान्ते शिखायां च बाहुयुगमध्ये लोचने दोस्तले च सर्वेषु देवेषु स्वस्वषडङ्गकानि न्यस्येत् । लक्ष्मीनाथषडास्यकुम्भरिपुमूलेषु विष्णुस्कन्ददुर्गाणां मूलमन्त्रेषु तु अक्ष्यस्त्रयोः नेत्रास्त्रयोः क्रमं विनिमय्य व्यत्यासं कृत्वा । अस्त्रानन्तरमेव नेत्रं न्यसेदित्यर्थः । पञ्चाङ्गानि एषु स्थानेषु मध्ये निर्नेत्रकं नेत्ररहितं न्यसेत्[1] । अष्टाङ्गकानि पिचण्डपृष्ठसहितेषु हृदयादिषु[2] उदरे[3] पृष्ठे च न्यसेत् । अङ्गानां मन्त्रा मुद्राश्च द्वादशात् पटलादवगन्तव्याः ॥ २५ ॥

विवरणम् ।

अथ सर्वेष्वङ्गन्यासं दर्शयति — हृत्फालान्तेति । तत्तन्मुद्राभिरङ्गानां न्यासः । विनिमय्याक्ष्यस्त्रयोस्तु क्रममिति । मन्त्रयोः क्रमव्यत्ययं तु वक्ष्यति 'नेत्रास्त्रक्रमविनिमयवन्ति हरिस्कन्ददुर्गास्वि'ति । तथा चेहाक्ष्यस्त्रशब्दाभ्यां[4] तदीयस्थाने लोचने दोस्तले इत्येते लक्ष्येते[5] । मन्त्रविनिमयतस्तयोः स्थानविनिमयोऽपि स्यादिति भावः । लक्ष्मीनाथे त्वष्टाङ्गविषयमेतदिति बोद्धव्यम् ।

---

१. 'कृत्वा' ङ. पाठः. २. 'स्वे' ख. पाठः. ३. 'पूदरे' क. पाठः.
४. 'ङ्गन्या' ङ. छ. पाठः. ५. 'विवक्ष्येते' ङ. पाठः.

निर्नेत्रकं पञ्चाङ्गानीति । नेत्रस्थानरहितमित्यर्थः । पिचण्डमुदरम् । सर्वत्रास्त्रादिरिक्तं सर्वमुपाङ्गमिति मन्तव्यम् ॥ २५ ॥

भूषायुधादिन्यसनं यथार्हं
कृत्वा धियेष्ट्वा हृदये प्रकल्प्य ।
जप्त्वा यथाशक्ति मनूत्तमं स्वं
बहिःसपर्यादिकमारभेत ॥ २६ ॥

विमर्शिनी ।

भूषायुधादिन्यसनं यथार्हं स्वस्वध्यानश्लोकादवगम्य कृत्या हृदये प्रकल्प्य धियेष्ट्वेति योजना । हृदि मन्त्रमूर्तिं प्रकल्प्य मानसपूजां कृत्वेत्यर्थः । मानसपूजामन्त्राश्च द्वादशे पटले वक्ष्यन्ते । पुनः स्वं स्वं मनूत्तमं यथाशक्ति जप्त्वा बहिःसपर्यादिकं बाह्यपूजाया आदिभूतं शङ्खपूरणमारभेत ॥ २६ ॥

विवरणम् ।

भूषायुधादिन्यसनं यथार्हमिति । विष्णौ किरीटमकुटमकरकुण्डलवनमालाश्रीवत्सकौस्तुभानि भूषणानि । यद्वा कल्पान्तरसिद्धानि दिवात्मने किरीटाय नमः, वर्णात्मने पट्टबन्धाय, सावित्र्यात्मने तिलकाय, शब्दादिविषयात्मभ्यां मकरकुण्डलाभ्यां, ललितादिरागात्मभ्यां कर्णावतंसाभ्यां, षड्जादिस्वरात्मने ग्रीवाभूषणाय, व्याहृत्यात्मने स्कन्धभूषणाय, शब्दादितन्मात्रात्मने वदनाय, विज्ञेयादिविषयात्मभ्यां केयूराभ्यां, अणिमाद्यात्मभ्यां हस्तकटकाभ्यां कर्मेन्द्रियात्मभ्योऽङ्गुलीयकेभ्यः, ज्ञानेन्द्रियात्मभ्यामिषुधिभ्यां, मनोवेगात्मने चक्राय, अहंकारात्मने शंखाय, बुद्ध्यात्मने गदायै, इन्द्रियात्मने पद्माय, प्रणवात्मने शार्ङ्गाय, तत्त्वात्मने ज्यायै, नादात्मने बाणाय, विद्यात्मने खड्गाय, मायात्मने चर्मणे, प्रकृत्यात्मने श्रीवत्साय, पुरुषात्मने कौस्तुभाय, पञ्चभूतात्मने वनमालायै, उदात्तादिस्वरात्मने हाराय, नागादिवाय्वात्मने ब्रह्मसूत्राय, वचनादिविषयात्मभ्यः सन्धिबन्धनेभ्यः, मन्त्रात्मने कुक्षिबन्धनाय, प्राणादिवाय्वात्मने नाभिकमलाय, दिगात्मने पीतांबराय, अथर्वाङ्गिरसात्मने कटिसूत्राय, अथर्वात्मभ्यां जङ्घाभूषणाभ्यां ऋग्यजुःसामात्मभ्यः कटकान्दुकनूपुरेभ्यः, इति शार्ङ्गादीनां

विवरणम् ।

तद्योग एव न्यासः । यथार्हमिति ह्युक्तम्[1] । शिवे तु चन्द्रकलाकपर्दकुण्डलद्वयमहगस्त्रनां न्यासः । यद्वा अं जटामकुटाय नमः, कं गङ्गायै, खं चन्द्रकलायै गं नागाभ्यां, घं पट्टबन्धाय, ङं ललाटभूषणाय, चं दक्षिणकर्णावतंसाय, छं सव्यकर्णावतंसाय, जं दक्षिणकर्णतटस्थाय, झं सव्यकर्णतटस्थाय, ञं दक्षिणकर्णकुण्डलाय, टं सव्यकर्णकुण्डलाय, ठं गलभूषणाय, डं पतगाय, ढं हाराय, णं मालायै तं ब्रह्मसूत्राय, थं दक्षिणहस्ताङ्गदाय, दं सव्यहस्ताङ्गदाय, धं दक्षिणहस्तकटकाय, नं सव्यहस्तकटकाय, पं दक्षिणहस्ताङ्गुलीयकेभ्यः, फं सव्यहस्ताङ्गुलीयकेभ्यः, बं परशवे, भं मृगाय, मं अभयाय, यं वरदाय, रं उदरबन्धाय, लं काञ्च्यै, वं चर्माम्बराय, शं दक्षिणपादकटकाय, षं सव्यपादकटकाय, सं दक्षिणपादनूपुराय, हं सव्यपादनूपुराय, ळं दक्षिणपादाङ्गुलीयकेभ्यः, क्षं सव्यपादाङ्गुलीयकेभ्यो नम इति । एवं हरिहरादिष्वपि । वक्ष्यमाणध्यानश्लोकेषु तत्तदायुधोक्तिः । भूषणमात्रन्यासविधावेव पृथगायुधन्यास इष्यते । भूषायुधादिन्यसनमित्यादिशब्देन सति संभव आवरणन्यासः पुनरङ्गादिन्यासस्तत्तदुक्तमुद्राबन्धनञ्चोक्तम्[2] । वक्ष्यति च— विष्णुशिवे[3] — लिङ्गमुद्रापद्ममुखीप्रसादनीवन्दनीप्रणाममुद्राः, दुर्गायां[4] —योनिमुद्राञ्जलिवन्दनीप्रणाममुद्रा इत्यादि । हृदये प्रकल्प्य धियेष्ट्वेत्यन्वयः । षड्भिष्षोडशभिर्वोपचारैरयं मानसो योगो[5]ऽभिप्रेतः । जलगन्धादिसमर्पणञ्च तन्मुद्राभिः कार्यम् । तन्मन्त्राश्च कर्मशेषपटलभाविनः । स्वं मनूत्तममिति । तदर्थप्रतिपत्तियुक्तमिति भावः । षोडशोपचारसंभवे प्रणामब्रह्मार्पणप्रसन्नार्घ्याद्यपि कार्यम् । षडुपचारसंभवे प्रणामब्रह्मार्पणे भवतः । मानसपूजान्ते लयाङ्गन्यासोऽर्थसिद्ध इति । बहिस्सपर्यादिक्रमिति आत्मरावनपीठपूजादिसर्वग्रहणम् । तदारम्भश्शङ्खपूरणमिति । 'शुचिजलैरापूर्ये'ति 'वर्धन्यां प्रतिषिच्ये'ति च वक्ष्यमाणत्वात् । पूर्वं तावत्करकादिभाजने शुचिजलं संगृह्य तस्मिन् गन्धपुष्पाक्षतं प्रणवेन निक्षिप्य मूलेनाभिमन्त्र्य 'इमा आपः शिवाः सन्त्वि'ति मन्त्रेणाप्यभिमन्त्रयेत् । करक्षालनाद्यर्थं सोदकं भाजनान्तरमपि सन्निधापनीयम् । तदुक्तं —

वर्धनीं वामतः स्थाप्य क्षालनीञ्च तथा न्यसेत् ।

इति । वक्ष्यति च 'पुष्पादिकं दक्षिणे', उत्पूतं जलमन्यत' इति ॥ २६ ॥

---

१. 'त्युक्तम् क. ङ. पाठः २. 'ङ्गर्ष्यादि' ख. ग. छ. ङ. पाठः. ३. 'पद्मलिङ्ग' ग. पाठः. ४. दुर्गायाः' च. पाठः. ५. योगो' च. पाठः.

कृत्वा गोमयवारिणा सुचतुरश्रं स्थण्डिलं तारतो
निक्षिप्याक्षतगन्धपुष्पकममुष्मिन्नस्त्रसंशोधितम् ।
शङ्खाङ्घ्रिं प्रणिधाय शङ्खमपि तत्तन्मन्त्रतो मन्त्रवि-
च्छङ्खे न्यस्य हृदात्मकेन मनुना गन्धप्रसूनाक्षतम् ॥ २७ ॥

सक्षाद्येन शिखा[1]णुना शुचिजलैरापूर्य गन्धार्तवं
न्यस्याग्न्यर्कसुधांशुबिम्बमनुभिः प्रार्च्याङ्घ्रिशङ्खोदकम् ।
गालिन्या शिखयोत्प्लूय विविषीकृत्यामृतीकृत्य तत्
तोयं नेत्रनिरीक्षितं करयुजा प्रच्छाद्य वर्माणुना ॥ २८ ॥

बद्ध्वास्त्रेण दिशोऽथ तीर्थमनुना तीर्थं रवेर्मण्डला-
दावाह्यार्चितपीठके स्वहृदयाद् देवं च मूलाणुना ।
आवाह्याङ्गयुतं समर्च्य परमीकृत्य प्रजप्याष्टशो
वर्धन्यां प्रतिषिच्य किञ्चिदमुनात्मान्तं त्रिरभ्युक्षतु ॥ २९ ॥

विमर्शिनी ।

शङ्खपूरणक्रममाह—कृत्वेति । मन्त्रविदित्यनेन शङ्खपूरणस्य सारांशो गुरुमुखादवगन्तव्य इति सूचितम् । मन्त्रसहिता एव सर्वाः क्रियाः कार्या इति च सूचितम् । गोमयवारिणा स्वस्याग्रतः सुचतुरश्रं स्थण्डिलं कृत्वा अमुष्मिन् तारतोऽक्षतगन्धपुष्पकं निक्षिप्य तत्र अस्त्रसंशोधितम् अस्त्रमन्त्रेण क्षालितं शङ्खाङ्घ्रिं शङ्खमपि तत्तन्मन्त्रतः स्वस्वमूलमन्त्रेण वा वह्निसूर्यमण्डल-मन्त्राभ्यां वा प्रणिधाय शङ्खे हृदात्मकेन मनुना हृदयमनुना गन्धप्रसूना-क्षतं न्यस्य सक्षाद्येन लिपिप्रतिलोमसहितेन शिखाणुना शुचिजलैः पूर्वमेव गालितैः वर्धनीपात्रे पूरितैः क्षिप्तगन्धाक्षतपुष्पैः

"इमा आपः शिवाः सन्तु शुभाः शुद्धाश्च निर्मलाः ।
पावनाः शीतलाश्चैव पूताः सूर्यस्य रश्मिभिः ॥"

इति जप्तैर्जलैरापूर्य गन्धार्तवं गन्धपुष्पाक्षतं न्यस्य अग्न्यर्कसुधांशुबिम्बमनुभिः 'मं वह्निमण्डलाय नमः' 'अं सूर्यमण्डलाय नमः' 'उं सोममण्डलाय नमः इति मन्त्रैः अङ्घ्रिशङ्खोदकं शङ्खपादं शङ्खजलं च क्रमेण प्रार्च्य गालिन्या

1. 'री' इति मूलकोशपाठः।

मुद्रया शिखया मन्त्रेण च उत्प्लूय उत्पवनं कृत्वा विविषीकृत्य गरुडमुद्रया सह निर्विषीभवेति निर्विषीकरणं कृत्वा, अमृतीकृत्य सुरभिमुद्रया सहामृतीभवेति अमृतमुद्रयामृतीकरणं च कृत्वा नेत्रनिरीक्षितं नेत्रमन्त्रेणावलोकितं तत् तोयं करयुजा हस्तद्वयेन वर्माणुना कवचमन्त्रेण प्रच्छाद्यास्त्रेण दिशो बद्ध्वाथ रवेर्मण्डलात् तीर्थमनुना

"गङ्गे च यमुने चैव गोदावरि सरस्वति ।
नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु ॥ "

इति मनुना वा 'ओं ह्रीं गङ्गायै विश्वमुख्यै शिवामृतायै नारायण्यै नमो नम-इति मनुना वा तीर्थमावाह्य अर्चितपीठके 'ओं पद्माय नमः' इति पीठमिष्ट्वा स्वहृदयाद् मूलाणुना देवं चावाह्य अङ्गयुतन् अङ्गं कृत्वा मूलेन समर्च्य प्रणवेन परमीकृत्य निष्कलीकृत्याष्टशो मूलं प्रजप्य वर्धन्यां वर्धनीपात्रे किञ्चित् प्रतिषिच्य अमुना जलेन आत्मानं पूजासाधनान्यात्मानं च त्रिः त्रिकृत्वोऽभ्युक्षतु ॥ २७, २८, २९, ॥

विवरणम् ।

सुचतुरश्रं स्थण्डिलमिति । वामतश्च स्वाग्रत एतदिति सम्प्रदायः । तारत इति कृत्वा निक्षिप्येत्युभयत्रापि सम्बद्ध्यते । अमुष्मिन्निति स्थण्डिले । तत्तन्मन्त्रत इति । शक्तिमूलाभ्यां वा वह्निसूर्यबिम्बमन्त्राभ्यां वा क्रमेणानयोर्न्यासः । एतदर्थं मन्त्रविदित्येतत् ॥ २७ ॥

साक्षाद्येन शिरोणुनेति । लिपिप्रतिलोमं शिरोमन्त्रश्चोच्चरन्नित्यर्थः । प्राग्बिम्बमन्त्रयोगे सोममण्डलमन्त्रोऽपि मध्य उच्चार्यते । गन्धार्तवं न्यसेति । तस्मिन्नुदके गन्धालोडनं पुष्पक्षेपञ्च प्रणवेन हृदैव वा कृत्वेत्यर्थः । मन्त्रविदिति ह्युक्तम् । प्रार्च्येति जलगन्धपुष्पैरर्चनमुक्तम् गालिन्या शिखयोत्प्लूयेति । गालिनीमुद्रा वक्ष्यत एव, तया तदुदकस्योत्पवनं कार्यम् । विविषीकृत्येति गरुडमुद्रया निर्विषीकरणमुक्तम् । मन्त्रोऽपि गरुडबीजं 'ओं क्षीं नमः' इत्येतत् अमृतीकृत्येति वक्ष्यमाणामृतबीजेन सुरभिमुद्राबन्धनमुक्तम् । तत्तोयमिति संबन्धनीयम् । करयुजा प्रच्छाद्य वर्माणुनेति वाक्यम् । ॥ २८ ॥

तीर्थमनुनेति । 'ओं गां गङ्गायै विश्वमुख्यायै शिवामृतायै नारायण्यै नमो नम' इति मन्त्रः । देवञ्चेति आवाह्येति संबध्यते । परमीकृत्येति वामकरतले शंखं कृत्वा प्रणवव्यापकेनैतदिष्यते । प्रजप्याष्टश इति । मूलमिति शेषः । वर्षन्यां प्रतिषिच्य किञ्चिदिति वाक्यम् । अमुनेति । शंखे शिष्टोदकेन । आत्मान्तामिति गन्धपुष्पादिसकलसाधनम् । मण्डलादिपूजायां तदपि पुनरेवात्मानमिति भावः । त्रिरभ्युक्षत्विति । मन्त्रविदित्यनुवर्तत एव । द्रव्याणि स्थण्डिलादिपूजायां तच्चात्मानं च फडन्तप्रणवेनास्त्रेण वा त्रिः संप्रोक्षेदित्यर्थः ॥ २९ ॥

न्यासक्रमान्निजतनौ प्रयजेत पीठं
हृद्वारिजन्मनि समर्च्य परं महस्तत् ।
त्र्याधारभाञ्ज्यणुमहांसि निरञ्जनांशै-
रिष्ट्वा नयेत् प्रणवतः क्रमवित् तदैक्यम् ॥ ३० ॥

विमर्शिनी ।

अथात्माराधनमाह— न्यासक्रमादिति । निजतनौ न्यासक्रमात् पीठन्यासक्रमेण पीठं प्रयजेत । हृद्वारिजन्मनि हृदयकमले तद् मूलमन्त्रात्मकं परं परमात्मरूपं महस्तेजो मूलेन समर्च्य आवाहनादिपूर्वं सम्यगर्चयित्वा त्र्याधारभाञ्जि मूलाधारहृदयभ्रूमध्यस्थानि अणुमहांसि आत्मान्तरात्मपरमात्मभूतानि मन्त्रतेजांसि निरञ्जनांशैः 'अं नमः' 'उं नमः' 'मं नमः' इति मन्त्रै-रिष्ट्वा प्रणवतः पुष्पाराधनेन तदैक्यं नयेत् । क्रमविदित्यनेनात्माराधने केषाञ्चित् पक्षे क्रमव्यत्यासः सूचितः ॥ ३० ॥

विवरणम् ।

इदानीमात्माराधनमाह — न्यासक्रमादिति । हृद्वारिजन्मनीति हृदय-पद्मे । समर्च्य परं महस्तदिति । प्राक् तस्मिन् परिकल्पयेच्चेत्यत्र कल्पनामात्रं चेदिहापि कल्पनैव । तत्रावहनादि कृतञ्चेदिहापि तत्कर्तव्यमिति ज्ञेयम् । नात्र विग्रहः, किन्तु तेजोरूपमेवेति । परं महस्तदिति यदेवोक्तं मूलमन्त्रेणैव च समर्चनं त्र्याधारभाञ्ज्यणुमहांसीति तदेव मान्त्रं महो मूलाधारे हृदये

---

१. 'चरमीकृत्येति' च. पाठः. २. 'मन्त्रेणैव' घ. च. पाठः

पुनर्भ्रूमध्ये ब्रह्मरन्ध्रे वा तदीयपद्मकर्णिकायां प्रणवांशैरकारादिभिस्तारपुटितैर्नमोन्तैर्विहृत्य तैरेव जलगन्धादिभिः पूजयेत् । पीठपूजायां कृतायां मूर्तिपूजामपि कृत्वा तस्यामाधारत्रयमपि शक्त्यंशैर्विभाव्य पुनर्हृदि मान्त्रम्महः पूजनीयम् । क्रमवित्पदेनैतत्सर्वमुक्तम् । प्रणवतस्तदैक्यं नयेदिति । प्लुतंप्रणवमुच्चरन् मूलाधारगतमहसो हृदवधि नीवारशूकाभतयोद्गमनं तदा तन्महसैकीभावं ततश्च तदुपर्याधारावधि तथोद्गमनं तदा च तद्गतेनैकीभावः । पुनर्द्वादशान्तावधि तथोद्गमनं च विभावयेदिति भावः ॥ ३० ॥

आयम्य वायुमणुना सकलीक्रियां च
कृत्वासनाद्युपहृतिं क्रमशः समर्प्य ।
तारोपचारनिजमूलतदक्षराद्यै-
र्न्यासक्रमादभियजेज्जलगन्धपूर्वैः ॥ ३१ ॥

विमर्शिनी ।

मूलेनाणुना वायुमायम्य सकलीक्रियां च कृत्वा आसनाद्युपहृतिं क्रमशः समर्प्य जलगन्धपूर्वैरुपहारैस्तारोपचारनिजमूलतदक्षराद्यैर्न्यासक्रमादभियजत् ॥ ३१ ॥

विवरणम् ।

पुनर्मूलमन्त्रेण त्रिवारं प्राणायामं कृत्वा देहत्रय[2]व्याप्तिमपि विभाव्य व्यापकाक्षराङ्गायुधन्यासैः सकलीकुर्यात् । जलगन्धपूर्वैरिति दीपान्तानां ग्रहणम् ॥ ३१ ॥

मूलेन गन्धरसलिप्ततनुर्मुरारौ
स्वैर्मूर्तिपञ्जरपदेष्वणुभिर्द्विषड्भिः ।
फाले गलेऽसयुगले हृदि पञ्चमन्त्रै-
रीशेऽनुलिम्पतु परेष्विति मूलतोऽथ ॥ ३२ ॥

विमर्शिनी ।

अथ मूलेन गन्धरसलिप्ततनुः अष्टगन्धरसेनानुलिप्ताङ्गो भूत्वा मुरारौ मूर्तिपञ्जरपदेषु मूर्तिपञ्जरन्यासस्थानेषु स्वैः केशवादिभिः द्विषड्भिः (अणुभिः)

---

१. 'तं' ख. ग. घ. ङ. च छ. पाठः. २ 'तेजस्त्रय' ङ. पाठः.

द्वादशमन्त्रैरूर्ध्वपुण्ड्राण्यनुलिम्पतु । ईशे फाले गलेंऽसयुगले हृदि च पञ्चमन्त्रै-स्तिर्यक्पुण्ड्राण्यनुलिम्पतु । परेष्विति पञ्चस्थानेषु मूलतश्च ॥ ३२ ॥

विवरणम् ।

तत्र पुष्पानन्तरं किञ्चित्कर्तव्यमस्तीत्याह — मूलेनेति । लिप्तेति मूर्धादिपादान्तं गन्धार्द्रकरतलद्वयेन व्यापकाभिप्रायम् । मुरारौ स्वैर्द्विषड्भि-रणुभिर्मूर्तिपञ्जरपदेष्वनुलिम्पत्विति सम्बन्धः । द्वादशमूर्तिमन्त्राः केशवनारा-यणादिमन्त्राः । तत्स्थानानि चालीककुक्ष्योर्हृद्गल इत्याद्युक्तानि । द्वादशार्ण-वर्णयोगस्त्विहापीष्यते । ऊर्ध्वपुण्ड्रानुलेपनञ्चैतत् । ईशे फाले गलेंऽसयुगले हृदि पञ्चमन्त्रैरनुलिम्पत्विति । ईशानादिपञ्चब्रह्माणीह पञ्च मन्त्राः । तिर्यक् त्रिपुण्ड्रानुलेपनमेतत् । यदुक्तम् —

"आत्मानमभ्यर्च्य सुगन्धपिष्टेनालिप्य पुण्ड्राणि ललाटमध्ये ।
कण्ठे च अंसद्वितये सितेन हृदन्तरे पञ्चपवित्रमन्त्रैः ॥"

इति । पुनर्भस्मनिक्षेपोऽपि वा कार्यः । यथोक्तम् —

"के वक्त्रे हृदि गुह्ये च पादयोर्वचनेषु च ।
ईशादिपञ्चमन्त्रैस्तु निक्षिपेद्भस्म मन्त्रितम् ॥

अष्टात्रिंशत्कलास्थानेष्वादराच्चाभिरेव च ।
जस्वामिहृदयं तेन रक्षार्थं दिक्षु निक्षिपेत् ॥"

इति । 'स्नात्वाचम्य विधानत' इत्येतदनन्तरं वैवं कृत्वा सुगन्धपिष्टेनेत्याद्युक्तंनयेन तेन भस्मनैव सर्वं विधाय पुनरपि विधानेनाचम्य सुरगृहं सम्प्राप्येत्यादि सर्वं कार्यम् । पुनरिह चैतावद्विधेयमिति । परेष्विति मूलत इति । हरिहरा-दिष्वेवं गन्धरसालेपनपूर्वकं फालगलादिपञ्चस्थानेषु मूलतोऽनुलिम्पत्वित्यर्थः । दुर्गायां हरिवत् स्कन्दगणपत्योश्शिववदितरयोस्तिर्यगूर्ध्वपुण्ड्रविकल्प इति ॥ ३२ ॥

मूलेन मूर्ध्नि मनुना निखिलेषु पञ्च-
कृत्वः किरीटमनुना च रथाङ्गपाणौ[1] ।

---

1. 'द' ब. च. पाठः.

स्थाण्वात्मकेन कुसुमाञ्जलिमीश्वरे च
कृत्वा यजेद् * द्विविधसूनवरैरथेति ॥ ३३ ॥

विमर्शिनी ।

पुष्पपूरणमाह — मूलेनेति । निखिलेषु देवेषु मूलेन मनुना, रथाङ्गपाणौ किरीटमनुना, ईश्वरे स्थाण्वात्मकेन स्थाणुमन्त्रेण च मूर्ध्नि पञ्चकृत्वः पञ्चावृत्त्या कुसुमाञ्जलिं पूर्णपुष्पाञ्जलिं कृत्वाथ द्विविधसूनवरैः श्वेतारुणवर्णविशिष्टपुष्पैः इति वक्ष्यमाणक्रमेण यजेत ॥ ३३ ॥

विवरणम् ।

किरीटमनुना चेति । स्थाण्वात्मकेन मनुना चेत्यत्रापि पञ्चकृत्व इति सम्बध्यते । स्थाण्वात्मकः स्थाणुमन्त्रः । अथ विविधसूनवैरिति । यजेदित्यन्वयः । विविधानि सूनवराणि विशिष्टकुसुमानि । इतिशब्दो वक्ष्यमाणप्रकारार्थः ॥ ३३ ॥

श्वेतारुणक्रमकृतोभयपार्श्वयोगान्
कुर्याद्धरौ द्वितुलसीकणवीरपद्मान् ।
नाभ्यात्मचिल्लयवधि के षडशेषमङ्गे
शेषे शिवेऽर्कयुगपूर्वकमेतदिष्टम् ॥ ३४ ॥

विमर्शिनी ।

तदेव वक्ति — श्वेतेति । हरौ द्वितुलसीकणवीरपद्मान् द्विविधान् श्वेतरक्तवर्णविशिष्टान् तुलसीकणवीरपद्मान् नाभ्यात्मचिल्लयवधि नाभिहृदयभ्रूमध्यावधि यथा भवति तथा श्वेतारुणक्रमकृतोभयपार्श्वयोगान् सितरक्तक्रमेण संपादितं दक्षिणं वामं च पार्श्वं यथा भवति तथा योगमाश्रितांस्तान् कुर्यात् सम्पादयेत् । के मूर्धनि षट् उक्तानि षट् कुसुमानि, शेषेऽङ्गे अशेषं कुसुमं कुर्यात् । शिवे एतत् पुष्पपूरणम् अर्कयुगपूर्वकम् अर्ककणवीरपद्मक्रमेणेष्टं स्यात । अन्यदेवेष्वनयोर्मार्गयोः सदृशं कुर्यात् ॥ ३४ ॥

---

१. 'रैर्यजे' क. ङ. पाठः. २. 'संभिदुरं त' ख. पाठः.

* विविधेति विवरणानुसारी ।

विवरणम् ।

तदेवाह — श्वेतारुणेति । हरौ द्वितुलसीकणवीरपद्मान् नाभ्यात्म-चिल्ल्यवधि कुर्यादित्यन्वयः । पादतलादिनाभ्यन्तं तुलसीद्वयं तदादिहृदयान्तं कणवीरद्वयं तदादि चिल्लीपर्यन्तं पद्मद्वयञ्च कुर्यात् । श्वेतारुणक्रमकृतोभय-पार्श्वयोगानिति तेषां तत्कालविशेषणम् । श्वेतारुणक्रमेण कृत उभयपार्श्वयोगो येषामिति समासः । यथा तुलसीद्वये[1] श्वेततुलसीं पादतलादिनाभ्यन्तं दक्षिणे भागे रक्ततुलसीं वामे भागे कुर्यादित्यादि दक्षिणवामकरयोर्गन्धार्द्रं श्वेत-रक्ततुलसीनिचयं पृथगादाय प्रणवोपचारमूलान्ते तुलसीद्वयं समर्पयामीति मूलञ्चोच्चरन् दक्षिणवामपादतलादि तन्नाभ्यन्तमारोपक्रमेण पूरणधियाराधयेत् । एवं कणवीरद्वयं पद्मद्वयमपि । के षडिति शिरसि षडिमानि कुसुमानि कुर्यात् । प्राग्वद्विशेषणयोजना । दक्षिणकरे श्वेततुलसीकणवीरपद्मनिचयं वामकरे रक्त-तुलसीकणवीरपद्मनिचयं चादाय तेनैव मन्त्रेण चिल्ल्यादिकेशावधि कुर्यादिति भावः । अशेषमङ्गे[4] शेष इति पदम् । करद्वयेनोच्चावचं कुसुमनिचय-मादाय तेनैवं मन्त्रेण पादतलादिकेशान्तं परिपूरणधियाराधयेदिति भावः । श्वेतरक्ततुलस्याद्यसम्भवेऽपि तत्तत्प्रतिपत्त्यैव तुलसीमात्रेणाप्येतत्कार्यम् । शिवेऽर्कयुगपूर्वकमेतदिष्टमिति । तुलसीद्वयस्थानेऽर्कद्वयं पुनः कणवीरद्वयं पद्मद्वयं च एवमेतत् पुष्पपूरणमागमविद्भिरिष्टमित्यर्थः । दुर्गायां हरिवत् स्कन्दविघ्नयोः शिववद्धरिहरे समुच्चयः शास्तरि विकल्प इति पुष्पेज्या तावदेवमुक्ता ॥ ३४ ॥

धूपं च दीपं च समर्प्य तस्मै
निवेद्यबुद्ध्या परचित्सुधार्घ्यम् ।
दत्त्वार्चयित्वा परितोष्य चैनं
लयाङ्गनिष्ठं च समादधीत ॥ ३५ ॥

विमर्शिनी ।

धूपं च दीपं च तत्तन्मुद्रया समर्प्य तस्मै देवाय निवेद्यबुद्ध्या निवेद्य-समर्पणबुद्ध्या परचित्सुधार्घ्यं परचैतन्यामृतरूपमर्घ्यं दत्त्वार्चयित्वा चैनं परितोष्य लयाङ्गनिष्ठं च समादधीत ॥ ३५ ॥

---

१. 'द्वये' ग. पाठः. २. 'दार्द्रि' ख. पाठः. ३. 'कर' ङ. पाठः. ४. 'तं । अशेष इति प' ख. ग. घ. ङ. पाठः.

विवरणम् ।

पुनर्धूपादीज्यामाह — धूपश्चेति । 'तारोपचारनिजमूलतदक्षरा'चैरित्यनुवर्तत एव । मुद्रयैव मानसमेतदिति बोद्धव्यम् । निवेद्यबुद्ध्या पराचित्सुधार्घ्यं दत्त्वेति । शङ्खे जलं गृहीत्वा तच्छक्त्या निवेद्यरसधिया सम्पूज्य मूलेनापीष्ट्वा तत्प्रणवोपचारमूलपूर्वकं सर्वरसमयमर्घ्यं समर्पयामीति स्वात्मनि देवे तद्वोर्क्चरि तदमृतं तत्तेजसि जुह्वदिव तच्छिरसि विनियोगधिया समर्पयेदिति भावः । पुनर्मानसपूजां कुर्यात् । अर्चयित्वेति प्रसन्नपूजोक्ता । परितोष्येति ताम्बूलादिसमर्पणं राजोपचारसमर्पणं पुष्पाञ्जलिजपस्तुतिप्रणामाद्यपि मनसा शक्तितोऽनुष्ठेयमित्युक्तम् । लयाङ्गनिष्ठञ्च समादधीतेति । सम्यग्विदध्यादित्यर्थः । ब्रह्मार्पणं प्रसन्नार्घ्यमवसानीयार्घ्यञ्च कृत्वा लयाङ्गेनात्माराधनं समापयेदिति भावः ॥ ३५ ॥

कृत्वात्मयागमिति तत्त्वनिवेशितात्मा
शङ्खादिकं च परिशोध्य भृतार्घ्यकाद्यः ।
पीठार्चयोः प्रविकिरेत् कुसुमं स्वबीज-
मूलाणुतश्चरतु चानलसालनिष्ठम् ॥ ३६ ॥

विमर्शिनी ।

इति उक्तप्रकारेण आत्मयागं कृत्वा तत्त्वनिवेशितात्मा स्वयं कालस्वरूपी देवोऽहमिति भावयुक्तः पूजां कुर्यात् । तत्र पूजायां प्रथमं शङ्खादिकं च परिशोध्य भृतार्घ्यकाद्यः संभृतार्घ्यपाद्याद्युपहारो भूत्वा पीठार्चयोः पीठे प्रतिमायां च स्वबीजमूलाणुतः स्वशक्तिबीजेन स्वमूलेन च क्रमात् कुसुमं प्रविकिरेत् । अनलसालनिष्ठं तालत्रयादिग्बन्धाग्निप्राकारान् चरतु च ॥ ३६ ॥

विवरणम् ।

कृत्वात्मयागमितीत्युपसंहारः[1] । तत्त्वनिवेशितात्मेति समाराधकस्य यत्तत्त्वं वास्तवं स्वरूपं कालेश्वरादिलक्षणं तस्मिन्नहम्भावेन निवेशितात्मेत्यर्थः । तदुक्तं — 'कालतनुः स्वयं हि कर्ते'ति । शङ्खादिकञ्च परिशोध्येति ।

---

१. 'दित्युपसंहारः' ख. पाठः,

सपादं शङ्खं तत्स्थलञ्च यथास्वं परिशोध्य तथा स्वदेहमपि निर्माल्य-कुसुमादि सर्वं परिहृत्येत्यर्थः[1]। भृतार्घ्यकाद्य इति । भृतिस्संभरणं सम्पादनम् । प्रथमं तावत् सपादं शङ्खं प्राग्वन्निधाय वर्धन्युदकेन पूरयेत् । 'पुनः पाद्यार्घ्या-चामादिक्लृप्त्ये'ति वक्ष्यमाणविनियोगक्रमेणार्घ्यपाद्याचमनीयमधुपर्कानुपकल्पयेत। शङ्खेष्वेषां कल्पनं, शङ्खपूरणवच्च तत्साधनक्रमः । यदुक्तम् — शङ्खपूरण-वदर्घ्यादिपूरणक्रम इति । एकस्मिन् पात्रे गन्धमन्यस्मिन् पात्रेऽक्षतं भाजनान्तरे कुसुमनिचयं चोपकल्पयेत । स्नानोपपत्तौ तु प्रागेव कलशपूजापि कार्या । तत्रैककं पञ्चकं नवकं वा स्यादिति । चरतु चानलसालनिष्ठमित्यत्रेण तालत्रयादि सर्वमुक्तम् ।

"देवभागस्थितं देवं स्वयं तद्भागसंस्थितः ।
अर्चयेत प्रयत्नेन पैशाचासुरवर्जितम् ॥
ब्रह्मस्थानगतं वापि देवदेवं समर्चयेत् ।
देवभागस्थितस्त्वेवं द्रव्यैस्तद्भागसंस्थितैः ॥"

इति ॥ ३६ ॥

गुरूनुदग् दक्षिणतो गणेशं
प्रपूज्य पीठस्य यजेदधस्तात् ।
आधारशक्तिं प्रकृतिं च कूर्मं
स्वमन्त्रतोऽनन्तवसुन्धरे च ॥ ३७ ॥

विमर्शिनी ।

पीठपूजामाह — गुरूनित्यादिभिः । पीठस्योदग्भागे 'गुं गुरुभ्यो नमः' इति मन्त्रेण गुरून्, दक्षिणतो 'गं गणपतये नमः' इति मन्त्रेण गणेशं च प्रपूज्य अधस्ताद् अधोभागे आधारशक्तिं प्रकृतिं कूर्मं चानन्तवसुन्धरे च स्वमन्त्रतः 'ओं आधारशक्त्यै नमः' 'ओं मूलप्रकृत्यै नमः' 'ओं आदिकूर्माय नमः' 'ओं अनन्ताय नमः' 'ओं पृथिव्यै नमः' इति मन्त्रैर्यजेत् ॥ ३७ ॥

विवरणम् ।

गुरूनुदगिति दक्षिणतो गणेशमिति । उभयत्रापि[2] पीठस्येति सम्बन्ध-नीयम् । तत्रापि प्राग्भाग एव गुरुगणपतिस्थानमिति ज्ञेयम् । स्वमन्त्रत

---

१. 'गृह्णोत्यर्थः' ख. पाठः. २. 'चोभयत्र' क. पाठः.

इति सर्वत्रापि योजनीयम् । ओं गुं गुरुभ्यो नमः, ओं गं गणपतये नमः इति । प्रपूज्येत्यनेन जलगन्धादिभिः सम्पूज्य गुरुभ्योऽर्घ्यं दत्त्वानुज्ञा ग्राह्या । गणपतये निवेद्यमर्घ्यं वा दत्त्वानुज्ञा ग्राह्या इत्यप्युक्तम् । पीठस्याधस्तादिति । प्रासादे तावत्पुरा प्रतिष्ठापितेषु निधिकलशादिषु बुद्ध्युद्दिष्टेष्वाधारशक्त्यादिपञ्चकं पूजनीयम् । मण्डलादिषु तथा विभाव्येति बोद्धव्यम् । धर्मादिष्वपि समानमेतत् । बद्ध्वा प्रणवेन तत्तच्छक्तिमन्त्रेण वा पीठे पुष्पेणावाहनबुद्ध्याराध्य तत्र सर्वं यथास्थितरूपेण विभाव्याधारशक्त्यादि सर्वं पूजनीयम् । तदुक्तम्—

'तारेणावाह्य सङ्कल्प्यं तोयाद्यैः पीठमर्चयेत् ।'

इति [1] । स्वमन्त्रत इति स्वेन स्वनाम्नैव मन्त्रः स्वमन्त्रः । ओं आधारशक्त्यै नमः 'ओं मूलप्रकृत्यै नमः इत्यादि ॥ ३७ ॥

अग्न्यादिपीठाङ्घ्रिषु धर्मसंज्ञं
सज्ञानवैराग्यकमर्चयेत ।
ऐश्वर्यसंज्ञं च चतुष्कमेतत्
प्रागादिगात्रेषु च नञ्विशिष्टम् ॥ ३८ ॥

विमर्शिनी ।

पुनरग्न्यादिपीठाङ्घ्रिषु पीठस्याग्निकोणादिपादेषु धर्मसंज्ञं सज्ञानवैराग्यकमैश्वर्यसंज्ञं च । स्वमन्त्रत इति सर्वत्र पूर्वस्मादायाति । 'ओं धर्माय नमः' 'ओं ज्ञानाय नमः' 'ओं वैराग्याय नमः' 'ओं ऐश्वर्याय नमः' इत्यर्चयेत । एतद् धर्मादिकं चतुष्कं नञ्विशिष्टं नञ्समासेन युक्तं प्रागादिगात्रेषु पादोपरिस्थप्रागादिगात्रेषु 'अधर्माय नमः' इत्यादिमन्त्रैरर्चयेत ॥ ॥ ३८ ॥

विवरणम् ।

अग्न्यादिपीठाङ्घ्रिष्विति । प्राङ्मुखे प्रत्यङ्मुखे च देवे इति भावः । नञ्विशिष्टमिति । यथा अधर्मायाज्ञानायेत्यादि ॥ ३८ ॥

स्वाद्यक्षरैः सत्त्वरजस्तमांसि
सम्पूज्य सूत्रत्रितयेऽथ मायाम् ।

---

१. 'मन्त्रः यथा ओं' ख. पाठः.

विद्यां च तच्छादनवस्त्रयुग्मे
तन्मध्यभागे प्रयजेच्च पद्मम् ॥ ३९ ॥

विमर्शिनी ।

सूत्रत्रितये गात्रगतसूत्रत्रये सत्त्वरजस्तमांसि स्वाद्यक्षरैः सह 'सं सत्त्वाय नमः' 'रं रजसे नमः' 'तं तमसे नमः' इति सम्पूज्य अथ तच्छादनवस्त्रयुग्मे सूत्रोपरि संस्तीर्णवस्त्रद्वये 'मं मायायै नमः' 'विं विद्यायै नमः' इति सम्पूज्य तन्मध्यभागे पीठमध्ये 'पं पद्माय नमः' इति पद्मं प्रयजेच्च ॥ ३९ ॥

विवरणम् ।

स्वाद्यक्षरैरिति । सं रं तमित्येभिस्सहितानीत्यर्थः । सूत्रत्रितय इति । तद्गात्रकालेतेषु त्रिविधेषु सूत्रेषु । तच्छादनवस्त्रयुग्म इति । अधश्छद उपरिच्छदे चेत्यर्थः ॥ ३९ ॥

साद्यक्षराणि दलकेसरकर्णिकासु
विष्वग् दिनेशशशिपावकमण्डलानि ।
आत्मान्तरात्मपरमात्मन एवमेव
ज्ञानात्मकं यजतु चोपरि शक्तियुक्तम् ॥ ४० ॥

विमर्शिनी ।

दलकेसरकर्णिकासु पद्मस्य दलेषु केसरेषु कर्णिकायां च विष्वक् परितः साद्यक्षराणि आदिः प्रणवः तस्याक्षरैर्युक्तानि दिनेशशशिपावकमण्डलानि 'अं सूर्यमण्डलाय नमः' 'उं सोममण्डलाय नमः' 'मं वह्निमण्डलाय नमः' इति यजतु । आत्मान्तरात्मपरमात्मन एवमेव दलकेसरकर्णिकासु साद्यक्षराणि 'अं आत्मने नमः' 'उं अन्तरात्मने नमः' 'मं परमात्मने नमः' इति यजतु । तेषामुपरि शक्तियुक्तं शक्तिबीजेन युक्तं ज्ञानात्मकम् 'ओं ह्रीं ज्ञानात्मने नमः' इति यजतु च ॥ ४० ॥

विवरणम् ।

साद्यक्षराणीति । आदिः प्रणवः तदक्षरैरं उं ममित्येतैर्युक्तानि सूर्यसामवह्निमण्डलानि । विष्वगिति पद्मपत्रपङ्क्तौ मण्डलाकारेणावस्थितायां तथा-

वास्थितं सूर्यमण्डलमित्याद्युक्तम् । एवमेवेति । साद्यक्षरान् दलकेसरकर्णिकासु विष्वगित्यर्थः । मण्डलानामभेदेनेति चोक्तम् । ज्ञानात्मकमिति । 'ह्रीं ज्ञानात्मने नमः' इति मन्त्रः ॥ ४० ॥

प्रागादि तत्केसरकर्णिकासु
शक्तीर्नवाराध्य निजाः क्रमेण ।
समष्टिमन्त्रेण यजेन्निजेन
समीरिता पीठसमर्चनेति ॥ ४१ ॥

विमर्शिनी ।

ततः तत्केसरकर्णिकासु पद्मस्य केसरेषु कर्णिकायां च प्रागादि यथा तथा निजाः निजानिजाः नव शक्तीः क्रमादाराध्य निजेन निजनिजेन समष्टिमन्त्रेण च यजेदिति सामान्येन पीठसमर्चना समीरिता ॥ ४१ ॥

विवरणम् ।

निजेन समष्टिमन्त्रेणेति । पीठे तदभिमानिनि तद्व्यापितया पूजेत्यर्थादवसेयम् । गुरवो देवाकाराः,

'ध्यायेद् गजाननं रक्तं बृहत्कुक्षिं चतुर्भुजम् ।
पाशाङ्कुशधरं भक्ष्यं दधानं दन्तमेव च ॥'

इति ।

'धर्मं रक्तं वृषाकारं ज्ञानं श्यामं मृगाधिपम् ।
वैराग्यं पीतभूतं स्यादैश्वर्यं वारणं सितम् ॥'

इति ।

'श्वेता कृष्णा रक्ता पीता श्यामानलोपमा शुक्ला ।
अञ्जनजपासमाना तेजोरूपाश्च शक्तयः प्रोक्ताः ॥'

इति ॥ ४१ ॥

पीठं पङ्कजपश्चिमं महिषजिद्धर्जे समानक्रमं
प्रायः प्रागपि पङ्कजादिदमहीन्द्राढ्यं रमावल्लभे ।
बिम्बात्मोपरिपर्युपेतनवशक्त्येतत् कुमारीहरि-
श्रीशेषु ततः परेषु नवशक्त्यूर्ध्वस्थबिम्बात्मकम् ॥ ४२ ॥

---

१. 'नां भे', २. 'भक्ष' म. पाठः.

विमर्शिनी ।

महिषजिद्वर्जं दुर्गां वर्जयित्वान्येषु पङ्कजपश्चिमं पद्मान्तम् इदं पीठं प्रायः समानक्रमम् । रमावल्लभे इदं पीठं पङ्कजात् प्रागपि अहीन्द्राढ्यम् 'अनन्ताय नमः' इत्यनेन युक्तं भवति । कुमारीहरिशिवेषु दुर्गाविष्णुशङ्करनारायणेषु एतत् पीठं बिम्बात्मोपरिपर्युपेतनवशक्ति मण्डलानामात्मनां चोपरिभागस्थिताभिर्नवशक्तिभिर्युतं, ततः परेषु नवशक्त्यूर्ध्वस्थत्रिम्बात्मकं नवशक्तीनामूर्ध्वस्थितेन मण्डलत्रयेणात्मत्रयेण च युक्तं स्यात् ॥ ४२ ॥

विवरणम् ।

पीठं पङ्कजपश्चिममिति गुर्वादिपद्मान्तम् । महिषजिद्वर्जमिति दुर्गायामेव भेदः । प्राय इति क्वचिद् भेदमात्रसद्भावाभिप्रायम् । तदेवाह—प्रागपीति अहीन्द्रोऽनन्तः । बिम्बात्मोपरीति मण्डलानामात्मनामप्युपरि नवशक्तयो विष्णुदुर्गाहरिहरेष्वित्यर्थः । एतदिति पीठम् । परेष्विति शिवस्कन्दविघ्नार्येषु नवशक्तीनामुपरि मण्डलान्यात्मानश्चेत्यर्थः। ॥ ४२ ॥

मायाब्रह्मयुतावधः प्रकृतिकूर्मौ पीठके केवलैः
स्वाद्यर्णैरपि गात्रगाः सलवकैः सौम्यां च भद्रां जयाम् ।
इष्ट्वार्यां च पुनर्बलप्रबलकौ क्लीवार्णसंभिन्नभं-
बीजाढ्यान् सुबलं महाबलमपीहाग्न्यादिपीठाङ्घ्रिगान् ॥४३॥

सत्त्वादीनि यथोदितं यजतु कन्दं नालपद्मौ क्रमाद्
बिन्द्वन्तैः क्वनलाक्षरैर्विगतबिन्द्वोबीजयुक्ते क्रमात् ।
भास्वच्छीतगुमण्डले हुतभुजो बिम्बं सरंबीजकं
दुर्गायामियती भिदात्र नवशक्त्याद्यं पृथक् प्रोच्यते ॥ ४४ ॥

विमर्शिनी ।

दुर्गायाः पीठे भेदमाह—मायेति । दुर्गायाः पीठके अधः अधोभागस्थौ प्रकृतिकूर्मौ मायाब्रह्मयुतौ भुवनेश्वर्या ककारेण च क्रमाद् युक्तौ 'ह्रीं प्रकृत्यै नमः' 'कं कूर्माय नमः' इतीष्ट्वा गात्रगाः गात्रस्थाः सौम्यां भद्रां ज-

विमर्शिनी ।

याम् आर्यां च केवलैः स्वाद्यर्णैः स्वस्याद्यक्षरैः सल (वैः? वकैः) बिन्दुरहितै रपि बीजैः सह 'सं सौम्यायै नमः' इत्याद्यैर्मन्त्रैरिष्ट्वा पुनरिह गात्रार्चनानन्तरम् अग्न्यादिपीठाङ्घ्रिगान् अग्न्यादिपीठपादगतान् क्लीवार्णसंभिन्नभंबीजाढ्यान् नपुं सकाक्षरैः संभिन्नेन युक्तेन भमिति बीजेन युक्तान् बलप्रबलकौ सुबलं महाबल-मपि 'भृं बलाय नमः' 'भॄं प्रबलाय नमः' इत्यादिमन्त्रैरिष्ट्वा सत्त्वादीनि सत्त्व-रजस्तमांसि मायाविद्ये च यथोदितं यथोक्तं यजतु । कन्दं नालपद्मौ च क्रमात् बिन्द्वन्तैः क्नलाक्षरैः सह 'कं कन्दाय नमः' 'नं' नालाय नमः' 'लं पद्माय नमः' इति मन्त्रैर्यजतु । भास्वच्छीतगुमण्डले सूर्यमण्डलं सोममण्डलं च क्रमाद् विगतबिन्द्वोबीजयुक्ते बिन्दुरहिताभ्याम् अ उ इति बीजाभ्यां सह 'अ सूर्यमण्डलाय नमः' 'उ सोममण्डलाय नमः' इति मन्त्राभ्यां यजतु - हुतभुजो वह्नेः बिम्बं सरबीजकं 'रं वह्निमण्डलाय नमः' इति मन्त्रेण यजतु । दुर्गायामियती भिदा एतावान् भेदः । अथ नवशक्त्याद्यं पृथक् प्रोच्यते । अस्माभिरिति शेषः ॥४३, ४४ ॥

विवरणम् ।

माहिषजिति भेदं दर्शयति—मायाब्रह्मयुताविति । अथ इति । पीठम-न्त्राणां प्रक्रमोद्देशे पीठस्याधस्तादिति वार्थः । मूलप्रकृतेर्माया शक्तिबीजम् आदि कूर्मस्य ब्रह्म कमित्येतद् बीजम् । स्वाद्यर्णैस्सलवकैरिति । सं भं जं आं इत्येभिस्स हिताः पुनर्बलप्रबलकाविति । अग्न्यादिपीठाङ्घ्रिगानिष्ट्वेति संबन्धः । क्लीबार्णसं भिन्नभंबजाढ्यानिति । ऋकारादिचत्वारो नपुंसकार्णाः तैः संभिन्नं भंबीजं 'भं' बलायनमः, इत्येवमादिक्रमेण तद्युक्तानित्यर्थः ।

'सौम्या भद्रा जयार्या च गात्रगौरसितवर्णकौः ।
सितो रक्तस्तथा पीतः कृष्णस्तु समनन्तरम् ॥

इति । बलादय इति शेषः । धर्माधर्मादयो बुद्धेरवान्तरभेदाः सौम्याद्याश्च बलाद-योऽहंकृतेरिति भेदः । तदुक्तम्—

''धर्मो ज्ञानञ्च वैराग्यमैश्वर्यं सत्त्वबुद्धयः ।

---

१. 'भृं' क. ङ पाठः. १. 'का' .ख, ग, घ. च. पाठः.
३. 'गा' 'क' ङ. पाठः,

इत्यादि। प्रकृतिस्तावत्स्वविंकारैस्सह पुरुषस्य मूर्त्यवस्थायां पीठरूपेणावतिष्ठते। तदुक्तं—'' बीजार्चितं प्रकृतिरूपमिलात्मकञ्च ' इति। तस्यासनं सुषुप्तप्रलयेक्षणाद्यवस्थं किञ्चिद्बहिर्मुखसदात्मकं कारणशरीरमिति च 'आसनं शुद्धविद्यान्त' मिति 'अनन्तमासनं विद्यात्' 'शक्तिमेवासनं केचिदि'ति च ॥ ४३ ॥

कन्दमिति। 'कं कन्दाय'। 'नं नालाय' 'लां पद्मायेति मन्त्राः विगतबिन्द्वोबीजयुक्ते क्रमादिति। ओं इत्यकारस्य उकारस्य च ग्रहणम्। सर्वेष्वनयोर्बिन्दुयोग इह तु तदयोग इति भावः। 'रं वह्निमण्डलाय नमः' इति वह्निमण्डलमन्त्रः ॥ ४४ ॥

विमलोत्कर्षिण्यौ च ज्ञानाख्याना क्रिया च योगा च।
प्रह्वी सत्येशानुग्रहाश्च नवशक्तयो हरिहरीशे ॥ ४५ ॥

विमर्शिनी[1]

हरिहरीशे हरिहरीशयोः विमलाद्या नव शक्तयः। सर्वासां नवशक्तीनां ताराद्याश्चतुर्थीनत्यन्ता एव मन्त्राः। ज्ञानाख्याना ज्ञानेत्याख्यानयुक्ता ॥ ४५ ॥

वामा ज्येष्ठा रौद्री काली कलबलपदादिविकलिन्यौ।
सबलप्रमथिन्यौ सर्वभूतदमनी मनोन्मनी च शिवे ॥ ४६ ॥

विमर्शिनी।

शिवे वामाद्या नव शक्तयः। कलबलपदादिविकलिन्यौ कलबल इति पदाद्यौ विकालिन्यौ कलविकलिनी बलविकलिनी चेत्यर्थः। सबलप्रमथिन्यौ बलप्रमथिनी चेत्यर्थः ॥ ४६ ॥

विवरणम्।

कलबलपदादिविकलिन्याविति कलविकलिनी बलविकलिनी च—सबलप्रमाथिन्याविति। तयोर्विशेषणेन बलप्रमथिनी गदिता ॥ ४६ ॥

प्रभा माया जया सूक्ष्मा विशुद्धा नन्दिनी पुनः।
सुप्रभा विजया सर्वसिद्धिदा च यथाक्रमम् ॥ ४७ ॥

---

१, पीठात्मकं प्र' क. पाठः.

१. 'न्तक'. ङ: पाठः.

आदित्रिदीर्घैर्बिन्द्वन्तैः सन्ध्यर्णैश्च समन्विताः ।
एता बिन्दुविसर्गाभ्यामपि स्युर्महिषद्विषि ॥ ४८ ॥

विमर्शिनी ।

महिषद्विषि प्रभाद्या नव शक्तयः । एता यथाक्रमं बिन्द्वन्तैः आदित्रिदीर्घैः आं ईं ऊं इत्येतैः, सन्ध्यर्णैश्च एं ऐं ओं औं इत्येतैश्च, बिन्दुविसर्गाभ्यां अं अः इत्येताभ्यां च समन्विताः 'आं प्रभायै नमः' 'ईं मायायै नमः' इत्याद्या इत्यर्थः ॥ ४७, ४८ ॥

विवरणम् ।

बिन्दुविसर्गाभ्यामिति । अतः परं समन्विताः स्युरिति योज्यम् । बिन्द्वन्तैरिति च सर्वैस्सम्बध्यते यदुक्तम्—

"सर्वे बिन्दुयुताः कार्या वर्जयित्वा तथान्तिमम् ।
ऊष्मान्तस्से भवेद्वर्णः तस्मात्तत्र न सम्भवेत् ॥"

इति ।

'देवीरूपेण रूपिण्यः सर्वाः प्रहसिताननाः ।'

इति । विष्ण्वादिषु तु रूपाभ्युपगमे तत्तच्छक्तिरूपा इति च ज्ञेयम् ॥ ४८ ॥

विद्या शान्तिः स्मृतिर्मेधा प्रज्ञा कान्तिर्द्युतिर्धृतिः ।
व्यापिन्यपि कुमारे स्युरामन्तव्यापकाक्षरैः ॥ ४९ ॥

विमर्शिनी ।

कुमारे आमन्तव्यापकाक्षरैः आं इत्यन्तैः यरलवादिभिरक्षरैः सह विद्यादयो नव शक्तयः । 'यां विद्यायै नमः' इत्याद्या इत्यर्थः ॥ ४९ ॥

विवरणम् ।

आमन्तव्यापकाक्षरैरिति । समन्विता इति शेषः । यादीनि व्यापकाक्षराणि । ळकारो न ग्राह्यः ॥ ४९ ॥

तीव्राख्या ज्वालिनी नन्दा भोगदा कामरूपिणी ।
उग्रा तेजोवती सत्या विघ्नेऽन्त्या विघ्ननाशिनी ॥ ५० ॥

---

१ 'मायिताः' ख. पाठः २. 'स्थं' ग. पाठः ३. 'तद्भवे' क, ख. ग. घ. ङ. च. छ. पाठः.

दीप्तिः सत्या प्रभा कान्तिर्विभूतिर्मालिनी पुनः।
संसृष्टिः पुष्टिरप्यार्ये नवमी कामरूपिणी ॥ ५१ ॥

इति सप्तसु देवेषु सम्प्रोक्ता नवशक्तयः।
तत्तत्समष्टिमन्त्रांश्च तत्पूर्त्यै कीर्तयाम्यहम् ॥ ५२ ॥

विमर्शिनी।

विघ्ने तीव्राख्या तीव्रेत्याद्याख्यायुक्ता। ज्वालिनी इत्याद्या नव शक्तयः अन्त्या विघ्ननाशिनी अवसाने विघ्ननाशिनीत्यर्थः ॥ ५० ॥

आर्ये दीप्त्याद्या नव शक्तयः। नवमी अन्त्या कामरूपिणीत्यर्थः ॥ ॥ ५१ ॥

इति सप्तसु देवेषु नवशक्तयः समुक्ताः। तत्पूर्त्यै तस्य पीठस्य पूर्णतायै तत्तत्समष्टिमन्त्रांश्चाहं कीर्तयामि ॥ ५२ ॥

विवरणम्।

तत्पूर्त्यै इति। पीठस्य परिपूर्त्यर्थम्। समष्ट्यनुगमाद्धि व्यष्टिजातं परिपूर्णं सम्पद्यत इति ॥ ५२ ॥

अत्रोंनमो भगवते विष्णवे वर्णकान् क्रमात्।
सर्वभूतात्मने वासुदेवायेति च कीर्तयेत् ॥ ॥ ५३ ॥

सर्वात्मसंयोगयोगपद्मपीठात्मने नमः।
इत्ययं स्यात् समष्ट्यात्ममनुर्हरिहरीशयोः ॥ ५४ ॥

विमर्शिनी।

अत्र हरिहरीशयोः 'ओं नमो भगवते विष्णवे' इति वर्णकान् क्रमात् कीर्तयेत्। 'सर्वभूतात्मने वासुदेवाय' इति च कीर्तयेत् उच्चरेत्। 'सर्वात्मसंयोगयोगपद्मपीठात्मने नमः' इति च कीर्तयेत्। अयं समष्ट्यात्ममनुः समष्टिस्वरूपो मन्त्रः स्यात् ॥ ५३,५४ ॥

प्रणवनतिभगवतेयुतसकलगुणात्मादिशक्तियुक्ताय।
ङेन्तानन्तादिकयोगान्ते पीठात्मने च नमश्च शिवे ॥ ५५ ॥

विमर्शिनी ।

शिवे प्रणवनतिभगवतेयुतसकलगुणात्मादिशक्तियुक्ताय प्रणवेन नत्या भगवते इत्यनेन च युतानि सकलगुणात्म इत्यक्षराण्यादौ युक्तानि शक्तियुक्तायेत्यक्षराणि ङेन्तानन्तादिकयोगान्ते चतुर्थ्येकवचनान्तानन्तशब्दादिकस्य योगशब्दस्यान्ते पीठात्मने नम इति 'ओं नमो भगवते सकलगुणात्मकशक्तियुक्तायानन्ताय योगपीठात्मने नमः' इत्यर्थः ॥ ५५ ॥

विवरणम् ।

ङेन्तानन्तादिकेति । ङेन्तानन्त आदि यस्य योगस्येति समस्यते ॥ ॥ ५५ ॥

तारादि वज्रनखदंष्ट्रायुधपदमायसंयुतं वदतु ।
समहासिंहायार्णं हूं नम इत्यपि च महिषमर्दिन्याम् ॥ ५६ ॥

विमर्शिनी ।

महिषमर्दिन्यां तारादि प्रणवादि वज्रनखदंष्ट्रायुधपदं वज्रनखदंष्ट्रायुध इति पदम् आयसंयुतम् आय इत्यनेन युक्तं वदतु । समहासिंहायार्णं महासिंहायेत्यक्षरैः सह हूं नम इत्यपि च वदतु । 'ओं वज्रनखदंष्ट्रायुधाय महासिंहाय हूं नम' इत्यर्थः । अपि चेत्यनेन 'महासिंहाय हुं फट् नमः' इति पक्षान्तरः सूचितः ॥ ५६ ॥

विवरणम् ।

आयसंयुतमिति । यथा वज्रनखदंष्ट्रायुधायेति सर्वसमष्टीनामपि रूपयोगस्तेजोरूपतापि विकल्प्यत एव ॥ ५६ ॥

ओङ्कारशक्तिगणपतिबीजयुतं वदतु सर्वशक्त्यर्णम् ।
कमलासनायवर्णं प्रणतियुतं विघ्नराजे च ॥ ५७ ॥

विमर्शिनी ।

विघ्नराजे ओङ्कारशक्तिगणपतिबीजयुतम् ओं ह्रीं गं इति बीजैर्युतं सर्वशक्त्यर्णं सर्वशक्तीत्यक्षरान्, पुनः कमलासनायवर्णं कमलासनाय इति वर्णान्, प्रणतियुतं नम इत्यनेन युतं, वदतु । 'ओं ह्रीं गं सर्वशक्तिकमलासनाय नमः' इत्यर्थः ॥ ५७ ॥

विवरणम् ।

ओंकारशक्तीति । 'ओं ह्रीं गं सर्वशक्तिकमलासनाय नम' इति ॥ ५७ ॥

---

१. 'सकल' क. पाठः.

तारं प्रभूतसिंहासनाय सर्वाक्षराणि शक्त्यर्णम् ।
ब्रूयान्मयाय पद्मायेति नमोन्तं पुनः प्रभानाथे ॥ ५८ ॥

विमर्शिनी ।

प्रभानाथे तारं प्रभूतसिंहासनायसर्वाक्षराणि प्रभूतसिंहासनाय सर्व इत्यक्षराणि पुनः शक्त्यर्णं शक्तीत्यक्षरद्वयं पुनर्मयाय पद्मायेति स्वरूपम् एतन्नमोन्तं ब्रूयात् । 'ओं प्रभूतसिंहासनाय सर्वशक्तिमयाय पद्माय नम' इत्यर्थः ॥ ५८ ॥

विवरणम् ।

सर्वाक्षराणीत्यादि । सर्वशक्तिमयाय पद्मायेत्येतदुक्तम् ॥ ५८ ॥

ओं सर्वशक्तियुक्तेत्यादि मयूराक्षरादिकं वदतु ।
कमलासनाय नम इति गुहे च ते कीर्तिताः समष्टयणवः ॥५९ ॥

तत्तत्समुक्तविधिनेति समर्च्य पीठं
तोयादिभिस्तदुपधां प्रकृतिं प्रतर्प्य ।
मूर्तिं च तत्र मनुबिम्बमयीं प्रकल्प्य
तत्राभिवाहयतु मन्त्रचितिं च मन्त्री ॥ ६० ॥

विमर्शिनी ।

गुहे च ओंसर्वशक्तियुक्तेत्यादि यथा तथा मयूराक्षरादिकं मयूर इत्यक्षरत्रयादिकं कमलासनाय नम इति वदतु । 'ओं सर्वशक्तियुक्तमयूरकमलासनाय नमः' इत्यर्थः । ते समष्टयणवः समष्टिमन्त्राः कीर्तिताः ॥

इति तत्तत्समुक्तविधिना तत्र तत्रोक्तविधिनानेन पीठं तोयादिभिरुपहारैः समर्च्य तदुपधां पीठोपाधौ स्फुरन्तीं प्रकृतिम् अर्घ्यदानेन प्रतर्प्य तत्र पीठे मनुबिम्बमयीं मूर्तिं च स्वस्वमूलमन्त्रपूर्वं 'विष्णुमूर्तये नम' इत्यादिमन्त्रैः पुष्पाञ्जलिना प्रकल्प्य तत्र मन्त्री मन्त्रचैतन्यावाहनविधिज्ञः मन्त्रचितिं मन्त्रचैतन्यमावाहयतु ॥ ६० ॥

विवरणम् ।

पीठपूजाक्लृप्तिमप्युपदिशति--तत्तत्समुक्तविधिनेति । तोयादिभिरिति जलगन्धाक्षतपुष्पधूपदीपैः । जलगन्धयोस्तु कूर्चेन दानं भवति । तदुपधां प्रकृतिं प्रतर्प्येति तत्पीठोपाधिकां 'प्रकृतिरूपामलात्मकञ्चे'त्युक्तां प्रकृतिं शक्त्यैव

१. - ं स्वा (ण्व?ण्वात्म,कः स्मररिपावुपचारमन्त्रो विष्णौ जितन्त इति सेशङ्करो कुमार्याम् । शक्तिध्रुवाभिपुटितं स्वजिनार्णमार्ये स्यात् षण्मुखाणुरिभुजे गणपे गणानाम् ॥ ता' क. पाठः. २. 'नादानं' ग पाठः. ३. कल्प्येति' क. पाठः.

कुसुमाराधनेन विभाव्य तोयादिभिस्समर्च्य 'निवेद्यबुद्ध्या परचित्सुधार्घ्यं दत्त्वे'त्युक्तनीत्या मानसपूजान्वितं प्रीणयेदिति भावः। मूर्त्तिञ्च तत्र मनुबिम्बमयीं प्रकल्प्येति। मन्त्रदेवताकारेण बिम्बं निष्पादितमिति तथाविधबिम्बमयीम्। यद्वा मनुमयीं बिम्बमयीञ्च मूर्तिमिति बिम्बलक्षणायाः स्थूलमूर्तेस्तदन्तर्लिङ्गशरीरव्यक्तिरूपस्य च विद्यादेहस्य ग्रहणम्। मन्त्रीति। 'तद्देवता नामविभिन्न-बिन्तनत्यन्तमूर्त्यक्षरतोऽत्र मूर्तिम्' इति 'विद्यादेहात्मानमावाह्य तस्मिन्'इति च वक्ष्यमाणनयेन मूर्तिद्वयविभावनमुक्तम्। सति संभवे स्थूलदेहे लिपिन्यासौ विद्यादेहे च पञ्चतत्त्वपञ्चमन्त्रादिन्यासः। यदुक्तम् —

'अन्तः करणविन्यासं देवमूर्तौ समाचरेत्।'

इति।

'अष्टत्रिंशत्कलान्यासं विद्यादेहे तु विन्यसेत्।'

इति च। कलातत्त्वन्यासावपि तयोरुचितौ। यदप्युक्तं —

''निष्पत्तये तदेशानशरीरस्यानघात्मनः।
शान्त्यतीतकलामूर्धा शान्तिवक्त्रसरोरुहा''

इत्यादि। शिवे तु मन्त्रलिङ्गमयीमेव स्थूलमूर्तिं विभाव्य तदुचितन्यासं कृत्वा तदेव तदविभक्तं सकळाकारं विभाव्य लिपिन्यासादि सर्वं विदध्यात्। तदुक्तम्—

'लिङ्गस्य लक्षणे न्यस्याः स्वराः षोडश देशिकैः।
लक्षणे पार्श्वयोश्चैव रेखयोरुभयोरपि॥
तथैव मणिरेखायामष्टाश्रे चतुरश्रके।
पञ्चवर्णान्न्यसेन्मन्त्री कादीन्पञ्च क्रमेण तु॥
लिङ्गस्य हृदये यादीन् न्यसेद्धातुः स्वरूपिणः।'

इति।

'देहे पूर्वोक्तमार्गेण देवमूर्तौ तथैव तत्।'

इति। विद्यादेहेऽपि तत्त्वन्यासे समानमेतत्। तदुक्तं—

'लक्षणे विन्यसेन्मन्त्री तत्त्वान्यादौ त्रयोदश।
लिङ्गस्य हृदयस्थाने बुद्ध्यादित्रितयं न्यसेत्॥
पञ्च पञ्च च शब्दादीन् लक्षणादिषु विन्यसेत्।
पञ्चस्थानेषु मतिमान् हृदि हृत्पुण्डरीककम्॥
मण्डलत्रितयञ्चैव हृद्येव विनियोजयेत्।'

---

१. 'म्बाभिध्या' ङ. 'म्बानिष्पा' च. पाठः. २. 'त्त्वमन्त्रादि' ष. च. पाठः.

शान्त्यतीतादितत्त्वानि पञ्चब्रह्माण्यपि कलक्षणादिषु पुनः प्रसिद्धयतत्त्वन्यास इति । तत्रामिवाहयतु मन्त्रचितिश्चेति । तस्यां तथाविधायां मूर्तौ 'स्वात्मतत्तत्त्वनिवेशितात्मे'त्येवमुक्तरूपतस्तथैवानुवर्तमानतो मन्त्रतत्त्वमयश्चैतन्यमावाहयेत् परमपरोक्षमपि सकलोपहारयोग्यतया प्रत्यक्षतां प्रापयेदिति । तत्र च मनस एव कर्तृत्वं तदारूढतयैव उचितेरागमात् । साधकस्तु तदपेक्षया प्रयोजको भवति । 'मनसावाह्य विन्यसे'दिति चोक्तम् । ततश्चावाहयेदित्येवं निर्देशोपपत्तिः ।

'दशा ह्यन्तर्मुखी नित्या यत्नजोभयतोमुखी ।
देवस्यावाहनाल्लभ्या केवला तु बहिर्मुखी ॥
स्तोका विशुद्धिसांनिध्यसमृद्धिरपि लभ्यते ।
मन्त्रावाहनविन्यासाद् भूयसी फलशादिभिः ॥
नित्योऽप्यावाहितांशैक्याद्देवस्तद्धर्मभाक् तु सन् ।
कृत्स्नामप्यासनस्वागतादीज्यां स्वयमर्हति ॥"

इति ।

केवला त्विति । केवलबाह्यविषयमुमुक्षस्य तद्विषयतयैव प्रबोधपूर्वकं केवलबाह्यविषयतया बहिर्मुखी दशावाहनतोऽपूर्वा भवति । विशुद्धीति । विशुद्ध्यादिरपि देवस्य तत्त्वविनिवेशितात्मना स्वहृदयादेव तथैतन्मकलावाहनन्यासादितः स्यात् । विशुद्ध्याद्युपपत्तिं तूत्तरपटलारम्भे वक्ष्यामः । नित्योऽपीति । नित्यमात्रतायां देवस्यासनस्वागताद्युपहारसमर्पणायोग इति चिन्मात्रमेव विद्यादेह आवाह्यते । परशरीरं तु विद्यादेहान्तर्गतमेव । तदेव हि विद्यादेहतया विक्रियते । यदुक्तम्— शक्तिर्मूर्तिरस्य द्वौ भिन्नोऽपि चेति । मूर्तिस्त्वन्तर्मुखसदात्मकं ब्रह्मज्ञानं मूर्तिमांस्तु स्वयं साक्षी'ति ।

'चिदेवावाह्यते देहे शक्तितत्कार्यकल्पिते ।'

यदुक्तम्—

'सर्वोपाधिविनिर्मुक्तमस्मिन् परमकारणम् ।'

इति ।

'विद्यादेहेऽथवा शक्तिकार्ये चिच्छक्तिशालिनि ।'

यदुक्तम्—

१. 'तत्रावां' क. ग. पाठः, २. 'वं' क. ख. घ. पाठः. ३. 'अस्यास' क. ख. ग. ङ. छ. पाठः. ४. 'द्वा भिन्नोऽपि' ख. पाठः. ५. 'न्तर्गतं मुख' ख. ङ. पाठः ६. 'कार्यचि' च. पाठः.

'सर्वज्ञादिगुणैर्युक्तमनादिं परमेश्वरम् ।'

इति ।

'पञ्चोदकादौ सावाह्य सकलीक्रियते तदा ।
विद्यादेहोऽपि भवति नात्रान्या मूर्तिरिष्यते ॥'

यदुक्तम् —

'प्रणवेन स्मरेद्विष्णुमव्यक्तस्योपरि स्थितम् ।
मूर्तं तं ततो ध्यात्वा सर्वतेजोमयं विभुम् ॥
कर्णिकोपरि सञ्चिन्त्य निरोध्य सकलीकृतम् ।'

इति ।

'बिम्बेऽग्नौ कलशे मन्त्री देहे वा मूर्तिभाविते ।
सावाह्य सकलीकार्या विद्यादेहस्तदा भवेत् ॥'

यदुक्तम् —

'ध्यात्वा तु निष्कलं विष्णुं सकलं भावयेत्ततः ।'

इत्यादि । 'मूर्तिञ्च तत्र मनुबिम्बमयीं प्रकल्प्ये'ति च ।

'स्थूलसूक्ष्मपरो देहो बिम्बे वा मण्डलेऽपि वा ।
कल्प्यतेऽस्य परोऽस्यात्मा तस्मिन्नावाह्यते तदा ॥
सूक्ष्मस्थूलात्मता तु स्यात् क्रमशः सकलीकृतौ ।
प्रतिष्ठायां क्रिया प्राय एवं ह्यनुस्मृता भवेत् ॥'
यदि वा परसूक्ष्मस्थूलात्मैवावाह्यते तदा ।
सकलीकरणं त्वस्य तत्तद्देहांशयोजनम् ॥

यदप्युक्तम्—

'परं सूक्ष्मं तथा स्थूलं रूपमुद्भाव्य चेतसा ।
सुषुम्नायोगमार्गेण पिङ्गलातः कराञ्जलौ ॥'

इत्यादि ।

मन्त्रविंतिञ्च विद्वानिति वा पाठः । प्रकृतितर्पणानन्तरं देवमन्तर्मुखत्वप्राधानमीषद्बहिर्मुखमवतिष्ठमानमनुचिन्त्य प्रणवपुष्पाराधनेनावाहनाभ्यनुज्ञां गृहीत्वा तन्मूर्तिद्वयमेवावाहनार्हमूर्तिद्वयतया भावयेदित्यप्येतेन लभ्यत इति ॥ ६० ॥

1. 'क' क. पाठः

तारत्रयं चलनसङ्ग्रहणोद्गमार्थ
मुक्त्वोपचारनुतिकृन्निजहृत्सरोजात् ।
उन्नीय चेतनकलां विरहय्य बन्धात् !
तारेण चात्मनि परे ध्रुवतो विलाप्य ॥ ६१ ॥

मन्त्रात्मना परिणमय्य सुधीः ससंबु-
द्ध्यागच्छयुग्ममभिधाय ततोऽञ्जलिस्थे ।
आवाहयामिमनुना भृतगन्धपुष्प-
तोयेऽवतार्य तनुयादथ मन्त्रमूर्तौ ॥ ६२ ॥

विमर्शिनी ।

आवाहनविधिमाह — तारेति । तारत्रयं चलनसंग्रहणोद्गमार्थं तत्र प्रथमप्रणवेन चलनं स्वस्थानाद् भेदनं द्वितीयेन संग्रहणं स्वीकरणं तृतीयेनोद्गमः ऊर्ध्वं गमनम् एतत्त्रयार्थमुक्त्वा उपचारनुतिकृद् उपचारेण स्तुतिं कुर्वन् निजहृत्सरोजात् चेतनकलां चैतन्यांशञ्च उन्नीय ऊर्ध्वं नीत्वा तारेण बन्धाद् विरहय्य स्वस्मात् पृथक् कृत्वा ध्रुवतः परे आत्मनि विलाप्य मूलमुच्चरन् मन्त्रात्मना परिणमय्य मन्त्रस्वरूपितां संपाद्य ससंबुद्धि सम्बुद्ध्या सह, सुधीरिति सम्बुद्धौ भगवच्छब्दोपादानञ्च इत्यर्थः, आगच्छयुग्मं 'भगवन्नागच्छागच्छ' इत्यभिधाय ततस्तस्मात् अञ्जलिस्थे 'भृतगन्धपुष्पतोये गन्धजलाभ्यां सह भृते पुष्पे आवाहयामिमनुनावतार्याथ मन्त्रमूर्तौ तनुयात् योजयेत् ॥ ६१,६२ ॥

विवरणम् ।

कथमावाहयेदित्यत्राह— तारत्रयमिति । निजहृत्सरोजाच्चेतनकलामिति निर्देशादेव तत एव[1] तस्याश्चलनसंग्रहोद्गमा इति लभ्यते । हृत्सरोजग्रहणं मूलाधारपद्मविकल्पोपलक्षणम् । तत्र सरोजे नित्यावस्थितं यत् स्वात्मनस्तत्त्वनिवेशितात्मेत्युदीरितावस्थानस्य सतश्चैतन्यं ततस्तदंशमात्रविभागलक्षणञ्चलनं संग्रहणञ्च, ततोऽञ्जलिस्थ इत्युक्तावाहनाञ्जलौ करणं तत्स्थे तदाकारभाजि मनसि समुपारोहणमुद्गमश्च ततो द्वादशान्तावधि तेनैव ब्रह्मपथेन गतिः तदर्थमिति । यदुक्तम् —

'त्रिशः प्रणवमुच्चार्य चलनाकर्षणोद्गमैः ।'

इत्यादि , प्रथमं तारत्रयमुच्चरन्नित्थं प्रतिपत्तिं कुर्यादिति भावः । उपचारनुति-

---

1. 'तद्गु' ख. ग. घ. ङ. पाठः·

कृदिति । जितन्तस्थाणुमन्त्रादिः यथास्वमुपचारमन्त्रः । तेन नुतिस्तस्या एव चेतनकलायाः स्तुतिः । सैव चेतनकला विष्णुशिवादेरावाह्यदेवताया यथोक्तलक्षणं स्वरूपमिति तस्याः स्तुत्युपपत्तिः — पाद्यार्घ्यादावप्युपचारमनोः स्तुतिरेव फलमित्यप्यर्थादुक्तं भवति । तारेण चात्मनि परे ध्रुवतो विलाप्य विरहय्य बन्धादित्येवं सम्बन्धनीयम् । पुनस्सकृत्प्रणवमुच्चरेत् । तदा तस्याश्चेतनकलाया द्वादशान्तकमलस्थायिनि परमात्मनि निरुपाधिकपरब्रह्मलक्षणे विलयश्चिन्तनीयः । ततश्च तस्या बन्धविरहो लभ्यते इति भावः । यद्यपि तत्त्वनिवेशितात्मेत्येवमवस्थायां कर्तुरीश्वरस्वरूपतयैव कर्त्रवस्थासम्भाव्यमानाज्ञानमलादिबन्धानुपपत्तिः तथापि तदा तथा भावनासंस्कारदौर्बल्यतस्तद्बन्धानुवृत्तिसम्भवादेतदुपपत्तिः ॥ ६१ ॥

मन्त्रात्मना परिणमय्येति । पुनस्सकृन्मूलमुच्चरन् मन्त्रचितिरूपेण यथोक्तलक्षणेन परिणतिं तस्या विभाव्येत्यर्थः । सुधीरिति सम्यक् प्रतिपत्तिकौशलमुक्तम् । ससम्बुद्ध्यागच्छयुगमभिधायेति । मन्त्रीत्यनुवर्तत एव । तेन भगवन् भगवतीति वा यथास्वमिह सम्बोधनमिति लभ्यते । तत आवाहयामिमनुना अञ्जलिस्थे भृतपुष्पगन्धतोये ततोऽवतार्येत्यन्वयः । मनुशब्दोऽत्र मन्त्रैकदेशपरः । प्रणवत्रयाद्यावाहयाम्यन्तोऽयमेक आवाहनमन्त्रः तत्रावाहयामीत्यमुनांशेनेत्यर्थः । अञ्जलिस्थ इत्यञ्जलिमात्रम् आवाहनमुद्राकाराञ्जलिर्वाभिप्रेयते । भृतपुष्पगन्धतोय इति । तारत्रयमित्यतोऽपि प्रागेव सम्भृते पुष्पगन्धतोये । तस्मिन्नपि तदानीमेवाञ्जलिगृहीते इत्यर्थः । जलगन्धक्लिन्नकुसुमनिचयाभिप्रायमेतत् । सत्यक्षते तद्योगोऽपीष्यत एव । ततोऽवतार्येति । द्वादशान्तगतपरमात्मसकाशतो ब्रह्मपथेनैवाधारान्तमवतार्य ततः पिङ्गलापथेनाञ्जलाववतार्येति । यदुक्तं —

> 'सुषुम्नायोगमार्गाच्च पिङ्गलातो निजाञ्जलौ ।
> गन्धपुष्पाक्षतोपेते ध्यात्वा देवतनौ न्यसेत् ॥'

इति ।

'वहत्पुटेन निर्यात्ये'ति मतान्तरम् । तनुयादथ मन्त्रमूर्ताविति । मन्त्रीत्यनुवर्तत एव । विद्वानिति वा । मन्त्रमूर्तौ बिम्बे तारनत्यन्तेन मूलेन पुनस्तदिडापथेन तदीयहृत्पद्मान्तर्गतं भावयेदिति भावः । यदुक्तम्—

---

१· 'रात्म' क. पाठः.

'आवाह्य हृदयाम्भोजान्मूलमन्त्रेण विन्यसेत् ।'

इति,

'लिङ्गान्तर्भाविनः शम्भोरिडारन्ध्रपथा परम् ।
रूपं तेजोमयं मन्त्री हृत्पद्मे भावयेत्सुधीः ॥'

इति च । स्वाञ्जलौ स्वपिङ्गलापथेन मूलाधारद्वारा ब्रह्मपथेन द्वादशान्तावधि ततस्तद्वैलोम्येन पिङ्गलारन्ध्रतो बाह्यपथेन बिम्बेडापथेन तद्धृदयावधि तत्प्रातिपत्त्यनुगुणं नयनमिष्यत इति ॥ ६२ ॥

आवाहितोभवमुखैरभिवाहनी च
संस्थापनी समुपरिस्थनिरोधनी च ।
कार्याः समादिकनिधापनिका प्रसाद-
न्याख्या च पञ्च मनुभिः क्रमशोऽत्र मुद्राः ॥ ६३ ॥

विमर्शिनी ।

तदनन्तरमेव तन्मुद्राश्च प्रदर्शयेदित्याह— आवाहितोभवमुखैरिति । आवाहितोभवमुखैः 'आवाहितो भव' 'संस्थापितो भव' 'सन्निरुद्धो भव' 'सान्निध्यं कुरु कुरु' 'प्रसीद' इति मन्त्रैः क्रमशः पञ्च मुद्राः कार्याः । कास्ताः, अभिवाहनी आवाहनीत्यर्थः । संस्थापनी च समुपरिस्थनिरोधनी च सन्निरोधनी चेत्यर्थः । समादिकनिधापनिका सान्निधापनीत्यर्थः । प्रसादन्याख्या प्रसादनी च । अत्र मुद्रा इति पक्षान्तरे मुद्राणां तन्मन्त्राणां च बहुविध-त्वमुक्तम् ॥ ६३ ॥

विवरणम् ।

आवाहितोभवमुखैरिति । मुद्रासमाख्याभिरेव मन्त्रसिद्धिरभिप्रेयते । तद्धृदम्बुजेऽवतारसमये ओमावाहितो भवेति मन्त्रेणावाहनीमुद्रा कार्या । संस्थापनीति । संस्थितो भवेति मन्त्रः । समुपरिस्थनिरोधनी चेति । सन्निरुद्धो भवेति । समादिकनिधापनिकेति । सन्निधापनी सन्निहितो भवेति । प्रसाद-न्याख्या चेति । प्रसीदेति मन्त्रः । मुद्राश्चैताश्चरमपटले वक्ष्यन्ते— उत्तानि-ताञ्जल्युदरद्वयनामिके'त्यादि ।

---

१. 'हि', २. 'पि' क. पाठः. ३. 'धि' इति मूलकोशपाठः. ४, 'दि' क. पाठः. ५. 'णां मन्त्र' ख. पाठः.

'स्वात्मतो बिम्बहृत्पद्मानीतिरावाहनं भवेत् ।
विद्यादेहे स्थिरीकारः सन्ततं स्थापनन्ततः ॥
तस्याः पूजावधि स्थैर्यानपायस्सन्निरोधनम् ।
देहे स्वस्वामिसम्बन्धात् स्वसामर्थ्यप्रदर्शनम् ।
सान्निध्यकरणं प्रीतिस्साधके स्यात् प्रसादनम् ॥'

इति ।

विद्वानित्यनुवर्तत एव । प्राक् प्रसादन्याः प्रणवेन तदावाहितस्य नित्येनैक्यमपि भावनीयमित्यप्यनेन सिद्ध्यतीति ॥ ६३ ॥

केशादिपादचरमं मनुवर्यजापी
व्यापय्य गन्धरसचर्चितदोर्युगेन ।
विन्यस्य सर्वमिह सायुधभूषणान्तं
देवं विभावयतु तत्तदणूपपत्त्या ॥ ६४ ॥

विमर्शिनी ।

ततः षमाह— केशादीति । गन्धरसचर्चितदोर्युगेन गन्धरसाक्तिसकरद्वयेन मनुवर्यजापी मूलमन्त्रं जपन् केशादिपादचरमं व्यापय्य इह देवे सायुधभूषणान्तं सर्वं लिपितत्त्वमन्त्राक्षराङ्गायुधभूषणादीनि विन्यस्य तत्तदणूपपत्त्या तत्तन्मन्त्रस्य योग्यया प्रतिपत्त्या देवं विभावयतु ध्यायतु ॥ ६५ ॥

विवरणम् ।

मनुवर्यजापीति । प्रणवरुद्धनत्यन्तमूलमन्त्रेण त्रिवारं व्यापकमुक्तम् । परसूक्ष्मस्थूलभावाभिप्रायेण त्रिवारं व्यापकावृत्तिः । यद्वा तद्धृदि कृतायाश्रितस्तद्विग्रहे सामान्यन्यासो व्यापकं तादात्म्यद्रढिम्ने चावृत्तिः । परसूक्ष्मस्थूलभावस्तु मन्त्रस्यैव तत्त्वंशरूपवाचकतयैव स्यात् । तथा च तदक्षरादिन्यासेऽपि तत्त्वंशेऽपि न्याससिद्धिरिति । विन्यस्य सर्वमिहेति 'षडध्वभिर्वा लिपितत्त्वमन्त्रैः भूषायुधादिन्यसनं यथार्हमि'त्येवं प्रागुदीरितन्यासजातमुक्तम् । शिवे लिङ्गन्यासस्त्विदानीं वा कार्यः । वक्त्रन्यासे तु विशेषः । यथोक्तं —

---

१. 'अ', घ. च. पाठः

'पश्चिमाभिमुखे लिङ्गे सव्यवक्त्रे तु पौरुषम् ।
वक्त्रयागे तु मूर्त्याख्ये सद्यादिपरिकल्पना ॥'

इति ।

'न्यासमूर्ध्वादिवक्त्रेषु पूर्वयाम्योत्तराप्यगम् ।
पश्चिमाभिमुखे देवे त्वाप्ययाम्योत्तरैन्द्रगम् ॥'

इति च ।

तत्तदणूपपत्त्येति । तत्तन्मन्त्रौचित्येन तत्तन्मन्त्रबिम्बौचित्येनेति वार्थः ॥ ६४ ॥

**भास्वद्भास्वत्सहस्रप्रभमरिदरकौमोदकीपङ्कजानि**
**द्राघिष्ठैर्बाहुदण्डैर्दधतमजितमापीतवासो वसानम् ।**
**ध्यायेत् स्फायत्किरीटोज्ज्वलमकुटमहाकुण्डलं वन्यमाला-**
**वत्सश्रीकौस्तुभाढ्यं स्मितमधुरमुखं श्रीधराश्लिष्टपार्श्वम् ॥ ६५**

विमर्शिनी ।

ध्यानानि पृथक् पृथगाह—भास्वदित्यादिभिः । अजितं ध्यायेत् । कथंभूतं, भास्वद्भास्वत्सहस्रप्रभं भास्वतां दीप्तिमतां भास्वतामादित्यानां सहस्रस्य प्रभया तुल्यप्रभम् । द्राघिष्ठैः दीर्घतरैर्बाहुदण्डैः अरिदरकौमोदकीपङ्कजानि चक्रशङ्खगदापद्मानि दधतं धारयन्तम् । आपीतवासो वसानम् आपीतं वासो वस्त्रं वासयन्तम् । स्फायत्किरीटोज्ज्वलमकुटमहाकुण्डलं प्रकाशयता किरीटेनोज्ज्वलानि मकुटमहाकुण्डलानि यस्य तम् । वन्यमालावत्सश्रीकौस्तुभाढ्यं वनमालया श्रीवत्सेन श्रीकौस्तुभेन च परिपूर्णम् । स्मितमधुरमुखं स्मितेन माधुर्ययुक्तवक्त्रं श्रीधराश्लिष्टपार्श्वं लक्ष्म्या भूम्या चाश्लिष्टपार्श्वद्वयम् । अत्रायुधानां भूषणानां च न्यासेन पूजायां च मन्त्राः क्रमश्च सूचिताः । 'चक्राय नमः' 'शङ्खाय नमः' 'गदायै नमः' 'पद्माय नमः' इत्यायुधमन्त्रास्तत्स्थानेषु न्यस्याः पूज्याश्च । तथा 'किरीटाय नमः' 'मकुटाय नमः' 'मकरकुण्डलाभ्यां नमः' 'वनमालायै नमः' 'श्रीवत्साय नमः' 'श्रीकौस्तुभाय नमः' 'श्रियै नमः' 'पुष्ट्यै नमः' इति भूषणादीनां मन्त्राः । एवं सर्वदेवेष्वपि तत्तद्ध्यानश्लोकादायुधभूषणन्यासाः पूजा च ग्राह्याः ॥ ६५ ॥

---

१. 'करम' क. पाठः.

विवरणम् ।

भास्वद्भास्वत्सहस्रप्रभामिति । दीप्तिमदर्कबिम्बसहस्रद्युतिम् । अरिदरकौमोदकीपङ्कजानीति चक्रशङ्खगदापद्मानि । द्राघिष्ठैरिति आयतैः । स्फायच्छन्द उज्ज्वलदर्थः । वन्यमाला वनमाला । श्रीधराश्लिष्टपार्श्वमिति । तदुक्तम् —

'लक्ष्म्या च पद्मकरया पद्मरागसवर्णया ।
दूर्वादलश्यामलया पुष्ट्या चोत्पलहस्तया ॥'

इति ॥ ६५ ॥

बिभ्रद्दोर्भिः कुठारं मृगमभयवरौ सुप्रसन्नो महेशः
सर्वालङ्कारदीप्तः सरसिजनिलयो व्याघ्रचर्मात्तवासाः ।
ध्येयो मुक्तापरागामृतरसकलिताद्रिप्रभः पञ्चवक्त्र-
स्त्र्यक्षः कोटीरकोटीघटिततुहिनरोचिष्कलातुङ्गमौलिः ॥ ६६ ॥

विमर्शिनी ।

तथा च महेशो ध्येयः ध्यातुं शक्यः । दोर्भिः करैः कुठारं मृगमभयवरौ च बिभ्रद् धारयन् । सुप्रसन्नः सुतरां प्रसन्नः । सर्वालङ्कारदीप्तः सर्वैरलङ्कारैः शोभमानः । सरसिजनिलयः पद्मस्थः व्याघ्रचर्मात्तवासाः वैयाघ्रं चर्म वसानः । मुक्तापरागामृतरसकलिताद्रिप्रभः मुक्ताफलानां चूर्णैरमृतरसमिश्रितैर्निर्मितपर्वताकारः । पञ्चवक्त्रैः पञ्चभिराननैर्युक्तः । त्र्यक्षः वक्त्रेषु प्रत्येकं त्रिभिस्त्रिभिर्नेत्रैश्च युक्तः । कोटीरकोटीघटिततुहिनरोचिष्कलातुङ्गमौलिः जटाभारस्याग्रभागे घटितया चन्द्रकलया युक्तः उन्नतो मौलिर्यस्य सः ॥ ६६ ॥

विवरणम् ।

कुठारमिति । परशुम् । मुक्तापरागेति । मौक्तिकपरागैरमृतरसेन च कलितः सम्पिण्डिततया निर्मितोऽद्रिर्यः स्यात् तस्य प्रभेव प्रभा यस्येति समासः । कोटीरकोट्यां जटावल्याग्रे घटितया बद्धया तुहिनरोचिश्चन्द्रस्तत्कलया तुङ्गो मौलिर्यस्येति समासः ।

'ऊर्ध्वदक्षिणवामाधो वामदक्षिणबाहुषु ।'

इति सर्वेष्वायुधक्रमः । शिवे तु—

'अक्षसूत्रकपालेऽधः शूलखट्वाङ्गमूर्ध्वतः ।
वहन्तं दक्षिणे वामे ध्यात्वा हस्ते सदाशिवम् ॥'

इति विकल्पः ॥ ६६ ॥

**ध्येयो जटामकुटचन्द्रकलेद्धमूर्धा**
**त्र्यक्षस्तरक्षुवाजिनपीतदुकूलवासाः ।**
**ईशाच्युतस्त्रिशिखचक्रकपालशङ्खान्**
**बिभ्रत् सितासितवपुर्द्व्युचितात्मभूषः ॥ ६७ ॥**

विमर्शिनी ।

तथा ईशाच्युतश्च ध्येयः । जटामकुटचन्द्रकलेद्धमूर्धा जटाभिः मकुटेन चन्द्रकलया च दीप्तो मूर्धा यस्य सः । त्र्यक्षस्त्रिनेत्रः । तरक्षुवाजिनपीतदुकूलवासाः व्याघ्रचर्म पीतदुकूलं च वासो यस्य सः । त्रिशिखचक्रकपालशङ्खान् शूलं चक्रं कपालं शङ्खं च बिभ्रद् भरमाणः । सितासितवपुः वपुषो दक्षभागे श्वेतवर्णः वामभागे कृष्णवर्णश्च । द्व्युचितात्मभूषः शिवस्य विष्णोश्च उचितया योग्यया भूषया युक्तः ॥ ६७ ॥

विवरणम् ।

जटामकुटेत्यर्धाभिप्रायम् । त्रिशिखचक्रकपालशङ्खानित्युभयत्रापि दक्षिणवामक्रमः । यद्वा —

'देवं चतुर्मुखं ध्यायेत् परमेष्ठीशमव्ययम् ।
वहन्तं परशुं बाहोरशङ्खं दक्षिण [सौम्य ? सव्ययोः] ॥
वामबाहुः कटौ न्यस्तो दक्षिणे वरदः स्थितः ॥'

इति ।

'दक्षिणे तु करे चक्रं त्रिशूलं वामके तथा ।
अभयं दक्षिणेऽधस्ताद्वरदं वा प्रकल्पयेत् ॥'

इति ।

---

१. 'बिभ्रद् भुजैस्त्रिशिखचक्रकपालशङ्खान् श्वेतासितो द्विविधभूषणभृद्वरीयः ॥ ख. पाठः.

'दक्षिणे शूलटङ्कौ च शङ्खचक्रे च वामतः ।
बिभ्राणं वा कपालं च शूलमब्जं सुदर्शनम् ॥
दक्षिणेतरपार्श्वस्थपार्वतीश्रीविराजितम् ॥'

इति ।

द्व्युचितात्मभूषः इति भस्मचन्दनाद्यभिप्रायम् । नागालङ्कृतोपलक्षणञ्चै-तत् । यदुक्तम् — 'भोगिभिर्भूषणैर्युत'मिति ॥ ६७ ॥

दुर्गां ध्यायतु दुर्गतिप्रशमनीं दूर्वादलश्यामलां
चन्द्रार्धोज्ज्वलशेखरां त्रिनयनामापीतवासोवसम् ।
चक्रं शङ्खमिषुं धनुश्च दधतीं कोदण्डबाणांशयो-
र्मुद्रे वाभयकामदे सकटिबन्धाभीष्टदां वानयोः ॥ ६८ ॥

विमर्शिनी ।

दुर्गां ध्यायतु । दुर्गतिप्रशमनीं दुर्गतिर्दारिद्र्यं तत् प्रकर्षेण शमन-शीलाम् । दूर्वादलश्यामलां दूर्वादलवत् श्यामवर्णाम् । चन्द्रार्धोज्ज्वलशेखरां चन्द्रकलयोज्ज्वलेन शिरोलङ्कारेण युक्ताम् । त्रिनयनां नेत्रत्रययुक्ताम् । आ-पीतवासोवसम् आपीतं वासो वस्त्रं वस्त इत्यापीतवासोवाः ताम् । चक्रं श-ङ्खमिषुं धनुश्च चक्रशङ्खशरचापान् दधतीम् । कोदण्डबाणांशयोः धनुश्शरयोः स्थाने अभयकामदे अभयवरदे मुद्रे वा, अनयोः करयोः सकटिबन्धाभीष्टदां वा कट्यां बन्धः कटिबन्धः कटिबन्धेन वरदेन च युक्तां वा ॥ ६८ ॥

विवरणम् ।

आपीतवासोवसमिति चीरवसमितिवद् द्रष्टव्यम् । दक्षिणाधस्तोदिषुः स्यात् । कोदण्डबाणांशयोरिति नैपर्यायुभयोर्विकल्प इति भावः । यद्वा —

'वामतस्तर्जनीचापचर्मशङ्खांस्तु बिभ्रती ।'

इति ।

'शूलेषुखड्गचक्राणि दक्षिणेऽष्टभुजा यदा ॥'

इति ।

'सिंहासने वा स्वासीना स्थिता वा महिषोपरि ।'

इति च ।

'शङ्खं चक्रं गदां खड्गं शरञ्च धनुरेव च ।
अङ्कुशञ्च तथा पाशं वहन्तीं दक्षिणेतरे ॥'

इति ।

'अरिशङ्खासिचर्मौघत्करपल्लवशालिनीम्
चतुर्भुजां वाष्टहस्तां श्यामलां वारुणोज्ज्वलाम् ।
नेत्रत्रयलसद्वक्त्रां वा द्विनेत्रां शुचिस्मिताम् ॥'

इति ।

'रक्ताम्बरां सतीं ध्यायेद्विष्णुरूपां च विष्णुवत् ।'

इति च ॥ ६८ ॥

स्फुरन्मकुटपत्रकुण्डलविभूषितं चम्पक-
स्रजाकलितकन्धरं करयुगेन शक्तिं पविम् ।
दधानमथवा कटीकलितवामहस्तेष्टदं
गुहं घुसृणभासुरं स्मरतु पीतवासोवसम् ॥ ६९ ॥

विमर्शिनी ।

गुहं च स्मरतु । स्फुरन्मकुटपत्रकुण्डलविभूषितं स्फुरता शोभमानेन मकुटेन पत्रमयाभ्यां कुण्डलाभ्यां च विशेषेण भूषितम् । चम्पकस्रजाकलितकन्धरं चम्पकमय्या मालयालङ्कृतग्रीवम् । करयुगेन करद्वयेन शक्तिं पविं च दधानम् । (ശക്തി=ശവൽ, പവി =വജ്രം) अथवा कटीकलितवामहस्तेष्टदं कटीकलितवामहस्तेन युक्तं दक्षिणेनेष्टदं च । घुसृणभासुरं कुङ्कुमवद्-भासमानं कुङ्कुमेन भासमानं वा । पीतवासोवसं पीतं वासो वस्त्र इति पीत-वासोवाः तम् ॥ ६९ ॥

विवरणम् ।

पविमिति । वज्रम् । घुसृणभासुरमिति । कुंकुमद्युतिम् ।

यद्वा—

'कुमारं कुङ्कुमाभासं द्विभुजं हेमपङ्कजे ।
आसीनं वा स्थितं वापि यानारूढमथापि वा ॥'

इति ।

विवरणम् ।

शक्तिवज्रशरासेषुविलसद्बाहुमेव वा ।
सदा वयसि कौमारे वर्तमानं सनातनम् ॥
चूडारत्नविहीनेन मकुटेन विराजितम् ॥"

इति ॥

'षण्मुखो द्वादशभुजो द्वादशाक्षः सुमङ्गलः ।
षड्भुजो वा चतुर्हस्तो मयूरस्थः स्थितोऽपि वा ॥

अभयं शक्तिशूलेषून् कुलिशं चाङ्कुशं करैः ।
दक्षिणैर्धारयंस्तद्वत् कटिस्पर्शं वरप्रदम् ॥

दण्डं च तोमरं चापं घण्टां पाशं च वामतः ।
अधोहस्तात् प्रभृत्यूर्ध्वं स्याद् द्वादशभुजो विभुः ॥

अभयं पङ्कजं शक्तिं दक्षिणे वरतोमरे ।
कुलिशं षड्भुजो बिभ्रत् कर्तव्यः षण्मुखो विभुः ॥

दक्षिणे पङ्कजं शक्तिं मातुलुङ्गं च वामतः ।
पाशं च बिभ्रत् षड्वक्त्रस्त्वेकास्यो वा चतुर्भुजः ॥

द्विभुजश्चेद् गुहः शक्तिकटिस्पृग्वरदान्वितः ।
शक्तिवज्रधरो वा स्याद्दण्डशक्तिधरोऽथवा ॥'

इति ।

'कटिघण्टान्वितं सौम्यं पद्मयुक्तकरद्वयम् ।
दिग्वाससं गुहं बालमन्यत्र वसनान्वितम् ॥

वर्णे कुंकुमसंकाशं षोडशे वयसि स्थितम् ।
चतुर्भुजं द्विहस्तं वा केयूरादिविभूषितम् ॥

करयोश्शक्तिवज्रौ च कार्यौ नित्यं चतुर्भुजे' ।

इति ॥ ६९ ॥

---

१. 'वर्णेक' क. ख, ङ, पाठः.

विघ्नेशं सपरश्वधाक्षपटिकादन्तोल्लसल्लड्डुकै-
दोर्भिः पाशसृणिस्वदन्तवरदाढ्यैर्वा चतुर्भिर्युतम् ।
शुण्डाग्राहितबीजपूरमुरुकुक्षिं त्रीक्षणं संस्मरेत्
सिन्दूराभमिभास्यमिन्दुशकलाद्याकल्पमब्जासनम् ॥ ७० ॥

विमर्शिनी ।

विघ्नेशं च तथा संस्मरेत् । सपरश्वधाक्षपटिकादन्तोल्लसल्लड्डुकैः परशुना अक्षमालया स्वदन्तेन उल्लसद्भिर्लड्डुकैः चतुर्भिर्दोर्भिः करैर्युतम् । पाशसृणिस्वदन्तवरदाढ्यैः पाशाङ्कुशस्वदन्तवरदसहितैश्चतुर्भिः करैर्वा युतम् । शुण्डाग्राहितबीजपूरं शुण्डाया नासाया अग्रे गृहीतेन बीजपूरेण युतम् । उरुकुक्षिं बृहज्जठरम् । त्रीक्षणं त्रिनेत्रम् । सिन्दूराभं सिन्दूरवद् रक्तवर्णम् । इभास्यं गजवदास्येन युक्तम् । इन्दुशकलाद्याकल्पं चन्द्रकलादिभिरलङ्कारैर्युतम् । अब्जासनं पद्मस्थं च उपविष्टं च ॥ ७० ॥

विवरणम् ।

सृणिरङ्कुशम् । इभास्यमिति । गजाननम् । यद्वा—

'ध्यायेद्गजाननं रक्तं बृहत्कुक्षिं चतुर्भुजम् ।
पाशांकुशधरं भक्ष्यं[1] दधानं दन्तमेव च ॥'

इति ॥ ७० ॥

स्निग्धारालविसारिकुन्तलभरं सिंहासनाध्यासिनं
स्फूर्जत्पत्रसुक्लृप्तकुण्डलमथेष्विष्वासभृद्दोर्द्वयम् ।
नीलक्षौमवसं नवीनजलदश्यामं प्रभासत्यक-
स्फायत्पार्श्वयुगं सुरक्तसकलाकल्पं स्मरेदार्यकम् ॥ ७१ ॥

विमर्शिनी ।

अथार्यकं[2] स्मरेत् । स्निग्धारालविसारिकुन्तलभरं स्निग्धेन अपरुषेणारालेन वक्त्रेण विसारिणा विष्वक्प्रसरणशीलेन कुन्तलभरेण केशभरेण युक्तम् ।

---

१. 'भक्ष्यान्' ङ. पाठः, २. 'कं च स्म' पाठः.

सिंहासनाध्यासिनं सिंहलाञ्छितमासनमधिरुह्यासीनम् । स्फूर्जत्पत्रसुक्लृप्त-कुण्डलं स्फुरता पत्रेण सुष्ठु कल्पितकुण्डलयुतम् । इष्विष्वासभृद्दोर्द्वयं शरचापभृता करद्वयेन युतम् । नीलक्षौमवसं नीलवर्णं क्षौमं वसानम् । नवीनजलदश्यामं नूतनमेघवत् श्यामवर्णम् । प्रभासत्यकस्फायत्पार्श्वयुगं प्रभाख्यया भार्यया सत्यकाख्येन पुत्रेण च शोभमानाभ्यां पार्श्वभागाभ्यां युक्तम् । सुरक्तसकलाकल्पं सुतरां रक्तैः सकलैरलङ्कारैर्युतं च ॥ ७१ ॥

विवरणम् ।

अरालेति कुटिलग्रहणम् । प्रभा भार्या सत्यकश्च पुत्रः । यद्वा—

पार्श्वस्थापत्यदारं वटविटपितलन्यस्तसिंहासनस्थं
श्यामं कालाम्बरं च श्रितकरयुगलादर्शचिन्तामणिं च ।
शल्लीनिस्त्रिंशबाणासनविशिखधृतं रक्तमाल्यानुलेपं
वन्दे शास्तारमीड्यं घनकुटिलबृहत्कुन्तलोदग्रमौलिम् ॥

इति ।

प्रभूतसिंहासनाब्जे स्वासीनं वामपादतः ।
दक्षिणेन तु पादेन लम्बेनाक्रान्तपङ्कजम् ॥
शरं च क्षुरिकां चापं खड्गं बिभ्रच्चतुर्भुजम् ।
कटिसूत्रोल्लसद्रक्तवसनं चारुनूपुरम् ॥
निबिडाबद्धनिस्त्रिंशं श्यामलं कोमलाकृतिम् ।
नीलोत्पलकरा शास्तुर्वामभागावलम्बिनी ॥
प्रभा दक्षिणपार्श्वस्थः सत्यकोऽष्टाब्दबालवत् ।

इति ।

रक्तां रक्तोज्ज्वलाकल्पां सुरूपां कान्तयौवनाम् ।
धृतवीणां प्रभां वन्दे देवीं रक्तान्तलोचनाम् ॥

१. 'समाब' ख. पाठः। २. 'कालाम्बराभम्', ३. 'रक्ताकल्पोज्वलां रक्ता' इति च मुद्रितशिल्परत्नपाठः। ४. 'श्यला' ङ. पाठः।

तमालश्यामलं भद्रं पिशङ्गाकल्पसुन्दरम् ।
अधिज्यकार्मुकं वन्दे सत्यकं व्यक्तयौवनम् ॥

इति ।

तदेतत्सर्वमित्यादिवत्तत्समभीष्टेत्यादिशब्देनाभिप्रेतम् ॥ ७१ ॥

इत्यादितत्तत्समभीष्टमन्त्र-
कल्पप्रक्लृप्तक्रमतोऽत्र देवम् ।
निध्याय बुद्ध्या निशिताग्रयाङ्ग-
प्रत्यङ्गभङ्ग्या प्रकरोतु साक्षात् ॥ ७२ ॥

विमर्शिनी ।

अत्र पूजायाम् इत्यादितत्तत्समभीष्टमन्त्रकल्पप्रक्लृप्तक्रमतः एवमाद्युक्तप्रकारेण तस्य तस्य स्वाभिमतस्य मन्त्रस्य कल्पे निर्दिष्टेन मार्गेण देवं निशिताग्रया बुद्ध्या निध्याय बुद्ध्यावलोक्य अङ्गप्रत्यङ्गभङ्ग्या अङ्गानां मुखादीनां प्रत्यङ्गानां चक्षुःश्रोत्रादीनां भङ्ग्या सौष्ठवेन साक्षात् प्रकरोतु प्रत्यक्षीकरोतु ॥ ७२ ॥

विवरणम् ।

निशिताग्रया बुद्ध्या निध्यायेत्यन्वयः । अङ्गप्रत्यङ्गभङ्ग्या साक्षात् प्रकरोत्विति । मुखकरचरणाद्यङ्गभङ्ग्या वदनान्तर्गतललाटलोचनादिप्रत्यङ्गभङ्ग्या च प्रत्यक्षतयावतिष्ठमानमध्यवस्येदित्यर्थः ॥ ७२ ॥

तस्मै निजेष्टमनुरूपतया स्वभक्त्या
प्रादुस्सते दिशतु विष्टरमिष्टपीठम् ।
आराध्य मूलमनुनाङ्घ्रियुगे प्रसूनै-
स्तं स्वागतं प्रवदतूपहृतीश्च दद्यात् ॥ ७३ ॥

विमर्शिनी ।

स्वभक्त्या निमित्तेन निजेष्टमनुरूपतया स्वस्येष्टमन्त्ररूपत्वेन प्रादुस्सते प्रकाशीभवते तस्मै देवाय इष्टपीठं पूजितपीठं विष्टरम् आसनं स्मृत्वा दिशतु दद्यात् । अङ्घ्रियुगे तस्य पादयोः मूलमनुना प्रसूनैराराध्य तं देवं प्रति स्वागतं स्वागतमिति वदतु । उपहृतीश्च दद्यात् ॥ ७३ ॥

विवरणम् ।

निजेष्टमन्त्ररूपतया प्रादुस्सते तस्मै इष्टपीठं विष्टरं मन्त्री दिशत्वित्येवं सम्बन्धः । स्वाभीष्टमन्त्रमूर्तिरूपेणैवं प्रादुर्भूतो ह्यसौ देवः तस्मै तत्पूजितं पीठमासनतया तावन्मन्त्रविदुपहरेदित्यर्थः । स्वभक्त्येति प्रादुर्भावनिबन्धनमुक्तम् । तथा चासनाद्युपहृतिष्वपि भक्तियोगो लभ्यते । यदुक्तम् — 'श्रद्धाभक्तिपवित्रितोपहरणैरि'ति । प्रणवं मूलं वोक्त्वा आसनं समर्पयामि नमः इति वा देवनाम चतुर्थ्यन्तमुक्त्वा असनं निवेदयामि नम इति वा पीठं स्पृशंस्तदासनं दद्यादिति मन्त्री दिशत्वित्यभिप्रेतम् । 'स्वेनौजसा तदुभयं व्यतिषज्य तिष्ठदि'तीयमवस्था तत्र तदुपवेशनानन्तरं प्रतिपत्तव्या 'स्वेन्ने मिथस्सङ्कलनस्य धाम्नो'रिति ह्युक्तम् । पीठपूजायाश्चैवमेवोक्तविस्ताराद्युपपत्तिरिति । तमाराध्य स्वागतं वदत्विति सम्बन्धः । ओं स्वागतमस्त्विति तद्वादः । उपहृतीश्च दद्यादिति । वक्ष्यमाणप्रकारेणेति शेषः ॥ ७३ ॥

पाद्यार्घ्याचामादिक्लृप्त्योपहारा-
नीशार्धेशश्रीशविघ्नेश्वरेषु ।
देवेष्वन्येष्वर्घ्यपाद्यादिक्लृप्त्या
दद्यान्मन्त्री षोडश प्रायशोऽत्र ॥ ७४ ॥

विमर्शिनी ।

अत्र ईशार्धेशश्रीशविघ्नेश्वरेषु शिवशिवनारायणगणपतिषु पाद्यार्घ्याचामादिक्लृप्त्या पाद्यार्घ्याचमनीयक्रमेण, अन्येषु विष्ण्वादिषु देवेषु अर्घ्यपाद्यादिक्लृप्त्या प्रायशः सर्वत्र षोडशोपहारान् दद्यात् । तथा च प्रपञ्चसारे —

"आसनस्वागते सार्घ्यपाद्ये साचमनीयके ।
मधुपर्काचमस्नानवसनाभरणानि च ॥
सगन्धसुमनोदीपधूपनैवेद्यवन्दनाः ।
प्रयोजयेदर्चनायामुपचारांस्तु षोडश ॥"

इति । मन्त्रीत्यनेनात्रोपहारसमर्पणे स्वस्वमूलानन्तरम् 'ओं अर्घ्यमिदं समर्पयामि' इत्यादिमन्त्रविशेषयोजनम् उपहाराणां प्रत्येकमाद्यन्तयोर्जलदाने चोक्तम् ॥ ७४ ॥

---

१. 'ऽस्पृक् त' ब. पाठः.

विवरणम् ।

प्रायशष्षोडशोपहारान्मन्त्री दद्यादित्यन्वयः । प्रायश इति कालदेशाद्यवस्थापेक्षया । पञ्चोपहारसद्भावो दशोपहारसद्भावस्तथा पञ्चविंशत्याद्युपहारसद्भावोऽपि सूचितः । तदुक्तम् —

आसनस्वागते सार्घ्यपाद्ये साचमनीयके ।
मधुपर्काचमस्नानवसनाभरणानि च ॥
सगन्धसुमनोधूपदीपनैवेद्यवन्दनाः ।
प्रयोजयेदर्चनायामुपचारांस्तु षोडश ॥
अर्घ्यपाद्याचमनकमधुपर्काचमान्यपि ।
गन्धादयो निवेद्यान्ता उपचारा दश क्रमात् ॥
गन्धादिका निवेद्यान्ता पूजा पञ्चोपचारिणी ।

इति । यद्यपीहासनं स्वागतश्चास्ति किन्तु उपवीतजलयोगेनैव षोडशसङ्ख्येत्युपहृतीश्च दद्यादिति वदतोऽभिप्रायः । वक्ष्यति च — 'देवे युनक्तु सकले जलगन्धपुष्पे'त्यादि ।

अर्घ्यं पाद्यं तथाचामं स्नानं गन्धञ्च पुष्पकम् ।
धूपदीपनिवेद्यानि नमस्कारश्च ते दश ॥

इति ।

आसनं स्वागतं मालादर्शनीराजनान्यपि ।
होमः प्रदक्षिणमपि स्तुतिः पूजासमर्पणम् ॥

इति । पञ्चविंशतिसम्भवे नवाधिकानि । तत्र पुष्पानन्तरं माला दीपानन्तरं दर्पणनीराजने निवेद्यानन्तरं वैश्वदेवहोमः प्रदक्षिणं च पुनर्नमस्कारानन्तरं स्तुतिरवसानीयार्घ्यमपीति क्रम इति । यद्वा षोडशोपचारपरिग्रहेऽप्यासनस्वागताद्यपि विहित एव । किन्तु मन्त्रीत्युपचारमन्त्रेण ओमर्घ्यं समर्पयामि नमः, ओं पाद्यं समर्पयामि नमः इति वा देवनाम चतुर्थ्यन्तमुक्त्वार्घ्यं निवेदयामि नमः पाद्यं निवेदयामि नम इति वेत्येवमुपचारमन्त्राभिज्ञत्वमुक्तम् । यद्वोपचारमन्त्र एव त्रिप्रणवनमोन्तः सर्वत्र स्यात् । यदुक्तम् —'

'दद्यात्सर्वं जितन्तेन त्रितारनतिमौलिना ।'

---

१. 'हा' क. पाठः. २. 'र्घ्यमिति' क. ख. पाठः. ३. 'हा' क. ख. पाठः.

इति । यदा त्वमुख्यद्रव्यसम्भवो यदुक्तं — 'गन्धपुष्पाक्षतोदकैरि'त्यादि तदाप्येवमेव मन्त्रो भवति । मानसे तु कल्पयामीति स्यादिति ॥ ७४ ॥

अर्घ्यं समर्पयतु दक्षिणदोष्णि दोर्भ्यां
मूर्ध्न्येव वा दरभृतं पदयोश्च पाद्यम् ।
आचामकं च मधुपर्कमपि प्रदद्यात्
पाणौ पुरेव पुनराचमनीयकं च ॥ ७५ ॥

विमर्शिनी ।

तत्रार्घ्यादिदाने क्लृप्तिमाह — अर्घ्यमिति । दरभृतं शङ्खे गृहीतमर्घ्यम् उभाभ्यां कराभ्यां तस्य दक्षिणदोष्णि दक्षिणे करे वा मूर्ध्न्येव वा समर्पयतु । तथा दरगृहीतं पाद्यं पदयोश्च । आचामकं च मधुपर्कं च दक्षिणे पाणौ प्रदद्यात् । पुनराचमनीयकं च पुरेव पूर्वाचमनीयवत् ॥ ७५ ॥

विवरणम् ।

तेषामुपहृतिनियममपि दर्शयति — अर्घ्यं समर्पयत्विति । दरभृतमर्घ्यं दोर्भ्यां देवस्य दक्षिणदोष्णि मूर्ध्न्येव वा समर्पयत्विति सोपस्कारमन्वयः । दरः शङ्खस्तस्मिन् पूजारम्भ एव सम्भृतम् । वक्ष्यति च — 'अर्घ्याद्यशान्यार्येऽर्घ्यमि'त्यादि ।

'द्रव्यालाभे तु सर्वाणि गन्धपुष्पाक्षतोदकैः ।
पूरयेन्मतिमान्मन्त्री तत्तत्सङ्कल्पसंयुतम् ॥'

इति । सर्वोपहारेष्वभितो जलदानमपि कार्यम् । तदुक्तम् —

'अन्तरा मूलमन्त्रेण दत्त्वा कूर्चेन पाथसी ।'

इति । वक्ष्यति च — 'प्रतिसपर्यं वारि चाद्यन्तयोरि'ति । द्वयोरानन्तर्ये तन्त्रेण सकृज्जलदानमित्यर्थाद्गम्यते । यद्वा जलगन्धपुष्पैरिज्यामात्रमिष्यते । यदुक्तं

'हरेद् दरभृतं वदने कराभ्यां
पाद्यं पदाब्जयुजि चाचमनं तथास्ये ।
तद्दक्षदोष्णि मधुपर्कमुदग्रतोष-
पोषं ददातु पुनराचनं पुरोवत् ॥
दद्यात् क्रमात् स्नपनवस्त्रयुगोपवीत-

१. 'सम्भू' ख. पाठः. २. 'म' ङ पाठः. ३. 'तदु' च. पाठः.

पदयोश्च पाद्यमिति' दरभृतं पाद्यं दोर्भ्यां देवस्य पदयोः समर्पयत्विति सानुषङ्गं सर्वत्र योजना । पदयोरिति सकृदादाय द्विर्दानमपि सूचितम् । आचामकञ्चेति । पाणाविति सम्बन्धः । त्रिराचमनाद्यपि यथास्वं कल्पनीयम् । मधुपर्कमपि पाणाविति । दधिमधुघृतयोगो मधुपर्कः । पुरेव पुनराचमनीयकञ्चेति । दक्षिण एव पाणावित्यर्थः । पुरेवेत्यनेन तदेवैतदाचमनीयमित्यपि सूचितम् । यदुक्तम् — 'पूर्वत्रितयं त्ववशेषयेदि'ति । पाद्यार्घ्याचमनीयमित्यर्थः । यद्वा भेरपव । यदप्युक्तम् —

'पुनराचमनीयेषु शस्तमम्भस्सुगन्धि यत् ।'

इति । पात्रमेकञ्चेत्तदेव प्रत्येकं संक्षाल्य सर्वं देयम् । तदुक्तम् —

'शङ्खं प्रक्षाल्य पाद्यञ्च दद्यादाचमनीयकम्' ।

इति ॥ ७५ ॥

संस्नाप्य रातु वसनद्वितयोपवीत-
सम्भूषणान्यथ यजेज्जलगन्धपूर्वैः ।
प्राक् स्नानतः परिषदोऽत्र विहृत्य विष्वक्
ताभ्यः पृथक् प्रदिशतूपहृतीर्यथार्हम् ॥ ७६ ॥

विमर्शिनी ।

संस्नाप्य स्नानं कारयित्वा वसनद्वितयोपवीतसम्भूषणानि वस्त्रद्वयमुपवीतं भूषणं च रातु दद्यात् । अथ जलगन्धपूर्वैः जलगन्धपुष्पधूपदीपैर्यजेत् । अत्र स्नानतः प्राक् परिषदः परिवारान् विष्वक् समन्ताद् विहृत्य देवान् पृथक् कल्पयित्वा ताभ्यः परिषद्भ्य उपहृतीः यथार्हं यथायोग्यं पृथक् प्रदिशतु ॥ ७६ ॥

विवरणम् ।

स्नानादिशेषं[1] विततत्वात् पूर्वं तावत्सङ्ग्रहेणाह — संस्नाप्येति । रात्विति । रा दाने प्रदद्यादित्यर्थः । स्नानारम्भे किञ्चित्कर्तव्यान्तरमाह — प्राक् स्नानत इति । परिषद इह पूजापरिवारदेवताः । विहरणं देवमूर्तिसकाशात्तत्तत्स्थानेषु परिकल्पनम् । विष्वगिति । समन्तात् । यथार्हमिति । अन्तरङ्गबहिरङ्गविशेषौचित्येनेति भावः । एतदेवं च वक्ष्यति — 'मूर्त्यङ्गपश्चिममिह स्नपनादिभूषानिष्ठमि'त्यादि ॥ ७६ ॥

१. 'प विहित' च. पाठः. २. 'ध व' क. पाठः.

आराध्य तत्र कुसुमं प्रणवेन भाव्यं
देवात् तथा प्रसरणं परिषद्गणस्य ।
सिन्धोर्यथोर्मिपटलस्य यथा च वह्ने-
रिद्धात् स्फुलिङ्गनिकरस्य भिदाभिदावत् ॥ ७७ ॥

विमर्शिनी ।

परिषत्प्रसरणक्लृप्तिमाह — आराध्येति । तत्र देवे प्रणवेन कुसुममाराध्य देवात् परिषद्गणस्य प्रसरणं पृथग्भावं तथा भाव्यं कल्पनीयं, यथा सिन्धोः समुद्रात् ऊर्मिपटलस्य लहरीसमूहस्य यथा चेद्धाद् दीप्ताद् वह्नेः स्फुलिङ्गनिकरस्याग्निकणानां समूहस्य तथा भिदाभिदावद् भेदवदभेदवच्च ॥ ७७ ॥

विवरणम् ।

कथं परिषदां विहरणमित्याह — आराध्य तत्रेति । करपुटे कुसुमं गृहीत्वा प्रणवमुच्चरन् देवबिम्बात्तत्र बहिरावरणोद्देशे सर्वसामान्यप्रसरभावनया प्रसरमुद्रया तदाराधयेदिति भावः । देवात् परिषद्गणस्य भिदाभिदावत् प्रसरणं तथा भाव्यमित्यन्वयः । भिदाभिदावदिति भेदाभेदयुतम् । देवापेक्षया तेषां ततो भेदाभावः तदपेक्षया तु देवस्य ततो भेदस्तेषां च परस्परतो भेद इति भावः । तथेति कथमित्याह— सिन्धोरिति । सामान्यविशेषाभिप्रायेण दृष्टान्तद्वयमिति ज्ञेयम् । तेनैतदपि गम्यते— प्रणवेन सर्वसामान्यतो विहृत्य पुनरङ्गेभ्यो[3] नमो मूर्तिभ्यो नम इति वर्गसामान्यतो विभज्य पुनस्तत्तन्मन्त्रैराराधयन् 'स्वाभीष्टमन्त्रपरिवारगणान् स्वपद्मेष्वि'त्यतद्विदध्यादिति । यदुक्तम् — 'तत आवरणस्थाने तत्तत्सामान्यमन्त्रैः पुष्पाञ्जलिं कुर्यादि'त्यादि । देवस्य बिम्बसमवायित्वेऽपि बहिः स्वावरणादिष्वभेदेनानुगमस्तावत्पुरोक्त 'एव 'ब्रह्माद्वेद्धचितादिने'त्यादिः । वक्ष्यति च — 'तारेणं तेजस्तडिदाभमि'त्यादि ॥ ७७ ॥

ईशे षडावृतिरियं परिवारक्लृप्तिः
पञ्चावृतिः पयसिजाक्षनिसुम्भहन्त्र्योः ।

---

१. 'वतया' च. पाठः. २. 'षामन्ततो भे' ङ. छ. पाठः. ३. 'नरंशेभ्यो' ख पाठः ४. 'धयेद्' क. पाठः

प्रोक्ता परेषु चतुरावृतिरङ्गपूर्वा
सर्वेषु शर्वगुहयोरपि मूर्तिपूर्वा ॥ ७८ ॥

विमर्शिनी ।

ईशे इयं परिवारक्लृप्तिः परिवाराणां व्यवस्था षडावृतिः षड्भिरावरणैर्युक्ता । पयसिजाक्षनिसुम्भहन्त्र्योः विष्णुदुर्गयोः पञ्चावृतिः । परेषु चतुरावृतिः प्रोक्ता । सर्वेषु अङ्गपूर्वा तास्वावृतिष्वङ्गावरणपूर्वा प्रोक्ता । शर्वगुहयोरपि मूर्तिपूर्वा मूर्त्यावरणपूर्वा च ॥ ७८ ॥

विवरणम् ।

इदानीं वर्गसामान्यावरणक्लृप्तिं दर्शयति— ईशे षडावृतिरियमिति । प्रोक्तेति सम्बन्धः । पयसिजाक्षो विष्णुः । तत्रापि नियमं दर्शयति — अङ्गपूर्वा सर्वेष्विति । इयं परिवारक्लृप्तिरित्यनुषङ्गः ॥ ७८ ॥

अङ्गान्यष्ट हरौ यजेच्छतमखाद्याशासु वर्मान्तिमं
दिक्ष्वस्त्रं विदिशीति पञ्च च कुमार्यां तत् तथाग्रेऽक्षि च ।
अग्नीशाशरवायुदिक्षु पुरतोऽक्ष्यन्तं दिशास्वस्त्रकं
षट्‌ छेषेष्विति षण्मुखेऽस्त्रयजनान्ते नेत्रमग्रेऽन्तिमम् ॥ ७९ ॥

विमर्शिनी ।

हरौ अष्टाङ्गानि शतमखाद्याशासु पूर्वाद्यष्टदिक्षु यजेत् । तत्र पञ्चाङ्गानि पूर्वादिदिक्षु वर्मान्तिमं कवचान्तिममङ्गचतुष्कं, विदिशि अग्न्यादिकोणेष्वस्त्रं च । कुमार्यां तद् अङ्गार्चनं तथा हरेः पञ्चाङ्गवत् , अग्रेऽक्षि नेत्रं च । शेषेषु देवेषु षडङ्गानि अग्नीशाशरवायुदिक्षु अग्नीशाननिर्ऋतिवायुकोणेषु पुरतश्चाक्ष्यन्तं, पूर्वादिदिशास्वस्त्रकं च । षण्मुखे इति उक्तप्रकारेणास्त्रयजनान्ते अग्नीशाशरवायुदिक्षु चत्वार्यङ्गानि, पूर्वादिदिक्ष्वस्त्रं चेष्ट्वा अग्रेऽन्तिमं नेत्रं च यजेत् ॥ ७९ ॥

---

१. 'म्बुजाक्ष-
हेरम्बयोरपि षडावृतिका कुतश्चित् :
अङ्गादिका परिवृतिर्गदिताखिलेषु
मूर्त्यादिका गिरिशशक्तिभृतोर्गणेशे ।
तद्वत् षडावृतियुते चरमद्वयी द्र-
वञ्चादिकात्र सकलेषु पृथग्(भ्रु ? न्नु)वेऽन्याः ॥
अङ्गान्यष्ट हरौ' ख. पाठः.

विवरणम् ।

अङ्गान्यष्ट हरौ यजेच्छतमखाद्याशास्विति वाक्यम् । शतमख इन्द्रः । वर्मान्तिमं दिक्ष्वस्त्रं विदिशीति पञ्च चेति वाक्यम् । अङ्गानि यजेदित्यनुषङ्गः । कुमार्यां तत्तथाग्रेऽक्षि चेति वाक्यान्तरम् । षट्स्वङ्गेषु मध्ये हृदयादिकवचान्तं दिक्ष्वस्त्रं विदिक्षु, एवं तदङ्गपञ्चकं, नेत्रं पुनरग्रे यजेदित्यर्थः । आशरो निर्ऋतिः । अक्ष्यन्तमिति । हृदयादिनेत्रान्तं पञ्चकमिति । षट्च्छेषेष्विति । शिवादिष्वेवं षडङ्गानि यजेदित्यर्थः । स्कन्देऽत्रापि भेदमाह— षण्मुख इति ।

हारस्फटिककलायाञ्जनपिङ्गलवह्निरोचिषो ललनाः ।
अभयवरोद्यतहस्ताः प्रधानतनवोऽङ्गदेवताः कथिताः ॥

इति । अत्र पिङ्गलेति नेत्राभिप्रायम् । उदराद्युपाङ्गप्रधानवर्णमित्यपि ज्ञेयम् । इति ॥ ७९ ॥

हरौ प्रचेतस्यपि वैनतेयं
सुदर्शनं प्रेतपतौ सुधांशौ ।
कौमोदकीमावरणद्वयान्ते
कोणेषु चाग्न्यादिषु पाञ्चजन्यम् ॥ ८० ॥

शेषास्पदे शार्ङ्गमथेषुधी द्वौ
सुग्रीवके भृङ्गपदे च खड्गम् ।
मुख्ये च खेटं वितथे श्रियं च
पुष्टिं दितावग्रभुवि स्वमालाम् ॥ ८१ ॥

श्रीवत्सचिह्नं च भृशे जयन्ते
श्रीकौस्तुभं च न्यसतु त्रिधाम्नि ।
एवं समुक्तावृतिदिग्व्यवस्था
व्यत्यस्यते कैश्चिदियं क्वचिच्च ॥ ८२ ॥

विमर्शिनी ।

त्रिधाम्न्यावरणद्वयान्ते अष्टाङ्गपञ्चाङ्गावरणयोरन्ते हरौ इन्द्रे प्रचेतस्यपि वरुणेऽपि वैनतेयं, प्रेतपतौ यमे सुदर्शनं, सुधांशौ सोमे कौमोदकीम्,

---

१. 'दिष्वेव' ख. पाठः २. 'यमणि ख' क. पाठः.

अग्न्यादिकोणेषु च पाञ्चजन्यं च, शोषास्पदे वरुणवाय्वोर्मध्ये शार्ङ्गं, सुग्रीवके निर्ऋतिवरुणयोर्मध्ये द्वाविषुधी च । तत्र 'इषुधिभ्यां नम' इति मन्त्रः । भृङ्गपदे यमनिर्ऋत्योर्मध्ये खड्गम्, अथ मुख्ये वायुसोमयोर्मध्ये खेटं, वितथे अग्नियमयोर्मध्ये श्रियं, दितौ सोमेशानयोर्मध्ये पुष्टिम्, अग्रभुवि पुरोभागे स्वमालां वनमालां च, भृशे इन्द्राग्न्योर्मध्ये श्रीवत्सचिह्नं श्रीवत्साख्यं चिह्नं, जयन्ते ईशेन्द्रयोर्मध्ये श्रीकौस्तुभं च न्यसतु कल्पयतु । परिवाराणां सर्वेषां ताराद्याश्चतुर्थीनमोन्ता एव मन्त्राः । एवं समुक्ता इयमावृतिदिग्व्यवस्था आवृतेर्दिशां क्लृप्तिः । कैश्चिद् देशिकैः क्वचित् पश्चिममुखादौ व्यत्यस्यते व्यत्यासः क्रियते ॥ ८०—८२ ॥

विवरणम् ।

हरौ प्रचेतस्यपीत्यादि क्वचिच्चेत्यन्तं विष्णौ मूर्त्यावरणार्थम् । वैनतेयमित्यादिपदानां त्रिधाम्न्यावरणद्वयान्ते न्यसत्विति दूरे सम्बन्धः । हर्यादिपदैर्वास्तुपदानि गृह्यन्ते । सप्तदशदेवतात्मकमेतदेकमेवावरणम् । हरिरिन्द्रः । प्रचेता वरुणः । स्वमालामिति वनमालाम् । एवं समुक्तेति । येयमावृतिदिग्व्यवस्था समुक्ता यथा प्राङ्मुखे प्रत्यङ्मुखे च देवे हरिपदे वरुणपदे चैव वैनतेय इत्यादि, सेयं कैश्चिदाचार्यैः क्वचित् क्वचिदंशे व्यत्यस्यतेऽन्यथा परिगृह्यते । यथोक्तम् —

'प्राजापत्येन मार्गेण विधानमिदमीरितम् ।
दैविके तु विपर्यासस्तदौचित्येन नीयते ॥'

इति । किञ्च पुरतः पृष्ठतश्च वैनतेयं, सुदर्शनं दक्षिणतः, कौमोदकीमुत्तरतः, पाञ्चजन्यं कोणेषु, वामपृष्ठतः शार्ङ्गं, दक्षिणपृष्ठत इषुधी, तत्र खड्गं वामतः, खेटं श्रियं दक्षिणतः, पुष्टिमुत्तरतो वनमालाञ्च पुरतस्तत्रैव श्रीवत्सकौस्तुभाविति ।

'अग्रे मरतकच्छायो ध्वजस्थो विहगेश्वरः ।
पृष्ठतो विद्रुमप्रख्यस्साञ्जलिश्चित्रपक्षतिः ॥

सुदर्शनं महाज्वालमनेकार्कशतद्युतिम् ।
दक्षिणे चक्रिणश्चक्रशिरसं चक्रमर्चयेत् ॥

भ्रुकुटाघटितात्युग्रहेतिविग्रहभीषणाम् ।
गदामङ्गारदीप्ताङ्गीं वामे कौमोदकीं यजेत् ॥

पाञ्चजन्याभिधानेन कम्बुराजञ्चतुर्ष्वपि ।
कोणेषु देवदेवस्य हंसक्षीरामलं यजेत् ॥
शार्ङ्गाङ्कितमहामौलिं शार्ङ्गं शान्तेतराकृतिम् ।
सव्यपाश्चात्यदिग्भागे चित्रवर्णं समर्चयेत् ॥
अवामे वैनतेयस्य विद्युत्पुञ्जसमत्विषम् ।
स्फुरत्तूणीरशिरसं पूजयेदिषुधिद्वयम् ॥
निर्मलाकाशसङ्काशं नन्दकं देवनन्दकम् ।
वामतो हेतिराजस्य पूजयेदसिधारिणम् ॥
हाटकक्षुद्रघण्टाढ्यखेटाघाटेतमौलिनम् ।
दक्षिणेन यजेत् खेटं गदाया जितविद्युतम् ॥
स्वस्वायुधप्रधानान्यहेतिभाजश्चतुर्भुजाः ।
चक्रादिमूर्तयो ध्येया भीषणा भूषणोज्ज्वलाः ॥
पद्मद्वयकरा लक्ष्मीः पद्मरागसमप्रभा ।
श्यामा नीलोत्पलं शालिचुम्बिनं बिभ्रती शुकम् ॥'

पुष्टिरिति शेषः ।

'अनेकवर्णां विमलां मालां मूर्तिमतीमिव ।
श्रीवत्सलक्षणं वत्सं कौस्तुभं भास्करप्रभम् ॥'

इति ॥ ८०—८२ ॥

**गौरीपतौ पुंबहुरूपसद्यवामेशमूर्तीः परितः क्रमेण ।**
**इन्द्रार्किवारीड्वसुपालदिक्षु[1] मूर्तीस्ततोऽङ्गावरणं प्रकल्प्य ॥८३॥**

**अनन्तसूक्ष्मौ च शिवोत्तमैकनेत्रैकरुद्रांश्च पुनस्त्रिमूर्तिम्[2] ।**
**श्रीकण्ठमङ्गं च शिखण्डिनं च वृषेशपूर्वासु च दिग्विदिक्षु ॥८४॥**

विमर्शिनी ।

गौरीपतौ परितः इन्द्रार्किवारीड्वसुपालदिक्षु इन्द्रः स्वयमेव आर्किर्यमः वारीड् वरुणः वसुपालो वैश्रवणः एषां दिक्षु ऐन्द्र्यां च क्रमेण पुंबहुरूपसद्यवामेशमूर्तीः तत्पुरुषाघोरसद्योजातवामदेवेशानमूर्तीः प्रकल्प्य ततोऽङ्गावरणं च

१. 'दलमूलकेषु' ख. पाठः. २. 'पाजदि' विवरणपाठः. ३. 'कस्था मू' क. कस्थेमूर्तीस्ततोऽङ्गाव' ख. पाठः. ४. 'रथाङ्ग' इति मूलकोशपाठः विवरणपाठश्च

प्रकल्प्य वृषेशपूर्वासु वृषा इन्द्रः ईश ईशानः इन्द्रादिदिक्षु ईशादिविदिक्षु च क्रमेणानन्तसूक्ष्मौ द्वौ शिवोत्तमैकनेत्रैकरुद्रांश्च त्रीन् पुनस्त्रिमूर्तिं श्रीकण्ठसंज्ञं शिखण्डिनं च न्यसेत् कल्पयेत् । ॥ ८३, ८४ ॥

विवरणम् ।

गौरीपताविति । बहुरूपोऽघोरः आर्कियमः । वारीड् वरुणः । वसुपो वैश्रवणः । अजो ब्रह्मा । तस्य दिगैश्येव स्यात् ।

'सर्वाभरणसंयुक्तास्त्रिनेत्राश्चन्द्रशेखराः ।
कुन्दकाञ्चननीलाभ्ररक्तभास्करसन्निभाः ॥

पुरुषाद्याश्चतुर्वक्त्राः पञ्चवक्त्रः सदाशिवः ।
ईशो दशभुजोऽघोरश्चाष्टबाहुश्चतुर्भुजः ॥

आद्यः प्रासादवद् ध्येयः पुरुषो ब्रह्मरूपवत् ।
शूलं परश्वधं खड्गं पिनाकं नागमुज्ज्वलम् ॥

वज्रमग्निमहाघण्टां प्रशान्तं दधतं स्मरेत् ।
टङ्कं शूलं कपालञ्च वरदं[1] दधतं भुजैः ॥

वामदेवं स्मरेद्देव्या वामोरुगतयान्वितम् ।
शूलं टङ्कं महापाशमङ्कुशं दधतं वरम् ॥'

इति । 'ललितस्त्रीविलासश्चे'ति वामदेवे विकल्पः । अथाङ्गावरणं प्रकल्प्येति । शर्वगुहयोरपि मूर्तिपूर्वेति युक्तम् । एकनेत्रश्चतुर्थो भवति । वृषेशपूर्वासु चेति ।

'इन्द्रपूर्वासु दिक्ष्वीशपूर्वासु च विदिक्ष्विति ।'

इत्यर्थः ।

'जटामण्डलिनो रुद्रा नागाभरणभूषिताः ।
शूलाशनिशरेष्वासबद्धदोर्दण्डभीषणाः ॥

रक्तोऽतिरक्तस्सुसितश्चारुणः शशिसन्निभः ।
रक्तोऽरक्तः श्यामवर्णस्त्रिनेत्राश्चन्द्रशेखराः ॥'

इति ।

'विद्येश्वराश्चतुर्वक्त्राश्चतुर्भुजसमन्विताः ।'[2]

इति च ।

मुखसङ्ख्यायान्तु विकल्प इति ज्ञेयम् ॥ ८३, ८४ ॥

---

१. 'क्षेप च वरदम' छ. पाठः. २. 'तुर्वृत्ताश्च ख. पाठः

उमां च चण्डेश्वरनन्दिनौ च
तथा महाकालगणेश्वरौ च ।
वृषं न्यसेद् भिङ्किरिटिं क्रमेण
स्कन्दं च सोमाद्यनिलान्तदिक्षु ॥ ८५ ॥

विमर्शिनी ।

तथा तद्बहिः सोमाद्यनिलान्तदिक्षु उत्तरादिवाय्वन्तदिक्षु प्रादक्षिण्यक्रमेण उमां च चण्डेश्वरनान्दिनौ च द्वौ महाकालगणेश्वरौ च द्वौ वृषं भिङ्किरिटिं स्कन्दं च न्यसेत् ॥ ८५ ॥

विवरणम् ।

सोमाद्यनिलान्तदिक्ष्विति । सोमेशादिवाय्वन्ताष्टदिक्षु क्रमेणेत्यर्थः ।

'उमा तु रक्तवर्णा सा पाशाङ्कुशवराभया ।
चतुर्भुजा त्रिनयना सेन्दुखण्डा मनोरमा ॥
खट्वाङ्गं परशुं शूलं तर्जनीं दधतं करैः ।
त्रिनेत्रं धूम्रवर्णं तु ध्यायेच्चण्डेश्वरं विभुम् ॥
नन्दिनं शूलखट्वाङ्गवरदाभयधारकम् ।
पद्मरागप्रतीकाशं वैष्णवं मां स्मरेद् बुधः ॥
श्यामवर्णं विलोलाक्षं दण्डकोदण्डधारकम् ।
त्रिनेत्रं च महाकालं ध्यायेद्रक्ताम्बरं विभुम् ॥
पाशाङ्कुशौ स्वदन्तञ्च डाडिमं दधतं सुतम् ।
सुरत्नमकुटं रक्तं तुन्दिलं हि गजाननम् ॥
वृषाकारं वृषं ध्यायेत् त्रिनेत्रं कुन्दसन्निभम् ।
पीतवर्णं विलोलाक्षं शूलटङ्कधरं विभुम् ।
ब्रह्माञ्जलिधरं ध्यायेद् ध्यायन्तं परमेश्वरम् ॥
स्कन्दञ्चापि ततो ध्यायेत् कुङ्कुमाभं षडाननम् ।
शक्तिवज्रधरं सौम्यं धनुर्बाणं कराम्बुजैः ॥

इति ॥ ८५ ॥

स्कन्दे न्यसेद् दिक्षु सनत्कुमारं
स्कन्दं च बाणं च सहेमचूडम् ।

भद्रादिसेनं भवपुत्रदेव-
सेने शिवाद्याश्रिषु देवयानीम् ॥ ८६ ॥

विमर्शिनी ।

स्कन्दे दिक्षु सनत्कुमारं स्कन्दं च बाणं च सहेमचूडं हेमचूडं च, शिवाद्यश्रिषु ईशादिकोणेषु भद्रादिसेनं भद्रसेनं भवपुत्रदेवसेने भवपुत्रं देवसेनां च देवयानीं च न्यसेत् ॥ ८६ ॥

विवरणम् ।

स्कन्द इति । दिक्षु सनत्कुमारादयः । शिवादिविदिक्षु च भद्रसेनादयः । भवपुत्रो देवसेना चेति द्वन्द्वः ।

द्विभुजा मूर्तयः सर्वा मुण्डमालासमन्विताः ।
कुङ्कुमाभाः सुवसनाः सर्वाभरणभूषिताः ॥
उभयांसोपवीताश्च ध्येया देवस्य मूर्तयः ।
तथा च देवसेना तु ध्येया चम्पकसन्निभा ॥
ध्यायेत्कुङ्कुमसङ्काशां देवयानीं सुलक्षणाम् ।

इति ॥ ८६ ॥

अङ्गान्ते पुरुषादिसद्यचरमाः स्वाशासु शैवीः क्रमा-
दन्याश्चाश्रिषु पावकादिषु चतस्रो वासुदेवादिकाः ।
मूर्तीः कल्पयतु त्रिलोचनहरौ प्राक् चण्डसेनादिह
स्वं वाहं वृषसंज्ञकं च गरुडात्मानं सुधीरग्रतः ॥ ८७ ॥

विमर्शिनी ।

त्रिलोचनहरौ तत्राङ्गान्ते अङ्गावरणान्ते स्वाशासु स्वस्वदिक्षु पुरुषादिसद्यचरमाः तत्पुरुषादिसद्योजातान्ताः शैवीश्चतस्रः, पावकादिष्वश्रिष्वन्या वासुदेवादिकाश्चतस्रश्च मूर्तीः क्रमात् कल्पयतु । इह तु चण्डसेनाद् निर्माल्यधारिणः प्राक् पूर्वमग्रतो वृषसंज्ञकं गरुडात्मानं 'वृषाय गरुडात्मने नमः' इति स्वं वाहनं च कल्पयतु । सुधीरिति उक्तैः परिवारनामभिर्मन्त्रयोजनं विद्वानित्यर्थः ॥ ८७ ॥

विवरणम् ।

अङ्गान्त इति । शैवीरिति मूर्तीः कल्पयत्विति संबध्यते । स्वाशास्विति प्राग्दक्षिणोदक्पश्चिमदिक्षु । क्रमादिति । नव शिववदिति भावः । वासुदेवादिका अन्या मूर्तीरित्यन्वयः ।

विवरणम् ।

'वासुदेवस्ततो ध्येयश्चक्रशङ्खगदाम्बुजैः ।
बन्धूकाभो दरार्यब्जगदी नीलाम्बरः परः ॥'

सङ्कर्षण इत्यर्थः ।

'ऊर्ध्वाधोविनिहितवासुदेवहेतिप्रस्थानः प्रतिनवकर्णिकारवर्णः ।'

प्रद्युम्न इति शेषः ।

'गदाशङ्खारिकमलैश्चरमः शक्रनीलभाः ।'

अनिरुद्ध इत्यर्थः । वृषसंज्ञकञ्च गरुडात्मानं सुधीरिति । यदुक्तम्—

'इष्ट्वा वृषार्धगरुडं मण्डपस्थं बलिं क्षिपेत् ।'

इति । यद्वा—

'वृषञ्च वैनतेयञ्च पृथग्रूपेण कारयेत् ।
वृषोपरि यथा पक्षी वैनतेयः सुतुण्डवान् ॥'

इति ॥ ८७ ॥

न्यस्य जयां विजयामपि कीर्तिं प्रीतिं प्रभां तथा श्रद्धाम् ।
मेधां श्रुतिं द्वितीयावरणे प्रागादिदिक्क्रमात् तदनु ॥ ८८ ॥

चक्रं शङ्खं सगदं खड्गं पाशाङ्कुशौ शरं च धनुः ।
स्थापयतु सुम्भहन्त्र्यां षोडशकेऽत्रादिमाक्षरं बीजम् ॥ ८९ ॥

विमर्शिनी ।

सुम्भहन्त्र्यां द्वितीयावरणे प्रागादिदिक्क्रमात् जयां विजयामपि कीर्तिं प्रीतिं प्रभां तथा श्रद्धां मेधां श्रुतिं च न्यस्य तदनु तद्बहिः पूर्वक्रमेणैव चक्रं शङ्खं सगदं गदां च खड्गं पाशाङ्कुशौ द्वौ शरं धनुश्च स्थापयतु कल्पयतु । अत्र षोडशके परिवारमन्त्रे आदिमाक्षरं स्वस्य स्वस्याद्यमक्षरं बीजं स्यात् ॥ ८८, ८९ ॥

विवरणम् ।

सगदमिति गदाश्चेति भावः । अत्र षोडशक इति । द्वितीयावरण आयुधावरणे च ॥ ८९ ॥

कीर्तिप्रीत्योर्मेधायाश्चाद्यस्वरयुतं विरेफं च ।
चक्रे रमेव संबुद्ध्यन्तामिहास्त्राष्टकं फडन्तं च ॥ ९० ॥

विमर्शिनी ।

कीर्तिप्रीत्योर्मेधायाश्च तिसृणामेतासाम् आद्यस्वरयुतम् अकारयुक्तं विरेफं रेफरहितं च 'कं कीर्त्यै नमः' 'पं प्रीत्यै नमः' 'मं मेधायै नमः' इति मन्त्रा इत्यर्थः । चक्रे रमेव रं इत्येव बीजम् । इहास्त्राष्टकम् आयुधाष्टकं सम्बुद्ध्यन्तं सम्बोधनप्रथमैकवचनान्तं फडन्तं च । 'रं चक्र फण् नमः' शं शङ्ख फण् नमः , 'गं गदे फण् नमः' इत्याद्या मन्त्रा इत्यर्थः ॥ ९० ॥

विवरणम् ।

आद्यस्वरयुतमिति 'कं कीर्त्यै मं मेधायै' इति चोक्तम् । विरेफश्चेति पं प्रीत्यै' इत्युक्तम् । चक्रे रमेवेति नत्वादिमाक्षरमिति भावः । संबुद्ध्यन्तमिहेति । यथा 'रं चक्र फण् नमः शं शङ्ख फण् नम' इत्यादि ।

'आजन्मरतकप्रख्याः सर्वाश्चटुलदृष्टयः ।
दधत्यस्सायकं हस्तैश्शूलकार्मुकतर्जनीः ॥
रात्रीशखण्डविलसन्मकुटाञ्चितमस्तकाः ।
जयाद्याः पूजनीयाः स्युः स्वबीजाद्यर्णसंयुताः ॥'

इति । विष्णुवच्चक्रशङ्खादयः ।

'पाशाङ्कुशौ क्रमाद् ध्येयौ स्वस्वस्वाङ्कितमस्तकौ ।
स्वायुधं दक्षिणेऽन्यत्तु वामे च दधता करे ॥'

इति ॥ ९० ॥

दिक्षु क्षुरिकां खड्गं धनुः शरं हुंफडादिकं न्यसतु ।
शार्वे मधुकरमग्नौ शम्बरमप्यार्यकेऽङ्गवृत्यन्ते ॥ ९१ ॥

विमर्शिनी ।

आर्यके अङ्गवृत्यन्ते अङ्गावरणान्ते दिक्षु क्षुरिकां खड्गं धनुः शरं च हुंफडादिकं न्यसतु । 'हुं फट् क्षुरिकायै नमः' इत्याद्या मन्त्राः । शार्वे कोणे मधुकरम् अग्नौ शम्बरं च ॥ ९१ ॥

विवरणम् ।

दिक्षु क्षुरिकामिति । 'ओं हुंफट् क्षुरिकायै नम' इत्यादि ।

तत्तदङ्कितमूर्धानः शास्तुरायुधमूर्तयः ।
क्षुरिका स्त्री पुमांसोऽन्ये दधानाः स्वायुधं वरम् ॥
विद्युद्वर्णेन्द्रनीलाभचित्रवर्णातिभास्वराः ।
स्कन्दो गणपतिश्चाथ शम्बो मधुकरस्तथा ॥
दिक्षु पूज्यास्तु कोणेषु खङ्गश्च क्षुरिका धनुः ।
शरश्च नामधेयैः स्वैः पूज्याः स्युर्हुंफडन्तकैः ।'

इति विकल्पः ॥ ९१ ॥

न्यसतु गणञ्जयविघ्नेशैकादिकदंष्ट्रवीरगजवक्त्रान् ।
लम्बोदरवरदाभिधभक्तप्रियमष्टदिक्क्रमतः ॥ ९२ ॥
ओजस्वरबीजयुतान् विघ्नेशे चावृतौ द्वितीयायाम् ।
गदितमसाधारणमित्यावरणं कीर्तयेऽथ सामान्यम् ॥ ९३ ॥

विमर्शिनी ।

विघ्नेशे द्वितीयायामावृतौ अष्टदिक्क्रमतः ओजस्वरबीजयुतान् अयुग्मस्वरैर्वृतेन गमिति बीजेन युतान् गणञ्जयविघ्नेशैकादिकदंष्ट्रवीरगजवक्त्रान् एकादिकदंष्ट्रः एकदंष्ट्रः एतान् पञ्च, लम्बोदरवरदाभिधभक्तप्रियं लम्बोदरं वरदं भक्तप्रियं च न्यसतु । इत्यसाधारणं प्रत्येकं नियतमावरणं गदितम् । अथ सामान्यमावरणं कीर्तये ॥ ९२, ९३ ॥

विवरणम् ।

न्यसत्विति । एकदन्तस्तृतीयः ॥ ९२ ॥

ओजस्वरबीजयुतानिति । प्रथमतृतीयाद्या ओजस्वराः दिक्पालवर्णाः प्रधानतनवश्चैते इति । अथ सामान्यं कीर्तये इति । विष्ण्वादिषु साधारणमावरणद्वयम् ॥ ९३ ॥

प्रागाद्याशास्विन्द्राग्नियमनिर्ऋतिवरुणवायुसोमेशानान् ।
निर्ऋतावनन्तमीशे ब्रह्माणं मन्त्रवित् क्रमेण यजेत ॥ ९४ ॥

विमर्शिनी ।

प्रागाद्याशासु क्रमेण इन्द्राग्नियमनिर्ऋतिवरुणवायुसोमेशानान् निर्ऋतौ अनन्तम् ईशे ब्रह्माणं च यजेत । मन्त्रविदित्यनेन 'इन्द्राय सुराधिपतये विष्णुपारिषदे नमः' इत्यादिमन्त्रविशेषज्ञ इत्यर्थः ॥ ९४ ॥

विवरणम् ।

मन्त्रविदिति निजनिजजात्यधिपतिपदयोग उक्तः । जातयस्तूत्सव-पटले वक्ष्यन्ते — 'सुरतेजःप्रेताख्या' इत्यादि ।

'वज्रपाणिं सहस्राक्षं श्यामलं गजवाहनम् ।
त्रिनेत्रं त्रिशिखं रक्तमश्वगं शक्तिपाणिनम् ॥
रक्ताम्बरधरं कृष्णं महिषोपरि दण्डिनम् ।
खड्गपाणिं नरारूढं श्यामवर्णं त्रिलोचनम् ॥
मेषस्थं पाशपाणिञ्च श्वेतवर्णं त्रिलोचनम् ।
पीतवर्णं मृगारूढं ध्वजहस्तं त्रिलोचनम् ॥
शशारूढं गदापाणिं श्वेतं श्यामं विमानगम् ।
शूलिनं कपिलं ध्यायेद् वृषस्थं चन्द्रशेखरम् ॥
अनन्तं पूर्ववत् पीतं पद्मस्थं पद्मलोचनम् ।
जटामकुटसंयुक्तं नानाभरणभूषितम् ॥
कुम्भमक्षस्रजं मुद्रां पङ्कजं दधतं स्मरेत् ।'

इति ।

'पीतः पिङ्गः कृष्णो धूम्रः श्वेतश्च धूम्रसितशुक्लाः ।
काशारुणाम्बुजाभा लोकेशा वासवादयः प्रोक्ताः ॥'

इति वर्णविकल्पः ।

'पीतो वज्राशनिकर इन्द्रोऽग्निस्तप्तहेमरुक् ।
कुण्डिकां जपमालां च वरदं चाभयं दधत् ।
कृष्णाकल्पोऽतिकृष्णाभो दण्डपाशधरो[1] यमः ।
कृष्णो दंष्ट्री कृष्णवासा निर्ऋतिः खड्गचर्मधृक् ॥
पीताकल्पः सुधवलो वरुणः पाशदोर्द्वयः ।
ध्वजांकुशकरो[2] वायुर्धूम्रो नीलः स्वलंकृतिः ॥
हेमाभासो मधुपिङ्गाक्षसौम्यः दिव्याकल्पो नरवाहो गदाभृत् ।
तुन्दी किञ्चिद्बहलो ह्रस्वचाहुर्यक्षाधीशो निधिभिश्चावृतः स्यात् ॥
त्रिशूली श्वेत ईशानः श्वेताकल्पो जटाधरः ।
श्वेतारक्तनिभोऽनन्तः ........................ ॥

---

१. 'करो' घ. च. पाठः. २. 'धरो' ङ. पाठः.

साक्षसक्कुण्डिकास्रुक्स्रुवाढ्यो ब्रह्मा चतुर्मुखः ।'

इति ।

शक्तिस्वस्तिककरो वाग्निः स्यात् । यदुक्तं —

'दक्षिणेन शितशक्तिधारिणं स्वस्तिकं दधतमन्यपाणिना'

इत्यादि ।

'पीतहिमजलदगगनाचिरप्रभारक्तकुन्दनीलरुचः ।
कुरुविन्दारुणवर्णाः प्रोक्ताः स्युर्वर्णतोऽपि वज्राद्याः ॥'

इति ।

'वज्राद्याः स्वायुधाकारा यद्वा स्वायुधमस्तकाः ।
स्वायुधं बिभ्रतो ध्येयास्तीक्ष्णभासोऽतिभीषणाः ॥'

इति । वायोर्ध्वजो वायुधम् । यदुक्तं 'खड्गं पाशं तथा ध्वजम्' इति ॥ ९४॥

वज्रं शक्तिं दण्डं खड्गं पाशाङ्कुशौ गदां शूलम् ।
चक्रं पद्मं च तथा न्यस्येदिन्द्रादिबाह्यतः क्रमतः ॥ ९५ ॥

विमर्शिनी ।

इन्द्रादिबाह्यतः इन्द्रादीनां बाह्यावरणे क्रमेण तथा वज्रं शक्तिं दण्डं खड्गं पाशाङ्कुशौ गदां शूलं चक्रं पद्मं च न्यस्येत् ॥ ९५ ॥

विष्वक्सेनप्रमुखं निर्माल्यभुजं निजं निजं यजतु ।
दिक्पालास्त्रावसितौ दिक्पावृत्यन्तरे च दितिभागे[3] ॥ ९६ ॥

विमर्शिनी ।

दिक्पालास्त्रावसितौ दिक्पालानां तदस्त्राणां चावसाने दितिभागे सोमेशानयोर्मध्ये दिक्पावृत्यन्तरे दिक्पावरणस्यान्तर्भागे विष्वक्सेनप्रमुखं निजं निजं निर्माल्यभुजं यजतु ॥ ९६ ॥

विवरणम् ।

विष्वक्सेनप्रमुखमिति । 'विष्वक्सेनो नरकदमन' इत्यादि हि प्रागुक्तम् ।

'विष्वक्सेनोदितो कृष्णशङ्खचक्रगदाधरः ।
तर्जयन् वामतर्जन्या नासाग्रासन्नया जगत् ॥

---

१. 'इति' ग्र. घ पाठः. २. वायु' ख. पाठः. ३. दिक् पतिभागे च सर्वदेवेषु क. पाठः.

खट्वाङ्गं परशुं शूलं तर्जनीं दधतं करैः ।
त्रिनेत्रं धूम्रवर्णं तु ध्यायेच्चण्डेश्वरं विभुम् ॥
टङ्कं चक्रं त्रिशूलञ्च चण्डसेनस्तु तर्जनीम् ।
दधानो धूम्रकृष्णाभव्यर्धेशहरिवेषभृत् ॥
शङ्खचक्रगदाहस्ता मुण्डिन्यपि सतर्जनी ।
यादृशा मूर्तयस्त्वेते धूर्तसेनस्तु तादृशः ॥
शक्तिं च तर्जनीं बिभ्रद्विघ्ननीयो महाबलः ।"

यादृशा मूर्तयस्त्विति सनत्कुमारस्कन्दाद्यभिप्रायम् । कुम्भोदरघोषवतोश्चैवमुह्यमिति । दिक्पावृत्यन्तरे चेति । लोकपालावरणतोऽप्यन्तरे च । तत्रापि दितिवास्तुस्थाने इत्यर्थः ॥ ९६ ॥

स्वाभीष्टमन्त्रपरिवारगणान् स्वपद्मे-
ष्वेवं निवेश्य दिशतूपहृतीश्च तेषु ।
मूर्त्यङ्गपश्चिममिह स्नपनादिभूषा-
निष्ठा जलादिभिरथ प्रयजेदशेषान् ॥ ९७ ॥

विमर्शिनी ।

स्वाभीष्टमन्त्रपरिवारगणान् स्वस्याभीष्टस्य मन्त्रस्य परिवारगणान् एवं स्वपद्मेषु स्वस्य स्वस्याधारभूतेषु पद्मेषु क्रमेण निवेश्य कल्पयित्वा तेषु परिवारेषु मध्ये इह मूर्त्यङ्गपश्चिमं यथा भवति तथा स्नपनादिभूषानिष्ठा उपहृतीः पृथक् प्रदिशतु । अथाशेषान् परिवारान् जलादिभिः प्रयजेत् ॥ ९७ ॥

विवरणम् ।

अथ यत् पूर्वमुक्त'माराध्य तत्र कुसुममि'त्यादि तत्र विशेषमपि दशयन्नाह — स्वाभीष्टेति । मन्त्रशब्देन मन्त्रदेवताग्रहणम् । स्वपद्मेष्वेवं निवेश्येति । तदुक्तं—

'सर्वेषामपि चैतेषां प्रत्येकं पद्ममासनम्' ।

इति । तेषां पुष्पाराधनेन पद्मासनभाजामेव विभावना कार्या । यद्वा पीठशक्तेरेव परिवारपद्मप्रसरणपूर्वकं बिम्बमूर्तेस्तत्परिवारप्रसरणं कार्यम् । शक्ति-

1. 'समन्तादेवं ख. पाठः

पुष्पाराधनेन च पद्मप्रसरणमिति प्रसरणपुष्पाराधनं विदधदावाहनमुद्रया तान् स्वपद्मेषु भावयेदिति निवेश्येति सूचितम् ; तेषु उपहृतीश्च दिशत्विति । कथमित्याह– मूर्त्यङ्गपश्चिममिति । देवे स्नपनादिशेषोपहरणं तावत् पूर्वमेव संस्नाप्य रात्रिरित्यादिना संग्रहेणोक्तम् । तत्र च परिवारविहारानन्तरं देवे स्नपनादि भूषणान्तमुपहृत्य परिवारेषु तदुपहरणीयम् । तदुक्तं —

'दत्त्वा देवाय भूषान्तं स्नानाद्यङ्गेषु कल्पयेत् ।'

इति । वक्ष्यति च — तत्रोद्धारनिजोपचारे'त्यादि । मूर्त्यङ्गपश्चिममिति मूर्तिपश्चिममङ्गपश्चिमं वा । यथास्वं स्नपनादिभूषान्ता उपहृतीर्दद्यादित्यर्थः । तत्र स्कन्द एव अङ्गपश्चिमं मूर्त्यङ्गक्रमत्वात् , शास्तरि मूर्त्यभावादङ्गमात्रग्रहणं भवति । विष्ण्वादिषु मूर्तिपश्चिमं विष्णौ वैनतेयाद्यावरणान्तम् । यदुक्तं —

'स्नानादि पश्चादङ्गादेर्भूषान्तमुपकल्पयेत् ।'

इति । शिवे गणेश्वरावरणान्तम् । यदप्युक्तं —

'स्नानादि पश्चादङ्गादेर्भूषान्तमुपकल्पयेत् ।
गणेश्वरान्तं सर्वेषां गन्धादीनि प्रकल्पयेत् ' ।

इति । एवमन्येष्वप्यवगन्तव्यमिति ।

ततस्स्नानार्थमासीनं ध्यात्वैतं तदनुज्ञया ।
पाद्याद्यर्घ्यादि वा दद्याद्यथास्वं त्रितयं सुधीः ॥'

इति । वक्ष्यति च कर्मशेषपटले — 'पुरः स्नपनत' इति 'आचामावधिकं त्रयं रात्रि'ति च तत्र सम्बध्यत इति । स्नपनविस्तारोऽपि तत्रैव वक्ष्यते— 'स्नानानि पञ्चामृतपञ्चगव्ये' त्यादि । पञ्चामृताद्यसम्भवे तु कलशाम्बुभिश्चेत्यस्मिन् पाठे गन्धजलेन, विमलाम्बुभिश्चेत्यस्मिन् पाठे शुद्धजलेन पात्रान्तरे शङ्खमात्रे वापि संस्कृतेन स्नपनमवश्यं कार्यम् । यत उक्तम् —

'अलाभे भावनातोऽपि योज्यं स्नानमिदं बुधैः ।'

इति ।

'कलशैर्वा यथोद्दिष्टैः शङ्खैर्वा गड्डुकैरपि ॥
ब्रह्मभिस्संहितामन्त्रैस्सरुद्रपवमानकैः ।'

इत्यादि ।

'पर्याप्तौ गन्धतोयेन कृत्वा स्नानं सवैदिकम् ।'

---

१. 'षान्त' च. छ. पाठः.

मार्जयेत् सितवस्त्रेण यथा निर्जलतां व्रजेत्' ॥

इति च । पुनस्स्नानावसानीयार्ध्यदानपूर्वकमङ्गवस्त्रादि देयम् । तदुक्तं —

कृत्वा स्नानावसानार्घ्यमङ्गमार्जनिकाद्वयम् ।

'पीतकौशेययुगलमुत्तरीयोपवीतके ॥

किरीटमकुटाद्यैः स्वैर्धियैव सुविभूषितम् ।'

इति । विष्णुविषयमेतत् । शिवादौ तु स्वं स्वं वस्त्रभूषणादि ग्राह्यम् धियैवेति प्रदर्शनम् । पीताम्बरादीनां सौवर्णाद्याभरणानां च सम्भवे तत्समर्पणं तदभावे तत्तन्मुद्रया तद्विभावना वा कार्येति । प्रागुक्तरूपेणोपचारमन्त्रेण सर्व-मिदमुपहरणीयम् कूर्चेन जलदानमपि प्रत्येकमभित इष्यत एव । पुनर्यथा-वं पाद्याद्यर्घ्यादि वा देयम् । वक्ष्यति चान्ते 'वस्त्रभूषाविधे'रिति । पाद्याच-मयोरेव दानं स्यादिति । मूर्त्यङ्गानां तु स्नानं शङ्खोदकेन दत्त्वा वस्त्रादि सर्वं धिया भावनीयमिति । जलादिभिरथ प्रयजेदशेषानिति । मूर्त्यङ्गपरिवारान् दिगीश्वरतदायुधपरिवारान् निर्माल्यधारिणश्चेत्यर्थः ॥ ९७ ॥

तत्रोङ्कारनिजोपचारमनुवर्णाङ्गायुधाद्यैः सुधी-
देवं विन्यसनक्रमेण जलगन्धाभ्यां प्रसूनेन च ।
याजं याजमथैतदीयपरिवारांश्चान्तरङ्गक्रमा-
न्निर्माल्याश्यवसानिकान् निजनिजस्थानेषु संपूजयेत् ॥ ९८ ॥

विमर्शिनी ।

तत्र यजने सुधीः जलगन्धाद्युपहाराणां देवे चित्पर्यन्तां व्याप्तिं ध्यायन् (देवम्) ओङ्कारनिजोपचारमनुवर्णाङ्गायुधाद्यैः प्रणवेन निजनिजोपचारेण मूलेन च तथा तदक्षरैरङ्गैरायुधमन्त्रैर्भूषणमन्त्रैश्च[1] न्यासस्थानेषु विन्यसनक्रमेण जलग-न्धाभ्यां प्रसूनेन च याजं याजमिष्ट्वेष्ट्वा निर्माल्याश्यवसानिकान् स्वस्वनिर्मा-ल्यधार्यवसानभूतानेतदीयपरिवारान् अन्तरङ्गक्रमात् अन्तराद्यावरणक्रमात् निजनिजस्थानेषु सम्पूजयेत् ॥ ९८ ॥

विवरणम् ।

देवस्य जलाद्युपहरणं तु प्रागुक्तम् 'अथ यजेज्जलगन्धपूर्वै'रिति । अथ तदिदमुभयमपि विवृणोति — तत्रेति । जलादियागे एवं यजेदित्यर्थः । देवं जल-

१. 'प्रां' क. पाठः. २. 'न्त्रैश्च' ख. पाठः.

गन्धाभ्यां प्रसूनेन च याजं याजमथैतदीयपरिवारांश्च संपूजयेदिति योजनीयम् । याजं याजमिति णमुल्प्रत्ययः । इष्ट्वेष्ट्वेत्यर्थः । जलेन देवमिष्ट्वाथ जलेनैव परिवारान् पूजयेत्[1] गन्धेन देवमिष्ट्वा गन्धेनैव परिवारान् पूजयेत्[2] पुनः पुष्पेणाप्येवमित्यभिप्रायः । ओंकारो निजोपचारो मूलमनुः तदक्षराण्यङ्गान्यायुधानि भूषणानि सति सम्भवे मूलपुटितमातृकातत्त्वानि चेत्येभिर्विन्यसनक्रमेण देवं यजेत् । निजनिजस्थानेष्वित्येतदिहापि समानम् । प्रणवोपचारमूलैर्विग्रहे तद्वर्णादिभिस्तदवयवेषु तत्तन्न्यासस्थानेषु याग इति भावः । यत्पूर्वमावाहनारम्भे तन्मन्त्रमूर्तिरूपेण परिणतं[3] चिन्मात्रं तत्तन्मन्त्रमूर्तिनिशानं तन्मूर्त्यन्तर्गतमवतिष्ठते तदभिप्रायेण पूर्वमावाहनारम्भे प्रथमं प्रणवेनोपहारः । पुनः परसूक्ष्मस्थूलमन्त्रमूर्त्यभिप्रायेणोपचारेणोपहारः । न्यस्तमन्त्रेषु प्रथमं हि मूलम् । तदेव च सा मन्त्रमूर्तिस्तदेव चाक्षराङ्गायुधादिसर्वसमष्टिः तच्चापि परसूक्ष्मस्थूलात्मकमिति तदभिप्रायेण मूलेनोपहार इति विभागोऽत्रोद्धव्य इति ॥ ९८ ॥

सूनावसानैरिति सावृतिं तं संपूज्य पुष्पावृतिमातनोतु ।
पूर्तिं च पुष्पैस्तुलसीद्वयाद्यैर्गन्धाम्बुसिक्तैर्गदितक्रमेण ॥ ९९ ॥

विमर्शिनी ।

इति सूनावसानैः पुष्पावसानैः सावृतिमावरणसमेतं तं देवं सम्पूज्य पुष्पावृतिमातनोतु । तुलसीद्वयाद्यैर्गन्धाम्बुसिक्तैः विविधैः पुष्पैर्गदितक्रमेण पूर्तिं पुष्पपूरणं च ॥ ९९ ॥

विवरणम् ।

सूनावसानैस्तं सावृतिमिति । सम्पूज्येत्यन्वयः । इतिशब्द उक्तप्रकारपरामर्शार्थः । पुष्पैः पूर्तिञ्च गदितक्रमेणेति । आतनोत्वित्यनुकृष्यते । 'श्वेतारुणक्रमकृतोभयपार्श्वयोगानि'त्यादि ह्यात्माराधनविधौ गदितमिति गन्धाम्बुसिक्तैरित्येतत् पुष्पावरणेऽप्युचितम् ॥ ९९ ॥

आद्या कार्या प्रसूनावृतिरिह यजता सोपचारेण पुष्पै-
र्मूलेनापि त्रिवारं हरिमखिलपरीवारकानेकशश्च ।
मूलार्णैस्तं द्वितीया दिगधिपरहितावृत्त्युपेतं तृतीया
मूलेनाङ्गावृतं केवलमथ परतत्त्वेन तुर्या त्रिरेनम् ॥ १०० ॥

---

१. 'त पुनर्गन्धेन' क. पाठः २. 'तृ अथ पु' क. पाठः ३. 'तच्चिन्मा' क. च. पाठः

विमर्शिनी ।

पुष्पावृतिमाह—आद्येति । इह पुष्पावृतौ । यजता साधकेन । हरिमित्यनेन विष्णावेवायं विशेष इति द्योत्यते । हरिं सोपचारेण मूलेनापि (पुष्पैः) त्रिवारं अखिलपरीवारकान् अङ्गादिनिर्माल्यधार्यन्तानखिलान् परिवारान् एकशश्चेत्याद्या प्रसूनावृतिः कार्या । ततः तं हरिं मूलार्णैः त्रिवारं दिगधिपरहितावृत्त्युपेतम् इन्द्रवज्राद्यावरणरहितैरन्यैरङ्गादिभिस्त्रिभिरावरणैरुपेतं द्वितीया पुष्पावृतिः । अङ्गावृतम् अङ्गावरणद्वयेनैवोपेतं तं मूलेन त्रिवारं तृतीया पुष्पावृतिः । अथ केवलमेनं परतत्त्वेन प्रणवेन त्रिः त्रिवारं तुर्या चतुर्थी पुष्पावृतिः ॥ १०० ॥

विवरणम् ।

पुष्पावृतिं विवृणोति—आद्या कार्येति । इह हरिं सोपचारेण[1] मूलेनापि त्रिवारं निखिलपरिवारकानेकशश्च पुष्पैर्यजता आद्या प्रसूनावृतिः कार्येति संबन्धनीयम् । यजतेति च तत्कालविशेषणम् । आद्या पुष्पावृतिः । चतस्रः पुष्पावरणस्यावान्तरावृतयः, तासु प्रथमावृतिरियमिति भावः । मूलार्णैस्त्रिवारं तद्दिगधिपरहितावृत्त्युपेतं यजता द्वितीया पुष्पावृतिः कार्येत्यनुषङ्गेण संबन्धनीयम् । अत्र दिगीशादिशेषो न ग्राह्य इति भावः । मूलेन त्रिवारं तमङ्गावृतं यजता तृतीया पुष्पावृतिः कार्येति । अङ्गावरणद्वयमेवेह ग्राह्यमिति भावः । अथ परतत्त्वेनैनं केवलं त्रिर्यजता तुर्या पुष्पावृतिः कार्येति । नत्विहावरणं किमपि ग्राह्यमिति भावः । पञ्चतत्त्वैस्तुर्या चेत् पञ्चमीयं भवति । परतत्त्वं प्रणव एव ॥ १०० ॥

दुर्गां प्रागुपचारतोऽखिलपरीवारैरमा मूलतो
द्वेधाथाङ्गपुरस्सरावरणयुक्त्यान्ते स्वयं विद्यया ।
पुष्पैः शाम्भवपक्षतोऽखिलपरीवारैश्च मूर्त्यङ्गकैः
सार्धं केवलमप्युपार्हतु शिवे त्रेधा तथा वाखिले ॥ १०१ ॥

विमर्शिनी ।

दुर्गां प्राग् आदौ उपचारतः उपचारमन्त्रेण अखिलपरीवारैरमा सर्वपरीवारैः सह पुष्पैराराधयेद् इत्येकधा, अथ तां मूलतः अङ्गपुरस्सरावरणयुक्त्या

---

१. 'स्रोप' छ. पाठः २. 'द्या प्रसूनावृतिरिति च' छ. पाठः ३, इत्यर्थः क. पाठः ४. 'अथवा त' छ. पाठः.

अङ्गावरणयोगेन इति द्वेधा द्विप्रकारेण कृत्वा पुनरन्ते विद्यया स्वयं द्वादशे पटले वक्ष्यमाणेन विद्यामन्त्रेण प्रधानभूतेनेत्यर्थः । शिवे तु शाम्भवपक्षतः । शम्भुपक्ष इति शिवस्य विग्रहपूजोक्ता , तेन शम्भुपक्षेण अखिलपरीवारैश्च सह तं शिवं पुष्पैरुपार्हतु इत्याद्या । पुनः मूर्त्यङ्गकैः मूर्त्तिभिरङ्गैश्च सह तमुपार्हत्विति द्वितीया । पुनः केवलं तमुपार्हत्विति तृतीया । शिवे इति त्रेधा त्रिप्रकारेण । अखिलेऽपि तथा त्रिप्रकारेण वा ॥ १०१ ॥

विवरणम् ।

दुर्गामिति । प्राग्दुर्गामुपचारतस्त्रिवारमखिलपरिवारैरमेत्यन्वयः । यजेतेत्यनुवर्त्तते । अमेति सहेत्यर्थः । मूलतो दुर्गां द्वेधाङ्गपुरस्सरावरणयुक्त्या च यजेतेत्येवं सम्बन्धनीयम् । मूलतो द्वेधेति विष्णुवदक्षरैस्समस्तेन चेति भावः । मूलाक्षरैः देवीं त्रिवारमङ्गदूत्यायुधपरिवारांश्च पुनर्मूलेन तां त्रिवारमङ्गावरणञ्चेत्यभिप्रायः । अन्ते स्वयं विद्ययेति च यजेतेत्यनुषङ्गः । प्रसूनावृतिश्चतुरावृत्तिशालिनी कार्येति च वाक्यशेषः । विद्ययेति मूलमेव । पुष्पैरिति शिवे त्रेधोपार्हत्वित्युपरि सम्बन्धः । सेयं शिवे पुष्पावृतिरिति भावः । तत्र शाम्भवपक्षान्तमखिलपरिवारैस्सार्धमिति प्रथमावृतिः । शाम्भवपक्षान्तमूर्त्त्यङ्गैरेव सार्धमिति द्वितीया । केवलमिति शिवमिति ग्राह्यम् । केवलशम्भुपक्षाभिप्रायमेतत् । मूलेन व्योमविद्यया वा तुरीयावृतिरपीष्यत एव । पञ्चब्रह्मभिस्तुर्या चेदियं पञ्चमी भवति । तथा वाखिल इति । वाशब्दोऽयं योग्यतया न विकल्पार्थः । क्रियते चेत्तथैव कार्येत्यर्थः ॥

"शस्ते द्वे तुलसी सिताम्बुजमथो रक्ताब्जपालाशके
जातीकुब्जकमाधवीदमनकैः पुन्नागनागासनैः ।
नन्द्यावर्त्तशमीस्थलाब्जविजयासन्मल्लिकाचम्पके-
बिल्वं चोत्पलकेतकानि च नवं कुन्दं तथा पाटलम् ॥

लक्ष्मीदेविसहासभृङ्गमुसलीभीतेन्द्रवल्यस्सदा
भद्रा श्रीपतिलङ्घिका च दशमी दूर्वाथ जम्बूच्छदम् ।

कल्हारं करवीरमेकदलकं पद्मं कुशाः कैरवं
रक्तञ्चेति विलोमतोऽधिकफलं पुष्पं भवेद्वैष्णवम् ॥

इति ।

श्वेतार्कं करवीरकं च कमलं धुर्धूरकारग्वधे
राजार्कञ्च सिताम्बुजञ्च तुलसी साशोकसच्चम्पके ।

कल्हारं बकपाटले बकुलकं द्वे मल्लिके मालती
पालाशस्थलपद्मदर्भमदनापामार्गदूर्वाङ्कुरैः ॥

तद्वद्ग्रन्थिशमीबृहन्मरुवकैः पुन्नागनागासनैः
नन्द्यावर्त्ततमालकुब्जविजयामन्दारकाश्मीरकैः ।

शस्तान्युत्पलकर्णिकारकुसुमैः कादम्बबैल्वाद्यथो
नीलञ्चोत्पलमित्यमूनि कुसुमान्युक्तानि शैवान्यलम् ॥

अम्भोजोत्पलबन्धुजीवविजयापुन्नागनागान्यथो
जातीकुन्दकुरण्डचम्पकजलायूथीरमापाटलैः ।

बिल्वाशोकहयारिकुब्जमदनैर्मन्दारदूर्वादलै-
र्नन्द्याद्याप्यपराजिते च कुसुमान्युक्तानि शाक्तान्यलम् ॥

इति ।

हरिशवद्धरीशे स्युः स्कन्दहेरम्बशास्तृषु ।
शिवशक्तिवदार्यायां कुसुमान्यथ शक्तिवत् ॥

इति ।

नन्द्यावर्त्तैः प्रातरेवापराह्णे प्राग्रात्रे वा मालतीमल्लिकाभिः ।
अह्न्येवाब्जैरुत्पलैः सर्वदा वा हैमैः प्रातः केसरैः पूर्वरात्रे ॥

आ वैवर्ण्यात् केसराणां सरोजं बैल्वं पत्रं दामनञ्च त्रिरात्रम् ।
पूजायोग्यं कर्णिकारं तु पक्षं न स्याज्जीर्णं मासषट्कं बकाख्यम् ॥

इति ।

सच्छिद्रं मुकुलं जीर्णं पतितं पात्रवर्जितम् ।
भुक्तशेषमगन्धं च केशकीटादिमिश्रितम् ॥"

इति । हेयमिति शेषः । एवमन्यदपि द्रष्टव्यमिति ॥ १०१ ॥

---

१. 'कं द्वे मालती मल्लिके' क. पाठः.

ससान्द्रघण्टानिनदेन नीचैर्धूपेन दीपेन समर्च्य चोच्चैः ।
देवं ससर्वावरणं प्रदद्यात् सकृत्सकृद्वारि तदावृतिभ्यः ॥१०२॥

विमर्शिनी ।

ततः कर्मशेषमाह — ससान्द्रेति । ससान्द्रघण्टानिनदेन गम्भीरेण घण्टानादेन सह धूपेन नीचैः नाभिमूलदर्शितेन, तथा दीपेन उच्चैः नेत्रदार्शितेन च ससर्वावरणं सर्वावरणैर्युक्तं देवं समर्च्य तदावृतिभ्यः तस्मै चावरणेभ्यश्च सकृत् सकृद् वारि प्रदद्यात् ॥ १०२ ॥

विवरणम् ।

ससान्द्रघण्टानिनदेनेति धूपस्य दीपस्य च विशेषणम् । सान्द्रेण घण्टानिनदेन सहितेनेत्यर्थः । त्वक्चक्षुरिन्द्रिययोर्नाडीद्वारा हि प्रसरस्तेन च नाडीशक्ती घण्टानादेनैव सम्यक् प्रबुद्धे स्यातामित्युपहारविदामुपदेशः । नीचैर्धूपेनेति । तथाहि— धूपोऽसौ कृत्स्नं त्वगिन्द्रियं व्याप्नुयादिति भावः । दीपेनोच्चैरिति । तथाहि — दीपश्चक्षुरिन्द्रियस्य समप्रसरस्य पुरोदेशे स्यादिति भावः ।

'कर्पूरोशीरसंमिश्रं गुग्गुल्वगुरुचन्दनैः ।
विधूमदहनाङ्गारविप्रकीर्णैर्घृताप्लुतैः ॥

दन्दह्यमानं मरुता सुरभीकृतदिङ्मुखम् ।
नीचैस्सघण्टानिनदं दद्याद् धूपं स्वमुद्रया ॥

कर्पूरवर्तिकासान्द्रसौरभं सुरभीभुवा ।
सर्पिषा दीपितं दीपं दद्यादुच्चैः स्वमुद्रया ॥'

इति ।

स्वमुद्रयेत्येतज्जलगन्धपुष्पेष्वप्युचितम् । देवं ससर्वावरणमिति । समर्च्येत्यधः सम्बन्धः । जलगन्धादीनामप्यभितो जलदानं कार्यम् । देवस्य तु सकृत् परिवाराणां च सहैव सकृद् इति ज्ञेयम् । तदावृतिभ्यस्सकृद्वारि प्रदद्यादिति पृथङ्निवेद्याभावादर्घ्यविधिरेवेति बोद्धव्यम् ॥

तारेण देवेऽनुगतं विभूति-
जातं प्रसूनार्पणतो विभाव्य ।

किञ्चित् समभ्यर्च्य ददातु तस्मै
तथार्घ्यपाद्याचमनीयकानि ॥ १०३ ॥

विमर्शिनी ।

पुनस्तारेण प्रसूनार्पणतः प्रणवपुष्पाञ्जलिना विभूतिजातं परिवारव्यूहं देवेऽनुगतं विभाव्य लीनं ध्यात्वा मूलेन किञ्चित् समभ्यर्च्य तस्मै देवायार्घ्य-पाद्याचमनीयकानि तथा पूर्वक्रमेण ददातु ॥ १०३ ॥

विवरणम् ।

देवेऽनुगतं लीनं प्रसरवैलोम्येनैतत् कार्यम् । किञ्चित् समभ्यर्च्येति । मूलेनैव जलगन्धपुष्पैरिति भावः । अर्घ्यपाद्याचमनीयकानीति । शिवादिषु पाद्यार्घ्याचमनीयानीति ज्ञेयम् ॥ १०३ ॥

भूमिं विशोध्य विनिधाय हिरण्मयाद्यं
पात्रं पवित्रमभिघार्य विभोः पुरस्तात् ।
सम्पादयेद् रुचिरमत्र निवेद्यजातं
प्राज्याज्यकादलगुलादिपरिष्कृतं च ॥ १०४ ॥

विमर्शिनी ।

अथ विभोः देवस्य पुरस्ताद् भूमिं विशोध्य हिरण्मयाद्यं सुवर्णरजता दिभिर्निर्मितं पवित्रं शुद्धं पात्रं विनिधाय अभिघार्य उपस्तीर्यात्र प्राज्याज्यका-दलगुलादिपरिष्कृतं प्रभूतेनाज्येन कदलीफलैः गुलैरुपदंशैश्च परितः क्षिप्तं रुचिरं रुचिकरं निवेद्यजातं पायसादि विविधं हविः सम्पादयेत् ॥ १०४ ॥

विवरणम् ।

भूमिं विशोध्येति । अस्त्रेण जलेनेति शेषः । पवित्रं पात्रमित्यस्त्र-क्षालनाद्यभिप्रायम् । पादसम्भवे पादपात्रयोः शक्तिमूलाभ्यां वह्निसूर्यमण्डल-मन्त्राभ्यां वा निधानं कार्यम् । ताभ्यामेव पूजनं च । अभिघार्येति । हृदयेन प्रणवेन वैतत् । अत्र रुचिरं निवेद्यजातं सम्पादयेदिति शिरसा मूलेन वैतत् । रुचिरमिति । पाकप्रसाधनविन्यासविशेषैरिति भावः । निवेद्यजातमिति । यदुक्तम् —

'अतिनिर्मलशाल्यन्नबहलं सगुलोदनम् ।
दौग्धदाधिकहारिद्रक्रसरादिपरिश्रितम् ॥'

इति ।

प्राज्याज्यकादलगुलादिपरिष्कृतञ्चेति । प्राज्यशब्देन यथोक्तम् —

'कलाचीसम्भृतानेकद्रव्यव्यञ्जनलेह्यवत् ।
घृतभर्जितवृन्ताककदलीनालिकेरकैः ॥

गुलखण्डकसम्मिश्रं दधिक्षौद्रघृताप्लुतम् ।
मथितक्षालितस्वच्छनवहैयङ्गवीनवत् ॥'

इति । सम्भवतः सम्पाद्यं सर्वमेतदिति ज्ञेयम् । पुनः प्रत्यभिचारणं पिधानमपि सामान्यसिद्धम् ॥ १०४ ॥

प्रोक्ष्यास्त्रेण सुरक्ष्य वायुसलिलैः *संशोध्य दग्ध्वाग्निम-
ह्नोष्णा वामकरामृताप्लुतमिदं मन्त्रामृतीभावितम् ।
जप्त्वा मूलमथाष्टशः सुरभिमुद्रातः सुधापूरितं
प्राच्यैतद्ग्रहणस्पृहां कुसुमसंराध्या विभोर्भावयेत् ॥ १०५ ॥

विमर्शिनी ।

अथ इदं निवेद्यं प्रोक्ष्य अस्त्रेण स्वस्वास्त्रमन्त्रेण सुरक्ष्य वायुसलिलैः वायुबीजेन सलिलैः संशोध्य अग्निमह्नोष्णा अग्निबीजयुक्तेन दक्षिणकरेण दग्ध्वा दहनं भावयित्वा वामकरामृताप्लुतं वामकरस्थामृतबीजेनाप्लावितं मन्त्रामृती-भावितम् अमृतबीजजपेन अमृतीभावितमिदं मूलमष्टशो जप्त्वा सुरभिमुद्रातः सुरभिमुद्रया सह 'अमृतेऽमृतोद्भवेऽमृतवर्षिण्यमृतं स्रावय स्रावये'ति मन्त्रेण सुधापूरितं तद् मूलेन प्राच्य कुसुमसंराध्या पुष्पसमाराधनेन विभोः देवस्य एतद्ग्रहणस्पृहाम् एतत्परिग्रहेच्छां भावयेत् ॥ १०५ ॥

विवरणम् ।

प्रोक्ष्यास्त्रेण सुरक्ष्येति । दिग्बन्धनेन रक्षा कार्या । यद्वा विष्णवादौ चक्रमुद्रया शिवादौ त्रिशूलमुद्रया स्कन्दे शक्तिमुद्रया शास्तरि क्षुरिकामुद्रया

---

* संशोध्येति विवरणरीत्या पाठः.

च परितो भ्रमणेन रक्षाभिधेयते। यदुक्तम्—'चक्रमुद्रया परिभ्रमणेनाभिरक्ष्ये'-ति। वायुभलिलैः संशोष्येति करतले जलमादाय वायुबीजेन त्रिवारमभिमन्त्र्य तेन जलेन तेनैव बीजेन शोषणधिया प्रोक्षणमुक्तम्। दग्ध्वाग्निमद्दोष्णेति। दक्षिणकरतलेऽग्निबीजमालिख्य तेन त्रिवारमभिमन्त्र्य तेन करतलेन इतरकरोपगृहीतेन तेनैव बीजेन दहनधिया निवेद्येऽभिमर्शनमुक्तम्। वामकरामृताप्लुतमिदमिति। वामकरतलेऽमृतबीजमालिख्य तेनैवाभिमन्त्र्य तेन करतलेनेतरकरोपगृहीतेन तेनैव बीजेन प्लावनधियाभिमर्शनमुक्तम्। मन्त्रामृतीभावितमिति। तदुक्तम्—'मूलमन्त्राभिमन्त्रितजलेन प्रोक्षयित्वा तदखिलममृतात्मकं ध्याये'-ति। यद्वा सोममण्डलमन्त्रेणाभिमृश्य शिखया सम्पवनं विधाय वमित्यविषीकरणमुद्रां क्ष्रौं इति गरुडमुद्रां च कृत्वा ठमित्यमृतमुद्रयामृतीकृत्य मूलप्रोक्षणेनामृतमयं ध्यायेदिति। सुरभिमुद्रात इति। सुं इति वा वौमिति चात्र मन्त्र इष्यते। पुनस्सति नेत्रे तेन निरीक्षणं कवचेनावकुण्ठनमस्त्रेण दिग्बन्धनं च कार्यम्। तदुक्तम्—'कवचास्त्राभ्यां संरक्ष्ये'ति। प्राच्यैति मूलेन जलगन्धादिभिः पूजोक्ता। यद्वा शक्तिमन्त्रेण मूलेन चार्चनमुक्तम्। कुसुमसंराध्या विभोरेतद्ग्रहणस्पृहां भावयेदित्यन्वयः। कुसुमसंराधनं मूलेन पुष्पाराधनं जलगन्धपुष्पैर्वा पूजनम्। पुनर्नेत्रपुष्पाराधनेन निवेद्य देवस्येक्षामपि भावयेत्॥ १०५॥

कृत्वा यथोक्तं परिषेचनादिकं
दोर्भ्यां सपुष्पं रसनारुचीरिह।
विसार्य मन्त्री विनिवेद्य* दोर्युजा
ततोऽमृतं तद्वदने समर्पयेत्॥ १०६॥

विमर्शिनी।

मन्त्री परिषेचनासनादिस्वगृह्योक्तमन्त्रज्ञः यथोक्तं स्वस्वगृह्योक्तं परिषेचनादिकं कृत्वा दोर्भ्यां सपुष्पं पुष्पसहिताभ्यां कराभ्यां देवस्य रसनारुचीः रसनाया दीप्तीः इह निवेद्ये विसार्य (विनिवेद्य) 'निवेदयामी'त्यादिमन्त्रेण निवेदनं कृत्वा ततो दोर्युजा सपुष्पाभ्यां कराभ्याममृतं तद्वदने देवस्यास्ये समर्पयेत्॥ १०६॥

---

१. 'द्वापरि' च. छ. पाठः.

* विनियोज्ये'ति विवरण पाठः.

विवरणम् ।

यथोक्तमिति । स्वस्वकल्पोदितरीत्येत्यर्थः । परिषेचनादिकमिति जलेन निवेद्यजातस्य स्वकल्पोक्तमन्त्रेण सार्थप्रतिपत्तिपरिषेचनं तथा तदभिमर्शनं देवे शङ्खेनोपस्तरणीयजलसमर्पणं चोक्तम् । दोर्भ्यां सपुष्पमिति । यदुक्तं — सकुसुमयावाहनमुद्रया तद्वक्त्रकुहरात् तेजो निर्गतं तत्र विसार्येति । जिह्वामन्त्रेणैतदिति मन्त्रीत्युक्तम् । विनियोज्य दोर्युजेति प्रागुक्तवदुपचारमन्त्रेणैतत् कार्यम् । ततोऽमृतं तद्वदने समर्पयेदिति । करयुजेत्यनुषङ्गः । तत इति । निवेद्यत इत्यर्थः ॥ १०६ ॥

**निवेदयामि भवते जुषाणेदं हविर्हरे !**
**हरौ मन्त्रोऽयमन्येषु *हरिस्थाने स्वनामवान् ॥ १०७ ॥**

विमर्शिनी ।

हरौ 'निवेदयामि भवते जुषाणेदं हविर्हरे !' इति निवेदनमन्त्रः । अन्येषु हरिस्थाने हरे इति स्थाने स्वनामवान् स्वस्वनामसहितः । 'जुषाणेदं हविर्हर' इत्यादीत्यर्थः ॥ १०७ ॥

विवरणम् ।

तत्समर्पणे मन्त्रमाह — निवेदयामीति । विनिवेदनं समर्पणपर्यन्तमेतदुक्तमित्यवगन्तव्यम् । पूर्वं निवेद्यसमर्पणमेतत्तदीयामृतसमर्पणमिति भेदः । हरिस्थानस्वनामवानिति । यथा 'जुषाणेदं हविर्हर' 'जुषाणेदं हविर्गुहे'ति 'जुषाणेदं हविर्विभो' इति वा सर्वत्र । दुर्गायां 'निवेदयामि भवत्यै जुषाणेदं हविर्दुर्गे' इति वा भवति ॥ १०७ ॥

**प्राणादिमुद्रोज्ज्वलदक्षदोष्णा सग्रासमुद्रान्यकरः स्वमन्त्रैः ।**
**अन्नाद् रसांशं मलधातुवर्जमायोजयेत् तद्वदनार्चिषीह† ॥ १०८ ॥**

---

* हरिस्थानस्वनामवानिति विवरणादतः पाठः. † 'ह ॥
ततो निवेद्य मुद्रिकां प्रधानया करद्वये
स्पृशन्ननामिकां निजं मनुं जपन् प्रदर्शयेत् । 'हे' ख. पाठः.

विमर्शिनी ।

इह निवेदनकाले प्राणादिमुद्रोज्ज्वलदक्षदोष्णा द्वादशे पटले वक्ष्यमाणाभिः प्राणादिमुद्राभिरुज्ज्वलेन दक्षिणकरेण सग्रासमुद्रान्यकरः ग्रासमुद्रासहितवामकरो भूत्वा स्वमन्त्रैः तत्रैव वक्ष्यमाणैः प्राणापानादिमन्त्रैः अन्नाद् हविषः मलधातुवर्जं मलं धातुं च वर्जयित्वा रसांशं तद्वदनार्चिषि तद्वदनतेजसि आयोजयेत् ॥ १०८ ॥

विवरणम् ।

प्राणाहुतीर्दर्शयति—प्राणादिमुद्रोज्ज्वलदक्षदोष्णेति । अन्नाद्रसांशं तद्वदनार्चिष्यायोजयेदिति सम्बध्यते । दक्षिणेन हस्तेन प्राणादिमुद्रां विदधत् तेन करेण निवेद्यजाततो रसांशं तस्य देवस्य वदनगते जिह्वेन्द्रियलक्षणे अर्चिषि सम्यग्योजयेत् । स्वमन्त्रैरिति । प्राणादीनामेव मन्त्रैः । वक्ष्यति चान्त्यपटले—'कनिष्ठिकाद्याः क्रमशः प्रधानये'त्यादि 'प्राणापानव्याने'त्यादि च । यद्वा तद्वदनार्चिषीति तच्छब्देन प्राणादीनां ग्रहणं, तेषां मुखार्चिषीत्यर्थः । देवस्य मूलाधारत्रिकोणगतशक्तिबिन्दूदरभागे मध्यप्राग्वारुणसौम्यदक्षिणोद्देशेषु प्राणापानादीन् पञ्च तेजोरूपांस्तेषां मुखानि च शिखारूपाणि प्रागेव प्रणवेन शक्त्या वापि भावयेत् । तेषु प्राणादिमुखार्चीष्वित्यभिप्रायः । सग्रासमुद्रान्यकर इति । वामकरेणाल्पग्रासमुद्रां विदधदेवमायोजयेदिति । वक्ष्यति च । 'स्याद् ग्रासमुद्रा स्फुरदुत्पलाकृतिरि'ति । मलधातुवर्जं रसांशमिति । जलगन्धाद्युपहारद्रव्यं मलधातुरसभेदेन त्र्यंशं भवति । तदुक्तं—

'मलधातुरसाभिधानमेतत् पृथिवीवह्निजलात्मकं जलाद्यम् ।'

इति । तत्र मलधात्वंशतोऽत्यन्तविविक्तं सन्तं रसांशमायोजयेदिति तत्तन्मुद्रया निवेद्यजाततस्तदुपादानसमय एव रसविवेको विभावनीय इत्यर्थोक्तम् । यद्वा प्राच्येत्येतदनन्तरं लं रं वमित्यभिमर्शनेन सर्वाधो मलांशस्तदुपरि धात्वंशः सर्वोपरि कृत्स्नरसविवेकयोगतो भूयिष्ठो रसांशश्च भावनीय इति देवान्तर्गतप्राणेष्वपि रस एव विनियुज्यते । एवं च तद्वदनार्चिषीति वदनग्रहणमप्यर्थवद् भवतीति । पीठे तावत् शक्तेर्बिम्बस्थानीयतया तस्य विग्रहत्वान्नानुपयोग्यंशोऽस्ति पाद्यार्घ्यादिषु तु सारभागो विद्यत एव । कलशादिष्वपि बिम्बस्थानीयत्वेऽपि तदीयचितोऽभिषेकविधौ देवे लीनत्वादुदकमात्रं निर्माल्यं मलस्थानीयमेव भवतीति । किं च

१. 'णकरेण' ख. घ. छ. पाठः. २. 'गे म' छ. पाठः. ३. 'शिला' छ. पाठः. ४. 'प्राणादिषु मु' छ. पाठः. ५. 'कोऽपि भा' छ. पाठः.

प्राणादिमुद्रेत्यादिशब्देन ग्रासमुद्रा निवेद्यमुद्रापि गृह्यते । दक्षिणकरेण ग्रासमुद्रया रसायोजने वामकरो हृदग्रे वन्दनमुद्रया निवेद्यमुद्रया वा कार्यः । निवेद्यमुद्रापि वक्ष्यते— 'अनामिकामूललसत्प्रधानमि' त्यादि । स्वमन्त्रैरिति तत्तद्देवमन्त्राभिप्रायम् । यद्वा प्रणवोपचारमूलाभिप्रायम् । स्वाहान्ततया चेह मन्त्रप्रयोगः स्यात् । मूलेन त्रिवारं पञ्चवारं वा रसायोजनं स्यात् । तद्वदनार्चिषीति देवस्यैव रसनेन्द्रियार्चिर्ग्रहणम् । निवेद्यमुद्रया रसायोजने स्वमन्त्रोऽपि वक्ष्यत एव 'ग्रान्तामृतौ लवे'त्यादि ॥ १०८ ॥

देवे युनक्तु सकले जलगन्धपुष्प-
धूपप्रदीपकनिवेद्यगतान् रसांशान् ।
तोयोर्व्यनन्तपवनानलवारिसारान्
जिह्वानसोः श्रवणनाभिदृगाननेषु ॥ १०९ ॥

**विमर्शिनी ।**

अन्नरससमर्पणकथनप्रसङ्गात् षण्णामप्युपहाराणां समर्पणरीतिमाह — देव इति । सकले सावयवे देवे जिह्वानसोः श्रवणनाभिदृगाननेषु षट्सु स्थानेषु तोयोर्व्यनन्तपवनानलवारिसारान् अप्पृथिव्याकाशवायुतेजोजलानां षण्णां सारांशान् सूक्ष्मभूताकारान् जलगन्धपुष्पधूपप्रदीपकनिवेद्यगतान् पञ्चीकृतमहाभूतात्मकेषु षट्सु जलगन्धादिषु स्थितान् रसांशान् क्रमेण युनक्तु योजयेत् ॥ १०९ ॥

**विवरणम् ।**

इदानीं जलादिसर्वोपहारक्लृप्तिं दर्शयति— देवे युनक्त्विति । सकले देवे इति । मुखकरचरणाद्यवयवयोगिनि स्थूलमूर्त्यभिमानिनि विश्ववैश्वानरादिपदाभिधेये सकलांशेऽशत्वेऽपि स्वापेक्षया कृत्स्नात्मनि देवे इत्यर्थः । रसांशानिति मलधात्वंशतोऽत्यन्तविविक्तान् रसांशानित्यर्थः । तोयोर्वीति । अनन्तमाकाशः । पवनो वायुः । जलं तावत्तोयमेव । गन्धस्तु पार्थिवः ।

---

१. 'यवायो' च. पाठः ।

पुष्पं पार्थिवतया प्रसिद्धत्वेऽपि स्वसमवेताकाशांशस्यैव वा स्वोपलक्ष्याकाशमात्राया वा देवोपभोग्यत्वादाकाशात्मकत्वमभिप्रेतम् । धूपोऽप्येवं वाय्वात्मकः । दीपोऽन्यंश एव । निवेद्यजातं तु पार्थिवाप्यत्वेऽप्यपां विकृतितयैव देवोपभोग्यमिति जलादीनां पञ्चीकृततोयादिभूतात्मकत्वम् । तदुक्तं—

'पञ्चीकृतमहाभूतपञ्चकं कारणान्वितम् ।

सपर्यावस्तु निर्दिष्टम् । '

इति । तेषां सारानिति । यत्तत्र पञ्चीकृतौ प्रधानं यथा तोये रसतन्मात्रं पृथिव्यां गन्धतन्मात्रमित्यादि स सारोऽत्र विवक्षितः । तन्मयत्वाद्रसांशानां सारमुक्तम् । यदुक्तं—

'तत्र सूक्ष्माणि भूतानि भोग्यान्येव दिवौकसाम् ।

तान्यादाय तदाकारो रसस्तमनुगच्छति ॥'

इति । तान् जिह्वानासिकाद्यक्षेषु तत्समवायीन्द्रियशक्तिषु युनक्तु योजयेदित्यर्थः । 'तत्तत्समर्पणविधा'वित्येतदधोऽपि विकल्पेन सम्बध्यते । यत्तु पूर्वमुक्तं 'जलगन्धाभ्यां प्रसूनेन चे'ति, 'धूपेन दीपेन समर्च्य चे'ति च तदिह तत्तत्समर्पणं गृह्यते । तदापि प्रत्येकं जलगन्धादिरसांशान् देवे युनक्त्विति तत्तदर्चनसमये तत्तदन्ते च प्रतिपत्तिरुक्ता । तदन्ते तु तत्तन्मन्त्रेण तत्तन्मुद्रया तत्पूर्त्यर्थमनुसन्धानम् । तदुक्तं — 'गन्धादनन्तरं गन्धमुद्रां पुष्पानन्तरं पुष्पमुद्रां च दर्शयेदि'त्यादि ।

'जलगन्धाद्युपहृतौ तत्तन्मात्रान्विता रसाः ।

ब्रह्माण्डपरिमाणाः स्युस्तत्तन्मात्रानिभाः स्फुटम् ॥

देवाक्षैस्तत्तदर्चात आनिवेद्य विसर्गतः ।

आस्वाद्यन्ते च तेऽत्यर्थमियत्यो ह्यर्थशक्तयः ॥

इति । जलगन्धादिद्रव्यशक्तीनां तन्मात्राविष्टरसलक्षणानां देशकालाभ्यां परिमाणमेतदुक्तमिति ॥ १०९ ॥

तत्तत्समर्पणविधौ निजभूतशक्तिः
स्वाक्षादुदेत्य विमलाञ्जलिगं स्वसारम् ।
देवैतदक्षभवशक्तिकरे समर्प्य
तादात्म्यमेति तरसेत्यनुसन्दधीत ॥ ११० ॥

विमर्शिनी ।

तत्तत्समर्पणविधौ तस्य तस्य जलादेः समर्पणकाले निजभूतशक्तिः स्वस्य साधकस्य पञ्चभूतात्मिकासु शक्तिषु मध्ये सा सा शक्तिः स्वाक्षात् स्वस्वेन्द्रियाद् उदेत्य उद्गम्य विमलाञ्जलिगं विमलं विगतमलधातुकं तदेवाञ्जलिगं शक्तेः कराञ्जलिगतं स्वसारं स्वसारभूतं रसं देवैतदक्षभवशक्तिकरे देवस्यैतस्मादेवेन्द्रियादुद्गच्छन्त्याः शक्तेः कराञ्जलौ समर्प्य तरसा वेगेन तादात्म्यम् ऐक्यम् एति गच्छतीति अनुसन्दधीत ध्यायेत् ॥ ११० ॥

विवरणम् ।

इह रसानां देवे तदिन्द्रियशक्तिभिर्योजनैव भावनीया । सेयं भावना न सुकरेति सुकरामेतद्गर्भां भावनां भावनान्तरशालिनीमुपदिशति — तत्तरसमर्पणविधाविति । निजभूतशक्तिरिति । पूजयितुः स्वदेहारम्भिणी तत्तदुपहारोचिता भूतशक्तिः । सा च निजनिजपञ्चतत्त्वेषु तत्तद्द्रव्योचितैव गृह्यते । यथा विष्णौ जले निवृत्तिः, गन्धे सर्वतत्त्वमिति । शिवे जले प्रतिष्ठा, गन्धे निवृत्तिरिति । स्वाक्षादिति स्वेन्द्रियाद्रसनानासिकादेरित्यर्थः । विमलेति धवला । तदुक्तं—'कन्यकाः स्फटिकप्रभे'ति । उदेत्येति । आविर्भूयोपह्रियमाणद्रव्यसन्निधिमपि प्राप्येत्यर्थः । अञ्जलिगं स्वसारमिति । स्वकीयद्रव्यस्य जलगन्धादेरुपह्रियमाणस्य सारं तन्मात्राविष्टरसलक्षणं ब्रह्माण्डपरिमितमप्यञ्जलिपुटेनोपादाय तमिति भावः । देवैतदक्षभवशक्तिकरे समर्प्येति । तदा देवस्याप्येतदिन्द्रियाद्रसनानासिकादेरेव शक्तिस्तत्तद्भूतवर्णा कन्यका सती प्रादुर्भूय तद्द्रव्यसान्निधिं तद्रसादित्सया प्राप्नोति तस्याः करे अञ्जलिभूते सा स्वशक्तिस्तं रसं समर्पयति । ततश्च रसतादात्म्यमेति सद्य एव तद्रस एव लयमुपैतीत्येवं तत्तत्समर्पणविधावनुसन्धानं विदध्यादिति । न केवलमिह जलगन्धादिद्रव्यार्पणमेव अपि तु तद्द्वारा स्वोपाधिसमर्पणमप्याधिकमनुसन्धेयमिति । यदुक्तं ग्रन्थारम्भ एव 'स्वारम्भभूतात्मकै'रिति ॥ ११० ॥

प्रत्येत्य शक्तिरपि सा निजाञ्जलिगतं रसम् ।
समर्प्य सकले तस्मिन् विलीनेति च भावयेत् ॥ १११ ॥

विमर्शिनी ।

सापि शक्तिः प्रत्येत्य देवं प्रतिगम्य निजाञ्जलिगतं रसं सकले तस्मिन् समर्प्य विलीना च भवतीति च भावयेत् ॥ १११ ॥

विवरणम् ।

प्रत्येत्येति । यतस्सा शक्तिस्स्वयमायाता तदैव प्राप्येत्यर्थः । तस्मिन् सकले समर्प्येति । तत्तादिन्द्रियतत्समवेतमनोहङ्कारबुद्धिमये सकलात्मनीत्यर्थः । कदा पुनरियं भावनेति तत्तत्समर्पणविधावित्येवं निर्देशात् जलगन्धाद्यर्चनविधौ चावश्यं तद्रसोपभोगानुसन्धानस्येष्टत्वात् तदा तावदियं भावना कार्या । निवेद्यग्राससमर्पणविधौ इदानीमेतदभिधानादधुनापीयं भावना भवति । तत्तत्समर्पणविधाविति ग्राससमर्पणानन्तरं कर्मशेषपटलभाविनीभिर्मन्त्रमुद्राभिर्जलगन्धादीनां प्रागुपहृतानामपि प्रधानतया समर्पणं[1] कार्यम् । तदा च तत्तत्समर्पणसमय इत्थं भावनापि कार्येति वक्ष्यति च — 'तत्तद्भूतानिदाने'-त्यादि 'अनामिकामग्रजये'त्यादि चेति ।

'प्राग्दत्तजलगन्धादेराविसर्गमवस्थितिः ।
तस्य चास्वाद्यमानत्वं देवेन च तथेष्यते ॥

रसेषु व्यक्तयो बह्व्यो यतोऽस्तस्तावतीः क्रमात् ।
भावयेदक्षशक्तीश्च देवतायास्तथात्मनः ॥

स्वाक्षोत्था शक्तिरेका वा बह्व्यो देवे तु शक्तयः ।
सादायादाय तद्धस्ते रसव्यक्तीः समर्पयेत् ॥'

इति ॥ १११ ॥

भूयो नैवेद्यसारामृतमयरसयोगेन हृन्मूर्त्यभिख्यं
देवं जाज्वल्यमानज्वलनरुचिमनुध्याय तां धेनुमुद्राम् ।
बद्ध्वा नद्धाञ्जलिः सन् मनुवरमभिजप्याष्टशोऽस्त्रेण रक्षां
कृत्वा बद्ध्वा कवाटं बहिरथ हविषा तन्मयेऽग्नौ जुहोतु ॥ ११२ ॥

---

१. 'तदा' च. छ. पाठः.

विमर्शिनी ।

भूयः तदनन्तरं नैवेद्यसारामृतमयरसयोगेन नैवेद्यसारभूतेन अमृतमयेन रसेन योगात् जाज्वल्यमानज्वलनरुचिम् अतिशयेन ज्वलदग्निनिभं हृन्मूर्त्यभिख्यम् उपहारप्रकाशिकायां 'हृन्मूर्तिं केचिदिच्छन्ती'त्याद्युक्तस्वरूपं देवमनुध्याय ताम् अमृतवर्षं कुर्वतीं धेनुमुद्रां बद्ध्वा नद्धाञ्जलिः सन् बद्धाञ्जलिर्भूत्वा-अष्टशो मनुवरं मूलमन्त्रमभिजप्यास्त्रेण रक्षां कृत्वा कवाटं बद्ध्वाथ बहिः तन्मये देवमये अग्नौ हविषा जुहोतु ॥ ११२ ॥

विवरणम् ।

बाह्यमूर्तौ जलगन्धादिसमर्पणं तावदेवमुक्तम् । अथाभ्यन्तरमूर्तावाह — भूय इति । पुनरित्यर्थः । नैवैद्यसारस्य रसस्य सकले योगस्तावदयमुक्तः । नैवेद्यसारोऽमृतमयोऽप्यस्ति रसस्तद्योगस्तु हृन्मूर्त्यभिख्ये देवे भावनीयः । तदा चासौ जाज्वल्यमानज्वलनरुचिरनुसन्धेय इति । हृन्मूर्तिनिर्देशादयमपि सकलो जाज्वल्यमानज्वलनरुचिग्रहणादग्न्याकारो निष्कलोऽपि विकल्पनीयः । यद्वा भूयान् नैवेद्यसारो येषां ते भूयोनैवेद्यसाराः जलगन्धादिषूपहारद्रव्यसारांशाः । यदुक्तम् — 'अन्नरसोभूयानद्भ्यः प्रकृतिबृंहणादि'ति । भूयोग्रहणेन निवेद्ये रसस्य प्रधानत्वं तदङ्गत्वं चेतरेषां रसानामुक्तं भवति । भूयोनैवेद्यसाराणामेषामस्त्यान्तरोऽमृतमयो रसः । तदुक्तं — 'स पुनस्त्रिविधो रसस्सुधांशुप्रकृतिश्चे'ति । सुखोत्तरैः स्वरूपैरिति तद्योजना हृन्मूर्त्यभिख्ये देवे भावनीया । कीदृशोऽसौ देव इत्याह — ज्वलनरुचिमिति । तदुक्तम् — 'अनलत्वमतीव भासुरत्वादि'त्यादि ।

'भगवत्यनलात्मके विदध्यात् प्रतते तेजसि तद्गते सुधांशुम् ।'

इति च । ज्वलनरुचित्वाद् देवस्य द्रव्यस्य चामृतमयत्वात्तद्योजनाप्रकारोऽपि सूचित एव । तद्योगे तदवस्थामाह — जाज्वल्यमानमिति । यदुक्तं —

'घृतसेकाद्यथा यज्ञे वर्धते हव्यवाहनः ।
तथैव फलदानाय वर्धते भगवांस्तथा ॥'

---

१. 'च सुजा' २. 'स्तदा' छ. पाठः.

इति । भूयो नैवेद्यसारेति भूयोग्रहणेनैतदपि सूचितम् । नैवेद्यामृतस्य प्राधान्यं तेन सहैकीभावो जलगन्धाद्यमृतानामेवं तदमृतमेकमेव सम्पन्नं स्यादिति । अमृतमयेति सोमो नामायं रसकरोंऽश इति सूचितम् । यद्वा जलगन्धादिरसेषु यथा रसगन्धादिशक्तय एवमिहामृतमये भूतादिशक्तिरिति तदुक्तं —

'व्यष्ट्या चापि समष्ट्या च भूतानामाशयाथिनाम् ।
कारणेनापि सम्भेदाद्रसस्तु त्रिविधो मतः ॥'

इति । ग्रन्थारम्भे[1] चैतत् सूचितं — 'स्वारम्भभूतात्मकै'रिति । रसयोगानुसन्धानरीत्यैव सोमयोगानुसन्धानमिष्यते

'भूतादिशक्तिरपि तैजसतः स्वकीयाद्
द्राङ्निःसृता सकलवर्तिरसेभ्य इन्दुम् ।
कृत्वाञ्जलौ तदनलोदितशक्तिहस्ते
सम्प्राप्य तत्र विलयं व्रजति क्षणेन ।

सापि तं स्वाङ्गलिगतं सोमं सकलनिष्कले ।
समर्प्य सर्वतोऽग्न्यात्मन्यथ तत्रैव लीयते ॥'

इति । जाज्वल्यमानग्रहणेन द्विविधैवं[2] समर्पणभावनेत्यपि सूचितम् । हृन्मूर्त्यभिख्यामित्यनेन रहस्यं समर्पणान्तरमपि सूचितम् । हृन्मूर्तेरभिख्या यस्मिन्निति समासः । तस्मिन् सकलनिष्कलेऽन्तस्सकलस्य हृन्मूर्तिर्नामरूपमहमहमित्येकमवभासमानमवतिष्ठत इति । तदुक्तं —

'सकलं तदपीति केचिदाहुः स्फुरणं तत् किल हृद्गतास्य मूर्तिः'

इति । परमपि तन्निष्कलं रूपं पूजनीयांशेषु प्रधानत्वाद् दुरनुसन्धानत्वाच्च स्वेच्छयैव सकलतामापन्नं भवति । मूर्तित्वादेवामृतसारस्य प्रकृतिलक्षणस्यांशा एव रसगन्धादिरूपाः समर्पणीयाः । तद्भावना त्वेवमुक्ता —

'पञ्चभूतात्मभूताः स्युः शक्तयस्तत्समुद्गताः ।
भोक्तुर्यथोक्तदेशेषु रसात्तस्मात्समर्पितात् ॥
आदायाञ्जलिना दिव्यभूतसूक्ष्माणि केवलम् ।
रसनादिप्रदेशेषु हृन्मूर्तौ विनिधाय ताः ॥

1. 'रम्भेऽपि च' छ. पाठः. 2. 'द्विधैवं' ख., घ. छ. पाठः.

लयं गच्छन्ति तत्रैव हृन्मूर्तौ सर्वकारणे ।

इति । मूर्तिद्वयाभिप्रायमेतत् ।

'चिन्मयी सा परा शुद्धा बाह्या मायामयी मता ।'

इति ह्युक्तम् । मूर्तित्रयाभिप्रायेण त्विह व्याख्यातम् । तदा चानलसमर्पितात् सोमादेव दिव्यानां रसगन्धाद्यंशानां समर्पणं भवति ।

'स्वप्राज्ञतः प्रकृतिशक्तय एव मात्रा-
रूपा उदेत्य सकलेऽप्यनलार्पितेन्दोः ।
दिव्यान् रसानपि षडञ्जलिभिर्गृहीत्वा
हृन्मूर्तिशक्तिषु समर्प्य तथा वियन्ति ॥
ताः स्वाङ्गहृद्यार्पितांस्तांस्तु हृन्मूर्तेरक्षशक्तयः ।
तदक्षेषु समर्प्याथ तत्रैव प्राप्नुयुर्लयम् ॥'

इति । तथा वियन्तीति । प्राग्वत् तदक्षेषु लीयन्त इत्यर्थः । सोमसमर्पणे निवेद्य-मुद्रैव । मुद्रामन्त्रे तु शक्तिर्बीजं भूतयोनिपद्माख्या वासुदेवेश्वरादेर्मूर्त्तिः सोम-पदं च योज्यम् । हृन्मूर्तौ रससमर्पणे सकलवदेव मन्त्राः । किन्तु दिव्यं जलं दिव्यं गन्धमित्यादि पदं योज्यमिति । किञ्चैवंसम्भवे प्रागुक्तं प्राणाहुतिपञ्चकमपि रससोमप्रकृतिभावनया त्रिवारमुचितम् । प्राणेषु पृथग्रसाः प्राणादिसमवायिन्यां प्राणशक्तौ सोमः तच्छक्तिमात्रे चिद्रूपे प्रकृतिसमर्पणं भावनाप्रधानमिति । किञ्च विभक्तविनियोगोपगमे निवेदितजलगन्धाद्यन्वितनिवेद्यजातत एव सकल-विषयं सोमांशं सकलान्तर्वर्तिन्यनलात्मन्यायोज्य पुनर्मन्त्रमुद्राभ्यामियं भावना कार्या । विनियुक्तविभागोपगमे तु सकलस्य जिह्वाघ्राणाद्यक्षार्पितजलगन्धादिरसा-न्वितजिह्वार्पितनिवेद्यजातरसतस्तदविषयं सोमांशं तदन्तर्वर्तिन्यनलात्मन्यायो-ज्येति भेदः । एवं प्रकृतिसमर्पणेऽपि सकलनिवेदितद्रव्यतो वा सकलसमर्पित-रसतो वा तदनलसमर्पितसोमतो वा तदविषयं प्रकृतिं तदन्तर्गतहृन्मूर्तावायोज्य पुनर्मन्त्रमुद्राभ्यामियं भावना स्यादिति । सकुसुमाभ्यां हस्ताभ्यां तन्मुद्रया तद्बीजेनोद्वासनप्रदायोजना स्यात् । केवलहस्ताभ्यामेव तन्मुद्रया तन्मन्त्रेण भावनेति । निर्भेद इति निवेद्यमाहङ्कारिकं वा स्यात् । तथा चोक्तम् —

१. 'लार्चि' घ. पाठः. २. 'शक्तिर्वा' घ. ङ. च. पाठः. ३. 'कमिति' घ. ङ. च. पाठः. ४. 'ञ्च भक्त' च. पाठः. ५. 'क्षजलार्पितग', ६. 'तन्निवेद्य' ख पाठः. ७. 'भेद इति' ख. घ. पाठः.

'अहङ्कारात्मकं चान्नं बुद्धिरूपं रसत्रयम् ।
मन्त्रं गुणात्मकं चैशं ज्ञानशक्त्या समर्पयेत् ॥'

इति । सकृद्दर्पणाभिप्रायमेतत् ।

भोक्त्रैको विग्रहैकत्वे द्रव्यं चैकं सकृच्च तत् ।
तस्मिन्नर्घ्ये तदा तस्मिन् कृत्स्नैकानन्दसम्भवे ॥

इति । सकृद्दर्पणेऽपि स्थूलसूक्ष्मादितदंशानां भोक्तर्यपि स्थूलसूक्ष्माद्यंशेष्वन्वयो भवति । अहङ्कारात्मकं चान्नमित्यत्रान्नं तदीयसाररूपरसलक्षणमेव । तच्च द्रव्यं, तदीयो गुणो, 'बुद्धिरूपं रसत्रय'मित्युक्तो रसः । स च सत्त्वादिगुणभेदतो मधुरकटुतिक्ताद्यवान्तरभेदात् त्र्यंशो भवति । द्रव्यस्यैवान्नसाररूपस्येदमित्थ-मित्येवं विशेषाकाररूपस्तद्विमर्शलक्षणो मन्त्रः । द्रव्यस्य तेजोरूपस्य द्युति-स्थानीयो रसः प्रकाशस्थानीयो मन्त्र इति । यद्यप्यन्न एवैतदुक्तं तथापि जलगन्धादिष्वपि तदीयसाररूपरसलक्षणेषु[1] समानमेतत्, गुणविशेषाकारो-पपत्तेः । पृथगर्पणेऽपि सममेवैतत् । तत्र सकल एतत् सर्वं भवति । सकलनिष्कले त्वनलात्मनि सोमो द्रव्यं तदीयो रसश्च त्र्यंशस्तद्विशेषाकाररूपो मन्त्र इति । गुणात्मकं चैशमित्यैशशब्देन मन्त्रोऽभिप्रेयते । ईशस्याधिपतेः सम्बन्धिनं मन्त्रमिति । पृथिव्यादीनामधिपतयश्च पुरोक्ता एव 'शर्वो रुद्रः पशुपतिरथे'त्यादि । तत्र तु पशुपतीशानमहादेवा अहङ्कारबुद्धित्रिगुणा-नामीश्वराः । तदीयमन्त्राश्च तद्विशेषान्विता द्रष्टव्याः । यथा ओं ह्रीं वं नमः शिवायात्मने भवाय रसतन्मात्रात्मकाय जलात्मने नम इत्यादि । ओं ह्रीं वैं नमः शिवायाहङ्कारात्मने पशुपतये शब्दादिसामान्यतन्मात्रात्मा-कायान्नात्मने नमः । ओं ह्रीं सां सीं सूं नमः शिवाय बुद्ध्यात्मने ईशा-नायान्नरसगुणात्मकाय मधुरमध्यमतीक्ष्णरसात्मने नमः । ओं ह्रीं अं नमः शिवाय त्रिगुणात्मने महादेवायान्नरसप्रकाशात्मकाय मन्त्रात्मने नमः इति । गन्धादिष्वन्नगुणात्मकादिपदस्थाने जलगुणात्मकाय जलप्रकाशात्मकायेत्यादि पदं योज्यमिति । सकृद्दर्पणे जलगन्धादिषु द्रव्यरसमन्त्राणां क्रमेणैकभोक्त्रा-त्मनि देवे समर्पणम् । पृथगर्पणे पूर्वमेषां सकले भोक्त्रात्मनि पुनस्सोमरसमन्त्रा-णामनलात्मनि ततः प्रकृत्यंशानां दिव्यरसगन्धादिद्रव्यतद्गुणमन्त्राणां हृन्मूर्ता-

1. 'त्र्यंशो भ' घ. च. पाठः. [1] 'क्षणमेषु' क. ङ. च. पाठः.

विति विभागः । यदा जलात्मकमेव निवेद्यं यदुक्तम् — 'तोयोर्व्यनन्तपवनानलवारिसारानि'ति तदा स्वपञ्चमूर्तय एव भूताधिपतयो ग्राह्याः । वक्ष्यति च 'अथाद्यर्णयुतात्मनार्णसहितं टान्तस्वमूर्त्याह्वय'मिति । ओं ह्रीं वं नमः परायाबात्मनेऽनिरुद्धाय रसतन्मात्रात्मकाय जलात्मने नमः इत्यादि । ओं ह्रीं वं नमः शिवायाबात्मने वामदेवाय रसतन्मात्रात्मकाय जलात्मने नमः इत्यादि । रसे तु आं ह्रीं श्रीं सां सीं सूं नमः परायाबात्मनेऽनिरुद्धाय जलरसगुणात्मकाय मधुरमध्यमतीक्ष्णरसात्मने नमः इत्यादि । मन्त्रे तु ओं श्रीं अं नमः परायाबात्मनेऽनिरुद्धाय जलरसप्रकाशात्मकाय मन्त्रात्मने नमः इत्यादि । एवं शिवादिष्वपि ज्ञेयम् । सोमे तु ओं श्रीं नमः पराय भूतसामान्यात्मनेऽमृतात्मकाय सोमात्मने नम इत्यादि इति । यद्वा पञ्चमूर्तय एव द्रव्यरसादिरूपाः । तदुक्तम् —

'वीर्यरूपरसावस्थैर्जुष्टं सङ्कर्षणादिभिः ।'

इति । तत्र वीर्यं देवानन्दकरत्वं, रूपं द्रव्याकारादि प्रकाशात्मकं, रसश्च मधुरादित्रिरूपः[1], द्रव्यन्तु नारायणः । तदुपभुज्यमानं द्रव्यशक्तिमात्रं स्यात् । तदनुगतमेव च तद् द्रव्यं भवति । तच्छक्त्यवस्थो वासुदेव इति सम्प्रदायः । शिवादिषु सद्योजातादयो द्रव्यादिरूपाः तन्मन्त्राश्च प्राग्वदूह्या इति । जलगन्धादीनि च तत्तन्मन्त्रैर्महनीयानीति च ज्ञेयम् । ज्ञानशक्त्या समर्पयेदिति भावनाभिप्रायम्, यद्वा भावनाप्रकाराभिप्रायम् । तत्तत्समर्पणसमये स्वहृदयतो[2] ज्ञानशक्तिरतिविमलाभा कन्यकारूपा निरेत्य तत्तद्द्रव्यसन्निधिं प्राप्य ततो द्रव्यरसमन्त्रांशान् सकृत् पर्यायेण वा स्वाञ्जलिनोपादाय देवस्य तत्तदिन्द्रियेषु मनोबुद्धिसमन्वयिषु सकलात्मान्वितेषु समर्प्य[3] तिरोभवति इत्येवं भावयेदिति । अथ रससोमप्रकृत्यंशसमर्पणानन्तरं किं कार्यमिति तदाह — तां धेनुमुद्रां बद्ध्वेति । सकळानलहृन्मूर्त्यात्मकदेवसम्मुखतयैतत्[4] । द्रवौमिति मन्त्रेण सुरभिमुद्राबन्धनं भवति । तामिति दिव्यामृतदोहनीयमिति प्रसिद्धिः सूचिता । तदुक्तम्—'धेनुमुद्रेयं दिव्यामृतसुवर्षिणी'ति । ततश्चैतत् सूचितत् । सुरभिमुद्राकलनसमये तत्सन्निहितसुरभिशक्तेरूधःस्थलाद् दिव्यामृतवर्षयोगतो रससोमप्रकृत्यंशानां स्फीततापचौ सकलादीनां तदुपभोगानन्दवृद्धिक्रमेण तेषामानन्दार्णवनिमग्नतावस्थापि भावनीयेति । एतदभिप्रायेण च ग्रन्थारम्भ

---

१. 'जलादीनि' ख. ग. घ. पाठः. २. 'तो शक्त' च. पाठः. ३. 'र्प्यैति' ङ. छ. पाठः. ४. 'लह्वानां' ख. पाठः.

उक्तं 'सदापि पूर्णानन्दरसानुभूस्सन्तर्पितं' इति । नद्धाञ्जलिस्सन् मनुवरमभिजप्याष्टश इति वाक्यम् । नद्धाञ्जलिर्बद्धाञ्जलिः । मनुवरमिति तत्तन्मूलमन्त्राभिप्रायम् । तदा भावनादरार्थं वरग्रहणम् । अस्त्रेण रक्षां कृत्वेति । एवमवस्थस्य देवस्य तालत्रयादिना रक्षाकरणमुक्तम् । बद्ध्वा कपाटं बहिरिति । तदनुज्ञापूर्वकं बहिर्निर्यन् प्रासादीयं कपाटं कवचेन बद्ध्वेति भावः ।

'येनाध्वना प्रविष्टोऽन्तस्तेनैव निरियाद् बहिः ।
वामपादेन देवाय पृष्ठं परिहरन्निजम् ॥'

इति । अस्त्रेण रक्षां कृत्वेत्येतदिहापीष्यते । कपाटबन्धनानन्तरमस्त्रेण प्रासादपरितोऽग्निप्राकारकरणमेतदुक्तम् । द्वाःस्थानुज्ञापनमपीष्यते । अथ हविषा तन्मयेऽग्नौ जुहोत्विति । पूजाङ्गतया होमोद्देशः । निवेद्यस्यांशं प्रागेव पृ(थक्)पात्रान्तरे होमाद्यर्थं सम्पादनीयम् । तेन हविषायं होमः । यदुक्तं— 'कृत्वांशेन निजाग्ना'वित्यादि । पूजादक्षिणभागे चायं तदङ्गहोमः । तथा चोक्तम् —

'पूजादक्षिणभागे तु होमस्थानं प्रकीर्तितम् ।'

इति । तन्मयेऽग्नावित्यावाहनात् पूर्वमग्नौ मूलाराधनेन प्रासादस्थदेवस्य कलया सन्निधानमपि भावनीयमिति सूचितम् ॥ ११२ ॥

परिसमूहनपूर्वविधावधौ
परिसमर्चितपीठनिवेशितम् ।
यजतु देवममुं सकलीकृतं
सपरिवारमथो जुहुयादिति ॥ ११३ ॥

विमर्शिनी ।

पूजाहोमं विवृणोति — परिसमूहनेति । परिसमूहनपूर्वविधावधौ परिसमूहनादिक्रियावसाने परिसमर्चितपीठनिवेशितं पूजितपीठे आवाहितं सकलीकृतं देवममुं सपरिवारं परिवारसहितं यजतु । अथो इति वक्ष्यमाणविधिना जुहुयाच्च ॥ ११३ ॥

विवरणम् ।

होमक्लृप्तिं दर्शयति — परिसमूहनपूर्वविधावधाविति । परिसमूहनपूर्वकस्य होमपुरस्ताच्चन्त्ररूपस्य विधानस्यान्ते इत्यर्थः । स्थण्डिलेऽग्निं प्रतिष्ठाप्य परिसमूहनपर्युक्षणानन्तरं हविषः पर्यग्निकरणं विधाय गन्धपुष्पाभ्या-

---

१. 'स्य कालताल' क. पाठः. २. 'जापन' ग. घ. ङ-पाठः. ३. 'व पात्रा' क. ङ. पाठः. ४. 'तदङ्गो हो' ङ. पाठः. ५. 'मा पर्यग्नि' ङ. पाठः.

मन्न्याराधनममितः पर्युक्षणेन सह कुर्यादिति । निवेशितशब्देन मूर्ति-कल्पनापूर्वकं विधिवदावाहनमुक्तम् । देवममुमिति । तन्मयेऽमावित्येवं प्रकृतमिति भावः । अथो इति । जुहुयादित्यन्वयः । वक्ष्यमाणविधयेति भावः ॥ ११३ ॥

सतारभूरादिकपीठिकाणुभिः
सकृत्सकृत् साष्टशतं स्वमूलतः ।
दशांशमङ्गाणुभिरेकशः परै-
र्निजावृतिव्याहृतितारकैः क्रमात् ॥ ११४ ॥

विमर्शिनी ।

सतारभूरादिकपीठिकाणुभिः प्रणवेन व्याहृतिभिः पीठमन्त्रैश्च सकृत् सकृत् , स्वमूलतः साष्टशतम् अष्टसहितं शतम् , अङ्गाणुभिर्मूलाद् दशांशं परैरन्यैः निजावृतिव्याहृतितारकैः निजानिजावरणमन्त्रैर्व्याहृतिभिस्तारेण च (एक-शः) क्रमात् जुहुयादिति पूर्वस्माच्छ्लोकादानयेत् ॥ ११४ ॥

विवरणम् ।

साष्टशतं स्वमूलत इति । प्रणवोपचारहोमपूर्वकमिति भावः । साष्टशतमित्यष्टाविंशत्यादिसङ्ख्याविकल्पोपलक्षणम् । दशांशमङ्गाणुभिरिति मूर्तिमन्त्रोपलक्षणमेतत् । तदुक्तम् —

'दशांशमङ्गमूर्तीनामन्येषामेकशः क्रमात् ।'

इति ।

'मूर्त्यङ्गैस्तद्दशांशं तु विघेशाद्यैः सकृत् सकृत् ।'

इति च । साष्टशतसङ्ख्यायामेकादशसङ्ख्या दशांशोऽष्टाविंशतिसङ्ख्यायां त्रिसङ्ख्या अष्टसङ्ख्यायान्तु सकृत्सकृदिति चावगन्तव्यम् । परैरित्येतदेव दर्शयति — निजावृतिव्याहृतितारकैरिति । यदुक्तम् —

'मूलेनाष्टशतं त्रिस्त्रिरङ्गैरिशष्टैः सकृत् सकृत् ।
त्रिशोऽपि विष्वक्सेनाय व्याहृतिप्रणवैस्सकृत् ॥'

इति । त्रिस्त्रिरङ्गैरिति सङ्ख्याविकल्पोऽर्थाद् भवति । विष्वक्सेनग्रहणं निर्माल्य-धार्युपलक्षणम् इति । ब्रह्मार्पणेनापि सकृद्धुत्वा व्याहृतिप्रणवहोमः । होमेऽपि

1. 'प्रकृतिभावः' ख. पाठः.

पूजोक्तैव । देवस्य जलगन्धादिहूयमानहविरन्तोपहारोपभोगभावना कार्येत्यव-गन्तव्यम् । हुतान्ते मूलमन्त्रानुजपश्च हुतसङ्ख्ययेष्यते । यदुक्तम् —

'परिषिच्य पुनर्जप्त्वा होमशेषं समाप्य च ।'

इति ॥ ११४ ॥

प्रसन्नयज्वा परिषद्बलिं च
मन्त्री हुताशेऽथ समीरणे वा ।
द्वारोपसन्ने प्रविधाय चाचा-
न्तोऽन्तर्विशेद् द्वाःस्थकृताभ्यनुज्ञः ॥ ११५ ॥

विमर्शिनी ।

प्रसन्नयज्वा अग्नौ प्रसन्नपूजाकृद् मन्त्री बलिमन्त्रज्ञः हुताशे वाथ समीरणे वा द्वारोपसन्ने द्वाराभ्याशे परिषद्बलिं च प्रविधाय च आचान्तः आचमनकृद् द्वाःस्थकृताभ्यनुज्ञः द्वाःस्थाभ्यां कृतानुज्ञः अन्तः प्रासादान्तः प्रविशेत् ॥ ११५ ॥

विवरणम् ।

प्रसन्नयज्वेति । इहैव वक्ष्यमाणरीत्या प्रसन्नपूजोक्ता । लयाङ्गानन्तरं प्रणवेन पीठावरणविलापनपूर्वकं निष्कलीकृत्योद्वासनमपि कार्यमिति । हुताशे-ऽथवा समीरणे द्वारोपसन्ने मन्त्री परिषद्बलिं च प्रविधायेत्यन्वयः । हुत-शेषेणेति शेषः । हुताशने समीरणे इति चाष्टमूर्तिमध्येऽग्नेर्वायोश्च ग्रहणम् । तेन तत्पीठिकायामित्यपि लभ्यते । द्वारोपसन्न इति । तत्र नियमार्थमुक्तम् । प्रासादद्वारस्य योऽनयोरुपसन्नः सन्निहितस्तस्मिन्निति । प्रायिकं चैतत् । प्रत्यग्-द्वारेऽप्यग्नौ[1] बलिविधानं सामान्यतो दृश्यत इति । मन्त्रीति[2] बलिमन्त्रप्रयोग-विदित्युक्तम्[3] । तदुक्तम् —

'अनिले वानले पीठे द्वारयोग्यं बलिं हरेत् ।

अग्नये तेजोधिपतये देवमुखाय रुद्रपारिषदे नमः ।

त्रिवारं पञ्चवारं वा बलिं दत्त्वाऽमुना हरेत् ।

ओं नमो रुद्रपारिषदेभ्य' सर्वेभ्यो[4] भूतेभ्यो नम' इति । वायवे देवात्मने इत्यपि

१. 'तं च वाष्ट' ख. पाठः. २. 'द्वारेऽग्नौ' च. पाठः. ३. 'क्तम् । अनिले' क. पाठः. ४. 'सर्वेभ्यो नमो नमः' ख. घ. च, छ, पाठः.

द्रष्टव्यम् । रुद्रपदं विष्ण्वादिपदोपलक्षणम् । बलिप्रकारस्तूत्सवपटले द्रष्टव्यः । वक्ष्यति च 'प्रोक्ष्याराध्ये'त्यादि । रुद्रपारिषदेभ्य इत्येवं मन्त्राम्नानादस्मिन्नेव पीठेऽयं बलिर्न पार्श्वमण्डल इत्यवसीयते । सति सम्भवे पूजाङ्गतया ब्राह्मण-भोजनमपि शक्तित इष्यते ।

'रुद्रमूर्तिमयान् विप्रान् भोजयेद् घृतपायसम् ।'

इति चोक्तम् । रुद्रमूर्तिग्रहणं तत्तद्द्वादशमूर्त्याद्युपलक्षणम् । पुनः प्रदक्षिणप्रणा-मावप्युपचारेण मूलेन बोचितौ । यदुक्तम् —

'ततः प्रदक्षिणीकृत्य प्रणमेद् दण्डवत् क्षितौ ।'

इति । आचान्त इति । बलिकरणादाचमनमेतत् । द्वाःस्थकृताभ्यनुज्ञोऽन्त-र्विशेदित्यन्वयः । वायुबीजेन द्वारोद्घाटनं भवति ॥ ११५ ॥

संबन्ध पानीयसमर्पणं[1] च
कृत्वा समुद्वास्य मुखार्चिरास्ये[2] ।
दत्त्वा पिधानीयजलं तदन्नं
निर्माल्यभुक्सात् प्रकरोतु मन्त्री[3] ॥ ११६ ॥

---

१. 'मावुप' क. ङ. पाठः. २. 'णायं कृ' ख. पाठः. ३. 'न्त्री ॥
उर्वी विशोध्य वितरेत् परमाय पुंसे
गण्डूषदन्तपवनादियुतं क्रमेण ।
हस्तास्यमार्ष्टिमुखवासमुखोपहारान्
देवं समर्च्य तमपूपमुखैर्धिनोतु ॥
एनं प्रसन्नं जलगन्धपुष्पै-
रभ्यर्च्य पुष्पाञ्जलिमादरेण ।
मन्त्रैर्मनीषी निगमागमाप्तैः
कुर्वीत सर्वेश्वरतोषणाय ॥
गुरुभ्य इदमेवमादिपदपूर्वकेणाणुना
करोतु कुसुमाञ्जलिं गुरुपितृक्षमात्रात्मनः ।
सहोदरकुटुम्बिनीतनयवंश्यसाध्यांस्तथा
महीतलसमाश्रितांस्त्रिभुवनाश्रितांश्चोद्दिशन् ॥
प्रीणातुमन्त्रेण समर्प्य कर्म त-
ज्जप्त्वा पदाञ्जस्पृगणुं सहस्रशः ।
गुह्यातिगुह्येत्यणुना जपार्पणं
समाचरेत् सोदकमङ्घ्रिमूलके ॥
इतः पूर्वं ख. पाठः.

विमर्शिनी ।

देवं संबन्ध्य मन्त्री पानीयसमर्पणादिमन्त्रज्ञः पानीयसमर्पणं च कृत्वा मुखार्चिः रसनारुचीरास्ये समुद्वास्य पिधानीयजलं दत्त्वा तदन्नं निर्माल्यभुक्सात् प्रकरोतु निर्माल्यभुजोऽधीनं कुर्यात् ॥ ११६ ॥

विवरणम् ।

संबन्ध्येति । स्वात्मने प्राग्वद्देवभावनापूर्वकमिति[2] ज्ञेयम् । पानीयसमर्पणं च कृत्वेति । यदुक्तम् —

'एलापाटलकर्पूरपाटीरसुरभीकृतम् ।
हिमशीतलमच्छाच्छं पानीयं च निवेदयेत् ॥'

इति । तदपि पात्रान्तरे सम्पाद्यास्त्रप्रोक्षणादि सर्वं विधाय मूलेनापचारेण वा पानीयामृतं निवेदयामि समर्पयामीति वोक्त्वा समर्पणीयम् । शङ्खेनैव वा समर्प्यते । अत्रापि रस एव देवभञ्चतीति ज्ञेयम् । समुद्वास्य मुखार्चीरास्य इति । पुनरपि त्रिवारं पञ्चवारं वा ग्रासनिवेदनं तन्मुद्रया विधाय प्रागभिध्यातरससोमप्रकृत्यंशसमर्पणानुसन्धानं तन्मन्त्रैरेव विधायैतत्[3] कार्यम् । प्राग्यदुक्तं 'दोर्भ्यां सपुष्पं रसनारुचीरिह विसृज्य मन्त्रीति' तेनैव मन्त्रेण तद्विलोम्येनैतत् कार्यम् । कृत्स्नरसोद्वासनपूर्वकं चैतदुचितम् । पुनरपि पञ्चीकारसद्भावेन मलधातुरसयोगोपपत्तेः । शेषभुजि तन्निर्माल्योपहरणोपपत्तिः । यथोक्तम् —– 'मांसादि भागं यथाशब्दमितरयोश्चे'ति ।

'कार्या जलादिष्वपि तत्तदक्षरुक्-
प्रसारधीः प्राग्विदुषा निवेद्यवत् ।
पश्चादरुगुद्वासनधीश्च शेषभु-
ज्यथार्पणं पुष्पनिवेद्ययोः सतोः ॥'

इति । जलगन्धादीनामुपहृतानामनवस्थानं पुष्पनिवेद्ययोरेव निर्माल्यतया सद्भाव इति । तयोरेव सतोः शेषभुजि प्रतिपत्तिरिति । दत्त्वा पिधानीयजलमिति । तन्मन्त्रेण शङ्खेनेति भावः । कृत्वा यथोक्तं परिषेचनादिकमित्युपस्तरणीयजलदानस्याप्यभिप्रेतत्वादेतद्विधानम्[4] । जलस्यैव कोऽप्यंशो रससोमप्रकृत्यंशात्मकस्या-

---

१. 'स्मनः प्रा' घ. पाठः. २. 'देव भा' ख. पाठः. ३. 'कृत्यांश'. ४. 'भाय' ख. पाठः.

न्नस्योपस्तरणमपिधानं च रसनेन्द्रियलिङ्गदेहद्वन्मूर्तिरसनेन्द्रियेषु भावनीयोऽर्था-दवसीयते । विनियुक्तानामप्येषां रसनेन्द्रियादिषु यावत्प्रसन्नार्ध्यं सकलादि-भोक्तृणामानन्दकरतयावस्थानमपि गम्यते । तदेतद् द्रव्यस्य वीर्यमवगन्तव्यम् । तदा च तच्छक्तिमात्रतया स्वरूपानन्दतादात्म्यमुपैति । यदुक्तं — द्रव्य-देवतासम्बन्धश्चैकात्म्यलक्षणः सूचित इति, सदापि पूर्णानन्दरसानुभूरिति च, तदन्नं निर्माल्यभुक्सात् प्रकरोतु मन्त्रीति । तद्विसृष्टं निर्माल्यमन्नं निवेद्यजातं स्वस्वनिर्माल्यभुजे निवेदयेदित्यर्थः । तदन्नमिति पुनरपि पञ्चीकारवशाद् रसाद्युपपत्तिरपि सूचिता । निर्माल्यभुक्सात्प्रकरोत्विति तदधीनवचने साति-प्रत्ययः । तदधीनकरणं च कामं तदुपभोग्यतापादनं निवेदनमेव । तदुक्तम् —

'अन्नशेषं च निर्माल्यं चण्डेशाय निवेदयेत् ।'

इति । मन्त्रीति । तन्मन्त्राभिज्ञः सन्नित्यर्थः । यदुक्तम् —

'अपिधानीयपाथोऽपि दत्त्वोत्तरत उद्धृतम् ।
तन्निवेद्यं सनिर्माल्यं विष्वक्सेनाय कल्पयेत् ॥'

इति ।

'नमो भगवते विष्वक्सेनायेति पदत्रयात् ।
इदं निवेदयामीति ताराद्यस्तन्मनुः स्मृतः ॥'

इति ।

'कृत्वा तदेव निखिलं चण्डेशाय निवेदयेत् ।
तत्समीपं समानीय तन्निर्माल्यपुरस्सरम् ॥'

इति च । 'तारेण देवेऽनुगतं विभूतिजातमि'त्यत्र निर्माल्यभुजो न विलापन-मित्यर्थादवसेयम् । यद्वा स्थापितस्यैव निर्माल्यभुजोऽन्तर्भावनेदानीं कार्येति । तस्य पूजने तु जलगन्धाद्युत्पाद्यः । पुष्पं तु निर्माल्यमुत्पाद्यं च युक्तमिति ज्ञेयम् इति ॥ ११६ ॥

गण्डूषदन्तपवनादियुतं प्रदाय
हस्तास्यमार्ष्टिमुखवासमुखोपहारान् ।

---

१. 'णविधा' क. पाठः. २ 'सेनेन्द्र' ख. पाठः. ३. 'पतानन्द' छ. पाठः. ४. 'सृष्टनि' घ. पाठः. ५. 'भ्करक उ' ख. घ. पाठः. ६. 'सुनि' ख. पाठः.

देवं समर्च्य विनिवेद्य च लड्डुकाद्यं
वाद्यादिभिः प्रधिनुयाच्च नृपोपचारैः ॥ ११७ ॥

विमर्शिनी ।

गण्डूषदन्तपवनादियुतं गण्डूषदन्तधावनादिना युतं यथा भवति तथा हस्तास्यमार्ष्टिमुखवासमुखोपहारान् हस्तमार्जनिकामास्यमार्जनिकां मुखवासादिकांश्चोपहारान् प्रदाय देवं समर्च्य लड्डुकाद्यं लड्डुकापूपादिकं विनिवेद्य वाद्यादिभिः वाद्यगाननृत्तादिभिः नृपोपचारैः राजोपचारैः प्रधिनुयात् प्रकर्षेण प्रीणयेत् ॥ ११७ ॥

विवरणम् ।

गण्डूषदन्तपवनादियुतमिति । प्रदायेत्येतद्विशेषणम् । मूलेन चतुर्वारं गण्डूषं शङ्खेन दत्त्वा हस्तावसेचनं च दत्त्वा दन्तशोधनं किञ्चिदभ्योक्षणादिसंस्कृतं समर्प्य पुनरपि गण्डूषं द्वादशवारं दत्त्वा हस्तोद्वर्तनं दत्त्वा यथास्वमर्घ्यपाद्याचमनीयानि दद्यात् । वक्ष्यति च— 'नैवेद्यविधेः परं त्रयमिदं[1] गण्डूषत इति ।'

'पाद्यमर्घ्यं तथाचामं चन्दनं पुष्पमेव च ।'

इति चोक्तम् । मूलमुक्त्वा गण्डूषं समर्पयामीत्येवं मन्त्रो[2] भवति । हस्तास्यमार्ष्टिमुखवासमुखोपहारानिति । मार्ष्टिर्मार्जनम् । हस्तमार्जनं मुखमार्जनं च तदुचितपटासम्भवे तथा प्रतिपत्तिः, कल्पयामीति च मन्त्रभेदः । मुखवासग्रहणं करवासोपलक्षणार्थम् । करवासं मुखवासमिति । मुखोपहारं समर्पयामि[3] कल्पयामीति वा । यद्वाञ्जनं समर्पयाम्यनुलेपनं समर्पयामीति । दर्पणस्याष्टमङ्गलानां माल्यभूषणानां चोपलक्षणमेतत् । तदुक्तम् —

'गण्डूषदन्तपवनाचमनास्यहस्त-
मृज्यानुलेपमुखवासकमाल्यभूषा ।'

इति । सर्वत्रान्तरान्तरा जलदानं सामान्यसिद्धम् । देवं समर्च्येति जलगन्धादिभिः प्रसन्नपूजाभिधानम् । परिवारान् प्राग्वत् पृथक् ध्यात्वा तैरावृतस्यैत-

---

१. 'दमिति गण्डूषं द्वादशत इति' ङ. पाठः. २. 'व मन्त्रो' ख. पाठः.
३. 'मीति वा, यद्वा' ख. पाठः.

दर्चनं भवति । तदुक्तं — 'पुरेव गन्धादिभिः सपरिवारामि'ति । (वि)निवेद्य च कङ्डुकाद्यमिति । तदुक्तम् —

'लड्डुकापूपवालाम्बुप्रभृतीनि निवेदयेत् ।'

इति । कादलपृथुकाद्यभिप्रायमेतत् । ताम्बूलैलाद्युपलक्षणं चैतद् भवति । तदुक्तं — 'ताम्बूलमप्यभिसमर्प्ये'ति । ताम्बूलादीनि निवेद्य वेयं प्रसन्नपूजा स्यात् । तदप्युक्तं —

'गण्डूषदन्तपवनादिप्रदानोक्त्यनन्तरम् ।
कर्पूरखण्डक्रमुकैस्ताम्बूलं च निवेदयेत् ।'

इति । वाद्यादिभिर्नृपोपचारैश्च प्रीणयेदित्यन्वयः । वाद्यादीनि समुचितानि मृदुवाद्यानि ! आदिशब्देन ललितगीतनृत्तग्रहणम् । राजोपचाराश्छत्रचामर-ध्वजगजाश्वरथादयः । यदुक्तं — 'दर्पणादिकमेतैर्मन्त्रैः प्रयच्छेत् ।

बुद्धिस्सवासना क्लृप्ता दर्पणं मङ्गलानि च ।
मनोवृत्तिर्विचित्रा ते नृत्तरूपेण कल्पिता ॥

ध्वनयो गीतिरूपेण शब्दा वाद्यप्रभेदतः ।
छत्राणि तव पद्मानि कल्पितानि मया प्रभो ॥
सुषुम्ना ध्वजरूपेण प्राणाद्याश्चामरात्मना ।
अहङ्कारो गजत्वेन क्लृप्तो देहो रथात्मना ॥
इन्द्रियाण्यश्वरूपाणि शब्दादी रथवर्त्मना ।
मनः प्रग्रहरूपेण बुद्धिः सारथिरूपतः ॥
सर्वमन्यन्मया क्लृप्तं तवोपकरणात्मना ।'

इति । बुद्ध्यादिशक्तीनां दर्पणादिरूपेण परिणामोपपत्तेरेवं मन्त्रार्थोपपत्तिरिति ज्ञेयम् । प्रकारान्तरेण स्वोपाधिसमर्पणमप्येवं देवे कृतं भवति ॥ ११७ ॥

भूयः समर्च्य कुसुमाञ्जलिमिष्टमन्त्रै
कृत्वा विधाय मनुवर्यसहस्रजापम् ।
गुह्यातिगुह्यमनुना प्रसमर्प्य भक्त्या
स्तुत्वा प्रदक्षिणविधिं प्रणतिं च कुर्यात् ॥ ११८ ॥

---

१. 'म्बूलाद्यु' ख. घ. च. छ. पाठः. २. 'द निवेद्य वेयं' घ. च. पाठः. ३. 'वाद्यानि स' ख. घ. च. पाठः. ४. 'गीत' ज. पाठः. ५. 'कः' घ. पाठः. ६. 'व तत्रार्थो' क. ज. पाठः.

विमर्शिनी ।

भूयः समर्च्य इष्टमन्त्रैः ईप्सितैर्मन्त्रैः कुसुमाञ्जलिं कृत्वा तत्पादपद्मं स्पृशन् मनुवर्यसहस्रजापं मूलमन्त्रसहस्रावृत्तिजपं विधाय गुह्यातिगुह्यमनुना द्वादशे पटले वक्ष्यमाणेन जपं प्रसमर्प्य भक्त्या सह स्तुत्वा प्रदक्षिणविधिं प्रणतिं प्रणामं च कुर्यात् ॥ ११८ ॥

विवरणम् ।

भूयः समर्च्येति । जलगन्धपुष्पैरर्चनमुक्तम् । कुसुमाञ्जलिमिष्टमन्त्रैः कृत्वेति । पूजितैर्मन्त्रैः प्रणवमूलमन्त्रतद्वेदपुरुषसूक्तश्रीरुद्रवेदागमादिमूलमन्त्रेणावृत्त्या पुनस्तदङ्गादिमन्त्रैरपि । यद्वा पूजितैरभ्यर्हितैः सिद्धैरपवर्गान्वयभाग्भिर्मनुभिः । यद्वेष्टैः तत्तदिष्टार्थकरैः श्रीकरशैवाष्टाक्षरनरसिंहाघोरादिजातीयैः काम्यमनुभिः । सङ्ख्या तु यथार्थं शतपञ्चशतादिरूपा भवति । जलगन्धादिषड्रसेष्वस्ति स्थूलसमष्टिस्सोमप्रकृतिशालिनी सैव पुष्पाञ्जलौ देवे रसनादीन्द्रियसमष्टिभाज्यान्तरे सकलेऽनलद्वन्मूर्तिशालिन्यमृतमयं विनियुज्यत इति सम्प्रदायः । विधाय मनुवर्यसहस्रजापमिति । वर्यग्रहणं मूलमन्त्रपरिग्रहार्थम् । जलगन्धपुष्पार्चनपूर्वकमेतदपि कार्यम् । गुह्यातिगुह्यमनुना प्रसमर्प्येति तज्जपसमर्पणमुक्तम् ।

'ओं गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु मे देव त्वत्प्रसादात् त्वयि स्थिता ॥'

'ओन्नम' इति । 'त्वत्प्रसादाद्धृदि स्थिता ओं नम इति वे'ति । भक्त्येति सर्वत्रापि सम्बन्धनीयम् । पुनर्जलगन्धपुष्पार्चनं स्तुतिं प्रदक्षिणं प्रणतिं च कुर्यात् । स्तुतिमन्त्रा वैदिकास्तान्त्रिकाश्च यथार्थं ग्राह्याः । यथा 'विष्णोर्नुकं वीर्याणि प्रवोचम्' 'इमा रुद्राय स्थिरधन्वने गिरः' इत्यादि ।

'प्रसीद भगवन्मह्यमज्ञानात् कुण्ठितात्मने ।
नमो विरिञ्चिविष्ण्वीशभेदेन परमात्मने ॥'

इत्यादि । प्रदक्षिणं तत्रैव सतो देवं प्रति प्रादक्षिण्येन परिवर्तनम् । तच्चोपचारेण मूलेन वा स्यात् । तथा तदग्रे पञ्चाङ्गनमस्कारोऽपि । यद्वा 'नमो

१. 'तैः सिद्धैः' ख. छ. पाठः. २. 'वे समष्टिरस' क. पाठः.

ब्रह्मण्यदेवाय' 'नमश्शिवाय साम्बाय' इत्यादि मन्त्रग्रहणमिष्यते ॥ ११८ ॥

अथाराध्य तत्पादमूले समस्तं
सुधीरर्पयेत् सोदकं दक्षदोष्णा ।
इतःपूर्वमित्यादिना मां मदीयं
च पूर्वाणुनोंतत्सदित्यात्मना च ॥ ११९ ॥

विमर्शिनी ।

अथाराध्य तत्पादमूले सुधीः 'प्रीणातु भगवानि'त्यादिवक्ष्यमाणमन्त्रेण कर्मसमर्पणज्ञः सोदकं दक्षदोष्णा समस्तं कर्म समर्प्य पुनः इतःपूर्वमित्यादिना ब्रह्मार्पणमन्त्रेण मां मदीयं च पूर्वाणुना 'मां मदीयं चासमत्स्वामिने नारायणाय समर्पयामी'त्यादिना च ओंतत्सदित्यात्मना 'ओं तत्सदि'ति मन्त्रेण च सर्वं समर्पयेत् । ब्रह्मार्पणमनुरपि द्वादशे पटले वक्ष्यते ॥ ११९ ॥

विवरणम् ।

अथाराध्येति । जलगन्धपुष्पैरिति भावः । तत्पादमूले इतः पूर्वमित्यादिना समस्तमर्पयेदित्येवमन्वयः[1] । दक्षदोष्णा सोदकमर्पयेदित्यर्पणप्रकारोपदेशः । सुधीरिति मन्त्रार्थानुसन्धानार्थमुक्तम् । यद्वासनस्वागतादिभिर्जलगन्धादिभिर्भूयो राजोपचारपुष्पाञ्जलिजपादिभिश्च यथास्वमानन्दभाजः सम्भूय महानन्दभाजो देवस्य सम्यगनुसन्धानमुक्तम् । इहेतः पूर्वमिति ब्रह्मार्पणं, मां मदीयञ्चेत्यात्मार्पणं, ओं तत् सदिति सर्वार्पणमिति भेदः । ओं तत्सदित्यात्मना चेत्येवंरूपेण च मन्त्रेणेत्यर्थः। समस्तमर्पयेदित्यनेनैव पूर्वं तावत् कर्मसमर्पणमित्यप्युक्तम् । वक्ष्यति च — 'प्रीणातु भगवानि'त्यादि ॥ ११९ ॥

तारसावित्रिकाम्नायाद्यणुभिः परितोष्य तम् ।
प्रसन्नाय प्रसन्नार्घ्यं प्रदद्यात् प्रश्रयान्वितः ॥ १२० ॥

विमर्शिनी ।

तारसावित्रिकाम्नायाद्यणुभिः प्रणवेन व्याहृतिभिः वेदादिमन्त्रैश्च तं परितोष्य प्रसन्नाय तस्मै प्रश्रयान्वितः विनयेन युक्तः प्रसन्नार्घ्यं प्रदद्यात् ॥ १२० ॥

---

१. 'त्यन्वयः' क. छ. पाठः. २. 'जल' ङ. पाठः.

विवरणम् ।

तारसावित्रिकेति । नित्यस्वाध्यायबुद्ध्या जपाभिधानं सावित्री तत्-सवितुरितीयं गायत्री, आम्नायमनवः स्ववेदगतसूक्तानुवाकादिरूपाः । आदि-शब्देन तान्त्रिकमन्त्रग्रहणम् । यथा विष्णौ जितन्तमूलत्रयपञ्चादि । शिवे स्थाणुमन्त्रमूलपञ्चतत्त्वप्रासादव्योमविद्यादि इति । प्रसन्नायेति सकलगुणप्रधानो-पहारसंप्रीतावस्थानुसन्धानं सूचितम् । प्रश्रयान्वित इति । प्रश्रय .... .... .... ॥ १२० ॥

देवपादसविधाहितशङ्ख-
प्रेङ्खदाहरतु वारि वरीयः ।
तत्कराप्तकलशामृतरूपं
स्वीयपुण्यफलमित्यवगच्छन् ॥ १२१ ॥

विमर्शिनी ।

देवपादसविधाहितशङ्खप्रेङ्खत् देवस्य पादसमीपे आहिते शङ्खे प्रेङ्खत् स्फुरत् वरीयः श्रेष्ठं बारि जलम् आहरतु स्वीकुर्यात् । कथंभूतमित्य-त्राह — स्वीयपुण्यफलं स्वस्य पुण्यकर्मणः फलं तत्कराप्तकलशामृतरूपं तस्य देवस्य करगृहीतकलशस्थामृतात्मकं तादित्यवगच्छन्नाहरत्वित्यर्थः ॥ १२१ ॥

विवरणम् ।

सर्वोपहारसमाराधनमुक्त्वा तदीयफलानुग्रहलाभमप्याह — देव-पादसविधेति । देवस्य पादसन्निधौ सजलं शङ्खमाधाय तत्स्थं जलं प्रेङ्खत् कुर्यात् शङ्खेन परिचालयेत् । तज्जलं तदोरुतरं वरतरं च भवति । तज्जलं सशङ्खं पुनराहरतु । तदानुसन्धानमाह — तत्करात्तेति । स्वीयपुण्यफल-मित्यवगच्छन्नाहरत्विति सम्बन्धः । यदेतत् स्वीयं पुण्यमुक्तविधसमाराधनलक्षणं तस्य फलमपूर्वरूपमेवैतदिति दृढश्रद्धोपपत्तिमानित्यर्थः । पुण्यफलरूपत्वादेव वरीयस्त्वोपपत्तिः । तस्य विशेषणं तत्करात्तकलशामृतरूपमित्येतत् । यस्य पादसविधाच्छङ्खजलमाह्रियते स सकलो देवस्तच्छब्देन गृह्यते । स हि देवस्तदा परितृप्तः स्वेच्छाविभावितमेव तदीयफला पूर्वामृतपरिपूर्णकलशं करेण साध्याभिषिषिक्षयादत्ते तदेव तच्छङ्खोदकं तदाहृत्य तेनात्मन्यभिषेक-क्रिया मोक्षेदिति । तदुक्तम् —

---

१. 'दकं यथानुगृह्यते' क॰ पाठः.

बत्कराकलितोदारकुम्भसंस्थं भवेत् फलम्।
तत्तत्क्रियानुसारेण सौम्यं क्रूरमथापि वा ॥
तेनाभिषिक्तः साध्योऽपि तत्र तत्फलभाग्भवेत्।
तद्धि कालानुसारेण भवेदिति विनिश्चयः ॥

इति। यद्यपि द्वन्मूर्तावेतदुक्तं तथापि तदेवानलसंक्रमंगे क्रमेण सकलेऽप्यवतिष्ठत इत्येवमभिधानोपपत्तिः। इह च देवपादेति न देवस्सकलमात्रं गृह्यते अपि कृत्स्न एव सकलपर्यन्तस्थ्यवस्थो देव इति ॥ १२१ ॥

**अग्रे गुरून् हरनिशाचरदिक्प्रपन्नान्**
**देवासुरान् भुवि पितॄंश्च पुरो विभाव्य।**
**उक्षेत् स्वदक्षिणशयार्पिततीर्थतोयैः**
**स्वं च स्वसाध्यमपरानपि भक्तिनम्रान् ॥ १२२ ॥**

विमर्शिनी।

ततः स्वदक्षिणशयार्पिततीर्थतोयैः स्वदक्षिणकरस्थैस्तीर्थजलैः अग्रे भुवि गुरून् विभाव्योक्षेत्। हरनिशाचरदिक्प्रपन्नान् देवासुरान् ईशदिक्प्राप्तान् देवान् निर्ऋतिदिक्प्राप्तानसुरांश्च पुरोभागे विभाव्य पितॄंश्च स्वं च स्वसाध्यं च भक्तिनम्रानपरांश्चोक्षेत् ॥ १२२ ॥

विवरणम्।

तदभिषेकवल्लीसमपि दर्शयति — **अग्रे गुरून्** इति। ननु स्वयिपुण्यफलं तच्छङ्खजलमित्युक्तं तत् कथं गुर्वादिष्वपि विनियुज्यत इति। उच्यते- सामान्यविशेषात्मकं हि सर्वं फलम्। तत्र सामान्यांशस्य विनियोगोऽयमुच्यते। विशेषांशविनियोगस्तु स्वसाध्यमित्युक्तः। यद्वा तदा प्रपन्नेष्वपि देवस्यानुग्रहसंभवात् तत्फलमपि सहशङ्ख[3] आहृतमिति। अथ वा वार्याहरत्वित्येव तस्य स्वात्मनि विनियोगपर्यन्तमाहरणमभिप्रेतम्। पुनश्शङ्खे[4] जलमादाय तद्देवसविधात् प्रसादतीर्थधिया परिगृह्यते। अस्यैवायं विनियोगोऽपि वक्ष्यते देवस्याग्रे गुरून् देवं प्रपन्नान् विभाव्य उक्षेत्। हरादिशि प्रपन्नान् देवान् निर्ऋतिदिशि प्रपन्नानसुरान् पुनर्देवस्य पुरतः प्रपन्नान् पितॄनुक्षेत्। पुनः पुरतः एव प्रपन्नं स्वमात्मानं तथा स्वसाध्यमपि यदि तदर्थेयं पूजा स्यात्, तथान्यानपि

---

१. 'णं क्रमेण' घ. च. पाठः. २. 'ङ्खे जल' ख. घ. पाठः. ३. 'सह शङ्खे संह' ङ. पाठः. ४. 'खजल' ङ. पाठः. ५. 'ह्य तस्यै' ख. पाठः. ६. 'स्वात्मा' क. ङ. पाठः.

पुरत एव भक्त्या प्रपन्नानिति । स्वसाध्यादीनामपरोक्षत्वात् न भावनापेक्षा । साध्यस्तु दूरेऽवस्थितश्चेद् भावना स्यादिति । स्वदक्षिणशयार्पिततीर्थतोयै-रुक्षेदिति । शङ्खाहृतं प्रसादतीर्थं स्वदक्षिणे शये स्वदक्षिणकरचुलुके पृथक् पृथगर्पयित्वा तैस्तोयैरित्यर्थः । स्वतस्तावत् स्वपरायणानधुना च स्वं प्रपन्ना-नित्येव प्रसादनिबन्धनमिति महाराजस्वभावोऽयमिति च बोद्धव्यम् । यत्र-श्चोक्तं 'प्रधिनुयाच्च नृपोपचारैरि'ति ॥ १२२ ॥

भूयो नत्वा मान इत्यादिनैन-
मेनो* ज्ञाताज्ञातजातं विशोध्य ।
तारेणाराध्यावसानीयमर्घ्यं
दत्त्वा देवं निष्कलीकृत्य रक्षेत् ॥ १२३ ॥

विमर्शिनी ।

भूयो 'मा न एकस्मिन्नागसी'त्येनं देवं नत्वा ज्ञाताज्ञातजातं ज्ञातेन जातमज्ञातेन जातं च एनः अपराधं विशोध्य तारेणाराध्यावसानीयमर्घ्यं दत्त्वा देवं निष्कलीकृत्य रक्षेत् ॥ १२३ ॥

विवरणम् ।

भूयो मान इत्यादिना एवं नत्वेत्यन्वयः । 'मान एकस्मिन्नागसी'ति मन्त्रेण नमस्कारं विधायेत्यर्थः । ज्ञाताज्ञातजमेनः संविशोध्येति । मानुषभाव-सुलभानां ज्ञाततया जातानां च अज्ञाततया जातानां च संभाविनां निष्कृति-विशेषानुचितानां सामान्यतो निष्कृतिरियमिति ज्ञेयम् । तारेणाराध्येति । न तु मूलेनेति भावः । प्राक् परिवारविभावनायां तारेण तद्विलापनपूर्वकमेतत कार्यमिति । अवसानीयार्घ्यं दत्त्वेति । पुष्पगन्धाद्यवशेषं तत् कल्पितमन्त्र-शक्त्युद्वासनार्थतया शङ्खे कृत्वा वर्धन्युदकेन पूरयित्वा मूलेनोपचारेण वावसा-नीयमर्घ्यं समर्पयामीत्येवमेतद्देयम् । वक्ष्यति च अर्घ्यं प्रसादान्ते प्राक् च विसर्जना-

---

१. 'कः 'प्र' क. ङ, पाठः, २. 'तमेनः' क. च. पाठः. ३. 'यमर्घ्यं' ख. घ. पाठ. ४. 'ग् वि' क. ङ. पाठः.

* 'ज्ञाताज्ञातजं संविशोध्य ' इति विवरणानुसारी पाठः.

दिति । एवं निष्कलीकृत्य प्रणवेन किञ्चित् संपूज्य निष्कलेनानुज्ञापनपूर्वकं मूलव्यापकाङ्गन्यासैर्निष्कलं भावयेत् । निष्कलता नाम बहिर्मुखावस्थातोऽन्तर्मुखावस्थापादनमिति । रक्षेदिति । अस्त्रेण तालत्रयादिभिरिति भावः । बिम्बे पूजेयमिति तस्य स्थायित्वाद्रक्षणाभिधानम् । मण्डलादिषु तु पुनः प्रणवेन परिपूज्योद्वासनमेवात्मनि कार्यम् । तदुक्तं —

'पद्मस्थं जङ्गमस्थं वा संहृत्यात्मनि योजयेत् ।
आगच्छावाहने योज्यं क्षमस्वेति विसर्जने ॥
कलशाचोयरूपेण प्रतिमायां नियोजयेत् ।
नोद्धरेत् प्रतिमासंस्थं मुक्त्वा जीर्णादिदूषितम् ॥'

इति । एकबेरविधौ परिवारपूजा न कार्या केवलं विग्रहपूजैव स्यात् । तदुक्तम्—

'उद्वासनं न कुर्वीत स्थापितस्यार्चनाविधौ ।
परिवारैर्विना तत्र पूजनं कीर्तितं बुधैः ॥'

इति । यद्येकबेरविधावपि परिवारपूजेष्यत एव यथोक्तं—

'द्वारपालावथाभ्यर्च्य प्रविश्य भगवद्गृहम् ।'

इति, 'अपनीय च निर्माल्यमि'ति, 'आदावाधारशक्तिं तामि'त्यादि, 'तन्मध्ये, लिङ्गसदृशमि'ति 'अग्रकेसरगं नेत्र'मिति, 'दले विद्येश्वरांस्तद्बाह्ये तु गणेश्वरानि'त्यादि । अत्रैकबेर इयं पूजोक्तेत्यर्थतोऽवगम्यत इति । नवशक्तीनां मध्ये नवमी शक्तिः पीठपद्मकर्णिकासमवायिनी, तस्यां देवविग्रहरूपं बिम्बमवस्थितम् । तदुक्तं —

'मनोन्मनीति या शक्तिः कर्णिकोपरि संस्थिता ।
तस्यामावाहयेद्देवं पूर्वं हृत्पद्मभावितम् ॥'

इति ।

'अनुग्रहं यया युक्तो नित्यं स कुरुते प्रभुः ।
स्थितस्तस्यां सदा पूज्यः परात्मा हरिरव्ययः ॥'

इति । तद्बहिर्दलेषु तद्बाह्ये च सूक्ष्मविग्रहाण्यावरणानि स्युः । पीठस्यैव सर्वावरणचक्रगर्भत्वात् । यदुक्तम् —

१. 'लाञ्छ' च. पाठः. २. 'ज्ञापू' छ. पाठः. ३. 'पूर्वम्' ख. पाठः. ४. 'तरेत्' च. पाठः. ५. 'द्वद्बाह्ये' छ. पाठः. ६. 'हिर्देवेषु' छ. पाठः.

'सर्वदेवताचक्रगर्भात्मने नम' इति । यद्वा पीठेऽङ्गशक्तिपर्यन्तम् , इतरत् सर्वं तद्बहिरेव । पीठशक्तेरेव विभूतितयावरणपद्मानि विभाव्य तेषु कल्पनीयमिति ज्ञेयम् । तथा च शेषभुगपि पीठबाह्ये स्यात् । यदुक्तम्—

'विष्वक्सेनं तथैशान्यां द्वितीयावरणाद् बहिः ।' इति ॥ १२३ ॥

अथ तत्प्रसादकुसुमं शिरसि प्रणिधाय क्लृप्तपवनायमनः ।
परिपूज्य तं हृदि कृताङ्गविधिः परिरक्ष्य तत्कृतमना विहरेत् ॥ १२४ ॥

विमर्शिनी ।

अथ तत्प्रसादकुसुमं गृहीत्वा शिरसि प्रणिधाय क्लृप्तपवनायमनः कृतप्राणायामः कृताङ्गविधिश्च भूत्वा तं हृदि परिपूज्य मानसपूजां कृत्वा परिरक्ष्य तत्कृतमनाः तन्मनस्को भूत्वा विहरेत् आत्मानं पृथक् कुर्यात् ॥ १२४ ॥

विवरणम् ।

अथ पूजारम्भे यत् सकलीकरणादि कृतं तदुपसंहारक्रममपि दर्शयति— अथ तत्प्रसादकुसुममिति । क्लृप्तपवनायमन इति । कालमूर्तेर्मूलमन्त्रात्मनो यजनव्यापारविरतौ पूजारम्भादपि प्रागिवावस्थानार्थतया मूलेन धारणेयमुक्ता । परिपूज्य तं हृदीति मानसपूजोक्ता । यद्वा जलगन्धादिपूजापि । तदुक्तं—

'उद्वास्य हृदये देवं गन्धाद्यैः स्वतनुं यजेत् ।'

इति । कृताङ्गविधिरिति । निष्कलीकारपूर्वकमिति भावः । परिरक्ष्येति । आत्मनोऽस्त्रेण तालत्रयादिना रक्षणमुक्तम् । तत्कृतमना विहरेदिति । ततस्तत्प्रासादाद् बहिर्निष्क्रम्य स्वेच्छया वर्तेत । देवे सन्तता स्मृतिरेव नियम इति भावः । निष्क्रमोऽपीच्छयेति निष्क्रमानभिधानमित्यवगन्तव्यमिति ॥ १२४ ॥

अथ द्वादशवर्णादिमन्त्रान्तरसमर्चने ।
न्यासावरणक्लृप्त्यादौ भिदामात्रं प्रदर्श्यते ॥ १२५ ॥

विमर्शिनी ।

एवं सप्तविधं पूजाविधानं सामान्येनोक्त्वा विष्ण्वादीनामुत्सवादौ कालत्रयपूजार्थं द्वादशाक्षरादिमन्त्रान्तरसमर्चने भेदमाह — अथेति । अथ द्वादशवर्णादिमन्त्रान्तरसमर्चने द्वादशाक्षरषडक्षरादिमन्त्रभेदानां समर्चने न्यासावरणक्लृप्त्यादौ न्यासे आवरणक्लृप्तौ ध्यानादौ च भिदामात्रं प्रदर्श्यते ॥ १२५ ॥

---

१. 'त्मना' घ. पाठः. २. 'ता मू' छ. पाठः. ३. 'दतो ब' ख. घ. छ. पाठः. ४. 'सन्ततस्मृ' ख, 'सततस्मृ' घ. ङ. पाठः.

विवरणम् ।

नित्यपूजाविधानं तावदेवमुक्तम् । अथ नित्याद्युत्सवेषु द्वादशाक्षरादिभिस्सवनपूजापि नित्यैव । वक्ष्यति च — 'कालेषु त्रिषु सावनैः स्वैमनुभिरि'ति । अतस्तद्विधानमपि वक्तुमारभते — अथ द्वादशवर्णादीति । मन्त्रोदयादि सर्वं सामान्यतो लभ्यते ॥ १२५ ॥

अङ्गुष्ठादितलान्तमर्कलिपिवर्णान् षट् करे दक्षिणे
षड् वामेऽपि कनिष्ठिकादितलनिष्ठं सर्गक्लृप्त्या ततः ।
विन्यस्येद् द्विषडङ्गकान्यपि तथा पञ्चाङ्गकानि द्वयो-
रङ्गुष्ठादिकमङ्गुलीषु युगपत् प्रोक्तेति दोर्भावना ॥ १२६ ॥

विमर्शिनी ।

अर्कलिपिवर्णान् द्वादशाक्षरमन्त्रस्याक्षरान् दक्षिणे करे अङ्गुष्ठादितलान्तं षट् , वामेऽपि करे कनिष्ठिकादितलनिष्ठं षट् च सर्गक्लृप्त्या च विन्यस्येत् । तदनुसारेण स्थितिसंहारौ च कुर्यात् । ततो द्विषडङ्गकानि द्वादशाङ्गान्यपि तथा सृष्टिवद् विन्यस्येत् । पञ्चाङ्गकानि द्वयोः करयोरङ्गुलीषु अङ्गुष्ठादितलान्तं युगपन्न्यस्येत् । इति दोर्भावना करभावना प्रोक्ता ॥ १२६ ॥

विवरणम् ।

अर्कलिपिवर्णानिति । द्वादशाक्षरार्णान् दक्षिणे करेऽ[3]ङ्गुष्ठादितलान्तं षड् , वामे करे कनिष्ठिकादितलनिष्ठं षडित्येवं तेषां न्यासक्रमः । मूलेन करतलादिव्यापकं सामान्यसिद्धम् । सर्गक्लृप्त्येति । सर्गक्लृप्तरियम् । स्थितिक्लृप्तिस्संहारक्लृप्तिरप्यस्तीति भावः । द्विषडङ्गकान्यपि तथेति अक्षरन्यासवदित्यर्थः । पञ्चाङ्गकानि द्वयोः करयोरङ्गुलीषु युगपद्विन्यस्येदिति सोपस्कारमन्वयः । मूलपुटितलिपिन्यासैतत्त्वन्यासादि सर्वं सामान्यसिद्धमेव ॥ १२६ ॥

हरिलिपिमनुजाक्षराणि मौलौ
हरिमुखदिक्षु विलोचनद्वये च ।
वदनहृदयनाभिगुह्यजान्व-
ङ्घ्रियुजि च विन्यसतूदयक्रमेण ॥ १२७ ॥

---

१. 'समनु' च. पाठः. २. 'वर्णादीनिति' छ. पाठः. ३. 'नकरे' ङ. पाठः.
४. 'न्यसेदि' छ. पाठः. ५. 'सादि सर्वं' घ. पाठः.

विमर्शिनी ।

हरिलिपिमनुजाक्षराणि हरय आदित्याः तत्सङ्ख्या लिपयो यस्य मनोस्तज्जातानि द्वादशाक्षराणि, मौलौ, हरिमुखादिक्षु इन्द्रादिदिक्षु, विलोचनद्वये युगपत्, वदनहृदयनाभिगुह्यजान्वङ्घ्रियुजि च उदयक्रमेण सृष्टिक्रमेण विन्यसतु । तदनुसारेण स्थितिसंहारावप्यूह्यौ । अत्र यन्नोच्यते तदष्टाक्षरविधानादवगन्तव्यम् ॥ १२७ ॥

विवरणम् ।

हरिलिपिमनुजाक्षराणीति । रविवर्णमनूद्भवान्यक्षराणि । हरिमुखदिक्ष्विति । हरिरिन्द्रः । शिरसः प्रागादिचतुर्षु दिक्ष्विति भावः । विलोचनद्वयमेकं स्थानम् । तथाङ्घ्रियुगपि । उदयक्रमेणेति । स्थितिसंहारन्यासोऽपि सति संभवे सूचितः । अङ्गद्वयादिक्लृप्तिस्तु कर्मशेषे वक्ष्यते — 'मन्त्रार्णैर्द्विषडङ्गकानीत्यादि ॥ १२८ ॥

चक्रं च शङ्खं च गदां च पद्मं चाबिभ्रतं शुभ्रतरावभासम् ।
स्फुरत्किरीटादियथार्हभूषं ध्यायेद्धरिं द्वादशवर्णरूपम् ॥ १२८ ॥
जितादिना प्रोक्तवदर्घ्यकाद्यं दत्त्वार्चयित्वा परिवारयागे ।
पूर्वादितोऽङ्गानि दलेषु शेषं गरुत्मदाद्यं प्रयजेद् यथोक्तम् ॥ १२९॥

विमर्शिनी ।

ध्यानमाह — चक्रमिति । द्वादशवर्णरूपं द्वादशाक्षरमन्त्रमूर्तिरूपं हरिमेवं ध्यायेत् — चक्रं च शङ्खं च गदां च पद्मं च आबिभ्रतं धारयन्तं शुभ्रतरावभासं श्वेततरवर्णं स्फुरत्किरीटादियथार्हभूषम् अष्टाक्षरमन्त्रोक्तभूषणं च ॥ १२८ ॥

उपहारदानादौ विशेषमाह — जितादिनेति । जितादिना 'जितन्ते'न पूर्वप्रोक्तवदर्घ्यकाद्यं दत्त्वा तथार्चयित्वा परिवारयागे तु दलेषु द्वादशदलपद्मस्य दलेषु पूर्वादितो द्वादशाङ्गानि यजेत् । गरुत्मदाद्यं 'वैनतेयाय नमः' इत्याद्यं शेषं च यथोक्तं प्रयजेत् ॥ १२९ ॥

विवरणम् ।

पूर्वादितोऽङ्गानि दलेष्विति । पूर्वदिशि ततोऽवान्तरदिग्द्वये दक्षिणदिशि ततोऽवान्तरदिग्द्वय इत्येवं द्वादशाङ्गानि । पूर्वादिचतुर्दिक्षु हृदयादीनि

---

१. 'मनुभवा' ख. पाठः. २. 'तुर्दि' ख. ङ. छ. पाठः.

कोणेष्वस्त्रमित्येवं पञ्चाङ्गानीति भावः । शेषं गरुत्मदाद्यमिति वैनतेयाद्यावरणमिन्द्रादिवज्राद्यावरणं च ॥ १२९ ॥

अङ्गुष्ठादितलान्तिमं न्यसतु षड्वर्णान् करे दक्षिणे
वामे चापि तथाङ्गकान्यपि मनौ षड्वर्णके शार्ङ्गिणि ।
षड् वर्णान्यथ मौलिफालहृदये नाभ्यूरुपादद्वये
सृष्टौ स्यादितरद्वये तदुपपत्त्याङ्गान्यपि स्वास्पदे ॥ १३० ॥

विमर्शिनी ।

वैष्णवषडक्षरविधानमाह — अङ्गुष्ठादीति । शार्ङ्गिणि षड्वर्णके मनौ दक्षिणे वामे चापि करे अङ्गुष्ठादितलान्तिमं षड् वर्णान् न्यसतु । तथा तद्वद् अङ्गान्यपि न्यसतु । अथ मौलिफालहृदये मौलौ फाले हृदये च नाभ्यूरुपादद्वये नाभावूरुद्वये पादद्वये च षड् वर्णानि न्यसतु । इति सृष्टौ न्यासः स्यात् । इतरद्वये स्थितिसंहारयोः तदुपपत्त्या नाभ्यादिहृदयान्ता स्थितिः, पादादिमौल्यन्तः संहार इत्यर्थः । अङ्गान्यपि स्वास्पदे स्वस्वस्थानेषु ॥ १३० ॥

विवरणम् ।

तथाङ्गकान्यपीति । करद्वयेऽङ्गुष्ठादितलान्तं युगपदित्यर्थः । इतरद्वये तदुपपत्त्येति । नाभ्यूरूपादद्वये मौलिफालहृदये च स्थितिः, पादादिमूर्धान्ता संहृतिरिति भावः ॥ १३० ॥

शङ्खं सचक्रं सगदं सपद्मं
शार्ङ्गं सखड्गं सशरं सखेटम् ।
श्यामः षडात्माष्टभुजैर्दधानो
जिनार्णतोऽर्घ्याद्युपहृत्य पूज्यः ॥ १३१ ॥

विमर्शिनी ।

षडात्मा षडक्षरमूर्तिर्हरिः । शङ्खं सचक्रं सगदं सपद्मं शार्ङ्गं सखड्गं सशरं सखेटं चाष्टभुजैर्दधानः श्यामश्च ध्येयः, जिनार्णतः गायत्र्या अर्घ्याद्युपहृत्य दत्त्वा पूज्यश्च ॥ १३१ ॥

विवरणम् ।

षडात्मेति । षडक्षरात्मा । जिनार्णत इति । गायत्रीहोपचारमनुर्न तु 'जितन्त' इति भावः ॥ १३१ ॥

वर्मान्तानि वृषादिदिक्षु विदिशास्वस्त्रमग्न्यादितोऽस्त्रं पुरो-
ऽक्ष्यन्त्यं दिक्षु विदिक्षु च क्रमवशान्मूर्तीश्च शक्तीरपि ।
शङ्खादीनि दिशासु कार्मुकमुखान्यस्त्राणि कोणेषु त-
स्याग्रे तार्क्ष्यमथो यथाविधि यजेदिन्द्रादिवज्रादिकम् ॥१३२॥

विमर्शिनी ।

वर्मान्तानि चत्वार्यङ्गानि वृषादिदिक्षु इन्द्रादिदिक्षु, अग्न्यादितो विदिशास्वस्त्रं च पुरोभागे अन्त्यम् अन्तभवम् अक्षि नेत्रं च यजेत् । पुनर्दिक्षु मूर्तीः विदिक्षु शक्तींश्च क्रमवशादपि यजेत् । शङ्खादीनि चत्वारि दिशासु । कार्मुकमुखानि शार्ङ्गादीनि चत्वार्यस्त्राणि कोणेषु च, अथो तस्याग्रे तार्क्ष्यं गरुडं च यथाविधि इन्द्रवज्रादिकं च यजेत् ॥ १३२ ॥

विवरणम् ।

वृषादिदिक्ष्विति । इन्द्रयमवरुणसोमदिक्षु[1] । पुरोऽक्ष्यन्त्यमिति । षड्भिः मूलार्णैः षडङ्गानि तदा षष्ठार्णेन नेत्रद्वयं, तच्चान्त्यं भवति । तच्चेह देवाग्रत इति भावः । पञ्चाङ्गानि तु प्रागुक्तवदेव । दिक्ष्विति । प्रागादिदिक्षु वासुदेवादिमूर्तयः क्रमेणाग्न्यादिकोणेषु शान्त्यादिशक्तयश्चेत्यर्थः । शङ्खादीनीति । शङ्खादिष्वायुधेषु चत्वारि दिक्षु चत्वारि च कोणेषु ॥ १३२ ॥

विलोमाष्टमवर्गार्णैर्वासुदेवो विबिन्दुभिः ।
सङ्कर्षणश्च प्रद्युम्नश्चानिरुद्धश्च मूर्तयः ॥ १३३ ॥

विमर्शिनी ।

मूर्तिशक्त्यादीनां पूजामन्त्रानाह — विलोमेति । विलोमाष्टमवर्गार्णैः अष्टमवर्गस्य प्रतिलोमाक्षरैः हसषश इत्येतैः विबिन्दुभिः बिन्दुरहितैर्बीजैर्युक्ताः वासुदेवः सङ्कर्षणश्च प्रद्युम्नश्चानिरुद्धश्च मूर्तयः । अथवा विलोमाष्टमवर्गार्णैः शादिवर्गमारभ्य विलोमाष्टमवर्गः स्वरवर्गः, तत्रत्यैः आर्णैरिति पदच्छेदः, अकाराक्षरैः सह । 'अ वासुदेवाय नमः' 'आ सङ्कर्षणाय नमः' 'अं प्रद्युम्नाय नमः' 'अः अनिरुद्धाय नमः' इति ॥ १३३ ॥

विवरणम् ।

कोणेषु मूर्तिशक्तीस्तन्मन्त्रांश्चाह—विलोमेति । वैलोम्येनाष्टमो वर्गः स्वरवर्गः । तत्र आर्णाः अः आ अं अ इत्यमी चत्वारो वर्णाः । अ वासुदेवाय नम इत्यादि ।

---

1. 'न्द्रवरुणयमसोम' ङ. पाठः.

द्राघितैर्हादिशान्तार्णैः शान्तिः श्रीश्च सरस्वती ।
रतिश्च सलवैर्युक्ताश्चतस्रो मूर्तिशक्तयः ॥ १३४ ॥

विमर्शिनी ।

द्राघितैः दीर्घयुक्तैः सलवैः बिन्दुसहितैः हादिशान्तार्णैः हकारादिशकारान्तैः प्रतिलोमाक्षरैर्युक्ताः शान्तिः श्रीः सरस्वती रतिश्च मूर्तिशक्तयः मूर्तीनां शक्तयश्चतस्रः स्युः ॥ १३४॥

विवरणम् ।

द्राघितैरिति । दीर्घीकृतैः । शां शान्त्यै नमः इत्यादि ॥ १३४ ॥

स्वाद्यर्णबीजैः सह शङ्खचक्रपद्मा गदा शार्ङ्गसखेटखड्गौ ।
शरो रलाभ्यामरिपद्ममिन्द्रवज्रादिकं वर्गमुखद्वितीयैः ॥ १३५ ॥

विमर्शिनी ।

स्वाद्यर्णबीजैः स्वस्वाद्यक्षरबीजैः सह शङ्खाद्याः । अरिपद्मं चक्रं पद्मं च रलाभ्यां रेफलकाराभ्यां सह । 'शं शङ्खाय नमः' 'रं चक्राय नमः' इत्याद्या मन्त्राः । वर्गमुखद्वितीयैः वर्गमुखैरकारादिभिः तद्द्वितीयैः आकारादिभिश्च सह इन्द्रवज्रादिकम् इन्द्रादिकं वज्रादिकं च स्यात् ॥ १३५ ॥

विवरणम् ।

रलाभ्यामरिपद्ममिति । चक्रे रं बीजं पद्मे लं[2] बीजं न तु स्वाद्यक्षरमित्यर्थः । वर्गमुखद्वितीयैरिति । अकचटतपयशेत्यमीभिर्बीजैरिन्द्रादिकं, आ खछठथफरषेत्यमीभिर्वज्रादिकम् इति ॥१३५॥

प्रासादमन्त्रे करयो*[3]रथेशाङ्गुष्ठादिक्लृप्त्या न्यसनं करोतु ।
ईशानमूर्धप्रमुखक्रमेण तत्सूत्रवक्त्रन्यसनं तनौ च ॥ १३६ ॥

विमर्शिनी ।

शिवस्य प्रासादमन्त्रविधाने विशेषमाह — प्रासादमन्त्र इति । अथ प्रासादमन्त्रे करयोरुभयोरपि ईशाङ्गुष्ठादिक्लृप्त्या ईशानादिक्रमेण अङ्गुष्ठादिक्रमेण च न्यसनं करोतु । तनौ शरीरे च ईशानमूर्धप्रमुखेण मन्त्रेण तत्सूत्रवक्त्रन्यसनं तेषां सूत्रन्यसनं वक्त्रन्यसनं च करोतु ॥ १३६ ॥

विवरणम् ।

प्रधानतर्जादिक्लृप्त्येति । नाविधौ विश्वपूर्वविषमाभिरित्यादिवक्ष्यमाणानां हौं हेमादियुतेशानादिमूर्तीनामङ्गुष्ठतर्जन्यादिषु क्रमेणे न्यासः

१. 'रिव्यादि' क. ङ. पाठः. २. 'लं न तु' ग घ. पाठ. ३. 'योः प्रधानेशानादिक्लृ', ४. 'ण मू' ख. पाठः.

* 'योः प्रधानतर्जादिक्लृप्त्या' इति विवरणानुसारी पाठः.

मूलेन करतलादिव्यापकं पश्चादङ्गुष्ठादितलान्तमङ्गन्यासश्च सामान्यतो लभ्यते ॥ १३६ ॥

शूलाही टङ्कघण्टासिसृणिकुलिशपाशाग्न्यभीतीश्च दोर्भि-
र्बिभ्राणं देवदेवं दशभिरथ चतुर्भिस्तु वा दक्षिणाद्यैः ।
रुद्राक्षस्रक्कपाले त्रिशिखमपि सखट्वाङ्गकं चाध ऊर्ध्वं
ध्यायेत् प्रासादरूपं स्फटिकमणिनिभं पद्मसंस्थं प्रसन्नम् ॥१३७

विमर्शिनी ।

प्रासादरूपं देवदेवं देवानामपि देवमेवं ध्यायेत् — दशभिर्दोर्भिः शूलाही शूलं नागं च, टङ्कघण्टासिसृणिकुलिशपाशाग्न्यभीतीः टङ्कं कुठारः घण्टा स्वयमेव असिः खड्गः सृणिरङ्कुशः कुलिशो वज्रः पाशाग्न्यभीतयः स्वयमेव एतानि बिभ्राणम्, अथवा दक्षिणाद्यैश्चतुर्भिर्दोर्भिरध ऊर्ध्वं च यथा तथा रुद्राक्षस्रक्कपाले त्रिशिखं शूलं सखट्वाङ्गकं खट्वाङ्गाभिधमायुधविशेषं च बिभ्राणं स्फटिकमणिनिभं श्वेतवर्णं पद्मसंस्थं प्रसन्नं च ॥ १३७ ॥

विवरणम् ।

शूलनागादीनां दक्षिणवामक्रमेण विन्यासः । पञ्चवक्त्रत्वं[1] न्यासोक्तेरेव प्रासादपञ्चब्रह्मणोरवबोद्धव्यम् ॥ १३७ ॥

ईशादिसूत्रवदनादिकविग्रहेज्यां
कृत्वाप्यसौम्ययमवासवधातृदिक्स्थैः ।
सद्यादिभिः प्रभिदुरां परिवारपूजां
पञ्चाक्षरोक्तविधिनात्र च सन्तनोतु ॥ १३८ ॥

विमर्शिनी ।

पुनः ईशादिसूत्रवदनादिकविग्रहेज्याम् ईशादिभिः सूत्रवक्त्रक्रमेण विग्रहपूजां कृत्वा आप्यसौम्ययमवासवधातृदिक्स्थैः पश्चिमोत्तरदक्षिणपूर्वोपरिदिक्स्थितैः सद्यादिभिः प्रभिदुरां भेदयुक्तां परिवारपूजां पञ्चाक्षरोक्तविधिनात्र च सन्तनोतु ॥ १३८ ॥

विवरणम् ।

आप्यसौम्येति । पश्चिमोदग्दक्षिणप्रागैशदिक्षु सद्योजातवामदेवादयः । प्राग्वदने प्रत्यग्वदने च न भेदः[2] । पञ्चाक्षरोक्तविधिनेति । पुनरङ्गविघ्नेशगणेशेन्द्रादिवज्राद्यावरणमुपचारश्च स्थाणुमन्त्रेणेति भावः ॥ १३८ ॥

---

१. 'त्वं तन्न्या' २. 'दने च भेदः' क. पाठः.

पञ्चब्रह्मविधौ सुधीः करयुजीशानादिसूक्ताणुका-
न्ङ्गुष्ठादिकनिष्ठिकावधि तलान्तं षट् तदङ्गान्यपि ।
न्यस्येत् सूक्तमनून् ससूत्रमुखवक्त्रस्त्या विग्रहे तद्भवा-
स्त्रिंशत्सङ्ख्यककलास्तथाष्टसहिता मन्त्री तदङ्गान्यपि ॥ १३९ ॥

विमर्शिनी ।

अथ पञ्चब्रह्मविधानमाह — पञ्चेति । पञ्चब्रह्मविधौ सुधीः सामान्योक्तं विशेषोक्तं च ज्ञात्वा कर्तुं कुशलः करयुजि करद्वये अङ्गुष्ठादिकनिष्ठिकावधि ईशानादिसूक्ताणुकान् 'ईशानः सर्वविद्यानामि'त्यादिसूक्तमन्त्रान् न्यस्येत् । तथा षट् तदङ्गान्यपि तलान्तं न्यस्येत् । विग्रहे देहे ससूत्रमुखवक्त्रया सूत्रवक्त्रक्रमेण सूक्तमनून् ईशानादिसूक्तमन्त्रान् तद्भवाः ईशानादिसूक्तभवाः अष्टसहितास्त्रिंशत्सङ्ख्याकाः कलास्तदङ्गान्यपि च न्यस्येत् । मन्त्रीत्यनेन अधिवासपटलोक्ताष्टत्रिंशत्कलान्यासे द्वादशपटलोक्तशशिन्यादिशक्तियोगस्तदङ्गविधिश्च सूचितः ॥ १३९ ॥

विवरणम् ।

सूक्तमनून् ससूत्रमुखवक्त्रयेति । ईशानादिसूक्तमन्त्रानेव सूत्रवक्त्रेषु विन्यसेदित्यर्थः । प्रागिति तत्त्वन्यासः सामान्यसिद्ध एव ॥ १३९ ॥

प्राग्वत् प्रार्चितपीठके समभिवाह्येशादिसूक्ताणुभिः
सद्याद्यैरभिवाहनाप्रभृतितन्मुद्राश्च कृत्वा क्रमात् ।
देवं भावयतु प्रक्लृप्ततदणुन्यासेन साङ्गीकृतं
साक्षस्रक्सकपालशूलविलसत्खट्वाङ्गराजद्भुजम् ॥ १४० ॥

विमर्शिनी ।

पुनः प्राग्वत् प्रार्चितपीठके पञ्चाक्षरविधानवदर्चिते पीठे ईशादिसूक्ताणुभिः समभिवाह्य अभिवाहनाप्रभृति तन्मुद्राश्च सद्याद्यैः सूक्तैः क्रमात् कृत्वा प्रक्लृप्ततदणुन्यासेन प्रकर्षेण क्लृप्तैस्तत्सूत्रवक्त्रादिभिः अष्टत्रिंशत्कलान्यासादिना च साङ्गीकृतं सकलीकृतं देवं भावयतु ध्यायेत् । कथम्भूतं, साक्षस्रक्सकपालशूलविलसत्खट्वाङ्गराजद्भुजम् अधोभागे दक्षिणवामयोरक्षस्रजा कपालेन ऊर्ध्वभागे शूलखट्वाङ्गाभ्यां च शोभमानभुजं ध्यायेत् ॥ १४० ॥

विवरणम् ।

प्राग्वदिति पञ्चाक्षरवद् प्रासादवदिति भावः । समभिवाह्येशादि-

---

१. 'षु न्य' घ. च. छ. पाठः.

सूक्ताणुभिरिति । त्रितारस्थाणुमन्त्राद्द्वितारपूर्वकमीशानादिपञ्चके भगवन्नि-त्यादिकं चोक्त्वा पुनरपीशानादिपञ्चकेन प्रतिमायां नियुञ्ज्यादित्यर्थः । सद्यांचे-रिति । सद्योजातमन्त्रमुक्त्वा आवाहितो भव इत्यादिप्रकारेणेति भावः । यदुक्तम्—'सद्येनावाहनं प्रोक्त'मिति । तत्रेशानेन प्रासादमुद्रा पुष्पाञ्जलि-श्चेष्यते । देवमक्षस्रगादिराजद्भुजं भावयत्वित्येवं संबन्धनीयम् ॥ १४० ॥

ईशेनोपहृतीः प्रदाय मपरेण स्थाणुसंज्ञाणुना-
थेशानादिकपञ्चसूक्तमनुभिस्तत्सूत्रवक्त्रादिभिः ।
कृत्वा विग्रहपूजनं परिवृतावीशादिसूक्तैर्यजेत्
स्वस्वाशाधिगतैस्तदङ्गमनुभिर्विद्येश्वराद्यैरपि ॥ १४१ ॥

विमर्शिनी ।

पुनरीशेनोपहृतीः प्रदायाथ मपरेण प्रणवेन स्थाणुसंज्ञाणुना 'नमोऽस्तु स्थाण्वि'त्यादिना ईशानादिकपञ्चसूक्तमनुभिस्तत्सूत्रवक्त्रादिभिश्च विग्रहपूजनं कृत्वा परिवृतौ परिवारयागे स्वस्वाशाधिगतैः स्वस्वदिक्प्राप्तैरीशादिसूक्तैस्तद-ङ्गमनुभिरप्युक्तक्रमेण विद्येश्वराद्यैः, विद्येश्वरा अनन्तसूक्ष्मादयः आद्यशब्देन उमाचण्डेश्वरादयः इन्द्रादयो वज्रादयश्च विवक्षिताः तैः सर्वैः सह यजेत् ॥ १४१ ॥

विवरणम् ।

ईशेनोपहृतीः प्रदायेति । यदुक्तम् —

'सर्वत्रोपचरेद्देवमीशं मन्त्रेण मन्त्रवित् ।'

इति । स्थाणुमन्त्रेण सहावाहने पाद्यादिष्वपि स्थाणुमन्त्रेण सहेशानमन्त्रः स्यादिति ज्ञेयम् । मपरेणेति कृत्वा विग्रहपूजनमित्यत्र सम्बन्धः । सामा-न्यतः सिद्धौ तु पञ्चब्रह्मणां बृहत्त्वात् कथं प्रयोगक्लृप्तिरिति व्याकुलता स्यादिति कृत्स्नाभिधानम् । तत्सूक्तवक्त्रादिभिरित्यङ्गायुधग्रहणम् । ईशादिसूक्तै-र्यजेदिति । तदुक्तम् —

'तारादिपञ्चऋग्भिस्तु पञ्चब्रह्मार्चने स्मृतः ।'

इति । तारनत्योरन्तरतो योग इष्यते । स्वस्वाशाधिगतैरिति । ईशेन्द्रयमसोमव-रुणदिग्गतैरित्यर्थः । विद्येश्वराद्यैरिति गणेशेन्द्रादिवज्रादिग्रहणम् । यद्य-

१. 'शानस्' च पाठः, २. 'कामित्यादि' घ. छ. पाठः, ३. 'प्रसाद' च. पाठः. ४, 'बहुत्वात्' क. पाठः.

दुर्गादिष्वप्युत्सवेषु नित्यतया सवनपूजा विधीयते । यथा —

सपर्यास्त्रिविधा ज्ञेयाः कालत्रयविभागतः ।
वैदिकी तान्त्रिकी चैव तथा वैदिकतान्त्रिकी ॥

इत्यादि । किंतु तथा पूजा नाचर्यते । वक्ष्यति च —

'कालेषु त्रिषु सावनैः स्वमनुभिर्मूलेन वा सर्वतः ।'

इति ।

ततो न तद्विधानमपीहोक्तमिति बोद्धव्यम् । तथापि तद्विधानमिहोच्यते—

'वैदिकतान्त्रिकमिश्रितमन्त्रैः सवनार्चनं कुमार्या स्यात् ।
स्कन्दे स्वसूक्तमूलोपचारकैरुत्सवे निजबलौ च ॥'

इति । दुर्गाबलौ कौमारबलौ चेति भावः ।

अङ्गेज्यावसितौ निजादिलिपिभिर्बीजैः श्वेतरूपा तथा
स्त्रीरूपाप्यृषिकाश्यपाग्निपदपूर्वा देवता भामिनी ।
दुर्गावैदिकमन्त्रपञ्चकविधाने कौशिकी विश्वरू-
पाख्या दिग्विदिशाक्रमात् सबहुरूपाथेन्द्रवज्रादिकम् ॥

पूजा तान्त्रिकपञ्चकेऽङ्गनिजशक्त्यस्त्रेन्द्रवज्रादिभिः
स्याद् दुर्गा वरवर्णिनी तदनु सूर्याख्या च तच्छक्तयः ।
अष्टाभिः कनकाक्षरोपपदवर्णा कृत्तिका च स्वरैः
ऋद्दन्तैरभयप्रदा च कथिता कन्या सुकन्द्रूपि ॥

शङ्खचक्रगदाखड्गशरपाशांकुशौँन् रुजम् ।
अष्टास्त्राणि वदन्तीह दुर्गातान्त्रिकपञ्चके ॥
वनदुर्गायजनविधौ परिवाराः स्युरिह मूलदुर्गोक्ताः ।
कालोक्तमनुभिरावाह्योपहरेद्वा स्वैमूलमन्त्रेण ॥

इति । जातवेदसे, तामग्निवर्णां, अग्ने त्वं, विश्वानि, पृतनाजितमिति वैदिक-पञ्चकम् ।

---

१. 'तथा' छ. पाठः, २. शक्तीन्द्रादिव' ख. ङ. छ. पाठः. ३ 'शास्त्रजम्' घ, खाङ्गुजम्' छ. पाठः. ४. 'नवदुर्गा' घ. पाठः. ५. 'समूल' छ. पाठः

तत्राद्यायाः स्वकैर्वर्णैरङ्गानि परिचक्षते ।
नवभिः सप्तभिः षड्भिः क्रमात् सप्ताष्टपञ्चभिः ॥

इति । मारीचः काश्यप ऋषिः, त्रिष्टुप् छन्दः, दुर्गा देवता । दुर्गादिभिरुभयाङ्गुष्ठाद्यंगुलीषु न्यस्याङ्गन्यासः । दुंबीजपुटितमातृकातत्त्वन्यासं दुर्गाभिः मूर्धा यहृद्गुह्यपादेषु पुनरप्यङ्गादिन्यासः । स्वे पीठे पञ्चकेनावाह्य सकलीकुर्यात् ।

'चक्रं शङ्खं तथा खड्गं गदां च दधतीं भुजैः ।'

इति । जातवेदस इत्यनयैव सर्वोपचारदानमिति । ओं सें दुर्गायै नमः, ओं दं आर्यायै नमः, ओं वें देव्यै नमः, ओं तं भगवत्यै नमः, ओं जां कन्यायै नमः इति तान्त्रिकपञ्चकम् । एं हृदयाय नमः ऐं शिरसे स्वाहा, ओं शिखायै वषट्, औं कवचाय हुं, अं नेत्रत्रयाय वौषट्, अः अस्त्राय फट्, मूलदुर्गावह्न्यादयः । पञ्चमन्त्रैरुभयाङ्गुष्ठादिषु मूर्धादिषु चेति भेदः । स्वे पीठे पञ्चकेनावाहनम्—

'चक्रं शङ्खं गदां खड्गं शरं चापं तथाङ्कुशम् ।
जटां च दधतीं भुजैः'

इति । ओं ह्रीमामित्युपचारदानं, शेषं प्रसिद्धम् । अथ मिश्रितनवकं, तत्र पञ्चकं वैदिकं पुनश्चतुष्कं तान्त्रिकम् ओं विश्वकरी सर्वासुरप्रमर्दिनी सर्वदुष्टनिर्मथनी सर्वपापप्रणाशिनी यागप्रियवाहिनी दुर्गा देवी प्रसादं करोतु नमः । ओं सिंहवाहिनी चक्रायुधिनी शङ्खघोषिणी महिषराक्षसमुख्यप्रमर्दिनी दुर्गा देवी प्रसन्नतां शीघ्रमापादयतु नमः । ओं आर्यावर्तिनी सर्वायुधवाहिनी सर्वशमनी रौद्ररूपिणी रौद्रकरी दुर्गा देवी सर्वसम्पदमापादयतु नमः । ओं श्रीवल्लभायै मुख्यरूपायै सर्वदोषप्रशमनायै सर्वभूतगणाधिपायै सर्वाङ्गधरायै सर्वमूर्तिधरायै सर्वशुद्धिकरायै स्वसर्वव्यापारभक्तायै दुर्गायै देव्यै परायै नमः इति । जातवेदस इत्यस्या एवात्र षडङ्गानि । वैदिकानां काश्यपादयः तान्त्रिकाणां मूलदुर्गावह्न्यादयः । प्रथममङ्गुष्ठद्वये शेषानष्टावष्टाङ्गुलीषु

---

१. 'चः कश्य' घ. पाठः. २. 'दुर्गाभि' घ. पाठः. ३. 'हृदयगु' क. ङ. पाठः. ४. 'कन्यकायै' च. पाठः ५. 'तान्त्रिकं वि' छ. पाठः. ६. 'रम' ङ. पाठः. ७. 'शप्याव' घ. पाठः. ८. 'श्रीं स्त्रीव' क. ङ. पाठः ९. 'यै देव्यै' ख, ग. पाठः. १०. 'कश्य' ख. घ. च. पाठः

पुनरङ्गन्यासं प्रथमेन देहे व्यापकं शेषान्मूर्धललाटाननहृन्नाभिगुह्यजानुपादेषु पुनरङ्गादिन्यासं इति । स्वे पीठे नवकेनावाहनम् ।

पूर्वाभां रक्तवसनां शङ्खं चक्रं गदामसिम् ।
शरधन्वाङ्कुशं खड्गं दधती ह्युभयात्मिका ॥

यागमन्त्रेण ओं ह्रीं ओं इत्येव सर्वोपचारदानमिति ।

कौमारसूक्तयोर्ग्यैन्यसनं प्रागीरितं सर्वम् ।
ऋक्पद्धकाङ्गकं वा पूजा मूलोदिताखिलं प्राग्वा ॥

इति प्रागिति पडध्वन्यासावसर इत्यर्थः ॥ १४१ ॥

इति तन्त्रसमुच्चयविवरणे
सप्तमः पटलः ।

---

इति तन्त्रसमुच्चये श्रुतार्चाक्रमसिद्ध्यै रविजन्मसंप्रणीते ।
पटलः प्रतिपादितात्मदेवार्चनकर्मापि च सप्तमः समाप्तः ॥ १४२॥

विमर्शिनी ।

पटलं समापयति — इतीति । इति उक्तप्रकारेण तन्त्रसमुच्चये ग्रन्थे श्रुतार्चाक्रमसिद्ध्यै श्रुतस्यार्चाक्रमस्य स्थापनाय रविजन्मसंप्रणीते रविनाम्नः पुत्रेण नारायणाख्येन विरचिते तस्मिन् प्रतिपादितात्मदेवार्चन-कर्मा उक्तमात्मनः साधकस्य देवस्य चार्चनकर्म यस्मिन् सोऽपि च सप्तमः पटलः समाप्तोऽभूत् ॥ १४२ ॥

इति तन्त्रसमुच्चयविमर्शिन्यां
सप्तमः पटलः ।

---

१. 'पकशे' ख. पाठः. २. 'स इति पीठे' ज. पाठः. ३. 'ग्यै न्य' क. पाठः. ४. 'का प्रा' क. ख. पाठः.

## अथाष्टमः पटलः ।

अथाभिधास्याम्यभिषेचनं विभो-
दिने तुरीये विहितं प्रतिष्ठितेः ।
निमित्तवित्ताद्युपपत्तिभेदितं
विशुद्धिसान्निध्यसमृद्धिकारकम् ॥ १ ॥

विमर्शिनी ।

एवं प्रतिष्ठितस्य देवस्यावश्यकर्तव्यमर्चनमुक्त्वा प्रतिष्ठाचतुर्थदिवसे कर्तव्यस्य स्नानस्य विधिमाह — अथेति । अथ पूजायाः कथनानन्तरं विभोः देवस्याभिषेचनम् अभिधास्यामि वक्ष्यामि । तत् तु प्रतिष्ठितेः तुरीये दिने विहितम् । न केवलं चतुर्थदिवस एव तत् कर्तव्यं, विशेषतो विशुद्धिसान्निध्यसमृद्धिकारकं च अशुद्धिपरिहारार्थं सान्निध्यार्थं समृद्ध्यर्थं च साधनम् । तत्रापि निमित्तवित्ताद्युपपत्तिभेदितं, निमित्तं हेतुः वित्तं धनम् आदिशब्देन देशकालादय उक्ताः तेषामुपपत्त्या बहुधा भेदितं च ॥ १ ॥

विवरणम् ।

स्नपनपटलमारभते — अथाभिधास्यामीति । दिने तुरीये इति । संस्नाप्य तुर्येऽह्नीति ह्युक्तम् । निमित्तवित्ताद्युपपत्तिभेदितमिति वक्ष्यमाणबाहुविध्यनिबन्धनमुक्तम् । बिम्बस्य तदीयबलिपीठस्य ध्वजस्य च प्रतिष्ठेह निमित्तम् । वित्तं कर्तुः प्रतिष्ठावशिष्टं धनम् । बिम्बप्रासादादिद्रव्यभेदस्तत्संस्थानादिभेदो देशकालावस्था चेत्येतत्सर्वमादिशब्देन गृह्यते । तदुपपत्तिस्तद्योग्यता तया भेदितं सप्तदशद्रव्यपञ्चविंशतिद्रव्यादिभेदेन बहुधा विकल्पितम् । विशुद्धिसान्निध्यसमृद्धिकारकमिति । फलाभिधानम् । प्रतिष्ठानन्तरं त्रिदिनसंभाविताज्ञातदोषक्षपणं विशुद्धिः । प्रतिष्ठासमयसंसिद्धसान्निध्यप्रकर्ष एव सान्निध्यम् । समृद्धिश्च प्रतिष्ठाभिमतफलस्फीतता । यद्वा निमित्तशब्देन 'स्थाने मूर्तिर्जननमित्यादीनि निष्कृतिपटलभावीनि निमित्तान्यभिप्रेतानि । द्वादश्यष्टम्युपरागादीन्यपि निमित्तानि ग्राह्याणि । वित्तं धनमेव । विशुद्धीति । कदाचित् स्नपनेनैव बिम्बशुद्धिः स्यात् यथा—प्रत्यब्दं संभाविताज्ञातदोषविषये स्नपनमिति । सान्नि-

१. 'ठध्वजस्य' च. पाठः. २. 'तु स्न' क. पाठः. ३. 'तारक' च. पाठः,

ध्येति सत्यामपि शुद्धौ स्यात्कदाचित्सान्निध्यस्यायथापूर्वत्वमभावो वा । तदापि कार्यं स्नपनम् । समृद्धीति कर्तुर्विशिष्टाभ्युदयसिद्धिर्विद्यमानप्रजापश्वाद्यभिवृद्धि-र्मन्त्रदीक्षादिसंस्कारप्रकर्ष इति सर्वमभिप्रेतम् । स्नपनस्यैव चतुर्थदिनातिरिक्तं विषयान्तरमपीत्थं प्रतिपादितं भवति ॥ १ ॥

अत्राप्यङ्कुररोपणं स्वसमये कुर्वीत तत्त्वान्तिमान्
होमान् निष्कृतिवक्ष्यमाणविधिना चाथात्र पूर्वेऽहनि ।
नागेऽलिन्दभुवि प्रकल्प्य निजकुण्डं मण्डपे देशिकः
कुर्यान्मण्डपसंस्क्रियामपि घटीभ्रान्त्यन्तिमां पूर्ववत् ॥ २ ॥

विमर्शिनी ।

अत्रापि न केवलं प्रतिष्ठायामेव अत्र कलशेऽपि । स्वसमये स्वोक्त-काले अङ्कुररोपणं बीजावापं कुर्वीत । निष्कृतिवक्ष्यमाणविधिना प्रायश्चि-त्तपटले वक्ष्यमाणेन विधानेन तत्त्वान्तिमान् तत्त्वहोमपर्यन्तान् होमांश्च कुर्वीत । अथात्र कलशे कर्तव्ये पूर्वेऽहनि कलशस्नानात् पूर्वदिवसे । देशिकः मण्डपे कलशपूजार्थं कल्पिते मण्डपे अलिन्दभुवि वेदेर्बहिः नागे वायोः पूर्वभागे निजकुण्डम् आचार्यकुण्डं प्रकल्प्य कारयित्वा घटीभ्रान्त्यन्तिमां कुम्भेशपरिभ्रमणपर्यन्तां मण्डपसंक्रियां पूर्ववत् कुर्यात् ॥ २ ॥

विवरणम् ।

स्नपने बाह्यं परिकरमाचष्टे — अत्रापीति । न केवलं प्रतिष्ठायामेवे-त्यपिशब्दार्थः । चतुर्थदिनस्नपने प्रायश्चित्तादिस्नपनेऽपि । तदुपयोगितया प्रथमं तावन्मङ्गलाङ्कुरारोपणं कार्यमिति भावः । प्रतिष्ठाङ्कुरमण्डप एव वा मण्डपान्तरे वैतत्कार्यम् । स्वसमये स्वोचितकाले । यदुक्तम् —

'कुर्यात् प्रागधिवासकर्मदिवसान्मित्राङ्कसङ्ख्ये दिने'

इत्यादि । तत्त्वान्तिमान् होमानिति । प्रायश्चित्तशान्तितत्त्वहोमान् कुर्वीतेति चकारादनुकर्षः । त्रिदिनसंभाविताज्ञातदोषक्षपणान्येवैतैर्भवति । कदा पुनरेतद्धोमत्रयं कार्यमिति । यथा चतुर्थदिने द्वारविवरणानन्तरमर्वाक् स्नपनतस्तदीयकलशाभिषेकसंभवः स्यात् तथा तत्पूर्वेद्युः कार्यमित्यर्थादवसी-यते । वक्ष्यति च 'संस्नाप्य तं सिक्त्वा तत्त्वहुतान्तहोमकलशैरिति । अथात्र पूर्वेऽहनि मण्डपसंस्क्रियामपि कुर्यात् इत्यन्वयः । नागेऽलिन्दभुवि निजकुण्डं

१. 'पनेऽपि तदु' ङ. पाठः. २. 'ररो' ङ. छ. पाठः. ३. 'गद्यैवैतै' घ. च. पाठः. ४. 'त्रयम् । यथा' ङ. पाठः.

प्रकल्प्येति । स्नपने भेद उक्तः । निजकुण्डमाचार्यकुण्डम् । परिकुण्डानां तु देशसङ्ख्यासंस्थानमर्थात् प्रतिष्ठावद् भवति । घटीभ्रान्तिः कुम्भेशकर्करीभ्रमणम्[2]। इहाग्निजननविधौ स्वस्वगायत्र्या होमः ससम्पातैः[3] कार्यः । यद्वक्ष्यति कुम्भसंस्कारे— 'जिनार्णजनितं संपातमापातयेत् । इति ॥ २ ॥

आस्फाल्य सूत्राणि घटानुरूपा-
ण्यत्राभिपूर्यद्रविणप्रमाणि ।
[4]खण्डानि कृत्वाथ यथार्हमेता-
न्यापूरयेच्चित्रतरै रजोभिः[5] ॥ ३ ॥

विमर्शिनी ।

अथ अत्र मण्डपे घटानुरूपाणि घटसङ्ख्यासदृशानि सूत्राणि आस्फाल्य अभिपूर्यद्रविणप्रमाणि अभिपूर्यमाणानां द्रव्याणां प्रमाणयुक्तानि खण्डानि कृत्वा यथार्हमेतानि खण्डानि चित्रतरै रजोभिरापूरयेत् ॥ ३ ॥

विवरणम् ।

आभ्यन्तरं परिकरं प्रस्तौति — आस्फाल्येति । घटानुरूपाणि सूत्राण्यास्फाल्यात्राभिपूर्यद्रविणप्रमाणि खण्डानि कुर्यादित्यन्वयः । अत्रास्फालितसूत्रे क्षेत्रे । अभिपूर्यद्रविणप्रमाणीति समासपदमभिपूरणीयद्रव्यप्रमाणानि । प्रायिकमेतत् पञ्चविंशतिद्रव्येऽपि शताधिक्य एवैवमस्ति तदर्वाक्तु सप्तदशैव खण्डानि । अथैतानि चित्रतरै रजोभिर्यथार्हमापूरयेदिति । एतानीति खण्डानि । यथायथमेकद्विबहुपदानि चित्रतरैरिति शुक्लरक्तैरेव वा शुक्लरक्तादिपञ्चवर्णैर्वा । यथार्हमिति । ब्राह्मे महदष्टदलं सकर्णिकं यथा स्यात्तथा

---

1. 'क्षपेशकर्करीपरिभ्र' छ. पाठः. २. 'कर्करीपरिभ्रमणम्' ख. घ. च. पाठः. ३. 'तं कार्यः' छ. पाठः. ४. 'खण्डानि कुर्यादिह पञ्चवर्गद्रव्ये विधिं पूर्वमहं ब्रवीमि । सङ्ख्याः कुम्भगता' ख. पाठः. ५. 'भिः ॥

क्षेत्रे पञ्चपुटेऽम्बुजं नवपदैस्तत्त्रोऽग्मितैः केवलै-
र्द्रव्यैः स्यात् स्नपनेऽन्तरत्र नव तद्वाह्ये घटाः षोडश ।
वीथीः सप्तपुटेऽभितोऽब्जमधिका यावत् तु तत्क्षेत्रकं
मध्यं स्याद्भवत्र सप्तदशभिर्यन्तरालाष्टकम् ॥
स्तु' क. पाठः.

आपूरयेत् । दैविकादिषु ब्राह्मपदे स्वस्तिकमितरपदेषु पदव्यत्ययेनापूरयेदित्ति भावः । पदपर्यन्तरेखा अङ्गुलोन्मिता तदर्धोन्मितश्च पदान्तर्भागः स्यात् । चित्रतरमिति वा पाठः ॥ ३ ॥

स्युर्द्रव्यसप्तदशके शरशैलनन्द-
वर्गा नवोत्तरशतद्विशते च कुम्भाः ।
सप्तादिविश्वचरमासमसङ्ख्यकेषु
सप्तोल्लसद्दशसु चापि पुटेषु कार्याः ॥ ४ ।

विमर्शिनी ।

अत्र कलशद्रव्याणां सप्तदशकं पञ्चविंशतिकमिति प्रायेण द्वौ मार्गौ । तत्र पूर्वं सप्तदशद्रव्ये कलशक्लृप्तिमाह — स्युरिति । द्रव्यसप्तदशके द्रव्याणां सप्तदशके सप्तादिविश्वचरमासमसङ्ख्यकेषु सप्तसङ्ख्यामारभ्य विश्वशब्देन लक्षितां त्रयोदशसङ्ख्यामवधीकृत्य तन्मध्ये याः असमसङ्ख्याः ओजसङ्ख्याः सप्त नव एकादश त्रयोदश च, तत्सङ्ख्यकेषु पुटेषु । पुटो नाम सूत्रयोरन्तर्भाग उच्यते । सप्तोल्लसद्दशसु सप्तसङ्ख्याभिरधिकेषु दशसु क्रमात् शरशैलनन्दवर्गाः शरशैलनन्दानां वर्गाः, शरवर्गः पञ्चविंशतिः, शैलवर्ग एकोनपञ्चाशत्, नन्दवर्ग एकाशीतिः, नवोत्तरशतद्विशते च नवोत्तरं शतं नवोत्तरं द्विशतं च । एवं पञ्चविधेषु पुटेषु पञ्चविधाः कुम्भाः कार्याः स्युः ॥ ४ ॥

विवरणम् ।

*ननु कति तावत्कुम्भाः स्युः कथं तदनुरूपाणि सूत्राणि कियन्ति वा द्रव्याणि कथं तद्योग्यानि खण्डानि इति तत्सर्वमाचक्षाणः प्रथमं तावत्केवलद्रव्यविषये सर्वमेतद्दर्शयति — क्षेत्र इति । केवलैस्तत्त्वोन्मितैर्द्रव्यैः स्नपने पञ्चपुटे क्षेत्रेऽन्तर्नवपदैरम्बुजं स्यात् । अत्र नव तद्बाह्ये षोडश घटा इत्यन्वयः । निर्वीथिकपक्षोऽयमुक्तः । अत्राम्बुजे नवेति कर्णिकायामेकोऽष्टसु दलेष्वष्टाविति भावः । तद्बाह्य इति । परितष्षोडशसु पदेष्विति भावः । अथ सवीथिकपक्षः सप्तपुटेऽब्जमभितो वीथिरधिकेति शेषं समानमित्यर्थाल्लभ्यते । मध्ये नवपदैः

१. 'तत्तत्स' क. ङ. पाठः   २. 'श च घ' ख. घ. च. पाठः.
३. 'सवीथिप' ङ. पाठः.

* 'क्षेत्रे पञ्चपुटे' इत्याद्यधिकपाठमाश्रित्य [illegible] व्याख्या । पद्यं तु १०४ तमे पुटे लिखितम् ।

पद्मं विधाय तदभितो दक्षिणोत्तरयोः पूर्वपश्चिमयोश्च भागयोरेकैकपुटेन वीथी-मृज्यात्। यावत्तु तत्क्षेत्रकमिति, तावती च सा वीथी स्यात् नतु खण्डवीथि-रित्यर्थः । मृज्यं स्यादिति । केवलैस्सप्तदशभिर्द्रव्यैर्यदि स्नपनं तदोभयत्र पञ्चपुटे सप्तपुटे च मध्यरचितपद्मबाह्यावरणगतान्तरालपदाष्टकं मार्जनीयं स्यात्। पञ्चपुटे तेषां मार्जनमात्रं, सप्तपुटे तु वीथिषु योजनमिति ॥

केवलद्रव्यविषय एतदुक्तम्। अथ शुद्धोदकान्वितद्रव्यविषय उच्यते। तत्र चतुर्थदिने सप्तदशद्रव्यस्नपनमपि मुख्यमेवेत्यभिमन्यमानः प्रथमं तद्विषये कुम्भसङ्ख्यादि सर्वमाह — स्युर्द्रव्यसप्तदशक इति । सप्तपुटे पञ्चविंशतिः कुम्भाः नवपुटे एकोनपञ्चाशत् एवं शिष्टमपि द्रष्टव्यम्। प्रागग्राण्युदगग्राणि च पृथगष्टौ सूत्राण्यास्फालयेत्[1] । तदा[2] प्रागायता उदगायताश्च पृथक् सप्त पुटाः सम्भवन्ति एवं सर्वत्र न्यायः[3] ॥ ४ ॥

त्र्येकाङ्गाब्धिनवाङ्कगोविकृतयस्तत्त्वेषुवर्गा बहि-
दिक्कोणेषु घटा हयादिकपुटक्षेत्रक्रमाच्छूलिनि।
मध्ये पङ्कजकर्णिकादलगताः कुम्भा नव स्युः सदा
श्रीशे दिक्तिथयो बहिर्वसुशते शेषः समानक्रमः ॥ ५ ॥

विमर्शिनी।

तत्र शूलिनि शिवे हयादिकपुटक्षेत्रक्रमात् , हयाः सप्त, सप्तपुटादीनां क्षेत्राणां क्रमात् त्र्येकाङ्गाब्धिनवाङ्कगोविकृतयः तत्त्वेषुवर्गाश्च बहिर्दिक्कोणेषु घटाः स्युः । तत्र सप्तपुटे बहिः त्रिकमेककं च । नवपुटे अङ्गान्यब्धयश्च, अङ्गानि षट् अब्धयश्चत्वारः । एकादशपुटे, नवाङ्काश्च, अङ्का नव । त्रयो-दशपुटे गावो विकृतयश्च, गावो नव विकृतयः षोडश। सप्तदशपुटे तत्त्वेषुवर्गाः, तत्त्वानि पञ्चविंशतिः, इषुवर्गश्च पञ्चविंशतिः । इति विभागः । मध्ये पङ्कजकर्णिकादलगताः पद्मस्य कर्णिकागता दलगताश्च सदा पञ्चस्वपि वि-भागेषु नव कुम्भाः स्युः। श्रीशे वसुशते, वसवोऽष्टौ, अष्टसहिते शते, बहिः दिक्तिथयः, दिशो दश, तिथयः पञ्चदश । शेषः वसुशतादन्यः समानक्रमः शिववदेव ॥ ५ ॥

---

१. 'वीथिं मृ' छ. पाठः. २. 'तथा प्रा' ङ. पाठः. ३. 'यात ॥ त्र्ये' घ. च. छ. पाठः.

विवरणम् ।

त्र्येकेति । चतसृष्वपि दिक्षु प्रतिखण्डं त्रयः कुम्भाः विदिक्ष्वेक एव । मध्ये पङ्कजेत्याद्यभिधानात्सर्वमध्येऽर्थसिद्धं नवपदं पद्मार्थं निधाय तदभितः केवलद्रव्योक्तनीत्या वीथीर्विदध्यात् । तदा दिक्षु त्रिपदात्मकानि खण्डानि भवन्ति । विदिक्षु तु[1] एकपदात्मकानि । सदेति । पञ्चस्वपि सङ्ख्याभेदेषु त्रिपुटसम्भवे[2] पञ्चपुटसम्भवेऽपीत्यर्थः । तत्त्वेषुवर्गा इति । एकत्रैव मध्यतः पञ्चपुटसम्भव इतरत्र त्रिपुटसम्भव इत्यवगन्तव्यम् । गोविकृतय इति । अत्र दिक्षु त्रिपुटलोपः[3] । स च खण्डान्तर्भागे[4] भवति । नवके मध्यमं प्रधानं, कोणगतषोडशकेष्वपि बाह्यं प्रधानं नान्तरं, श्रीश इति । दिक्खण्डेष्वन्तर्भागगत-कोणपदद्वयलोपः । कोणखण्डेषु चाभ्यन्तरकोणपदलोपः । दुर्गायां हरिहरे च विष्णुवत्पदक्लृप्तिः स्याद्, वक्ष्यति हि— 'स्याद्विष्णुभागाभिहिता कुमार्यामि'ति, 'आज्यादिभिर्हरिवदि'ति च । गणपतौ शिववत् । वक्ष्यति हि — 'विघ्नेशेऽपि महेशवदि'ति । शास्तरि त्वनभिधानादर्थाद्विकल्प[5] इति । इतीहाद्यं[6] त्रयमधममितरन्मध्यमं नवोत्तरद्विशतन्तूत्तममिति बोद्धव्यम् ॥ ५ ॥

सङ्ख्याः[7] कुम्भगताः शराद्रिनववर्गाश्चाष्टयुक्तं तथा
षट्पञ्चाशदुपेतमेकशतमत्यष्ट्या शतद्वन्द्वकम् ।
लोकोपेतशतार्धसंयुतशतद्वन्द्वं त्रिशत्येकसं-
युक्ता पञ्चशती[8] च पञ्चकृतिकद्रव्येषु साहस्रयपि ॥ ६ ॥

विमर्शिनी ।

पञ्चविंशतिद्रव्ये कलशक्लृप्तिमाह — सङ्ख्या इति । पञ्चकृतिकद्रव्येषु पञ्चानां कृतिर्वर्गः पञ्चविंशतिः तत्सङ्ख्येषु द्रव्येषु । शराद्रिनववर्गाः शराद्रिनवानां वर्गाः, शरवर्गः पञ्चविंशतिः अद्रिवर्गः एकोनपञ्चाशत् नववर्गः एकाशीतिः । अष्टयुक्तमेकशतं, तथा षट्पञ्चाशदुपेतं चैकशतम्, अत्यष्ट्या सप्तदशकेन सहितं शतद्वन्द्वकं शतद्वयं, लोकोपेतशतार्धसंयुतशतद्वन्द्वं लोकास्त्रयः

---

१. 'तु चैकपदात्मकानीति' ख. ङ. छ. पाठः. २. 'वेऽपीत्यर्थः' ख. छ. पाठः
३. 'पदलो' घ. च. पाठः. ४. 'गेव भ' घ. पाठः. ५. 'न्तर्गतको' ङ. पाठः.
६. 'इति । इहाद्यं' घ. छ. पाठः.
७. 'कुम्भानां गिरिगोकृती शरकृतिद्रव्येऽष्टयुक्तं' क. पाठः.
८. 'ती तथा दशशती सङ्ख्याः समुद्रोदके' ॥ क.,
'ती तथा दशशती चोक्ता सुमत्यादिभिः' ॥ ख. पाठः.

तैः सहितेन शतार्धेन पञ्चाशता संयुतं शतद्वन्द्वं च, एकसंयुक्ता त्रिशती, तथा एकसंयुक्ता पञ्चशती, एकसंयुक्ता साहस्रयपि कुम्भगताः सङ्ख्याः स्युः ॥ ६ ॥

विवरणम् ।

अथ पञ्चविंशतिद्रव्यविषये सर्वं प्रस्तौति — *कुम्भानामिति । सशुद्धोदके शरकृति द्रव्ये कुम्भानामिमाः सङ्ख्या इत्यर्थः । गिरिगोकृती सप्तवर्गो नववर्गश्च । एकशतमित्येतदष्टयुक्तमित्यत्रापि सम्बन्धनीयम् । लोकोपेतशतार्धसंयुतशतद्वन्द्वं त्र्यधिकपञ्चाशत्संयुतद्विशतम् । तथेति । एकसंयुक्तेत्यर्थः ॥ ६ ॥

घटपुटपरिसङ्ख्याः पञ्च पूर्वं शिवादि-
त्रिसहितकृतिनिष्ठास्तत्परस्तात् क्रमेण ।
निखिलविषमसङ्ख्या विंशतिर्नन्दयुक्ता
तदनु नवसमेतत्रिंशदप्यागमोक्ताः ॥ ७ ॥

विमर्शिनी ।

उक्तसङ्ख्यानां कलशानां पुटवलप्तिं क्रमेणाह — घटपुटेति । घटपुटपरिसङ्ख्याः घटानां पुटगताः सङ्ख्याः पूर्वं पञ्च । तत्परस्तात् तदनन्तरं शिवादित्रिसहितकृतिनिष्ठाः शिवा एकादश तदादिः कृतिर्विंशतिः त्रिसहिता कृतिः त्रयोविंशतिः तदवसानाः निखिलविषमसङ्ख्याः सर्वा ओजसङ्ख्याः । एकादश, त्रयोदश, पञ्चदश, सप्तदश, एकोनविंशतिः, एकविंशतिः, त्रयोविंशतिश्चेत्यर्थः । नन्दयुक्ता नन्दा नव तैः सहिता विंशतिश्च, तदनु नवसमेतत्रिंशदपि एकोनचत्वारिंशदपि आगमोक्ताः आगमेषूक्ताः ॥ ७ ॥

विवरणम् ।

घटपुटपरिसङ्ख्या इति । अत्र घटपुटपरिसङ्ख्याः क्रमेणैवमागमज्ञैः संप्रदिष्टा इत्यन्वयः । त्रिसहिता कृतिस्त्रयोविंशतिः सप्तवर्गे एकादश, नववर्गे त्रयोदश । एवं शेषेऽपि द्रष्टव्यम् । तन्त्रेष्वन्या अपि सङ्ख्या उक्ताः । पूरणादिप्रक्रियासौकर्यादियत्य एव तन्त्रविद्भिः परिगृहीता इत्यागमज्ञैरिति सूचितम् । यद्वाधममध्यमोत्तमवर्गभेदेनेयं नवधाव्यवस्थेत्याभिप्रेतम् । यदुक्तम्—

---

* कुम्भानां गिरिगोकृतीत्यादि पाठमनुसृत्येदं विवरणम् । स च पाठः ३०७ तमे पुटे लिखितः ।

१. 'अत्र चैकादशादि', २. 'ष्टा :सम्प्रदिष्टाः क' क. पाठः. ३. 'षेऽप्यपि' क. ङ. पाठः. ४. 'वर्गभेदेन या न' ख. पाठः. ५. 'धा व्यवस्थे' क. ख. पाठः.

'अथाल्पस्नपनं पूर्वं कनिष्ठत्रितयं ततः ।'

इत्यादि । अत्र नवकमात्रमल्पस्नपनम् । यद्वा पञ्जनवपञ्चविंशतिभेदेन तदपि त्रिभेदं भवति ॥ ७ ॥

क्षेत्रे रुद्रपुटेऽत्र पञ्चकृतिकोष्ठैर्मध्यगैरम्बुजं
न्यस्यैतद्दलकर्णिकासु कलशान् वीथिं समन्तादपि ।
तद्बाह्येऽनुदिशं द्विकं विरचयेत् कोणे चतुष्कं द्विकं
तत्राभ्यन्तरतोऽद्रिवर्गकलशे मार्ष्टन्यकोष्ठानि च ॥ ८ ॥

विमर्शिनी ।

तत्र पञ्चपुटे शुद्धोदकरहितत्वात् पञ्चविंशतिरेव कलशाः । तत्र खण्डविभागकल्पना न कार्येति तत् पृथक्कृत्य तदन्येषां खण्डविभागमाह — क्षेत्रे रुद्रपुट इत्यादिभिः । अद्रिवर्गकलशे एकोनपञ्चाशत्कलशे विधौ रुद्रपुटे एकादशपुटे क्षेत्रे अत्र एषु पदेषु मध्ये मध्यगैः पञ्चकृतिकोष्ठैः पञ्चविंशतिपदैरम्बुजं विरचयेत् । एतद्दलकर्णिकासु पद्मस्य कर्णिकायां दलेषु च नव कलशान् न्यस्य समन्ताद् वीथिमपि, तद्बाह्येऽनुदिशं दिशि दिशि द्विकं, कोणे चतुष्कं, तत्राभ्यन्तरतः अन्तरालेषु द्विकं च विरचयेत् । अन्यकोष्ठानि एतद्रहितकोष्ठानि मार्ष्टु मार्जनं कुर्यात् ॥ ८ ॥

विवरणम् ।

क्षेत्रे रुद्रपुटेऽत्रेति । न्यस्यैतद्दलकर्णिकासु कलशानिति नवकलशाभिप्रायम् । दलकलशांश्चात्र[1] देविकावरणमिति बोद्धव्यम् । वीथिं समन्तादपीति । कृत्वेत्युपस्कारः । यावत्क्षेत्रन्तावत्यश्चैता वीथयः । द्विकेषु चतुष्केषु चास्यन्तराणि प्रधानानि । मार्ष्टन्यकोष्ठानि चेति दिगन्तरालद्विकमध्येषु महावीथी-संस्थायिन्यः खण्डवीथय उक्ताः ॥ ८ ॥

क्षेत्रे त्रयोदशपुटे शरवर्गकोष्ठैः
पद्मं पुरोऽत्रदथ दिक्षु बहिस्त्रिकाणि ।
कुर्याद् विदिक्षु नवकानि तदन्तराल-
भाञ्जि त्रिकाणि नववर्गघटाभिषेके ॥ ९ ॥

विमर्शिनी ।

नववर्गघटाभिषेके एकाशीतिकलशे विधौ त्रयोदशपुटे क्षेत्रे शरवर्गकोष्ठैः पञ्चविंशतिपदैः पुरोवत् पूर्ववत् पद्मं कुर्यात् । अथ बहिर्दिक्षु त्रिकाणि,

---

१ 'शांश्चात्र' च. पाठः. २. 'वीथीं स' घ. च. पाठः. ३. 'हावीथिसं' च. पाठः.

विदिक्षु नवकानि, तदन्तरालभाञ्जि दिक्कोणयोरन्तरालगतानि त्रिकाणि च कुर्यात् ॥ ९ ॥

विवरणम् ।

क्षेत्रे त्रयोदशपुट इति । पुरोवत् पूर्वोक्तवत् । न्यस्यैतद्दलकर्णिकासु कलशानित्येतदिहापि समानमिति भावः । दिक्षु बहिरिति । नवकबाह्यतो वीथिः ततोऽपि बहिरित्यर्थः । इहापि मार्ष्टव्यकोष्ठानि चेत्युक्तनयेन खण्डवीथयः स्युः ॥ ९ ॥

नालीकं नवभिः पदैस्तिथिपुटे हीनं दलस्थैर्घटैः
पङ्क्त्या वीथिमथ त्रिकं दिशि विदिश्याकल्पयेदेककम् ।
पङ्क्त्या वीथिमथारचय्य नवकं दिश्यष्टकं कोणत-
श्चादध्यात् त्रिकमन्तरे च नवभिर्युक्ते घटानां शते ॥ १० ॥

विमर्शिनी ।

घटानां नवभिर्युक्ते शते तिथिपुटे पञ्चदशपुटे क्षेत्रे मध्ये नवभिः पदैर्दलस्थैः घटैर्हीनं नालीकं पद्ममाकल्पयेत् । अथ पङ्क्त्या एकपङ्क्त्या वीथिं, ततो दिशि त्रिकं, विदिश्येककं चाकल्पयेत् । अथ पङ्क्त्या वीथिमारचय्य दिशि नवकं कोणतोऽष्टकं च अन्तरे अन्तराले त्रिकं चादध्यात् ॥ १० ॥

विवरणम् ।

नालीकमिति । पद्मम् । हीनं दलस्थैर्घटैरिति । प्रसङ्गतः स्यात्तत्सम्भवाशङ्का तन्निवृत्त्यर्थमुक्तम् । अष्टकं कोणतश्चेति । अत्रान्तर्भागगतकोणपदलोपः ॥ १० ॥

क्षेत्रे सप्तोत्तरदशपुटे मध्यतो रन्ध्रकोष्ठैः
पद्मं षट्कं दिशि विदिशि कुर्याच्चतुष्कं च दैवे ।
मर्त्यांशे दिश्यथ नवकमत्राष्टकं कोणदेशे
संप्राढ्यार्धाधिकशतघटे षट्कमप्यन्तराले ॥ ११ ॥

---

१. 'षट्पञ्चाशद्युतशत' ख. पाठः.

विमर्शिनी ।

सप्ताढ्यार्धाधिकशतघटे सप्ताधिकपञ्चाशत्संयुतशतकलशे सप्तोत्तरदशपुटे क्षेत्रे मध्यतो रन्ध्रकोष्ठैः नवपदैः पद्मं कुर्यात् । दैवे मध्यादारभ्य ब्राह्मदैविकमानुषपैशाचशब्दा आवरणत्वेन व्यपदेश्या यतोऽतो दैविके दिशि षट्कं विदिशि चतुष्कं च कुर्यात् । अथ मर्त्यांशे दिशि नवकम्, अत्र कोणदेशे अष्टकम्, अन्तराले षट्कं च ॥ ११ ॥

विवरणम् ।

क्षेत्रे सप्तोत्तरदशपुट इति । प्रतिष्ठास्थानोदीरितरीत्या ब्राह्मदैविकमानुषपैशाचभागा यथायोगमिहापि कल्प्यन्ते । अत्राष्टकं कोणदेश इति । प्राग्वदन्तर्भागगतकोणपदलोपः ॥ ११ ॥

एकोनविंशतिपुटे नवकेन मध्ये
पाथोरुहं सुरनरांशगतानि भूयः ।
कुर्वीत चात्र नवकानि जिनप्रमाणि
सात्यष्टिकद्विशतसङ्ख्यघटाभिषेके ॥ १२ ॥

विमर्शिनी ।

सात्यष्टिकद्विशतसङ्ख्यघटाभिषेके सप्तदशाधिकद्विशतकलशाभिषेके एकोनविंशतिपुटे मध्ये नवकेन पाथोरुहं पद्मं, भूयः सुरनरांशगतानि दैविकमानुषगतानि जिनप्रमाणि, जिनाश्चतुर्विंशतिः, तत्सङ्ख्यानि नवकानि कुर्वीत च ॥ १२ ॥

विवरणम् ।

एकोनविंशतिपुट इति । जिनप्रमाणि चतुर्विंशतिः ॥ १२ ॥

क्षेत्रे तत्रेध्मसङ्ख्यापुटजुषि नवकेनाम्बुजं ब्रह्मभागे
दैवे दिक्कोणदेशे नवकमथ समर्त्यांशकोणे करोतु ।
कर्तव्यं मर्त्यभागे दिशि रविघटवत् क्षेत्रमत्रान्तराले-
ऽप्येवं कुर्यात् त्रिपञ्चाशदुपगतशतद्वन्द्वकुम्भाभिषेके ॥ १३ ॥

विमर्शिनी ।

त्रिपञ्चाशदुपगतशतद्वन्द्वकुम्भाभिषेके त्रिपञ्चाशत्सहितशतद्वयकलशस्नानविधौ तत्र इध्मसंख्यापुटजुषि, इध्माः एकविंशतिः एकविंशतिपुटभवे क्षेत्रे

ब्रह्मभागे नवकेनाम्बुजं, दैवे दिक्कोणदेशे समर्त्यांशकोणे दैविकादिक्षु विदिक्षु मानुषकोणेषु च नवकं करोतु। मर्त्यभागे दिशि रविघटवत् द्वादशकलशयुतं क्षेत्रं कर्तव्यम्। अत्र मानुषे अन्तरालेऽपि। एवं रविघटवत् क्षेत्रं कुर्यात् ॥ १३ ॥

विवरणम्।

क्षेत्रे तत्रेति। मर्त्यांशकोणेषु सप्तपदलोपः। यथा आग्नेयखण्डे पश्चिमोदक्पर्यन्तपुटलोपः इति। अत्र चाभ्यन्तरकोणगतं प्रधानं, यद्वा मध्यममेव तदनुसारेण च दिगन्तरालखण्डेष्वपि प्रधानविकल्पः॥ १३ ॥

क्षेत्रे तत्र त्रयोविंशतिपुटजुषि मध्येऽम्बुजं पञ्चकृत्या
कोष्ठानां दैविके स्याद् दिशि दशकमतः कोणदेशे त्रिकं च।
दिग्देशे तत्त्वसंख्यं तदनु दशकमभ्यन्तरे कोणदेशे
कर्तव्यं सप्तयुक्तं दशकमपि बहिः स्याद् घटानां त्रिशत्याम्
॥ १४ ॥

विमर्शिनी।

पुनर्घटानां त्रिशत्यां त्रयोविंशतिपुटजुषि क्षेत्रे मध्ये कोष्ठानां पञ्चकृत्या पञ्चविंशत्याम्बुजं स्यात्। दैविके दिशि दशकम्, अन्तः अतोऽस्मिन् कोणदेशे त्रिकं च, बहिर्दिग्देशे तत्त्वसंख्यं पञ्चविंशतिकं स्यात्। तदनु अभ्यन्तरे अन्तराले दशकं, कोणदेशे सप्तयुक्तं दशकमपि कर्तव्यं स्यात्॥ १४ ॥

विवरणम्।

क्षेत्रे तत्रेति। कोणदेशे त्रिकं चेति। [1]अत्र बाह्यकोणपदलोपः। कोणदेशे सप्तयुक्तं दशकं कर्तव्यमित्यत्राष्टपदलोपः। अत्रान्तर्भागगतबाह्यपङ्क्तौ पञ्चानान्तदान्तरपङ्क्तौ त्रयाणाञ्च पदानां लोपः स्यात्। यद्वा बाह्यपङ्क्त्यात्र-ष्टावप्यन्तरालपदानि लोपनीयानि। अथवा प्रधानपदं परितः पङ्क्तिलोपः ॥ १४ ॥

---

१. 'त्र' क. पाठः

त्रिंशत्सूत्रयुते घटीशरशते क्षेत्रे विधायाभितो
वीथीः पञ्चपुटान्तरेऽभिकृतिकोष्ठैर्मध्यतश्चाम्बुजम् ।
दैवे दिग्विदिशासु सप्तदशसंख्यातान् न्यसेन्मानुषे
दिक्कोणान्तरसंस्थितानपि घटांस्तत्त्वाष्टितत्त्वप्रमान् ॥ १५ ॥

विमर्शिनी ।

ततो घटीशरशते घटानां पञ्चशतस्थाने त्रिंशत्सूत्रयुते एकोनत्रिंशत्पुटे क्षेत्रे अभितः आयामतो विस्तारतश्च पञ्चपुटान्तरे वीथीर्विधाय मध्यतः अभिकृतिकोष्ठैः पञ्चविंशतिपदैरम्बुजं, दैवे दिग्विदिशासु सप्तदशसंख्यातांश्च न्यसेत् । मानुषे दिक्कोणान्तरसंस्थितानपि तत्त्वाष्टितत्त्वप्रमान् पञ्चविंशतिषोडशपञ्चविंशतिसंख्यान् घटान् क्रमान्न्यसेत् ॥ १५ ॥

विवरणम् ।

त्रिंशत्सूत्रयुत इति । एकोनत्रिंशत्पुटे इति यावत्[2] । सप्तदशसंख्यातान् न्यसेदिति । अत्र दिक्ष्वन्तरालपदलोपः । अष्टीति[3] । अत्र नवपदलोपः यथाग्नेयखण्डे पश्चिमोदक्पर्यन्तपुटलोप इति ॥ १५ ॥

विश्वघ्नत्रिपुटे घटीदशशते खण्डेषु संवर्गित-
क्ष्माभृत्कोष्ठयुतेषु मध्यनवकैः पद्मं नृदेवांशयोः ।
ब्राह्मे तत्त्वपदाब्जशेषितपदान्यायोज्य वीथ्यां घटान्
न्यस्येत् पद्मपदेषु मानुषदिगब्जाशापलाशेष्वपि ॥ १६ ॥

विमर्शिनी ।

पुनर्घटीदशशते घटानां सहस्रे स्थाने विश्वघ्नत्रिपुटे, विश्वे त्रयोदश तैस्त्रिगुणिते एकोनचत्वारिंशत्पुटे सप्तसप्तपुटान्तरे वीथीः कृत्वा संवर्गितक्ष्माभृत्कोष्ठयुतेषु, क्ष्माभृतः सप्त, स्वेनैव गुणितैः सप्तभिः कोष्ठैः युतेषु । एकोनपञ्चाशत्कोष्ठयुतेषु खण्डेष्वित्यर्थः । तत्र मध्यनवकैः मध्यगतैर्नवकैः नृदेवांशयोः मानुषदैविकयोः पद्मं, जातावेकवचनं, पद्मानि कुर्यात् ! ब्राह्मे तु तत्त्वपदाब्जशेषितपदानि पञ्चविंशतिपदैरम्बुजं कृत्वा शेषितानि पदानि वीथ्यामायोज्य पद्मपदेषु पञ्चविंशतिपद्मेषु तत्परितो गतेषु पदेषु च मानुषदिगब्जाशापलाशेष्वपि मानुषावरणस्य दिग्भवानां पद्मानां चतुर्षु चतुर्षु दिग्दलेष्वपि घटान् न्यस्येत् ॥ १६ ॥

---

१. 'घ्यगैरम्बु' क. पाठः. २. 'त्र इति' ख. पाठः. ३. 'पुट' घ. पाठः.
४. 'दलेषु दिक्रमकदिक्पत्रेषु चापावृतौ' ॥ क; विवरणानुसारी च पाठः.

विवरणम् ।

विश्वघ्नत्रिपुट इति । त्रयोदशभिस्त्रयाणां गुणन एकोनचत्वारिंशत् पैदाः स्युः । संवर्गितक्ष्माभृत्कोष्ठयुतेष्विति । सप्तानां वर्गणेन प्रतिखण्डमेकोनपञ्चाशत् कोष्ठसंभव उक्तः । तेत्त्वपदाब्जशेषितपदानि वीथ्यामायोज्येति । सर्वमध्यमखण्डमध्ये पञ्चविंशतिकोष्ठैरष्टदलं पद्ममारचय्य परितोऽवशिष्टपदानि वीथावायोजयेन्मृज्यात् । पद्मपदेषु घटान् न्यस्येदिति । पद्मानि पदानि चेति द्वन्द्वः । पद्मानि खण्डमध्यारचितानि पञ्चविंशतिः पदानि च तेषां समन्तवर्तीनि प्रतिखण्डं चत्वारिंशत्कोष्ठानि । ब्राह्मखण्डे तु परितः पदाभाव एँव तेष्वभंयष्वपीत्यर्थः । दिक्कमलदिक्पत्रेषु चाद्यावृतिः । दैविकमाद्यमावरणम् । यद्वा नृदेवांशयोरित्येवं प्रकृतत्वान्मानुषमेवाद्यमावरणं, तत्र षतंसृषु दिक्षु दिश्यखण्डेषु यानि पद्मानि तेषां कर्णिकागतब्राह्मसन्निधौ यानि दिश्यानि चत्वारि चत्वारि दलानि तेष्वपि संभूय षोडशैव कुम्भान् न्यसेदित्यर्थः ॥ १६ ॥

> एतेष्वन्यतमं प्रगृह्य कलशक्षेत्रं यथार्हं सुधी-
> द्रोणाद्युन्मितशालितण्डुलतिलैः पीठं ससिद्धार्थकैः ।
> वासोभ्यन्तरितैः करोतु कुशकूर्चान्तैः पदे ब्राह्मके
> तद्वद् व्रीहिचयाग्रदर्भयुगलैः शेषष्वशेषेष्वपि ॥ १७ ॥

विमर्शिनी ।

सुधीः वित्तदेशकालादिविशेषज्ञः साधकः एतेषु उक्तेष्वन्यतमं किञ्चन कलशक्षेत्रं यथार्हं यथायोग्यं प्रगृह्य गृहीत्वा ब्राह्मके पदे स्थाने द्रोणाद्युन्मितशालितण्डुलतिलैः द्रोणतदर्धतत्पादतदर्धपादप्रमाणोन्मितैः शालिभिस्तण्डुलैः तिलैः ससिद्धार्थकैस्तैः वासोभ्यन्तरितैः वस्त्रान्तकुशकूर्चान्तैरेतैः पीठं करोतु शेषेष्वशेषेष्वपि पदेषु तद्वदेवादरेण व्रीहिचयाग्रदर्भयुगलैः व्रीहिपुञ्जैरग्रदर्भाणां युगलैश्च पीठं करोतु ॥ १७ ॥

विवरणम् ।

यथार्हमन्यतमं प्रगृह्येति । निमित्तवित्तादियोग्यमित्यर्थः । द्रोणाद्युन्मितेति । द्रोणोन्मितास्तावच्छालयः, तदर्धोन्मितास्तण्डुलाः, पादोन्मि-

---

१. 'पुटाः स्युः' घ. च. पाठः. २. 'ततः पदा' छ. पाठः
३. 'एते' च. पाठः. ४. 'तदेवां' ख. पाठः. ५. 'कल्प्य क' क. पाठः.
६. 'स्वच्छक्षिमद्रोणव्रीहितदर्धतण्डु' ख. पाठः. ७. 'त्रादीत्यर्थः' क. पाठः.

तास्तिलाः अष्टांशोन्मिताश्च सर्षपाः । वासोऽभ्यन्तरितैरिति । एतदुक्तं भवति । पूर्वमष्टदलंकमले द्रोणमितैश्शालिभिः स्थण्डिलं विधाय वस्त्रेणोपर्याच्छाद्य तदुपरि द्रोणार्धमितैस्तण्डुलैः स्थण्डिलं कुर्यादित्यादि । कुशकूर्चान्तैरिति । सर्षपोपरि वस्त्रेणाच्छाद्य तदुपरि दर्भकूर्चं विष्टरं विन्यसेत् । एतन्महाब्रह्मकलशे पीठं भवतीति भावः । पदे ब्राह्मक इत्यधस्तात्संबन्धनीयम् । तद्वदिति । अशेषेष्वपि दैविकेषु[3] मानुषेऽपि[4] ब्राह्मेषु तत्परिकलशपदेष्वपि व्रीहिचयेन स्थण्डिलं कृत्वा तदुपरि दर्भाग्रयुगलन्यासेन पीठं कुर्यात् । यथार्हमित्यनुवर्तनादौचित्याद्वा ब्राह्मपदेषु व्रीह्याधिक्यमितरेषु न्यूनत्वञ्च लभ्यते ।

तारेण सूत्रमास्फाल्य तेनैव विकिरेद्रजः ।
अस्त्रेणालिप्य परितः शक्त्या पीठं प्रकल्पयेत् ॥
तथैव विष्टरं न्यस्येन्महाब्राह्मे परेषु तु ।
कूर्चमात्रद्विदर्भाग्रं हंसेनान्यपदेष्वपि ॥ १७ ॥

* विन्यस्यैषु हिरण्मयान् रजतजांस्ताम्रोद्भवान् मार्त्तिकान्
कुम्भान् वाङ्कुरपालिकादि परितः पुष्पादिकं दक्षिणे ।
उत्पूतं जलमन्यतोऽथ विधिवत् स्नानादिकृत् स्वासने
स्वासीनः प्रकरोतु वायुयमनाद्यात्मार्चनान्तं गुरुः ॥ १८ ॥

विमर्शिनी ।

एषु पीठेषु हिरण्मयान् वा रजतजान् वा ताम्रोद्भवान् वा मार्त्तिकान् वा कुम्भान् विन्यस्य ब्रह्मकलशस्य परितोऽङ्कुरपालिकादि, आदिशब्दात् प्रदीपादिकं च, दक्षिणे पुष्पादिकं पुष्पगन्धाक्षतादिकम् अन्यतः उ-

---

१. 'ले क' ख. पाठः. २. 'कूर्चं विन्य' क. च. पाठः. ३. 'विके मा, ४. पाठः. ४. 'षेष्वपि' ख. पाठः. ५. 'प्वपि ॥ इति ॥' च. पाठः. ६. 'षु तु पी' क. पाठः.

* हैमान् राजतताम्रजानुत घटान् मृत्सम्भवान् वा न्यसे-
देतेष्वङ्कुरपालिकादि परितः पुष्पादिकं दक्षिणे ।
उत्पूतं जलमन्यतोऽथ विधिवत् स्नानादि कृत्वासने
स्वासीनस्तनुशादिह्यात्मयजनान्तं ब्रह्मपीठाग्रतः ॥

इति विवरणपाठः ।

परभागे उत्पूतं जलं च विन्यस्याथ गुरुः विधिवन्मन्त्रकल्पोक्तक्रमेण स्नानादिकृद् ब्रह्मकुम्भाग्रतः स्वे विष्टरे स्वासीनः सुखेनोपविश्य वायुयमनाद्यात्मार्चनान्तं गुरुगणपतिवन्दनादि स्वास्त्रेण तालत्रयदिग्बन्धाग्निप्राकारान् विधाय स्वस्य तत्त्वसंहारादिशोषणादितत्त्वसृष्टिलिपिप्राणायामादिलिपिन्यासादिकमधिवासोक्तविधिना विधाय मूलप्राणायामादितन्न्यासशङ्खपूरणात्माराधनपर्यन्तं कर्म पूजापटलोक्तविधिना प्रकरोतु ॥ १८ ॥

विवरणम् ।

हैमानिति । यथार्हमेव च कुम्भानामयं विकल्पोऽभिप्रेतः । महाब्राह्मे हैमः उपब्राह्मेषु राजतः[1] महाब्राह्मे वा राजतः इतरेषु ताम्रः परिपदेषु[2] मार्त्तिकः यथालाभं वेति । अङ्कुरपालिकादिपरित इति । स्वस्वमष्टमङ्गलमादिशब्देन गृह्यते । पुष्पादिकमिति । गन्धाक्षतादेर्हैमरत्नादिद्रव्यस्य पल्लव चक्रिकावस्त्रादेरपि ग्रहणम् । उत्पूतं जलमन्यत इति । नवाम्बरोत्पूतं कुंभादौ जलं वामे[3] न्यसेदित्यर्थः । परिकर्मिकर्मैतत् सर्वं भवति । इदानीं कलशपूजां प्रस्तौति—अथ स्नानादि कृत्वेति । ब्राह्मपीठाग्रेत[4] आसने स्वासीन इति योज्यम् ॥ १८ ॥

इष्ट्वा गुरून् गणपतिं च यजेत पीठं
शय्योक्तवत् प्रकृतियागविराममत्र ।
तत्त्वान्यपीह कतिचित् प्रकृतेरधस्ता-
दर्च्यान्युशन्ति कलयेदथ पद्ममुद्राम् ॥ १९ ॥

विमर्शिनी ।

ततो गुरून् गणपतिं चेष्ट्वा प्रकृतियागविरामं प्रकृत्यावाहनार्चनान्तं पीठं शय्योक्तवत् शय्यापूजोक्तप्रकारेण यजेत । अत्र कलशपूजायां कतिचिद् देशिकाः प्रकृतेरधस्तात् प्रकृतेः पूर्वं तत्त्वान्यप्यर्च्यानि उशन्ति इच्छन्ति । अथ प्रकृतियागावसाने पद्ममुद्रां कलयेत् ॥ १९ ॥

विवरणम् ।

शय्योक्तवदिति । समाहितः स्वकीयशक्तिं निजबीजविद्ययेत्येवं प्रकृतियाग उक्तः कतिचिदित्यागमविद इति शेषः । समष्टिपूजानन्तरतः पूर्वं तत्त्वानि पूजयेत ।

१. तः शेषेषु राजतः महाब्राह्मे' ख. पाठः. २. 'रिकुम्भेषु' ङ. पाठः.
३. 'वामे तस्य' क. पाठः. ४. 'ग्रे आसने' क. पाठः. ५. 'रतरत्वादि पू' ङ, 'रत्वादि पू' छ. पाठः.

तत्र प्रकृत्यन्तं पीठे व्यापकतया बुद्ध्यन्तं कर्णिकायां तन्मात्राः कर्णिकायां दिग्दलेषु च श्रोत्रादीन्यपि । एवं वागादीनि कर्णिकायां विदिग्दलेषु चाकाशादीनि पञ्चतत्त्वानि च तन्मात्रावदिति तत्पूजाप्रकारः । यद्वाकाशादीनि वागादीनि श्रोत्रादीनि शब्दतन्मात्रादीनि[1] मन आदित्रयं प्रकृत्यादिशेषश्च पुनस्सर्गक्रमेण पञ्चतत्त्वानीत्येवं क्रमो भवति । स्कन्दे त्वन्ते क्षेत्रज्ञतत्त्वं कर्णिकायामिति । कलयेदथ पद्ममुद्रामिति ।

करा्भ्यामञ्जलिं कुर्यात् विश्लिष्टसकलाङ्गुलिम् ।
कर्णिकाङ्गुष्ठयुक्श्लिष्टा पद्ममुद्रेयमीरिता ॥ १९ ॥

अस्त्रेणासिच्य तोयैः कलयतु कवचेन त्रिसूत्रेण[2] कुम्भं
मूलेनालिप्य गन्धैर्मचरममनुना धूपयेत् साधु धूपैः ।
पश्चात्[3] तं न्यग्बिलं विन्यसतु मपरतः क्लृप्तपीठे यमाद्यै-
र्बीजैः शोषादि[4]रन्ध्रीकरणसमवसानां विशुद्धिं विदध्यात् ॥ २० ॥

विमर्शिनी ।

अथास्त्रेण तोयैः कुम्भमासिच्य कवचेन त्रिसूत्रेण तं कलयतु । मूलेन गन्धैरालिप्य मचरममनुना तारेण धूपैः साधु अन्तर्बहिश्च धूपयेत् । पश्चात् क्लृप्तपीठे तं कुम्भं निजमनुना न्यग्बिलम् अधोमुखं न्यसेतु[5] । पुनः यमाद्यैः यं रं वं लं हं इति बीजैः शोषादिरन्ध्रीकरणसमवसानां शोषणदहनप्लावनकाठिन्यसुषिरीकरणस्वरूपां विशुद्धिं विशेषेण शुद्धिं विदध्यात् ॥ २० ॥

विवरणम् ।

कुम्भसंस्कारमाह—अस्त्रेणासिच्येति । पूर्वमेव जलादिभिः सामान्य शुद्धिरिष्यते । आसेचनं शङ्खेनैवाल्पजलेन क्षालनं, कलयतु कल बन्धने परिवेष्टयेदित्यर्थः । मूलेनालिप्येति अन्तर्बहिरालेपनमुक्तम् । मचरममनुः प्रणवः । साध्वित्यादरार्थमुक्तम् । पश्चात्तं न्यग्बिलं विन्यसतु मपरतः क्लृप्तपीठ इति । क्लृप्ते व्रीहितण्डुलादिभिर्विरचिते तथा जलगन्धादिविभाविते प्रकृते पीठे प्रणवेनैव पश्चादनन्तरं सादयेत् । यद्वा पश्चादिति तस्मिन् पीठ एव, न मध्ये । किन्तु किञ्चित्पश्चिमे[6] देशे । अथवा पश्चात् क्लृप्तपीठ इति प्रकृतपीठपश्चाद्भागे दर्भास्तररूपे पीठे । पश्चाच्छब्देन कलशक्षेत्रस्यापि पश्चाद्भागो

1. 'नि शब्दतन्मात्रादीनि मन' क. पाठः. 2. 'तस्त्रेण [illegible]' क. पाठः. 3. 'मूलेन न्यग्बिलं तं न्यसतु सुसहिते योगपीठे' ख. पाठः. 4. 'शोषादीनि क्रमेण प्रचरतु सुषिरीकारनिष्ठानि [illegible] ॥' क. पाठः. 5. 'न्यस्यतु' क. ख. घ. पाठः. 6. 'किमोद्देशे' ख. पाठः

वा विवक्षितः । तत्र दर्भास्तरं विधाय तस्मिन् पीठस्थानीये सादयेदिति । तदा च तत्रैव सर्वेषामपि ब्रह्मकुम्भानां न्यासः, सर्वेषां वा कलशानां तत्र पङ्क्तिशो न्यासं कुर्यादिति । यदुक्तम्—

तारेणाधोमुखान्न्यस्य पश्चिमे दर्भसंस्तरे ।
यावदीशानपर्यन्तं पङ्क्तीकृत्य विचक्षणः ।

इति । यमाद्यैरिति । यं [1]रं वं लं हमित्येतै[2]र्बीजैः शोषादीनि शोषणं दहन [3]प्लावनं घनीकरणं सुषिरीकरणमित्यादीनि । विद्वानिति बिम्बसं[4]स्क्रियोक्तनयेनेति भावः । यद्वा कुम्भबिम्बकल्पं विजानन्निति । एवञ्च पूर्वं भूतसंहारं कृत्वा शोषणादीनि कार्याणि पुनर्भूतसृष्टिं कृत्वा सकृन्मातृकां न्यसेदित्येतदपि लभ्यते । सन्धूपनानन्तरमेतत्सर्वं विधाय न्यग्बिलन्यासः स्यादिति च [5]ज्ञेयमिति । यद्वा मन्त्रीति पाठः मूलेन वा न्यग्बिलसादनमिति [6]तदाभिप्रायः । एतावत्[7]सर्वत्र समानम् ॥ २० ॥

आद्येन न्यसतु स्वतत्त्वमनुना दर्भान् द्वितीयेन ग-
न्धाद्भिः प्रोक्षतु मध्यमेन कलशे तत्राक्षतैः प्रोत्किरेत् ।
मूलेन प्रयजेज्जलादिभिरुपान्त्येनैनमुत्तानये-
दुन्नीयाश्रितविष्टरे स्वमनुनिष्ठेनान्तिमेन न्यसेत् ॥ २१ ॥

विमर्शिनी ।

तत्र कलशे आद्येन पञ्चतत्त्वेष्वाद्येन स्वतत्त्वमनुना दर्भान्[10] न्यसतु । [11]द्वितीयेन गन्धाद्भिः प्रोक्षतु । मध्यमेनाक्षतैः प्रोत्किरेत् । पुनर्मूलेन जलादिभिरुपहारैः प्रयजेत् । उपान्त्येन चतुर्थेन एनं कुम्भमुत्तानयेत् । उन्नीय ऊर्ध्वं नीत्वा आश्रितविष्टरे पूजिते पीठे स्वमनुनिष्ठेन स्वमूलमन्त्रान्तेन अन्तिमेन स्वतत्त्वमनुना न्यसेत् ॥ २१ ॥

---

१. 'रं लं वं हमि' क. ख. पाठः. २. 'मित्याभि' ख. पाठः. ३. 'मित्येतानि' ख. ग. पाठः. ४. 'ति संस्क' छ. पाठः. ५. 'यम यद्वा' क. पाठः. ६. 'तद्दभि' ख. पाठः. ७. 'त्सर्वमन्त्र' क. ग. पाठः ८. 'तं गन्धैरुक्षतु मध्यमेन विकिरेत्तस्मिन्कुम्भेरक्षतैः । मू' ख. पाठः. ९. 'चिं' इति मूलकोशपाठः. १०. 'र्भं न्य' क. ख. घ. पाठः. ११. 'ये द्वितीयेन' ख, 'य मध्य' ख. पाठः.

विवरणम् ।

अथ विष्णौ[1] शेषमाह—आद्येनेति । परमेष्ठितत्त्वेन । तत्र कलश इत्येतत्सर्वत्र योज्यम् । पङ्क्तिशस्सादने पङ्क्तौ दर्भन्यासः तदुक्तं 'प्रतिपाङ्क्ति न्यसेद्दर्भानि'ति । मूलेन प्रयजेदिति । अत्रान्तरा निजमूलेन जलगन्धादिभिः कुम्भं पूजयेदित्यर्थः । प्रोत्तानयेत् । उद्विलं कुर्यात् । स्वविष्टराभिमुखतयैतत् कार्यम् । उद्धरेदन्त्येनेति 'सर्वतत्त्वेन मन्त्रविदि[2]'ति गायत्र्या वा न्यास इत्युक्तम् ॥ २१ ॥

* शर्वे ताराघोरपञ्चार्णवामपुन्तारैर्मूलेन दुर्गाकुमारे ।
दर्भन्यासाद्यादिनान्येषु मन्त्री कुर्यात् सर्वेष्वन्तरा स्वाणुनेज्याम् ॥ २२ ॥

विवरणम् ।

शिवादिषु विशेषं दर्शयति—शर्व इति । प्रणवेन दर्भन्यासः । अघोरेण जलगन्धप्रोक्षणं मूलेनाक्षतविकिरणं वामेनोत्तानीकरणं पुरुषेणोद्धरणं प्रणवेन विष्टरे न्यास इति । मूलेन दुर्गाकुमार इति । दर्भन्यासादिषट्कमपि कुर्यादित्यर्थः । आदिनान्येष्विति । हरिहरगणपतिशास्तृषु प्रणवेनैव सर्वमित्यर्थः । सर्वेष्वन्तरेज्यां स्वाणुना कुर्यादिति । अक्षतविकिरणानन्तरं या पूजा सा स्वस्वमूलेन कार्येत्यर्थः । मन्त्रीति क्वचिन्मन्त्रविकल्पः सूचितः । हरिहरे हरिवन्निजपञ्चतत्त्वप्रणवैः । शिवेऽपीशानादिपञ्चब्रह्मप्रणवैरिति ॥ २२ ॥

संप्रोक्ष्य प्रणवेन तद्घटपुटे मूलाम्बुजे पावकी-
मध्याब्जे मिहिरोद्भवा विधुभवाश्चोर्ध्वारविन्दे कलाः ।
विन्यस्यर्क्षसहितैः समष्टिमनुभिः संव्याप्य ताश्चार्चयेत्
पङ्क्तिद्वादशषोडशच्छदगता भूयः प्रसूनाक्षतैः ॥ २३ ॥

विमर्शिनी ।

तद्घटपुटे तस्य कुम्भस्यान्तर्भागे प्रणवेन संप्रोक्ष्य तस्य स्थानत्रये पद्मत्रयं संचिन्त्य मूलाम्बुजे मूलाधारस्थपद्मे पावकीः पावकोद्भवा वह्निकलाः, मध्याब्जे मिहिरोद्भवाः सूर्यकलाः, ऊर्ध्वारविन्दे विधुभवाः सोमकलाश्च विन्य-

१. 'ष्णौ विशेष' ङ. पाठः. २. 'दि गाय' ख. पाठः. ३ 'बन्धजक' च. छ. पाठः.

* पद्यमिदं विमर्शिनीकारमते नास्तीति भाति ।

स्य ऋक्सहितैः समष्टिमनुभिः तत्तद्दाभिस्तत्तत्समष्टिमन्त्रैश्च तत्र तत्र संव्याप्य भूयः पङ्क्तिद्वादशषोडशच्छदगताः दशद्वादशषोडशदलगताः ताः कलाः प्रसू-नाक्षतैरन्यैश्चोपहारैरर्चयेत् ॥ २३ ॥

विवरणम् ।

संप्रोक्ष्य प्रणवेनेति । तं कुम्भमिति शेषः । तद्घटपुटे तत्कुम्भान्त-र्भागे । मूलाम्बुजे पावकीरिति । तन्मूलोद्देशे दशदलं सकर्णिकं पद्मं प्रणवेन विभाव्य तस्मिन्नग्निकला वक्ष्यमाणा विन्यसेदिति भावः । कलान्यासादौ मूल-योग इष्यते । मध्याब्जे मिहिरोद्भवा इति । तद्धृदुद्देशे द्वादशदलं पद्मं पूर्ववद्विभाव्य तत्र सूर्यकला इत्यर्थः । विधुभवाः सोमकलाः ऊर्ध्वारविन्दे अरविन्दं पद्मं कुम्भस्यैव मुखोद्देशे प्रणवेनैव षोडशदलं पद्मं सञ्चिन्त्य तासि-न्नित्यर्थः । ऋक्सहितैस्तत्समष्टिमनुभिस्संव्याप्येति । दलेषु कला विन्यस्य ऋचा समष्टिमन्त्रेण वक्ष्यमाणक्रमेण व्यापयेदित्यर्थः । पङ्क्तिद्वादशषोडशच्छ-दगता इति । दशसु द्वादशसु षोडशसु च दलेषु न्यस्ताः । ऋक्समष्टिभ्या-मप्यविशेषात्पूजनं कार्यम् । प्रसूनाक्षतैरिति । पुष्पाक्षतैरेवेयं पूजा । यद्वा जलगन्धाद्युपलक्षणमेतत् । इह पङ्क्तिद्वादशषोडशच्छदानि पद्मानि कुम्भावयव-त्वेनैवेष्यन्ते । अत एव केचिद् दर्भन्यासादि मूलपूजान्तं विधायेमाः कला बहिर्विन्यस्योत्तानीकरणादि कुर्वन्तीदानीमेव चान्तर्भागे ताः पूजयन्ति । यद्वा ताश्चार्चयेत्पुनः पङ्क्तिद्वादशषोडशच्छदगताश्चार्चयेदिति । दशदलकमलान्तर्भागे कर्णिकोद्देशे ब्रह्मकलाः सृष्ट्याद्या द्वादशकमलान्तर्भागे विष्णुकलाः स्थिराद्याः षोडशकमलान्तर्भागे रुद्रकलाश्च तीक्ष्णाद्या वक्ष्यमाणक्रमेण पूजयेदिति ॥ २३ ॥

कुम्भावाहनमादधीत चतुरर्णाकीणुना तन्मुखे
दिङ्मध्येषु निवेश्य बैन्दवकला ह्लाभादिकाज्ञान्विताम् ।
तन्मन्त्रेण यजेज्जिनार्णजनितं संतापमापातये-
न्मुद्रां कुम्भमयीं प्रदर्श्य जगदण्डाकारमेनं स्मरेत् ॥ २४ ॥

विमर्शिनी ।

पुनः चतुरर्णार्काणुना 'ओं ह्रीं हं सः' इत्यनेन सौरचतुरक्षरेण कुम्भा-वाहनं कुम्भदेवतावाहनमादधीत । तन्मुखे कुम्भमुखे दिङ्मध्येषु, बिन्दुक-

१. 'णवैरिति' ख. पाठः. २. 'वः न्यासा' च. पाठः.

३. 'सविशे' ङ. पाठः.

लाश्चतस्रश्चेच्चतसृणां दिशां मध्येषु पञ्च चेच्चतसृषु दिक्षु मध्ये च, वक्ष्यमाण। बैन्दवकला निवेश्य न्यस्य ह्रामादिकाङ्गान्वितं 'ह्रां हृदयाय नमः' इत्यादिभिरङ्गानि न्यस्य तैः समन्वितं तन्मन्त्रेण चतुरक्षरेण यजेत् । जिनार्णजनितं स्वस्वगायत्र्या-ज्यहोमसम्भूतं सम्पातम् आपातयेत् कुम्भे संस्पृशेत् । पुनः कुम्भमयीं मुद्रां प्रदर्श्य एनं कुम्भं जगदण्डाकारं ब्रह्माण्डाकारं स्मरेत् ॥ २४ ॥

विवरणम् ।

चतुरर्णार्कोणुना कुम्भावाहनमादधीतेति । ओं ह्रां ह्रीं सः इति सौरं चतुरक्षरम् । अथवा ओं ह्रीं हं स इत्येतदेव । अत्र प्रणवत्रयतदामन्त्रि-तपदादियोगो मूलाधाराच्चित्कलोत्थापनादिरिति सर्वोऽप्यावाहनधर्मः सामान्य-सिद्ध एव । कुम्भमूर्तिरिहावाह्यते तस्य च विराड्रूपताभिधानाद्विराजश्च सूर्यमय-त्वात्तदधिष्ठातृकत्वाद्वा तदीयचतुरक्षरेण कुम्भमूर्त्यावाहनोपपत्तिः[1] । दिङ्मध्ये ष्विति । पीतादिबिन्दुकलानां चतुस्संख्यापक्षेऽग्न्यादिचतुर्दिशां मध्योद्देशेषु, पञ्चसंख्यापक्षेऽग्न्यादिचतुर्दिक्षु मध्ये चेति च बोद्धव्यम् । निवेशनं न्यास एव । सौरचतुरक्षरे कलासु च मूलयोगः । ह्रामादिकाङ्गान्वितमिति । निवेश्य यजे-दित्युभयत्रापि क्रियाविशेषणम् । तन्मन्त्रेण यजेदिति । सौरचतुर्वर्णेन कला-भिरपि सह पूजा कार्या । जिनार्णजानितमिति । जनितेऽग्नौ निजनिजगायत्र्या अष्टोत्तरशतादिवारमाज्यं पूर्णान्वितं हुत्वा तत्सम्पातमिदानीमस्मिन् कलशे तथैव गायत्र्या सिञ्चेदित्यर्थः । सम्पातशेषणापरेष्वपि[2] ब्रह्मकलशेषु स्पर्शनं कार्यम् । यदा पुनस्तत्कलशक्षेत्रपश्चिमतस्सर्वकुम्भानामपि पङ्क्तिशो निधानं तदा सम्पातस्पर्शपूर्वकमेव वा सर्वेषां न्यग्बिलतया सादनम् । तदुक्तम् —

'उत्पाद्याग्निं शतं हुत्वा गायत्र्या सेचयेद् घृतम् ।
धूपितान् सादयेत्तेषु तारेण प्रागुदङ्मुखः ॥'

इति । कलशानामधिवासनार्थमेतत् । तदप्युक्तम्—'ततोऽधिवासयेच्छुद्धान् कल-शानि'ति । यद्येवं स्यात्तदा शोषणादि कृत्वा मूलेन संम्पूज्य सम्पातस्पर्शपूर्वकं सकलकुम्भान् न्यग्बिलं सादयित्वा दर्भन्यासादित्रयमपि विधायाधिवासयेत् । पुनरेव ब्रह्मकलशपूजारम्भ इति । मुद्रां कुम्भमयीं प्रदर्श्येति । पद्ममुद्रैवेषन्मुकु-लितायताङ्गुष्ठा[4] कुम्भमुद्रा । जगदण्डाकारं ब्रह्माण्डरूपम् ॥ २४ ॥

---

१. 'हनोत्पत्तिः' क. पाठः. २. 'शो न्या' क. ख. पाठः. ३. 'परेषु ब्रह्मकुम्भेष्वपि' ख. घ. च. पाठः. ४. 'ताङ्गुष्ठा' ख. पाठः.

न्यस्येत् तात्त्विकसंख्यदर्भकृतसन्दर्भं विराड्विग्रहे
कुम्भेऽस्मिन् प्रणवेन कूर्चमथ चार्हेत् तत्सुषुम्नात्मकम् ।
तन्मूले न्यसतु स्वकं सुमहितं द्रव्यं सुवर्णाश्मवत्
तज्जीवात्ममयं निजार्हमनुना मन्त्री ततश्चार्चयेत् ॥ २५ ॥

विमर्शिनी ।

विराड्विग्रहे विराडात्मकविग्रहे कुम्भेऽस्मिन् तात्त्विकसंख्यदर्भकृतसन्दर्भं पञ्चविंशत्या दर्भैः कृतविरचनं कूर्चं प्रणवेन न्यस्येत् । अथ कुम्भविग्रहस्य देवस्य सुषुम्नात्मकं तत् कूर्चं तेनैव प्रणवेन चार्हेत् पूजयेत् । तन्मूले तस्य मूलाधारे । स्वकं स्वीयं सुवर्णाश्मवत् सुवर्णेन रत्नैश्च युतं सुमहितं पूजितं च द्रव्यं न्यसतु । ततो मन्त्री द्रव्यदेवतामन्त्राणामैक्यज्ञः तज्जीवात्ममयं तस्य जीवात्मकस्वरूपं तद्द्रव्यं निजार्हमनुना द्रव्यस्य देवतामन्त्रेणार्चयेच्च ॥ २५ ॥

विवरणम् ।

न्यस्येत् तात्त्विकसंख्यदर्भकृतसंदर्भमिति । सन्दर्भो ग्रथनं यावन्ति तत्त्वानि तावद्भिर्दर्भैर्ग्रथितम् । यदुक्तम्—

'पञ्चविंशतिभिर्दर्भैर्ग्रथितं कूर्चमुत्तमम् ।
मध्यं षोडशभिर्युक्तमष्टभिश्चाधमं भवेत् ॥
चतुर्भिश्च त्रिभिर्द्वाभ्यां ग्रथितं क्वचिदिष्यते ।' इति
'ग्रन्थिरङ्गुलविस्तारः कुण्डलप्रतिकुण्डलः ।
चतुरङ्गुलमग्रं स्याद् द्विसप्ताङ्गुलनालकम् ॥'

मध्यमकूर्चे द्वादशाङ्गुलं नालमधमे दशाङ्गुलमिति । विराड्विग्रहे इति । ब्रह्माण्डाकारत्वादिति भावः । कूर्चमम्भोक्षितं यवँवलजपसंस्कृतं प्रणवजसं कुम्भमूलाधारे मनसा चतुर्दलकमलं विभाव्य तत्कर्णिकालग्नतया प्रणवेन कुम्भे विन्यसेत् । विराड्विग्रहाद्यौचित्यादिह मूलाधारे कमलं लभ्यत इति ज्ञेयम् ।

१. तन्मूलेऽस्त्रविशुद्धमश्मकनकाढ्यं जीवरूपं न्यसेत्स्वं द्रव्यं महितं स्वमूलमनुतो मन्त्री इति विवरणकृतः पाठः. २. 'स्वकल्पकथितं', ३. 'समर्चयतु चात्माष्टाक्षरेणाणुना' इति मूलकोशपाठः. ४. 'वद्भै' क. ख. ङ. पाठः. ५. 'स्तारा' ङ. पाठः. ६. 'कम् इति ।म' घ. पाठः. ७. 'रलव' च. पाठः. ८. 'म्भे मू' क. ङ. च पाठः. ९. 'कुम्भं वि' ङ. पाठः.

तत्सुषुम्नात्मकमिति । विराड्विग्रहस्यान्तस्सुषुम्नानाडीरूपमित्यर्थः । ब्रह्मादि-कलेज्यासंभवे त्वेतदन्तर्मूलाद्यग्रान्तं नादकलेज्या, मूलाधारकमलकर्णिकान्तस्त्रि-कोणेषु शक्तिकलेज्या, द्वादशान्ताधोमुखकमलकर्णिकान्तस्सूर्यबिम्बे सोमबिम्ब-शालिनि शान्तकलेज्या चेष्यते । तन्मूले तस्य कुम्भस्य कूर्चस्य च सुषुम्ना-रूपस्य मूलभागे । अश्मशब्दो रत्नवचनः । स्वं द्रव्यं स्वस्वविहितं स्नानोदक-शान्त्युदकादिलक्षणम् । आर्घ्यीयं द्रव्यमस्त्रविशुद्धं सुदर्शनपाशुपताद्यस्त्रेण यथोचितं क्षालितं प्रोक्षितं वा महितं शोषणादिसंस्कृतं यथाप्रणवद्रव्यन्यासो-क्तमन्त्रपूजितम् । स्वमूलमनुत इति । न्यसेदित्यनेन सम्बन्धः । स्वमूलमनुतः स्वमन्त्रमूलमन्त्रतः । 'द्रव्याणां पुरुषः पर' 'ईशानः पितर' इत्येवं वक्ष्यमाणैः स्वमन्त्रो गृह्यते । मन्त्रीत्यात्माद्यक्षरादियोगोऽप्युक्तः । यथा ओं परपुरुषाय नमो नारायणाय ह्रीं हंसस्सोहं स्वाहेत्यादि । वैष्णवे षडक्षरमप्यत्र योजनी-यम् । शङ्खेन चायं द्रव्यन्यास इष्यते । जीवरूपमिति प्रतिपत्तिरुक्ता । ततश्चा-र्चयेदिति । द्रव्यन्यासोक्त एवेह मन्त्रः ॥ २५ ॥

दोष्णा कुम्भमुखं पिधाय ससुधाबीजेन तच्चेतना-
मुन्नीयोपरिपद्मसद्मपरमात्मैक्यं प्रणीयादिना ।
क्षाद्यान्ताक्षरजातमादिकृततारं शीर्षनिष्ठं जपन्
मन्त्री तत्परिपातुकामृतरसैः कुम्भं धियापूरयेत् ॥ २६ ॥

विमर्शिनी ।

**पुनः** ससुधाबीजेन अमृतबीजयुक्तेन दोष्णा वामकरेणेतरेण च कुम्भमुखं पिधाय आच्छाद्य तच्चेतनामुन्नीयोर्ध्वं नीत्वा उपरिपद्मसद्मपरमा-त्मैक्यं तस्य द्वादशान्तस्थपद्मगृहस्थितेन परमात्मनैक्यम् आदिना प्रणवेन प्रणीय आदिकृततारम् आदौ कृतेन तारेण युतं शीर्षनिष्ठं स्वाहाकारान्तं क्षाद्यान्ताक्षरजातं क्षकाराद्यकारान्तमक्षरसमूहं लिपिप्रतिलोमम् 'ओं क्षं स्वाहा' 'ओं ळं स्वाहा' इत्यादि पुनरवसाने शीर्षनिष्ठमित्यनेन शिरोमन्त्रं च जपन् मन्त्री तत्परिपातुकामृतरसैः तस्मात् परमात्मनः पतनशीलैरमृतरसै-र्धिया कुम्भमापूरयेत् । मन्त्रीति लिपिप्रतिलोमाक्षरमन्त्राणाममृतबिन्दुरूपेण ध्यानमुक्तम् ॥ २६ ॥

१. 'कर्णिकान्त' ङ. पाठः. २. 'कलशेज्या' च. पाठः. ३. 'णस्वम ख.,' 'ण इह स्वम' घ. च.छ. पाठः. ४. र 'पु' क. पाठः.

विवरणम् ।

भानसंपूरणमाह — दोष्णेति । वामहस्ताभिप्रायमर्थादेतत् । उपरि-पद्मं द्वादशान्तगतं पद्मं सद्म स्थानं यस्य परमात्मनः स उपरिपद्मसद्मपरमात्मा वामहस्ततलेऽस्त्रक्षालिते गन्धाक्ते ठमित्यमृतबीजमालिख्य तेनैवाभिमन्त्र्य तद्ध-स्ततलं कुम्भमुखे कूर्चाग्रलग्नमधोमुखं निदध्यात् । पुनस्तत्कुम्भमूलाधारगतद्रव्य-मयजीवचित्कलां कूर्चमयसुषुम्नापथेनोन्नीय यथोक्तहस्ततलरूपतदीयद्वादशा-न्तस्थकमलकर्णिकागतपूर्णेन्दुमण्डलात्मकपरमात्मनि विलापयेत् । आदिनेति प्लुतप्रणव उक्तः । दक्षिणहस्ततले रँमिति सौरं बीजं विभाव्य तदपि वामहस्तपृष्ठेऽधोमुखं निधेयमित्याहुः । यदुक्तम् —

'मूलाधारात् स्फुटितलडिंदाभा प्रभा सूक्ष्मरूपो-
द्गच्छन्त्यामस्तकमणुतरा तेजसां मूलभूता ।
सौषुम्नाध्वाचरणनिपुणा सा सवित्रानुबद्धा
ध्याता सद्योऽमृतमथ रवेः स्रावयेत्सार्धसोमात् ॥'

इति । क्षाद्यान्ताक्षरजातमिति । क्षकाराद्यकारान्तं वर्णनिचयम् । मन्त्रीति जपादियोग उक्तः । यद्वा मन्त्रप्रयोगक्लृप्तिं विद्वानिति । तत्परिपातुका-मृतरसैरिति । ततः सोमरूपात्परमात्मनः परिपतद्भिरमृतरसैः तत्कलशं सुषुम्ना-न्तर्बहिरपि विसरद्भिः मनसा संपूरयेदिति ॥ २६ ॥

उत्पूयोदगुपाहितादुदितमन्त्रेज्याजपोपस्कृता-
च्छङ्खे वारुणवारिणः समवदायाभ्यर्च्य तेनाम्भसा ।
कुम्भं प्रोक्तमनुं जपन् समभिपूर्यार्घ्यार्धमप्क्षेपत-
श्चास्मिन्नक्षरपुष्करं परियजेदावाह्यमूर्त्याश्रयम् ॥ २७ ॥

विमर्शिनी ।

ततः उत्पूय गालयित्वा उदगुपाहितात् उदग्भागे स्थापितात् । उदि-तमन्त्रेज्याजपोपस्कृतात् पीठपूजानन्तरं तीर्थे वरुणं देवं चावाह्य तत्पूजया

---

१. 'गतप' क. ङ. पाठः. २. 'न्दुखण्डकलात्मक' ङ. पाठः. ३. 'प्लुतः प्र' ग. छ. पाठः. ४. 'हामिति' क. ख. पाठः. ५. 'सारं' ख. पाठः. ६. 'स्फुरेत' ङ. च. ङ. पाठः. ७. 'सा मू' क. ख. घ. पाठः. ८. 'वायुविचयम् । मन्त्री त्यक्त' ख. पाठः.

पञ्चवारुणादिमूलमन्त्रजपेन च संस्कृताद् वारुणवारिणः वरुणदैवत्याज्जलात् शङ्खे समवदाय आहृत्य मूलेनाभ्यर्च्य तेनाम्भसा प्रोक्तमनुं तारलिपिप्रतिलोमशिरोमन्त्रान् जपन् कुम्भमापूर्य अप्छेषतश्च वारुणपात्रे शिष्टैर्जलैश्च ऊर्ध्वार्धम् ऊर्ध्वार्धपर्यन्तं च समभिपूर्य अस्मिन् कलशे आवाह्यमूर्त्याश्रयम् आवाहनयोग्याया मूर्तेराश्रयभूतं अक्षरपुष्करं लिपिपङ्कजं परियजेत् । अत्रावाह्यमूर्त्याश्रयमक्षरपुष्करं परियजेदित्यनेन वाक्येन मूर्त्याश्रयमावाह्य मूर्त्यावाहनानन्तरं पुनरक्षरपुष्करं परियजेदिति केषांचित् पक्षे क्रमभेदः सूचितः ॥ २७ ॥

विवरणम् ।

इदानीं शेषपूरणं समुचितेन जलसंस्कारेण सहाभिधत्ते— उत्पूर्येति । उपाहितादुपकल्पितात् । उपस्कारः संस्कारः । वारुणवारिण इति वरुणपूजाप्युक्ता । कलशक्षेत्रोदग्भागे कटाहं स्वस्तिकपीठे संसाद्य पीठपूजापूर्वकं संस्कृत्य सकूर्चं[1] नवाम्बरोत्पूतेन[2] जलेन पूरयेत् । धारणासंस्कृते तज्जले वरुणमिष्ट्वा मूलेनापि यजेत् । मूलं शतवारमावर्त्य ।

इमा आपः शिवाः सन्तु शुभाः शुद्धाश्च निर्मलाः ।
पावनाः शीतलाश्चैव पूताः सूर्यस्य रश्मिभिः ॥

इति चाभिमन्त्र्य वस्त्रेणाच्छादयेत् । अयमिह जलसंस्कारः । पूजारम्भात्प्रागेव कार्यमेतदिति । शङ्खे समवदायेति शङ्खेऽस्त्रसंक्षालिते[3] तज्जलात् किञ्चिज्जलं पात्रान्तरेणादायेत्यर्थः । समवदायेत्यनेनैव गन्धपुष्पाक्षतं शङ्खे हृदा निधाय शिरसा पूरणं, हृदैवाष्टगन्धालोडन[4]मप्युक्तम् । अभ्यर्च्येति । मूलेनावाह्य पूजनमुक्तम्[5] । प्रोक्तमनुं मानसपूरणोक्तमन्त्रम् । ऊर्ध्वार्धमिति छेदः । अप्च्छेषतश्चेति । समभिपुर्येत्यनुकृष्यते - वारुणपात्रादेव शङ्खवत्तच्छेषजलं पात्रान्तरेणाहृत्य तेन तं कलशमर्धात् किञ्चिदाधिकं समभिपूर्येत्यर्थः । अक्षरपुष्करं लिपिपङ्कजम् । आवाह्य मूर्त्याश्रयमिति । आवाह्याया मूर्तेराश्रयं लिपिपङ्कजमिष्ट्वा तस्मिन् मूर्तिरावाहनीयेत्यर्थः । यद्वा आवाह्या वक्ष्यमाणावाहना मूर्तिरेवाश्रयो यस्येति समासः । मूर्त्यावाहनानन्तरं तत्र[6] मूर्तौ लिपिपङ्कजं पूजनीयमित्यनेनोक्तम् ॥ २७ ॥

---

१. 'शो' क. ङ. पाठः. २. 'कूर्चनवा' घ. पाठः. ३. 'स्त्रक्षा' च. पाठः. ४. 'न्धालेपनालोडन' घ. पाठः. ५. 'पूजनोक्त' क. पाठः. ६. 'तन्मूर्तौ' क. पाठः.

मूर्तिः शिफानालसरांसि कण्टकं
रन्ध्रं तथोपर्युपरि क्षपूर्वकैः ।
सान्तस्थधर्मादिपदप्रभेदिता-
ग्नेयादिकग्रन्थिगणः स्वगोचरे ॥ २८ ॥

विमर्शिनी ।

मूर्तिः शिफेत्यादिभिश्चतुर्भिः श्लोकैर्लिपिपङ्कजपूजां ब्रूते—क्षपूर्वकैः क्ष ळ ह स ष श इत्येतैर्बीजैः सह मूर्तिः शिफानाळसरांसि कण्टकं रन्ध्रं चोपर्युपरि स्युः । 'ओं क्षं नमः पराय मूर्त्यात्मने नमः', 'ओं ळं नमः पराय शिफात्मने नमः' इत्यादयो मन्त्राः । सान्तस्थधर्मादिपदप्रभेदिताग्नेयादिकग्रन्थिगणः अन्तस्थैर्यरलवैः सह धर्मादिपदैः धर्मज्ञानवैराग्यैश्वर्यैश्च प्रभेदितः आग्नेयादिको ग्रन्थिगणः ग्रन्थीनां समूहः स्वगोचरे स्वस्वस्थाने आग्नेयादिकोणेषु । 'ओं यं नमः पराय धर्मायाग्नेयग्रन्थ्यात्मने नमः' इत्यादयो मन्त्राः ॥ २८ ॥

विवरणम् ।

लिपिपङ्कजक्लृप्तिं दर्शयति — मूर्तिःशिफेति । क्षपूर्वकैरुपर्युपरि मूर्त्यादयः स्युः । मन्त्रक्लृप्तिस्तु[1] सबिन्दुनिजबीजनतीति[2] वक्ष्यत एव । सान्तस्थेति । यरलवा अन्तस्थाः । वाय्युत्क्रमेण वा योगः । आग्नेयादयः आग्नेयनैर्ऋतवायव्येशानाः ॥ २८ ॥

अधर्मपूर्वान्वितपूर्वपूर्वाः
स्युर्ग्रन्थयो दिक्षु नपुंसकार्णैः ।
पूर्वादिपत्राण्यपि कादिभान्तै-
स्त्रिभिस्त्रिभिर्दिक्षु मकर्णिकान्तः ॥ २९ ॥

विमर्शिनी ।

**नपुंसकार्णैः** ऋ ॠ ऌ ॡ इत्येतैः सह अधर्मपूर्वान्वितपूर्वपूर्वाः अधर्मपूर्वैरधर्मादिभिः सह पूर्वपूर्वाः पूर्वादयो ग्रन्थयो दिक्षु । ओं ऋं नमः परायाधर्माय पूर्वग्रन्थ्यात्मने नमः' इत्यादयो मन्त्राः । कादिभान्तैः कं खं गं इत्यादिभिः फं बं भं इत्यन्तैः त्रिभिस्त्रिभिः सह पूर्वादिपत्राणि पूर्वादि-

१. 'स्तु वि' ङ. पाठः. २. 'जनतीति' च. पाठः.

ऽत्रष्टदिक्षु स्युः । 'ओं कं खं गं नमः पराय पूर्वपत्रात्मने नमः', 'ओं घं ङं चं नमः पराय आग्नेयपत्रात्मने नमः' इत्यादयो मन्त्राः । मकर्णिकान्तः मकारसहिता कर्णिकान्तर्भागे 'ओं मं नमः पराय कर्णिकात्मने नमः' इति मन्त्रः ॥ २९ ॥

विवरणम् ।

पूर्वपूर्वाः । पूर्वयाम्यवारुणसौम्याः । ऋकारादिचतुष्कं नपुंसकाक्षरम् । पूर्वादीनि पूर्वाग्नेयादीनि । मकर्णिका अन्तः मध्यतः । पत्रान्ते केसरान्ते वैषा कर्णिका ॥ २९ ॥

द्वाभ्यां द्वाभ्यां सर्गबिन्द्वन्विताभ्या-
मज्भ्यां पूर्वाद्यादिकाः केसराश्च ।
तारांशाद्यान्यात्मविद्यापरात्म-
तत्त्वानीहोपर्युपर्यास्थितानि ॥ ३० ॥

विमर्शिनी ।

सर्गबिन्द्वन्विताभ्यां क्रमाद् विसर्गेण बिन्दुना च युक्ताभ्यां द्वाभ्यां द्वाभ्यामज्भ्यां सह पूर्वाद्यादिकाः पूर्वादिशब्दा आदिभूताः केसराश्च स्वस्वदिक्षु स्युः । 'ओं अः आं नमः पराय पूर्वकेसरात्मने नमः', 'ओं इः ईं नमः परायाग्नेयकेसरात्मने नमः' इत्यादयो मन्त्राः । तारांशाद्यानि अं उं मं इत्याद्यानि आत्मविद्यापरात्मतत्त्वानि आत्मतत्त्वं विद्यातत्त्वं परात्मतत्त्वं च इह पद्मे उपर्युपरि आस्थितानि । 'अं नमः परायात्मतत्त्वात्मने नमः' इत्यादयो मन्त्राः ॥ ३० ॥

विवरणम् ।

पूर्वाद्यादिकाः । पूर्वाग्नेयादिपदादिका अं उं मं इत्येते तारांशाः । आवाहनीयकलाकलापानुसारेण चैषां क्रमः । वक्ष्यति च—'स्वस्वभ्रुवांशे'ति । इहेति पद्मे ॥ ३० ॥

---

१. 'याम्याः । ऋ' ख. पाठः. २. 'भ्याम' क. ख. घ. पाठः. ३. 'पद्मे इत्युप' क. ख. पाठः.

क्रमेण सहशक्तितारसहिताः समर्च्यास्ततः
सुधीभिरिह विन्दुनादयुतशक्तिशान्ता अपि ।
सबिन्दुनिजबीजनत्युपरिसंत्परायाक्षरं
विरामहृदयात्मनेपदमुदीर्णमर्णाम्बुजम् ॥ २१ ॥

विमर्शिनी ।

ततः इह त्रितत्त्वानामुपरि सुधीभिः तत्तत्पूजायां तत्तत्स्थाने तत्तन्मन्त्रात्मतया पद्मस्य तत्तदवयवोद्भवध्यानकुशलैः सहशक्तितारसहिताः सं हं ह्रीं ओं इत्येतैः संहिताः क्रमेण बिन्दुनादयुतशक्तिशान्ता अपि समर्च्याः स्युः । 'ओं सं नमः पराय बिन्द्वात्मने नमः', 'ओं हं नमः पराय नादात्मने नमः', ओं ह्रीं नमः पराय शक्त्यात्मने नमः', 'ओं ओं नमः पराय शान्तात्मने नमः' इति मन्त्राः । सबिन्दुनिजबीजनत्युपरिसंत्परायाक्षरं बिन्दुसहितानां निजानिजबीजानां नतीनां चोपरि सद्भिः परायेत्यक्षरैर्युतं विरामहृदयात्मनेपदं विरामेऽवसाने हृदयेन नमसा युक्तेनात्मने इति पदेन युक्तम् अर्णाम्बुजं लिपिपङ्कजम् उदीर्णम् उक्तम् ॥ २१ ॥

विवरणम् ।

सहशक्तितारसहिताः सकारहकारशक्तिबीजप्रणवयुक्ताः । सुधीभिरिति । कलशमूर्तिमूलाधारोद्देशे लिपिपङ्कजप्रतिपत्तिरुक्ता । यद्वा धर्माधर्मादिशालिनि पीठे लिपिपङ्कजानुसन्धानमुक्तम् । तदा च धर्मादिविधान्तं संपूज्य मूर्तिशिफादिशालि लिपिपङ्कजं पूजनीयमिति । सबिन्द्विति । यान्येतान्युक्तानि तत्तद्बीजानि तानि सबिन्दूनि स्युः । ततो नतिः नमःशब्दः तदुपरि सद्विद्यमानं परायेत्यक्षरं यस्य तत्तथोक्तम् । पुनर्मूर्त्यात्मन आग्नेयग्रन्थ्यात्मने पूर्वपत्रात्मने पूर्वकेसरात्मन आत्मतत्त्वात्मने बिन्द्वात्मने नम इत्यादीनि नमोऽन्तात्मनेपदयुक्तानि तत्तन्नामानि स्युः । तदेतदाह — विरामहृदयात्मनेपदमिति । विरामेऽन्ते हृदयं नतिः यस्य तत् विरामहृदयं तथाविधमात्मनेपदं यत्रेवि समसनीयम् । उदीर्णमुदीरितम् । अर्णाम्बुजं लिपिपङ्कजमिति ॥ २१ ॥

तद्देवतानामविभिन्नङेन्तनत्यन्तमूर्त्यक्षरतोऽत्र मूर्तिम् ।
आवाह्य साङ्गीकरणार्चनान्ते तस्यां कलावाहनमादधीत ॥२२॥

---

१. 'ष' ख. पाठः. २. 'ष' क. ख. घ. ङ. पाठः ३. 'धर्मादिशा' ख. पाठः. ४. 'तद्बी' ग. पाठः.

विमर्शिनी ।

अथ मूर्त्यावाहनमाह — तद्देवतेति । अत्र लिपिमये पद्मे तद्देवतानामविभिन्नङेन्तनत्यन्तमूर्त्यक्षरतः तत्तद्विष्ण्वादिदेवतानां नामयुक्तेन चतुर्थीकवचनान्तेन नमोन्तेन च मूर्तिशब्देन 'ओं विष्णुमूर्तये नमः' इत्यादिना मूर्तिमावाह्य साङ्गीकरणार्चनान्ते सकलीकरणमर्चनं च कृत्वा तस्यां मूर्तौ कलावाहनमादधीत ॥ ३२ ॥

विवरणम् ।

इदानीं मूर्त्यावाहनमाह — तद्देवतानामेति । नारायणसदाशिवादिपदानि तत्तद्देवतानामानि तैर्विभिन्नं ङेनत्यन्तं यन्मूर्त्यक्षरं तेन मूर्तिं समावाहयेत् । मूलमन्त्रयोगोऽपीष्यते । प्रणवत्रयामन्त्रिततत्पदादियोगः सामान्यसिद्ध एव । साङ्गीकरणार्चनान्त इति । साङ्गीकरणं मातृकान्यासेन मुखकराद्यवयवयोजनं हृदयाद्यङ्गन्यासश्च । अर्चनं तेन मूर्तिमन्त्रेण तैर्मूलाङ्गैश्च पूजनम् । तस्यामिति मूर्तौ ॥ ३२ ॥

आदाय शङ्खे सलिलं पुरोवद्धृदाष्टगन्धं प्रविलोड्य तस्मिन् ।
इष्ट्वादिना व्यस्तसमस्तरूपेणावाहयेत् तत्र कलाकलापम् ॥ ३३ ॥

विमर्शिनी ।

कलावाहनरीतिमाह — आदायेति । पुरोवत् पूरणारम्भवत् शङ्खे सलिलमादाय हृदा हृदयमन्त्रेण अष्टगन्धं प्रविलोड्य तस्मिन् आदिना तारेणेष्ट्वा तत्र व्यस्तसमस्तरूपेण कलामन्त्रैः कलाकलापं कलासमूहमावाहयेत् ॥ ३३ ॥

विवरणम् ।

शङ्खे पुरोवत् सलिलमादायेति वारुणात् पात्रात् प्रागुक्तवत् समवदायेत्यर्थः । यद्वा पुरोवदष्टगन्धं हृदा प्रविलोड्येति प्राक् पूरणसमयेऽपि शङ्खोदके हृदयेनाष्टगन्धैर्विलोडनं कार्यमित्यपि दर्शितम् । तस्मिन्निष्ट्वेति सम्बध्यते । आदिना प्रणवेन । व्यस्तसमस्तरूपपदमादिपदेनावाहयेदित्यनेन च सम्बन्धनीयम् । पूर्वं ओंनमः इति समस्तेन प्रणवेन शङ्खोदके सम्पूज्य, पुनः अं नमः उं नमः

१. 'नां' क. पाठः. २. 'भिन्नं ङेनत्य' घ., 'न्नं ङेत्य' क. ङ पाठः. ३ 'द्यमङ्ग', ङ. पाठः. ४. 'गन्धं हृदयेन प्र' ङ. पाठः. ५.'न्ध प्रवि' ख. घ. ङ. पाठः ६. 'न्निति' ङ. पाठः

मं नमः मण्डलार्थतया पुनः अं नमः उं नमः मं नमः ओम् इति बिन्दुनादाद्यन्ततयोक्त्वा नम इति व्यस्तरूपेण च प्रणवेन पूजयेत् । पुनः कलानां वर्गान् व्यस्तेन समस्तेन च रूपेणावाहयेत् । समस्तं रूपं समष्टिवह्निमण्डलादिरूपम् ॥ ३३ ॥

कलाः कार्शानव्यो दश रविभवाः स्यू रविमिता
निशेशोद्भूताः षोडश दशदशोमाक्षरभवाः ।
चतस्रो बिन्दूत्थाः श्रुतिकृतिमिता नादजनिता
जगत्सङ्ख्याः शक्तेः करपरिमिते शान्तजनिते ॥ ३४ ॥

विमर्शिनी ।

कास्ताः कला इत्यत्राह— कला इति । कार्शानव्यः कृशानुसम्बन्धिन्यः वह्निकलाः दश स्युः । रविभवाः सूर्यकलाः रविमिताः द्वादश । निशेशोद्भूताः सोमकलाः षोडश । ओमाक्षरभवाः अकारोकारमकारभवाः दश दश, अकारकला उकारकला मकारकलाश्च दश दश स्युः । बिन्दूत्थाः बिन्दुकलाश्चतस्रः । नादजनिताः नादकलाः, श्रुतिकृतिमिताः श्रुतयो वेदाश्चत्वारः तेषां कृतिः षोडश, तैः परिमिताः । शक्तेः कलाः शक्तिकलाः जगत्सङ्ख्याः तिस्रः । शान्तजनिते शान्तकले करपरिमिते द्वे च ॥ ३४ ॥

विवरणम् ।

कार्शानव्यः कृशानोरमेः सम्बन्धिन्यः कला दश स्युः । निशेशः सोमः । ओमाक्षरभवा दश दश स्युः । अ–उ–म इत्येतदक्षरकला इत्यर्थः । जगत्सङ्ख्या इति तिस्रः । करपरिमिते इति द्वे ॥ ३४ ॥

धूम्रार्चिरूष्मा ज्वलिनी ज्वालिनी विष्फुलिङ्गिनी ।
सुश्रीः सुरूपा कपिला हव्यकव्यवहे अपि ॥ ३५ ॥

विमर्शिनी ।

धूम्रार्चिरित्यादिना दश वह्निकलाः पठति । हव्यकव्यवहे अपि हव्यवहा कव्यवहापीत्यर्थः ॥ ३५ ॥

विवरणम् ।

हव्यकव्यवहे हव्यवहा कव्यवहा च ॥ ३५ ॥

---

१. 'मः इं नम इति म' ख., 'मः उन्नम इति म' ङ. पाठः. २. 'मः ओमिति ख. ङ. पाठः. ३. 'इत्येते त' ङ. पाठः,

तपनी तापनी धूम्रा मरीचिर्ज्वालिनी रुचिः ।
सुषुम्ना भोगदा विश्वा बोधिनी धारिणी क्षमा ॥ ३६ ॥

विमर्शिनी ।

तपनीत्यादिना द्वादश सूर्यकलाः पठति ॥ ३६ ॥

अमृता मानदा पूषा तुष्टिः पुष्टी रतिर्धृतिः ।
शशिनी चन्द्रिका कान्तिर्ज्योत्स्ना श्रीः प्रीतिरङ्गदा ॥ ३७ ॥

पूर्णा पूर्णामृता चेति तेजस्त्रयभवाः कलाः ।
सृष्टिर्ऋद्धिः स्मृतिर्मेधा कान्तिर्लक्ष्मीर्द्युतिः स्थिरा ॥ ३८ ॥

स्थितिः सिद्धिरिति प्रोक्ता यथाक्रममकारजाः ।
जरा च पालिनी शान्तिरैश्वरी रतिकामिके ॥ ३९ ॥

वरदा ह्लादिनी प्रीतिर्दीर्घा चोकारसम्भवाः ।
तीक्ष्णा रौद्री भया निद्रा तन्द्री क्षुत् क्रोधिनी क्रिया ॥ ४० ॥

उत्कारी चैव मृत्युश्च मकाराक्षरजा मताः ।
पीता श्वेतारुणा तद्वदसितापि च बिन्दुजाः ॥ ४१ ॥

निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिस्तथैव च ।
इन्धिका दीपिका चैव रेचिका मोचिका परा ॥ ४२ ॥

सूक्ष्मा सूक्ष्मामृता ज्ञानामृता चाप्यायिनी तथा ।
व्यापिनी व्योमरूपा चानन्ता वापि च नादजाः ॥ ४३ ॥[1]

विमर्शिनी ।

अमृतेत्यादिना षोडश सोमकलाः पठति । इति तेजस्त्रयभवाः वह्नि-सूर्यसोमक्रमेण सम्भूताः कलाः । सृष्टिरित्यादिना दशाकारकलाः पठति । जरेत्यादिना दशोकारकलाः पठति । तीक्ष्णेत्यादिना दश मकारकलाः पठति । पीतेत्यादिना चतस्रो बिन्दुकलाः पठति । अनन्ता वापीति विकल्पेन पञ्चम्य-नन्ताप्युक्ता । निवृत्तिरित्यादिना षोडश नादकलाः पठति । परेति नवमी कला ॥ ३७—४३ ॥

विवरणम् ।

तेजस्त्रयभवा इति । धूम्रार्चिराद्या अग्नेः, तपन्याद्याः सूर्यस्य, अमृताद्याः सोमस्येत्यर्थः ॥ ३८—४३ ॥

---

1. 'च तथानन्ता च' इति मूलकोशपाठः.

याद्यैः क्रमोत्क्रमप्रोक्तकभादिद्विद्विवर्णकैः ।
आद्यैश्च कटपाद्यैश्च षाद्यैराद्यैश्च ता युताः ॥ ४४ ॥

विमर्शिनी ।

कलानां बीजान्याह — याद्यैरिति । याद्यैः यकारादिक्षकारान्तैर्युतास्ता वह्निकलाः, 'यं धूम्रार्चिषे नमः' इत्याद्याः । क्रमोत्क्रमप्रोक्तकभादिद्विद्विवर्णकैः क्रमेण प्रोक्तैः काद्यैः, व्युत्क्रमेण प्रोक्तैर्भाद्यैश्च द्विद्विवर्णैर्युतास्ताः सूर्यकलाः, 'कं भं तपन्यै नमः' इत्याद्याः । इत्यर्थः । आद्यैः अकारादिविसर्गान्तैर्युताः सोमकलाः, 'अं अमृतायै नमः' इत्याद्याः । कटपाद्यैः कादिञान्तैर्युताः अकारकलाः 'कं सृष्ट्यै नम इत्याद्याः, टादिनान्तैर्युताः उकारकलाः, 'टं जरायै नमः' इत्याद्याः । पादिशान्तैर्युताः मकारकलाः, 'पं तीक्ष्णायै नमः' इत्याद्याः । षाद्यैः षकारादिळकारान्तैः क्षकारान्तैर्वा युताः बिन्दुकलाः, 'षं पीतायै नमः' इत्याद्याः । आद्यैः अकारादिविसर्गान्तैर्युतास्ता नादकलाः, 'अ निवृत्त्यै नमः' इत्याद्याः ॥ ४४ ॥

विवरणम् ।

याद्यैरिति । यथा[1] यं धूम्रार्चिषे नम इत्यादि । क्रमोत्क्रमप्रोक्तेति । यथा 'कं भं तपन्यै नमः' 'खं बं तापन्यै नम' इत्यादि । आद्यैरिति । अकारादिस्वरैः । आद्यैश्चेति । अकारादिस्वरैर्युता नादकला इति विशेषः[2] ॥ ४४ ॥

तारस्वशक्तिबीजाढ्याः सर्वाः प्राक् स्वोक्तबीजतः ।
वक्ष्येऽष्टवर्गनिर्दिष्टानृक्समष्टिमनूनपि ॥ ४५ ॥

विमर्शिनी ।

ताः सर्वा अपि कलाः स्वोक्तबीजतः प्राक् तारस्वशक्तिबीजाढ्याः प्रणवभुवनेश्वरीयुक्ताः । स्वशक्तीत्यनेन विष्णौ श्रीबीजमुक्तम् । अष्टवर्गनिर्दिष्टान् वह्निसूर्यसोमाकारोकारमकारबिन्दुनादानां कलाः अष्टवर्गास्तेषु निर्दिष्टान् ऋक्समष्टिमनून् ऋचः समष्टिमन्त्रानपि वक्ष्ये । अहमिति शेषः ॥ ४५ ॥

---

१. 'थोक्तं धू' च पाठः. २ 'विवेकः' । ख. घ. ङ. पाठः.

विवरणम्।

तारस्वशक्तिबीजाढ्या इति । प्रणवहृल्लेखायोगः सर्वकलानामुक्तः । ऋक्समष्टीनामप्येतद्योग इष्यते । वैष्णवे तु श्रीबीजयोगः । तदुक्तम् — 'इमास्ताररमाबीजव्यापकार्णादिका' इत्यादि । एतदेव स्वशक्तिर्बीजेत्युक्तम् ॥४५॥

जाततदाद्ये त्र्यम्बकहंसाद्ये अपि पुनः प्रतद्विष्णुः ।
त्र्यम्बकतत्पदपूर्वे विष्णुर्योनिं च कीर्तितास्तदृचः ॥ ४६ ॥

विमर्शिनी ।

जाततदाद्ये 'जातवेदसे सुनवाम सोमं' 'तत्सवितुरि'त्याद्ये द्वे । त्र्यम्बकहंसाद्ये 'त्र्यम्बकं यजामहे' 'हंसः शुचिषद्' इत्याद्ये च द्वे । पुनः 'प्रतद्विष्णुरि'त्यपि । त्र्यम्बकतत्पदपूर्वे 'त्र्यम्बकं यजामहे' 'तत्सवितुरि'ति पूर्वे द्वे । 'विष्णुर्योनिम्' तदृचः तस्याष्टवर्गस्य ऋचः कीर्तिताः ॥ ४६ ॥

विवरणम् ।

जाततदाद्ये इति । जातवेदसे, तत्सवितुः, त्र्यम्बकं, हंसश्शुचिषत्, प्रतद्विष्णुः, त्र्यम्बकं, तत्सवितुः, विष्णुर्योनिमित्यृच उक्ताः ॥ ४६ ॥

स्वस्वध्रुवांशयुतमण्डलनाम ङेन्तं
धर्मार्थकामपदमादिदशादियुक्तम् ।
भूयः प्रदादिककलात्मपदं चतुर्थ्या
नत्या च संयुतमिति त्रिसमष्टिमन्त्राः ॥ ४७ ॥

विमर्शिनी ।

स्वस्वध्रुवांशयुतमण्डलनाम स्वेन स्वेन प्रणवांशेन युतानि स्वानि स्वानि मण्डलनामानि । ङेन्तं तानि नामानि चतुर्थ्येकवचनान्तानि च । आदिदशादियुक्तं धर्मार्थकामपदम् आदौ दश द्वादश षोडश इत्येभिर्युक्तानि धर्म, अर्थ, काम इति पदानि । भूयः प्रदादिककलात्मपदं प्रद इत्यादिकं कलात्म इति पदम् । तत्तु चतुर्थ्या नत्या च संयुतं स्यात् । 'मं वह्निमण्डलाय दशधर्मप्रदकलात्मने नमः', 'अं सूर्यमण्डलाय द्वादशार्थप्रदकलात्मने नमः', 'उं सोममण्डलाय षोडशकामप्रदकलात्मने नमः' इति त्रिसमष्टिमन्त्राः तेजस्त्रयस्य समष्टिमन्त्राः ॥ ४७ ॥

---

१. 'न्त्याः प्रण' क. पाठः.

विवरणम् ।

स्वस्वध्रुवांशेति । मं इत्यग्नेः प्रणवांशः । साद्यक्षराणि दलकेसरकर्णिकास्वित्यादि ह्युक्तम् । अं इति सूर्यस्य उं इति च सोमस्य । मण्डलनाम ङेन्तमिति । यथा वह्निमण्डलायेत्यादि ; आदिदशादियुक्तमिति । आदौ पुरोभागे दशद्वादशषोडशेत्येतैर्युक्तम् । यथा 'दशधर्मप्रदकलात्मने नम' इत्यादि । त्रिसमष्टिमन्त्राः त्रयाणां समष्टिमन्त्राः ॥ ४७ ॥

*ब्रह्माद्यैरधिदैवतैरथ पृथिव्याद्यैश्च गन्धादित-
न्मात्रैर्घ्राणमुखैः समस्तसदुपस्थानन्दपूर्वैरपि ।
तारेष्वंशभवाः समष्टिमनवः सृष्ट्यादिकृत्यैर्निवृ-
त्त्याद्याभिर्नमसैकशो निरधिदैवं चात्मनेर्णैर्युताः ॥ ४७ ॥

विमर्शिनी ।

तारेष्वंशभवाः प्रणवस्य पञ्चांशसम्भूतानामकारोकारमकारबिन्दुनादकलानां समष्टिमनवः ब्रह्माद्यैः ब्रह्मविष्णुरुद्रेश्वरसदाशिवैरधिदैवतैः, अथ पृथिव्याद्यैः पृथिव्यप्तेजोवाय्वाकाशैः, गन्धादितन्मात्रैः गन्धादिशब्दादिभूतैः तन्मात्रैः गन्धतन्मात्रं रसतन्मात्रं रूपतन्मात्रं स्पर्शतन्मात्रं शब्दतन्मात्रम् इत्येतैः, घ्राणमुखैः घ्राणाद्यैः घ्राणजिह्वाचक्षुस्त्वक्छ्रोत्रैः, समस्तसदुपस्थानन्दपूर्वैरपि, समासयुक्तैः सद्भिरुपस्थानन्दपूर्वैरपि उपस्थानन्दः पायुविसर्गः पादगमनं पाण्यादानं वाग्वचनम् इत्येतैः, सृष्ट्यादिकृत्यैः सृष्टिस्थितिसंहारतिरोभावानुग्रहैः, निवृत्त्याद्याभिः निवृत्तिप्रतिष्ठाविद्याशान्तिशान्त्यतीताभिः एतैः सप्तविधैर्युताः । एकशः प्रत्येकं नमसा संयुताः । निरधिदैवं ब्रह्माद्यधिदेवतावर्जम् आत्मनेर्णैः आत्मने इत्यक्षरैश्च युताः । 'ब्रह्मणे नमः' इत्याद्याः, 'पृथिव्यात्मने नमः'

---

१. 'मन्त्रास्त्रयस्त्रयाणां वा समष्टि' घ, 'मन्त्राः यत्र त्रयाणां वा समष्टिं' ङ. पाठः.

*ङेन्तैः प्रागजपूर्वकैरथ पृथिव्याद्यैश्च गन्धादित-
न्मात्रैर्घ्राणमुखैस्समासिभिरुपस्थानन्दपूर्वैरपि ।
तारेष्वंशभवाः समष्टिमनवः सृष्ट्यादिकृत्यैर्निवृ-
त्त्याद्यैः पृथगात्मनेन्तनमसोन्ते सप्तशो वैकशः ॥

इति विवरणादृतः पाठः.

इत्याद्याः, 'गन्धतन्मात्रात्मने नमः' इत्याद्याः, 'घ्राणात्मने नमः' इत्याद्याः, 'उपस्थानन्दात्मने नमः' इत्याद्याः, 'सृष्ट्यात्मने नमः' इत्याद्याः, 'निवृत्त्यात्मने नमः' इत्याद्याश्च सप्त सप्त ते समष्टिमन्त्रा इत्यर्थः ॥ ४८ ॥

विवरणम् ।

अजो ब्रह्मा । समासिभिरुपस्थानन्दपूर्वैरपीति । उपस्थानन्दादिपदद्वयानां समासः कार्यः । यथा उपस्थानन्दात्मने नम इत्यादि । तारेष्वंशभवा इति । प्रणवस्य ये पञ्चांशाः अकारादिनादान्ताः तत्सम्बन्धिनः समष्टिमन्त्रा इत्यर्थः । अन्ते पृथगात्मनेन्तनमस इति सम्बन्धः । पृथिव्यादिपदानां प्रत्येकमन्ते आत्मने नम इति च योज्यमित्यर्थः । सप्तश एकशो वेति समष्टिमनव इत्यनेन सम्बध्यते । यथा सप्तपदाः समष्टिमनवस्तावद् ओं ह्रीं अं ब्रह्मणे नमः । ओं ह्रीं पृथिव्यात्मने नमः । ओं ह्रीं गन्धतन्मात्रात्मने नमः । ओं ह्रीं घ्राणात्मने नमः । ओं ह्रीं उपस्थानन्दात्मने नमः । ओं ह्रीं सृष्ट्यात्मने नमः । ओं ह्रीं निवृत्त्यात्मने नम इत्यादि । एकपदास्तु ओं ह्रीं अं ब्रह्मणे पृथिव्यात्मने गन्धतन्मात्रात्मने घ्राणात्मने उपस्थानन्दात्मने सृष्ट्यात्मने निवृत्त्यात्मने नम इत्यादि । सकृदेवान्ते नतियोग इहोचित्याद्भवति । द्विपदास्त्वमी केषाञ्चिदिति ॥ ४८ ॥

ब्रह्मा विष्णू रुद्रेश्वरौ सदाशिव इहेरिता देवाः ।
अन्त्यौ महासदाद्यौ विष्णू क्वापीतरे गणाः प्रथिताः ॥ ४९ ॥

विमर्शिनी ।

ब्रह्मादिवर्गान् पठति — ब्रह्मेति । तत्रान्त्यावीश्वरशिवयोः स्थाने महासदाद्यौ विष्णू महाविष्णुः सदाविष्णुश्च । क्वापि विष्ण्वादिषु भवतः । इतरे गणाः प्रथिताः प्रसिद्धाः ॥ ४९ ॥

विवरणम् ।

अन्त्यौ महासदाद्याविति । महाविष्णुः सदाविष्णुरिति । क्वापीति । विष्णौ दुर्गायाञ्च । हरिहरे विकल्पाः । इतरे गणास्तन्मात्रेन्द्रियादयः ॥ ४९ ॥

---

१. पश्चाज्ञाः ख. २, 'त्यर्थः पृथगन्ते आत्म' छ. पाठः. ३. 'चित्या' घ. पाठः. ४, 'कल्पः' ङ. पाठः.

अत्रानन्दविसर्गौ गमनादाने वचनमपि विषयाः ।
सृष्टिस्थितिसंहारतिरोभावानुग्रहास्तु कृत्यानि ॥ ५० ॥

विमर्शिनी ।

अत्रानन्दादीन् पठति — अत्रेति । विषयाः उपस्थादीनां विषयत्वेन प्रसिद्धाः । सृष्ट्यादिकृत्यानि पठति — सृष्टीति ॥ ५० ॥

विवरणम् ।

विषया इति अर्थादुपस्थादीनामिति लभ्यते ॥ ५० ॥

तेजोजासु समष्ट्यनन्तरमृचो वैवं च सर्वासु वा
चन्द्रार्कानलनादबिन्दुविषरुद्राजक्रमादुद्भवः ।
सूर्याब्जानलबिन्दुनादविषविष्णूद्यत्क्रमेण स्थितिः
कर्माक्षाणि कुहापि पादकरपायूपस्थवाचः क्रमात् ॥ ५१ ॥

विमर्शिनी ।

एतेषां क्रममाह—तेजोजास्विति । तेजोजासु वह्निसूर्यसोमकलासु समष्ट्यनन्तरमृचो वा समष्ट्यावाहनानन्तरं वा ऋग्भिरावाहना । सर्वासु कलास्वप्येवं वा क्रमः । चन्द्रार्कानलनादबिन्दुविषरुद्राजक्रमाद् विषं मकारः, रुद्रः उकारः, (अजः अकारः) सोमसूर्यवह्निनादबिन्दुमकारोकारक्रमाद् उद्भवः सृष्टिक्रमः । सूर्याब्जानलबिन्दुनादविषविष्णूद्यत्क्रमेण अब्जः सोमः, विष्णुरकारः, सूर्यसोमवह्निबिन्दुनादमकाराकारोकारक्रमेण स्थितिः । संहारस्तु पूर्वोक्तक्रम एव । कुहापि क्वचित्पक्षे पादकरपायूपस्थवाचः क्रमात् कर्माक्षाणि कर्मेन्द्रियाणि भवन्ति ॥ ५१ ॥

विवरणम् ।

तेजोजास्विति । सर्वत्रर्गनन्तरं समष्टयः इहाभ्युपगताः । यदाह ऋक्समष्टिमनूनपीति । स्वर्चा चैतत्समुदितसमष्ट्यात्मना चेति च । किन्तु तेजस्त्रयकलासु समष्ट्यनन्तरमृचः ब्रह्मादिकलास्वेव तु-ऋगनन्तरं समष्टयः । यद्वा सर्वास्वपि सप्ततयीष्वपि कलासु समष्ट्यनन्तरमेव वा ऋचः स्युरिति । एतदेवञ्च सर्वासु वेत्युक्तम् । चन्द्रार्केति । संहारक्रमेण तावदिह कला आम्नाताः । सोमसूर्याग्निकला नादबिन्दुमकारोकाराकारकलाश्चेति सर्गक्रमः । विषं मकारः ।

रुद्र उकारः। अजेत्यकार उपात्त एव। चन्द्रार्कादिभ्यो जायन्त इति तज्जाः। त्रिविक्रमः सूर्याब्जेत्यादिनोक्तः। अब्जः सोमः। विष्णूचदित्यत्र विष्णु उच्चिति पदविभागः। विष्णुरकारः उ इत्युकारोपादानम्। कुहापीति। तन्त्र इति शेषः। यदाम्नातं अं ब्रह्मणे नमः। पूर्वमित्यस्मिन् प्रकरणे अं पञ्चमं पादगमनपदतोऽप्यात्मनेपदमित्यादि (१)। इह समासिभिरित्यभिधानात् पादादिक्रमे यथास्वं गमनादिक्रमोऽपि सिद्ध एव इति ॥ ५१ ॥

उद्गीथान्वितपाशशक्तिसृणिनिर्बिन्द्वन्तधात्वर्णहों-
संवर्णानुगताजपात्मतिथिवर्णैस्तत्कलानां पदम्।
सृण्यन्तैर्युतमेव वा पृथगुदीर्य प्राणजीवेन्द्रिया-
पूर्ध्वांशत्रितयप्रभेदितमथ प्राणान् प्रतिष्ठापयेत् ॥ ५२ ॥

विमर्शिनी।

प्राणप्रतिष्ठामाह — उद्गीथेति। उद्गीथान्वितपाशशक्तिसृणिनिर्बिन्द्वन्तधात्वर्णहोंसंवर्णानुगताजपात्मतिथिवर्णैः उद्गीथः प्रणवः तदनुगताः पाशशक्तिसृणयः आं इति पाशः, ह्रीं इति शक्तिः, क्रोमित्यंकुशः, निर्बिन्द्वन्ताः धात्वर्णाः यरलवशषसेत्यमी सप्त, हों सं इति स्वरूपम् एतेषां वर्णानामनुगता पश्चाद् गता अजपा हंस इति, उद्गीथाद्यजपान्तस्वरूपैस्तिथिवर्णैः पञ्चदशाक्षरैः सह। तत्कलानां पदं तत्तद्विशेषनामयुक्तं कलानामिति पदं वह्निकलानां सूर्यकलानामित्यादिपदम्। सृण्यन्तैर्युतमेव वा प्रणवपाशशक्त्यङ्कुशैर्युतमेव वा। पृथक् त्रिवारमुदीर्य। प्राणजीवेन्द्रियापूर्ध्वांशत्रितयप्रभेदितं प्राणा इह प्राणा इत्यादि जीव इह स्थित इत्यादि सर्वेन्द्रियाणि इत्यादि च ऊर्ध्वांशत्रितयेन च प्रभेदितं पदमुदीर्याथ प्राणान् प्रतिष्ठापयेत् प्राणप्रतिष्ठामन्त्रं जपेदित्यर्थः ॥ ५२ ॥

विवरणम्।

इदानीं प्राणप्रतिष्ठामनुसुद्धरति — उद्गीथान्वितेति। उद्गीथः प्रणवः तेनान्विताः पाशशक्तिसृणयः, सृणिरङ्कुशः। आं ह्रीं क्रोमित्यमूनि बीजानि। पुनर्निर्बिन्द्वन्तास्त्ववर्गादिधात्वर्णा यादिसान्ताः पुनः हों सं इत्यक्षराभ्यां युक्ता

---

१. 'क्राणपंचमं पादगमनपदतोऽप्यात्मनेपदमित्यादि। इह समासिभिरित्यभिधानात् पादादिनोक्तः,' क. पाठः. २. 'स्यकारो' ख. 'स्यकारो' ग. पाठः. ३. 'णे आं ह्रीं क्रोमित्यमूनि बीजानि पुनर्निर्बिन्द्वन्तस्त्ववर्गादि धात्वर्णाया पादादिक्रमेत् यथास्वागमनादिक्रमोऽपि' क. पाठः. ४. 'होमां सं' ख. ग. पाठः.

अजपा हं स इत्यक्षरद्वयं एतदात्मानस्तिथिवर्णाः एवमुदीर्याजपान्तरूपाः पञ्चदशवर्णाः, नैर्युतं तत्कलानां पदमुदीर्येति । तच्छब्देन वह्निसूर्यसोमाकारोकारादिग्रहणम् । वह्निकलानां सूर्यकलानामित्यादिपदमुक्त्वेति भावः । केचिदकारोकारादिपदस्थाने ब्रह्मविष्ण्वादिपदान्यभ्युपयन्ति । सृण्यन्तैर्युतमेवेति । चतुर्वर्णैरेव युतमित्यर्थः । पृथगुदीर्येति । तच्छेषस्य त्रित्वात्तत्तदन्वयितया पृथक् त्रिरुक्त्वेत्यर्थः । प्राणेति प्राणादिना जीवादिना सर्वेन्द्रियादिना च शेषभागत्रयेणान्ते विभेदितमित्यर्थः । एवंविधं मन्त्रमुदीर्य प्राणान् प्रतिष्ठापयेदिति सम्बन्धनीयम् ॥ ५२ ॥

पूर्वं प्राणा इह प्राणाः पुनर्जीव इह स्थितः ।
पुनः सर्वेन्द्रियाण्यादिवाङ्मनश्चक्षुरक्षरम् ॥ ५३ ॥

श्रोत्रघ्राणयुतप्राणा इहैवागत्यसंयुतम् ।
सुखं चिरं तिष्ठन्तु स्वाहेत्यूर्ध्वांशास्त्रयः क्रमात् ॥ ५४ ॥

विमर्शिनी ।

ऊर्ध्वांशत्रितयमाह— पूर्वमिति । प्रथमं प्राणा इह प्राणा इत्यूर्ध्वांशः, पुनर्जीव इह स्थित इति, पुनस्तृतीयः सर्वेन्द्रियाण्यादिवाङ्मनश्चक्षुरक्षरं सर्वेन्द्रियाणि इत्यादौ युतं वाङ्मनश्चक्षुरित्यक्षरम् । श्रोत्रघ्राणयुतप्राणा इहैवागत्यसंयुतं श्रोत्रघ्राण इति पदाभ्यां सहितेन इहैवागत्येत्यनेन संयुतं सुखं चिरं तिष्ठन्तु स्वाहेति । इति त्रय ऊर्ध्वांशाः क्रमाद् भवन्ति ॥ ५३, ५४ ॥

विवरणम् ।

प्राणजीवेन्द्रियाद्यूर्ध्वांशानाह— पूर्वं प्राणा इह प्राणा इति । पुनरिति द्वितीयम् । पुनस्सर्वेन्द्रियाण्यादीति तृतीयमित्यर्थः ॥ ५३, ५४ ॥

इच्छाज्ञानक्रियाः शक्तय इह गदिताः शक्तिनाम्नाश्चिदानन्दात्मानौ शान्तनाम्नः स्वपदमिह समष्टिर्भवेदात्मनेन्तम् ।

---

१. 'षा भाग' छ. पाठः. २. 'विप्रम' छ. पाठः. ३. 'ह—प्राणा' क. ङ. पाठः. 'ह प्राणा इह पुनरिति द्वितीयः' ङ पाठः. ४. 'म्बस्तदुभयमनव पञ्चहंसाम्स्वृचो वा स्वात्माख्यान्तां समष्टयारक्रमनुरथ तत्पूरणी मूलरूपा लैपेयी वा कला मा न यदि' ख. पाठः ।

स्वे स्वे वा पञ्चमन्त्रास्तदुभयमनवः स्वार्हक्लृप्त्या लिपिर्वा
मूलं वा पूरणी स्याद् यदि न पुनरनन्तान्तिमा बैन्दवीनाम् ॥ ५५ ॥

विमर्शिनी ।

शक्तिकलादिकमाह—इच्छेति । इह शक्तिनाम्नः षष्ठस्य प्रणवांशस्य इच्छाज्ञानक्रियास्तिस्रः शक्तयः कला गदिताः । शान्तनाम्नः सप्तमस्य प्रणवांशस्य चिदानन्दात्मानौ 'चिदात्मने नमः' 'आनन्दात्मने' नमः इतीमौ मन्त्रौ द्वे कले भवतः । इह शक्तिशान्तयोः । आत्मनेन्तम् आत्मने इत्यन्तम् । स्वपदं 'शक्त्यात्मने नमः' 'शान्तात्मने नमः' इति द्वयं समष्टिर्भवेत् । स्वार्हक्लृप्त्या स्वयोग्यया क्लृप्त्या त्रिद्विक्रमेण । स्वे स्वे पञ्च मन्त्रा वा तदुभयमनवः शक्तिशान्तयोर्मन्त्राः । अत्र बैन्दवीनां कलानां बिन्दुकलानाम् । अन्तिमानन्ता न यदि बिन्दुकलाश्चतस्र एव गृह्यन्ते चेत् । पुनरवसाने लिपिर्वा मूलं वा पूरणी चतुर्नवतिसंख्यापूरणी स्यात् ॥ ५५ ॥

विवरणम् ।

इदानीं जगत्संख्याः शक्तेरित्याद्युद्दिष्टाः शक्तिशान्तकलाः समष्टियुता दर्शयति — इच्छाज्ञानाक्रिया इति । प्रणवहृल्लेखापूर्वकं शक्त्यन्तं प्रणवमुच्चार्य इच्छाशक्त्यै नमः इत्यादि प्रयोज्यम् । तथा प्रणवहृल्लेखापूर्वकं शान्तान्तं प्रणवमुच्चार्य चिदात्मने नमः इत्यादि प्रयोज्यम् । इह स्वपदमात्मनेन्तं समष्टिर्भवेदिति पूर्ववत् प्रणवादित्रयमुक्त्वा शक्त्यात्मने नमः तथा शान्तात्मने नमः इति च समष्टिद्वयमित्यर्थः । यद्वा ओं ह्रीं ओं सर्वेश्वराय नमः, ओं ह्रीं ओं परमात्मने नमः इति समष्टिद्वयं स्यात् । यदा अं अकारात्मने ब्रह्मणे नम इत्यादि स्याच्चदा ओं शक्त्यात्मने सर्वेश्वराय शान्तात्मने परमात्मने नमः इति ग्राह्यम् । स्वे स्वे वा पञ्च मन्त्राः स्वार्हक्लृप्त्या तदुभयमनव इति । निज निजपञ्चतत्त्वेषु मध्ये पूर्वाणि त्रीणि तत्त्वानि शक्तिकलाः, उत्तरे द्वे शान्तकले इत्यर्थः । समष्टी तु पूर्ववदेव । लिपिर्वेति । कलानामासां पूरणी स्यादित्यध्याहारेण योज्यम् । त्रिनवतिसंभूक्तेमा उक्ताः कलास्तासां पूरणी चतुर्नवतितमः कला मातृका वा स्यात् । स्वं स्वमूलमेव वा । यदि बैन्दवीनां कलानां अन्तिमा पञ्चमी कला अनन्ता नाम न स्यात् अथ यद्यनन्ता परिगृह्यते तदा

---

१. 'शक्तिकलाः' क. पाठः. २. 'ह्रीं सर्वे' घ. पाठः. ३. 'त्मने नम इति घ. पाठः. ४. 'उत्तरे शान्तिकले' ख. पाठः. ५. 'द । यदि' घ. पाठः

सर्वास्संभूय चतुर्नवतिः संपन्ना एवेति न[1] पुनः पूरण्यपेक्षेति भावः । इह मातृकामूलकलापरिग्रहे समस्त एव प्रणवो बीजत्वेन ग्राह्यो न तदंश इति ज्ञेयम् । पूरणमिह वह्न्यादिप्रकृतकलावस्तुपरिपोषणमप्यभिप्रेतमिति वात प्राणप्रतिष्ठास्त्वीति तदुद्धारानन्तरमासामभिधानम् । यद्वा शक्तिशान्तकलावाहन-मिह नावश्यकमिति । प्राणप्रतिष्ठा तु स्यादेव किन्तु शान्तकलयोः प्राणा इह प्राणा इत्येवं शान्तविषये स्यात् तथा पूरणीकलायाः प्राणा इह प्राणा इति ॥ ॥ ५५ ॥

तत्तद्वर्ग्याः पृथगिह कलाः सन्निधाप्यैतदीये-
नावाह्याम्नायमयमनुना तत्समष्ट्यात्मना च ।
दोष्णा शङ्खोदकमभिमृशन् स्वासुसंस्थापनाणुं
मन्त्री सम्मन्त्रयतु च कलावाहनप्रक्रियेयम् ॥ ५६ ॥

विमर्शिनी ।

एवमिह तत्तद्वर्ग्याः तत्तद्वर्गभवाः कलाः पृथक् सन्निधाप्यावाह्य । एतदीयेन तदीयेन । आम्नायमयमनुना ऋङ्मन्त्रेण । तत्समष्ट्यात्मना तत्तत्समष्टिमन्त्रेण चावाह्य दोष्णा शङ्खोदकमभिमृशन् स्पृशन् । स्वासुसंस्थापनाणुं स्वस्वप्राणप्रतिष्ठामन्त्रं सम्मन्त्रयतु जपतु च । इयं कलावाहनप्रक्रिया कलावाहनरीतिः । मन्त्रीत्यनेन सकलीकृतात् स्वात्मनस्तत्तत्कलान्यासस्थानतः तां तां कलामावाहयेदिति विशेषकृत्यं सूचितम् ॥ ५६ ॥

विवरणम् ।

ननु कथं कलावाहनं कार्यमित्यत्राह—तत्तद्वर्ग्या इति । सन्निधाप्येति । प्रकृतत्वात् शंखस्थे सलिले इतिं लभ्यते । प्रणवत्रयामन्त्रितपदादियोगः सामान्यसिद्ध एव । मन्त्रीति । बीजानन्तरं कलानन्तरं वा मूलमन्त्रयोगो यथायोगं सं सों ह्रीमादिविशेषयोगश्चोक्तः । यथा प्रणवत्रयं प्रणवशक्ती चोक्त्वा यं नमो नाराय . .धूम्रार्चिषे नमः धूम्रार्चिरागच्छागच्छ[4] ओं धूम्रार्चिषमावाहयामि इत्यादि । यद्वागच्छेत्येतदनन्तरं ओं सं[5] सों ह्रीं हंसस्सोहं स्वाहा त्यादि । सन्निधाप्येत्यनेन सकलकलानामावाहनमुद्रयैवावाहने कृते तदातदैव

---

१. 'न पूरण्य' घ. पाठः. २ 'धात्विकलाधान्त' ङ. पाठः. ३. 'धाप्य क्रमेण स्वर्वो चैतत्समुदितसमष्ट्यात्मनाथाभिवाह्य । दो' ख. पाठः विवरणसम्मतश्च । ४. 'गच्छ ओं' ख. पाठः ५. 'सां सों ह्रीं' ङ. पाठः.

प्रणवेनैव निरोधनं सन्निधापनं च कार्यमित्यप्युक्तम् । स्वचेति । नात्रामन्त्रितपदप्रयोगः । यद्वा मन्त्रीत्यनेनैवाग्न्यादेर्ब्रह्मादेश्चामन्त्रितत्वात्तदपि साधितमिति । स्वाङ्गसंस्थापनाणुः स्वस्वप्राणप्रतिष्ठामन्त्रः ॥ ५६ ॥

मूलमन्त्रचिदुपोद्बलितं तद्
वारि मूलमनुना कलशेऽस्मिन् ।
सन्निधाय कुसुमाञ्जलिपूर्वं
व्याप्य विन्यसतु तत्र कलास्ताः ॥ ५७ ॥

विमर्शिनी ।

ततो मूलमन्त्रचिदुपोद्बलितं मूलमन्त्रावाहनपूजनाभ्यां प्राप्तचैतन्यप्रकाशम् । तत् समस्तकलासमवेतं वारि । मूलमनुना मूलमन्त्रं जपन् । अस्मिन् कलशे सन्निधाय शङ्खात् कलशे योजयित्वा । कुसुमाञ्जलिपूर्वं व्याप्य तत्र कलशे ताः कलाः विन्यसतु ॥ ५७ ॥

विवरणम् ।

मूलमन्त्रचिदुपोद्बलितमिति । पुनर्मूलेनावाहनाङ्गन्यासपूजनाद्युक्तम् । कलावाहनानन्तरं प्राग्वत् प्रणवांशैः सम्पूज्यैतत्कार्यम् । सन्निधायेति निषेचनमुक्तम् । कुसुमाञ्जलिपूर्वं व्याप्येति । मूलान्वितेन प्रणवेनेति ज्ञेयम् ॥ ५७ ॥

त्र्याधारे स्वकलादलाम्बुजदलेष्वग्र्यादितस्तैजसीः
पद्दोःसन्धितदग्रपायुवृषणेऽन्धौ नाभिकुक्ष्योर्हृदि ।
पार्श्वद्वन्द्वपराक्ककुत्सु च कला न्यस्येद् गले सानने
सभ्रूके प्रतिसंस्थितस्वरपदेष्वप्यादिपञ्चांशजाः ॥ ५८ ॥

विमर्शिनी ।

कलान्यासमाह — त्र्याधार इति । त्र्याधारे मूलाधारहृदयभ्रूमध्येषु । स्वकलादलाम्बुजदलेषु स्वस्वकलासंख्यदलवतामम्बुजानां दलेषु । अग्र्यादितः अग्रगतं दलमारभ्य । तैजसीः वह्निसूर्यसोमकलाः न्यस्येत् । पद्दोस्सन्धितदग्रपायुवृषणे पादकरयोः सन्ध्यग्रेषु विंशतिस्थानेषु अकारकलादशकमुकारक-

१. 'जाः ॥ तत्तद्वर्ग्ये' ख. पाठः ।

लादशकं च पुनः पायौ वृषणे अन्धौ लिङ्गमूले नाभिकुक्ष्योः हृदि । पार्श्वद्व-न्द्वपराक्ककुत्सु पार्श्वयोः पृष्ठे गलपृष्ठे च मकारकलाः । गले सानने आस्ये सभ्रूके च बिन्दुकलाश्चतस्रश्चेत् । पञ्च चेद् भ्रुवोर्मूर्धनि च । सभ्रूक इति ककारस्य स्वार्थे कप्रत्ययत्वं मूर्धवाचकत्वं चावगन्तव्यम् । प्रतिसंस्थितस्वर-पदेषु प्रतिलोमेन संस्थितेषु स्वरस्थानेषु नादकलाश्च न्यस्येत् । एवमादिपञ्चांशजाः आदेः प्रणवस्य पञ्चभ्योंऽशेभ्यः सम्भूताः कला न्यस्येत् ॥ ५८ ॥

विवरणम् ।

त्र्याधार इति । मूलाधारे दशदलपद्मदलेषु हृदये द्वादशदलपद्मदलेषु [1] भ्रूमध्ये द्वादशान्ते ब्रह्मरन्ध्रे वा षोडशदलपद्मदलेषु सर्वत्राग्र्यदलादिषु प्रादक्षिण्येन तैजसीरग्निसूर्यसोमकला न्यसेत् । पादद्वयसन्ध्यग्रेष्वकारकलाः दोःसन्धि-तदग्रेषूकारकलाः पाय्वादि ककुदन्तेषु मकारकलाः । अन्धुर्लिङ्गं पराक् पृष्ठं ककुद् [2] गलापरभागाधोदेशः । गले सानने सभ्रूके इति । बिन्दुकलाः सभ्रूके [3] भ्रूभ्यां सहिते । पञ्चकलापक्षे तु भ्रूभ्यां केन मूर्ध्ना च सहिते इति व्याख्येयम् । प्रतिसंस्थितस्वरपदेषु नादकलाः प्रतिलोमवर्तिषु स्वराणां स्थानेषु वदनादि-मूर्धान्तेष्वित्यर्थः । अप्रतिसंस्थितस्वरपदेष्विति वा पदम् । अनुलोमवर्तिषु [4] मूर्धादिवदनान्तेष्वित्यर्थः ॥ ५८ ॥

पद्योर्युक्तलनासिकाद्विभुजपार्श्वेषु क्रमाद् वार्णजा
न्यस्याः पायुशिवोरुजानुनलकास्फिक्षूभवा मार्णजाः ।
हृद्ग्रीवांसयुगोरुनाभ्युदरवत्सोरोजके बिन्दुजाः
शङ्कार्कीन्दुजकेशकेष्वथ कलास्थाने कला नादजाः ॥ ५९ ॥

विमर्शिनी ।

अकारकलादीनां पक्षान्तरेण न्यासमाह — पद्योरिति । पद्योर्युक्तल-नासिकाद्विभुजपार्श्वेषु पादतलयोः करतलयोर्नासिकाद्वये भुजयोः पार्श्वयोश्च । क्रमादार्णजा अकारकला न्यस्या वा । पायुशिवोरुजानुनलकास्फिक्षु पायौ लिङ्गे ऊरुद्वये जानुद्वये जङ्घाद्वये स्फिग्द्वये च । उभवाः उकारकलाः हृद्ग्रीवांसयुगोरुनाभ्युदरवत्सोरोजके हृदि ग्रीवायामंसद्वये ऊरुद्वये नाभावुदरे वत्सो-

1. 'मध्ये ब्रह्मरन्ध्रे द्वादशान्ते वा' ख. घ. ङ. पाठः. 2. 'दिग्रा' छ. पाठः 3. 'भ्रुवा सहिते' ङ. पाठः. 4. 'ममूर्धादि' ङ. पाठः 5. 'स्फिक्षु क्रमान्मार्णं क पाठः,

रोजयोश्च । मार्णजा मकारकलाः । शकार्कीन्दुजलेशकेषु इन्द्रयमसोमवरुण-ब्रह्मस्थानेषु बिन्दुजा । अथ कलास्थाने नादजाः कलाश्च न्यस्या वा ॥ ५९ ॥

विवरणम् ।

पक्षान्तरमाह — पद्दोर्युक्तलेति पादतलद्वये बाहुतलद्वये नासिकाद्वये बाहुद्वये पार्श्वद्वये चार्णजा अकारकलाः । पायौ लिङ्गे ऊरुद्वये जानुद्वये नलकाद्वये स्फिग्द्वये च ऊदिता ऊकारकलाः । नलका जंघा । हृदि ग्रीवायामंसद्वये ऊरुद्वये नाभावुदरे वत्से स्तने च मार्णजाः । वत्सो वक्षः । शकार्कीन्दुजलेशकेषु बैन्दवीरिति । आर्किः यमः । कशब्दः शिरोवचनः । प्राग्याम्यसौम्यपाश्चात्यशिरोभागेष्वित्यर्थः । पञ्चकलापक्षे कशब्देनैव पञ्चमो मूर्धापि ग्राह्यः । कलास्थाने काननवृत्तादिष्वेव स्वरस्थानेषु अथवा पद्दोर्युक्तलेत्याद्युकारकलास्थानमुक्तं पायुँशिवेत्याद्यकारकलास्थानं, क्रमव्यत्यासो गोपनार्थः । कथमयमर्थो लभ्यते इति चेत् पार्श्वेष्वार्णजो इति । पार्श्वेषु उ अर्णजाः अर्ण एवार्णः तद्धितोऽप्ययं गोपनार्थ एव । वोदिता इति । वा अ उदिताः इति ॥ ५९ ॥

तत्तद्वर्ग्यकलान्ततस्तदुदिते स्थानेऽखिले व्यापये-
द्दृङ्मन्त्रैः ससमाष्टिभिः सह निजप्राणप्रतिष्ठाणुभिः ।
ऊर्वोस्त्रिः प्रणवं हृदि त्रिरजपां जप्त्वा हृदिस्थादिना
मन्त्रेणाभिमृशेद्धृदि न्यसनक्लृप्तिः स्यात् कलानामिति ॥ ६० ॥

विमर्शिनी ।

अथ तत्तद्वर्ग्यकलान्ततः तत्तद्वर्ग्याणां कलानामन्ते । तदुदिते तत्तत्कलानामुक्तेऽखिले स्थाने । दृङ्मन्त्रैस्तत्तद्दृग्भिः ससमष्टिभिः तत्तत्समष्टिमन्त्रैश्च सह । निजप्राणप्रतिष्ठाणुभिः निजनिजप्राणप्रतिष्ठामन्त्रैश्च व्यापयेत् । पुनरूर्वोस्त्रिस्त्रिकृत्वः । प्रणवं हृदि स्पृशन्नजपां च त्रिः जप्त्वा हृदिस्थादिना मन्त्रेण । हृद्यभिमृशेत् हृदयं संस्पृश्य जपेत् । इति कलान्यसनक्लृप्तिः स्यात् ॥ ॥ ६० ॥

१. 'वदिताः उ' ब. पाठः. २. 'पक्षे शब्दे' ब. पाठः. ३. 'पुरिवे' ब. ध. पाठः. ४. 'जा इति । अर्णः' घ. पाठः.

विवरणम्।

तदुदिते स्थानेऽखिले इति। मूलाधारपद्मादिषु तेषु व्यापकं पद्मो-त्सन्धितदङ्गेत्यत्र कट्यादितलान्तम् अंसाद्यङ्गुल्यन्तामित्यादि। ऋग्मन्त्रैरिति। आवाहनवत् प्रणवशक्त्यादियोगो मूलयोगश्चार्चामप्युक्तः। प्राणप्रतिष्ठामन्त्रेण सर्वत्र संस्पर्शनेन जप एव व्यापकत्वेनाभिप्रेतः इति। कलानां न्यसनक्लृप्तिः स्यादित्यन्वयः॥ ६०॥

हृदिस्था देवताः सर्वा हृदये नित्यसंस्थिताः।
हृदि सर्वं समर्पयामि हृदि प्राणाः प्रतिष्ठिताः॥ ६१॥

विमर्शिनी।

हृदिस्थादिनेत्युक्तं मन्त्रं पठति—हृदीत्यादि। इह

"सप्तात्मकस्य तारस्य परौ द्वौ तु परौ यतः।
अतस्तु शक्तिशान्ताख्यौ न पठ्येते परैः सह॥"

इति प्रपञ्चसारोक्तत्वात् कलावाहनं पृथगेवोक्तम्॥ ६१॥

तिस्रो न्यसेच्छाक्तिकलास्त्रिषु स्वे-
ष्वाधारपद्मेषु हृदीतरे द्वे।
मन्त्रा निजाः पञ्चकला यदि स्युः
स्थानेषु ताः स्वेष्वथ मातृकां च॥ ६२॥

मूलाङ्गन्यासं च कृत्वार्चयित्वा
विद्यादेहात्मानमावाह्य तस्मिन्।
मूलाद्येन स्वेन नाम्ना चतुर्थी-
नत्यन्तेन न्यस्य साङ्गं यजेच॥ ६३॥

विमर्शिनी।

संप्रति न्यासक्लृप्तिरपि पृथगेवोच्यते— तिस्रः शाक्तिकलाः स्वेषु त्रिष्वाधारपद्मेषु मूलाधारहृदयभ्रूमध्येषु। इतरे शान्तकले द्वे हृदि च न्यसेत्। निजाः पञ्च मन्त्राः शक्तिशान्त्योः कलाः यदि स्युः, ताः स्वेष्वेव स्थानेषु

१. 'न्यस शान्तजे द्वे। हृदन्तराद्यामिदलेषु मूर्ध्नि तस्योपरि द्वे द्विदले न्यसेद्वा॥ ६१॥ कृत्वा मूलन्यासमङ्गावसानं तेनाराध्यावाह्य विद्याभिधानम्। मूर्तिं मूलादिस्वनाम्ना' ख. पाठः।

न्यसेत् । अथ मातृकां च मूलाङ्गन्यासं च कृत्वार्चयित्वा तस्मिन् मूलाद्येन चतुर्थ्यन्तत्यन्तेन नाम्ना स्वेन स्वेन नाम्ना मूलमुक्त्वा 'ओं विद्यामूर्तये नम' इत्यनेनावाह्य मूलाक्षराङ्गानि न्यस्य साङ्गं यजेच्च ॥ ६२,६३ ॥

विवरणम्।

त्रिषु स्वेषु आधारपद्मेष्विति । सोमसूर्याग्न्युदितपद्मेष्वि-त्यर्थः । हृदीतरे द्वे इति शान्तकलयोः स्थानमुक्तम् । यद्वा

''तिस्रो न्यसेच्छक्तिकलाश्च मूलाधाराम्बुजेऽर्कावुरुहीतरे द्वे ;''

इति । मूलाधारपद्मकर्णिकात्रिकोणेषु शक्तिकलाः द्वादशान्तपद्मकर्णि-कान्तरर्केन्द्वंशयोश्च शान्तकले इति । समष्टिव्यापकं प्राणप्रतिष्ठायोगे तद्व्यापकश्च समानमेव । मन्त्रा निजाः पञ्चेति । यदा पञ्चतत्त्वान्येव शक्तिशान्तकला गृह्यन्ते तदा पूर्वमन्त्रत्रयं हृद्गुह्यपादेषु विन्यस्य समष्ट्या हृदादिपादतलान्तं व्यापय्योत्तरमन्त्रद्वयं शिरोवदनयोर्विन्यस्य तत्समष्ट्या मूर्धादिहृदयान्तं व्यापयेदिति भावः । अथ मातृकाञ्चेति न्यसेदित्यनुवर्तत एव । यदा मातृका पूरणीकला तदैष न्यास इष्यते । मूलमेव पूरणी चेन्मूलन्यास एषितव्यः । यद्वा सकलकलान्यासे कृते सकृन्मातृकान्यासोऽयमुक्तः । पूरणीन्यासस्त्वर्थादेव लभ्यते । अथवा मातृकाञ्चेति चकारेण कलाशब्दोऽनुकृष्यते । मातृकां कलां कलात्मिकां न्यसेदिति । सकलकलान्यासे कृते सकृत्सर्गक्रमेण मातृकान्यासस्थानेषु निवृत्त्यादिपञ्चाश-त्कलान्यासोऽपि कार्य इति भावः । मन्त्रा निजाः पञ्चेति संक्षेपमार्गोऽपि वा दर्शितः । यदि तावन्निजाः पञ्च मन्त्रा एवाकारादिकला आवाहिताः स्युः तदा तानेव कलारूपान् स्वेषु पादयुगदोर्युगमध्यकायमुखसूत्रवदनभागेषु न्यसेत् । पुनः सकृन्मातृकान्यासमपि कुर्यादिति । ननु पूर्वं सर्गक्रमेणै स्थिति-क्रमेणापि कलोपदेशे किं फलमिति । तदुच्यते—चतुर्थदिनस्नानं तावद् विशुद्धिसाधिष्ठयसम्पादिकारकं प्रागुक्तमत इह कलानां संहारक्रमेणावाहनम् ।

१. 'व्यापूर्यान्तरमन्त्र' छ. पाठः. २. 'द्वयांशिमूर्धा' ख. छ. पाठः. ३. 'पूरणे न्या' ङ. पाठः. ४. 'तृकाकलां' घ. च. पाठः. ५. 'णापि कला' ख. पाठः. ६. 'शे च किं' क. पाठः. ७. 'कारकमिति प्रा' ङ. पाठः. ८. 'णाभिवा' ङ. पाठः.

अभिषेके कृते सर्गक्रमेण च तासां न्यासः। वक्ष्यति च न्यस्तमन्त्रं महितमिति। कलशे न्यासस्त्विह संहारक्रमेण सर्गक्रमेणैव वा स्यात्। यत उक्तम् —

कृत्वा च व्यापकं मूलमन्त्रेण शिरसि क्रमात्।

न्यसेद् बिन्दुकला... इत्यादिं न्यासोपपत्त्यौचित्येनेह बिन्दुनादमकारादिक्रमेण सर्गन्यासोक्तिरिति ज्ञेयम्। दोषसंहारप्रधान्ये देवे न्यासोऽपि संहारक्रमेणैवोचितः। गुणाधानप्राधान्ये त्वावाहनमपि सर्गक्रमेण स्यात्। उत्सवादिषु स्नपनविधावुभयमपि स्थितिक्रमेण कार्यमिति ॥ ६२ ॥

मूलाङ्गन्यासश्च कृत्वार्चयित्वेति। न्यस्तकलासमष्टिमनुभिर्मूलाणाङ्गैश्च पूजोक्ता। तस्मिन्मूलाद्येन चतुर्थ्यन्तेन स्वेन नाम्ना विद्यादेहात्मानमावाह्येत्यन्वयः। प्रणवत्रयपूर्वकं मूलादिविद्यादेहात्मने नमः ओं विद्यादेहात्मन्नागच्छागच्छेत्याद्युक्त्वावाहयेदिति भावः। न्यस्येति विद्यादेहमन्त्रेण व्यापकपूर्वकं मूलवर्णादिन्यास उक्तः। यद्वा साङ्गमिति विद्यादेहस्य यदङ्गजातं तेन सार्धं न्यस्येति। वैष्णवे पञ्चतत्त्वपुरुषसूक्तमूलाक्षराङ्गन्यासः, शैवे पञ्चतत्त्वपञ्चब्रह्मवदष्टत्रिंशत्कलामूलाक्षराङ्गन्यास इत्यादि सर्वमुक्तम्। तत्र,

करपादकोर्पराख्यजानुकक्षोरुमूलतः।
कटिलिङ्गमुखहृन्मध्ये सूक्तं न्यस्य तु पौरुषम् ॥

इति। पुरुषसूक्तन्यासभेद इति ॥ ६३ ॥

प्राग्वच्छङ्खगृहीतवार्युपहितैतन्मूर्तिकेऽनुक्रमा-
दावाह्याखिलतत्त्वकानि मनुचैतन्योर्जितं तज्जलम्।
कुम्भेऽस्मिन् प्रणिधाय मूलमनुना व्यापय्य विन्यस्य त-
त्तत्त्वव्रातमपि स्वमूलमनुवर्णाङ्गान्तमभ्यर्चयेत्[३] ॥ ६४ ॥

विमर्शिनी।

अथ तत्त्वावाहनमाह—प्राग्वदिति। प्राग्वत् पूर्ववत्। शङ्खगृहीतवारि शङ्खगृहीते जले। उपहितैतन्मूर्तिके तत्र मूर्तिकल्पनानन्तरम्। अखिलतत्त्वकानि पञ्चविंशतिं वा षट्त्रिंशतं वा तत्त्वानि। अनुक्रमात् सृष्टिक्रमा

---

१. 'सर्गः प्र' क. पाठः. २. 'पूर्वकम्' ख. पाठः.
३. ख ॥ समन्त्रकं न्याससमासरूपं कृत्वापरन्यासमपीह केचित्। कृत्वाखिलाधारं निवेद्यकल्या कार्यां स्थापिताप्यमां क्रियां च ॥ आदिमनुत्रिपदाहितपरसूक्ष्ममहाब्रह्मोपेते। कुम्भाद्भुभितोऽत्राङ्गविधिः कार्यो वाचार्यदर्शितक्रमतः ॥

दावाह्य । मनुचैतन्योर्जितं मन्त्रचैतन्येन वर्धितम् । तज्जलमस्मिन् कुम्भे प्रणिधाय मूलमनुना व्यापय्य तत्तत्त्वव्रातं तत्त्वसमूहमपि स्वमूलमनुवर्णाङ्गान्तं विन्यस्याभ्यर्चयेत् ॥ ६४ ॥

विवरणम् ।

तत्त्वावाहनमाह— प्राग्वदिति । कलावाहनोक्तवच्छंखे जलं प्राह्यम् । तस्मिन् वारीत्यर्थः । उपहितैतन्मूर्तिक इति । तत्तद्देवमूर्ति तत्त्वानामुपाधितया तस्मिन्विभाव्येत्यर्थः । एतदुक्तं भवति । शंखमस्त्रेण संक्षाल्य-गन्धालेपनसन्धूपने कृत्वाग्रतो निधाय तस्मिन् हृदा गन्धपुष्पाक्षतं क्षिप्त्वा शिरसा वारुणपात्राज्जलमापूर्य हृदैवाष्टगन्धमालोड्य तस्मिन् प्रागुक्तमूर्तिमनुना मूर्ति विभाव्य तत्त्वान्यावाहयेदिति । अखिलतत्त्वकानीति । हृत्पुण्डरीकादीनि पञ्चतत्त्वान्यपीत्यर्थः । ततश्च हरौ कोपतत्त्वेन स्कन्दे क्षेत्रज्ञतत्त्वेनाप्यन्तत आवाहनं कार्यम् । त्रिप्रणवामन्त्रितपदादियोगः सामान्यसिद्ध एव । प्राग्वदावाह्येति वा संबन्धः । प्राग्वदिति बिम्बाधिवासविधावुक्तवदित्यर्थः । ततश्च ओं सं सों ह्रीमित्यादिविशेषयोगोऽपि लभ्यते । यद्वा तत्तन्नामेवमावाहनं तत्तदनन्तरं तत्तत्प्राणावाहनं च सिद्धं भवति इति । यथा ओं ओं ओं मन्नमः पराय जीवतत्त्वात्मने नमः । जीवतत्त्वागच्छागच्छेत्यादि तदनन्तरं ओं ओं ओं मन्नमः पराय जीवात्मने जीवतत्त्वस्य प्राणापानेत्यादि । एवं सर्वत्रेति । यदेतावत् क्रियते तदा कलावाहनेऽपि युक्तमेतत् । यथा अग्निकला दश क्रमेणावाह्य पुनस्त्रिप्रणवदशाग्निकलानन्तरं वह्निकलानां प्राणापानेत्यादि समष्ट्यावाहने कृते च पुनस्त्रिप्रणवसमष्ट्यनन्तरमग्नेः प्राणापानेत्यादीति कलानां प्राणप्रतिष्ठानन्तरमग्नेश्च सा कार्या । तदुक्तम् — तत्रैव व्यापककलानामग्नेश्च प्राणप्रतिष्ठां कुर्यादित्यादि । एवं सूर्यादेरपीति प्रणवेन सन्निरोधनं सन्निधापनञ्च तत्त्वावाहनेऽपि समानम् । मनुचैतन्योर्जितं तज्जलमिति । तत्त्वचितामुपोद्बलकतया तत्रैव मन्त्रावाहनं तत्पूजनमप्युक्तम् । प्रणिधानं निषेचनमेव तत्त्वमयत्वात्तज्जलस्यैवं निर्देशः । तत्तत्त्वव्रातमपीति । तदावाहिततत्त्वजातमपि इत्यर्थः । त्रिवारं

१. 'मूर्त्तित' ख. पाठः. २. 'ति । पञ्च', ३. 'वमन्त्रि' ख. पाठः. ४. 'तदनन्तरं' क. ख. पाठः. ५. 'ति यथा' ख च. पाठः. ६. 'वतात्म' ख. पाठः. ७. गच्छेत्यादि' घ. पाठः. ८. 'यैकलादीनाम' क. ङ. पाठः. ९. 'सत्त्वावा' ख. पाठः. १०. 'तत्तच्चि' ङ. पाठः. ११. 'वं नि' घ. पाठः. १२. 'तं तत्त्व' ख. पाठः.

तस्त्वन्यासोऽप्येवं गम्यते । स्वमूलमनुवर्णाक्रान्तमिति न्यासक्रियाविशेषणम् । अभ्यर्चयेदिति तत्तत्त्वन्त्रांतं स्वमूलमनुवर्णाक्रान्तमित्यनुषङ्गः । ६४ ॥

अस्त्राणुना घटमुखं नवचूतबोधि-
शाखाग्रपल्लवसतण्डुलचक्रिकाभिः ।
दर्भादिकैरपि विभूष्य नवेन वासो-
युग्मेन वर्ममनुना परिवेष्टयेच्च ॥ ६५ ॥

विमर्शिनी ।

ततो नवचूतबोधिशाखाग्रपल्लवसतण्डुलचक्रिकाभिः नवैराश्वत्थशाखाग्रपल्लवैः सतण्डुलया चक्रिकया दर्भादिभिरपि घटमुखमस्त्राणुना विभूष्य नवेन वासोयुग्मेन वर्ममनुना परिवेष्टयेच्च ॥ ६५ ॥

विवरणम् ।

कलशालङ्करणमाह—अस्त्राणुनेति । नवैराम्राश्वत्थयोः शाखाग्रपल्लवैः सतण्डुलया चक्रिकया विभूष्येति । यद्वा पनसबिल्वशाखाग्रपल्लवोपलक्षणार्थं बहुवचनम् । यदुक्तं चौतैस्तथाश्वत्थबैल्वैर्दलैः पानसैश्चेति । सतण्डुलेति फलोपलक्षणम् । यदप्युक्तं—

'फलतण्डुलसम्पूर्णचक्रिकाभ्यक्रविधया ।'

इति । दर्भादिकैरपीति । अस्त्राणुनेति संबध्यते । दर्भन्यासं गन्धानुलेपनस्रग्मालालङ्करणमक्षतविकिरणञ्चास्त्रेणैव कुर्यादित्यर्थः । वासोद्वयाच्छादने कृतेऽप्यस्त्रेणैव तदुपरि दर्भन्यासोऽक्षतविकिरणञ्च कार्यम् । मूलेनास्त्रेणैव वा वासोद्वयाच्छादनमिति ॥ ६५ ॥

अत्राभिवाह्य मनुविग्रहमादिदेवं
कल्पक्रमेण परिपूज्य ततो धिनोतुं ।
मन्त्रान् प्रजप्य परिरक्ष्य कृताभ्यनुज्ञो
मन्त्री ततः परिघटार्चनमारभेत ॥ ६६ ॥

---

१. 'मातस्थं स्त्र' ख. पाठः. २. 'म्र' ख. पाठः. ३. 'समण्डल' ङ. पाठः. ४. 'शाखापल्लव' घ च पाठः. ५. 'ति च सं' क. पाठः ६. 'प्यक्षतेनैव' क. पाठः. ७. 'तु । इत्थं प्रधानकलशार्चनमुच्यते स्म वक्ष्ये विशेषमखिलेष्वनुखण्डसंस्थम् ॥ ' ह' ख. पाठः.

विमर्शिनी ।

अत्र प्रणवोपचारादिभिर्मनुविग्रहमादिदेवं परमपुरुषमावाह्य कल्पक्रमेण परिपूज्य निवेद्य ततो धिनोतु । मन्त्री वैदिकांस्तान्त्रिकांश्च स्वीयान् स्वीयान् मन्त्रांश्च प्रजप्य परिरक्ष्य कृताभ्यनुज्ञः ब्रह्मकलशस्थाद् देवादनुज्ञां लब्ध्वा ततः परिघटार्चनमारभेत ॥ ६६ ॥

विवरणम् ।

मनुविग्रहमादिदेवमत्राभिवाह्येति । पूजापटलोक्तरीत्या मन्त्रावाहनसकलीकरणमुक्तम् । विष्णुशिवादौ तदीयद्रव्यदेवतामपि पूर्वमावाह्य सम्पूज्यार्घ्यं दत्वा मन्त्रावाहनमेतत् कार्यम् । मनुविग्रहमादिदेवमभिवाह्येति । आदौ देवः आदिदेवः द्रव्यन्यासे या देवता तामावाह्येत्यर्थः । तत्र प्रणवनतियोगेन मनुकल्पनं मनुविग्रहमित्युक्तमिति । कल्पक्रमेण परिपूज्येति । यथास्वमर्घ्यपाद्यादिसमर्पणपूर्वकं सावरणं[1] पूजनं निवेद्य । निवेदनादिकञ्चोक्तम् । ततो धिनोत्विति । प्रीणयेत्कृत्स्नां प्रसन्नपूजामपि विदध्यादित्यर्थः । पूजावसितौ प्रणवेन मूलेन वा गन्धोदकप्रोक्षणमपि कार्यम् । यदुक्तं—

प्रणवेन पुनः प्रोक्ष्य गन्धतोयेन चैव हि ।

इति । मन्त्री मन्त्रान् प्रजप्येति । तदुचितमन्त्रविदित्यर्थः ।

त्रिमूलपञ्चतत्त्वानि पौरुषं प्रजपेद्धरौ ।
विष्णुसूक्तं रमासूक्तमथ नारायणाद्यपि ॥
प्रासादब्रह्म पञ्चार्णान् साङ्गं[2] स्वव्यापिनं शिवे ।
मृत्युजित्र्यंबकं रुद्रान् श्रीसूक्ताघोरकाद्यपि ॥
दुर्गायां मूलतत्त्वानि दुर्गाश्शन्नास्त्रिवर्गकम् ।
होतृरुद्रांश्च पुंसूक्तं श्रीसूक्तादि च संयतः ॥
द्विमूलपञ्चतत्त्वानि गायत्रीं नेजमेषकम् ।
स्वञ्च सूक्तद्वयं स्कन्दे होतॄन् शान्तिद्वयाद्यपि ॥
शिवनारायणे द्वैयुक्तं[3] गणेशे मूलमप्यृचम् ।
शन्नोवर्गं ममाग्ने च रमासूक्तञ्च संस्मरेत् ॥

---

१. 'णपू' ङ. च. पाठः. २. 'स्वाङ्गं खं' छ. पाठः. 'साङ्गञ्च' ङ. पाठः. 'साङ्गं खं'. च. पाठः. ३. 'प्युक्तं' ङ. पाठः

मूलमङ्गानि षण्णामान्यपि षड्विंशतिं जपेत् ।
भूतनाथेऽप्रतिरथं शान्तिसूक्ताद्यपि क्रमात् ॥

इति ।

परिरक्ष्येति अस्त्रेण तालत्रयादिकमुक्तम् । कृताभ्यनुज्ञो मन्त्रीति । प्रणवेन पुष्पाञ्जलिपूर्वं तद्ब्रह्मकलशस्थदेवादनुज्ञालम्भनमुक्तम् इति ॥ ६६ ॥

**संहत्या विनियोज्यं द्रव्यगणं तावदत्र कथयामि ।**
**बहुधाभिधास्यमानस्नपनविधासुप्रतीतये पूर्वम् ॥ ६७ ॥**

विमर्शिनी ।

अत्र पूर्वं बहुधाभिधास्यमानस्नपनविधासुप्रतीतये अनेकप्रकारेण वक्ष्यमाणस्नपनविधानेषु सुप्रतीतये सुखेनावगमाय । संहत्या सङ्घातरूपेण विनियोज्यं योजनीयं द्रव्यगणम् । तावत् साकल्येन कथयामि ॥ ६७ ॥

विवरणम् ।

संघातद्रव्यप्रकरणमारभते—संहत्येति । अत्र पूर्वं संहत्या विनियोजनीयं द्रव्यगणं तावत्कथयामीति सम्बन्धनीयम् । विधाशब्दस्तु प्रकारवचनः । बहुधा हीह स्नानप्रकारा अभिधास्यन्ते । तत्र विनियोज्यो द्रव्यगणो द्विविधः संघातरूपेण केवलतया च विनियोगभेदात् । यथा—स्नानाम्बु शान्तिजलं पाद्यमर्घ्यमिति । आज्यं दधि क्षीरम्माध्विति । तत्र यथाज्यक्षीराद्यभिधाने तत्प्रतीतिरेवं स्नानाम्ब्वित्याद्यभिधाने निशाशालीचूर्णाक्षतमणिहिरण्यमयादिरूपद्रव्यप्रतीत्यर्थमिदानीं तद्द्रव्यगणं कथयामीति ॥ ६७ ॥

**निशाशालीचूर्णाक्षतमणिहिरण्याढ्यमजिते**
**स्मृतं स्नानोदं तद्विचरमयुतं गन्धसलिलम् ।**
**शिवे शान्त्यम्भः सुम्भजिति कुशदूर्वे च शतमू-**
**ल्यपि व्याघ्री सिंही सुमतिभिरिहौषध्य उदिताः ॥ ६८ ॥**

विमर्शिनी ।

तत्राजिते निशाशालीचूर्णाक्षतमणिहिरण्याढ्यं निशाशालीचूर्णाभ्यामक्षतेन नवभी रत्नैः हिरण्येन च युक्तं स्नानोदमिति स्मृतम् । शिवे तद्विचर-

१. 'राभिधाने' क. पाठः.

मयुतं तेष्वन्त्यद्वयेन रत्नैः हिरण्येन च युक्तं गन्धसलिलम् । शान्त्यम्भः शान्त्युदकं स्मृतम् । सुम्भजिति कुशदूर्वे द्वे च । (ശതമൂലി = കന്നിരിക്ക. വ്യാഘ്രി = ചെറവഴുതിന. സിംഹി = വലിയവഴുതിന.) इत्येताः सुमतिभिरोषध्य उदिताः ॥ ६८ ॥

विवरणम् ।

तत्र तावद्ब्रह्मकलशापेक्षितं सङ्ख्यातद्रव्यमाह — निशाशालीचूर्णेति । सर्वत्र तत्तद्द्रव्याङ्काभिधानमित्यवबोद्धव्यम् । यदुक्तं — पाद्याद्यङ्गानि क्रमात्स्वाभिषेके वक्ष्य इति । तद् द्विचरमयुतं गन्धसलिलं शिवे शान्त्यंभ इति । रत्नहिरण्यसहितं गन्धोदकमित्यर्थः । तदुक्तं —

'रत्नगन्धसुवर्णाद्भिर्मध्ये शान्त्युदकं क्रमात् ।'

इति । गन्धशब्देन त्वष्टगन्धग्रहणम् । यत उक्तं 'रत्नहेमाष्टगन्धाद्भिरि'ति । सुम्भजिति कुशदूर्वे चेति । ब्रह्मकलशेऽपेक्षितमेतदपीति ज्ञेयम् । वक्ष्यति च — 'ब्राह्मे स्याद्गन्धपुष्पौषधिफलमणिहेमाम्बि'ति । सुमतिभिरिति । पाकपूर्णानामासां परिग्रहार्थमुक्तम् ॥ ६८ ॥

क्रान्तिश्यामाकपद्मार्तवकुशतुलसीबैल्वगन्धाक्षतं स्या-
च्छार्ङ्गांशे पाद्यमाद्यत्रितयमिह हरौ सुम्भहन्त्यां सराजिः ।
श्यामाकः स्कन्दविघ्नस्मराजिति तिलराज्यद्रिमृत्साः समुक्तं
दूर्वा चैतेषु शास्तर्यथ तिलरजनीगन्धपुष्पाक्षतानि ॥ ६९ ॥

विमर्शिनी ।

शार्ङ्गांशे क्रान्तिश्यामाकपद्मार्तवकुशतुलसीबैल्वगन्धाक्षतम् । (ക്രാന്തി = വിഷ്ണുക്രാന്തി. ശ്യാമാകം = കവിട്ട.) आर्तवं पुष्पम् । बैल्वं बिल्वस्य फलं पुष्पं पत्रं वा एतत्सर्वं सहितं पाद्यं स्यात् । हरौ इह द्रव्येषु मध्ये । आद्यत्रितयं क्रान्तिश्यामाकपद्मानि । सुम्भहन्त्यां सराजिः सर्षपसहितः श्यामाकः पाद्यम् । स्कन्दविघ्नस्मराजिति स्कन्दविघ्नशिवेषु । तिलराज्यद्रिमृत्साः तिलसर्षपपर्वतमृदः पाद्यम् । एतेषु षट्सु दूर्वा च । अथ शास्तरि । तिलरजनीगन्धपुष्पाक्षतानि पाद्यं समुक्तं स्यात् ॥ ६९ ॥

---

१. 'शेऽपेक्षि' ख. घ. च. पाठः. २. 'इति । द्विचरम' क. पाठः. ३. 'यदुक्तं' क. ङ. पाठः. ४. 'णं तत्स्वतु' छ. पाठः. ५. 'पुष्पौषधि' क. ङ. पाठः.

विवरणम् ।

आर्तवं पुष्पं तच्च जातिमाल्लिकादि यत्किञ्चिद् ग्राह्यम् । आद्यन्तिरयमिह हराविति । कान्तिश्यामाकपद्मानि । सुम्भहन्त्र्यां सराजिः श्यामाक इति वाक्यम् । अद्रिमृत्सा पर्वतमृत्तिका । दूर्वा चैतेष्विति । हरिहरादि षट्स्वपीत्यर्थः ॥ ६९ ॥

आर्येऽर्घ्यं क्षीरराज्यार्तवतिलकुशगन्धा इमे साक्षतोदा
दुर्गायां गन्धपुष्पस्थलगदधियवाः साक्षतोदास्त एव ।
शर्वस्कन्दद्विपास्येऽक्षतफलयवयुक्ता विदुग्धा हरौ ते
संप्रोक्तं स्याद् वचाढ्याः पुरमुरमथने सर्व एवाखिलोक्ताः ॥ ७० ॥

विमर्शिनी ।

आर्ये क्षीरराज्यार्तवतिलकुशगन्धा अर्घ्यं संप्रोक्तं स्यात् । दुर्गायां साक्षतोदा अक्षतोदकसहिताः । इमे क्षीराद्याः । शर्वस्कन्दद्विपास्ये शिवस्कन्दविघ्नेषु । गन्धपुष्पस्थलगदधियवाः गन्धपुष्पयोः स्थाने दधियवाभ्यां युक्ताः साक्षतोदा अक्षतोदकाभ्यां सहिताः । त एव शास्तृयुक्ताः । हरौ अक्षतफलयवयुक्ता विदुग्धाः क्षीररहिताः । ते शास्तृयुक्ताः पुरमुरमथने शिवनारायणे । वचाढ्या वचया युक्ताः । (വചാ = വയമ്പ്) अखिलोक्ताः सर्वेपूक्ताः त एवार्घ्यं संप्रोक्तं स्यात् ॥ ७० ॥

विवरणम् ।

आर्येऽर्घ्यमिति । आर्तवं पुष्पम् । तच्च पद्ममन्यद्वा जातिमल्लिकादि ग्राह्यम् । इमे साक्षतोदा दुर्गायामिति । क्षीरादिषट्कमक्षतं जलञ्चाष्टाङ्गमित्यर्थः । शर्वस्कन्दद्विपास्ये त एवेति पूर्वत्रान्वयः । त एवेति क्षीरादिषड्ग्रहणम् । पुनर्वचनादेवकारः । हरौ ते अक्षतफलयुक्ता विदुग्धाश्च । क्षीरं हित्वाक्षतसर्षपादीनि पञ्च ग्राह्याणि । तेष्वक्षतफलयवाश्च योज्या इत्यर्थः । फलं कादलमन्यद्वा ग्राह्यम् । पुरमुरमथनेऽखिलोक्ताः सर्व एव वचाढ्या इत्यन्वयः । यदुक्तं —

---

१. 'ह्रांशमि' ख. च. पाठः. २. '...दु' ख. पाठः. ३. 'त्वासर्षप' ङ. पाठः.

'गन्धं पुष्पं दधि क्षीरं तिलं सिद्धार्थमक्षतम् ।
वचायवकुशाग्राणि फलञ्चार्घ्याङ्गमीरितम् ॥'

इति ॥ ७० ॥

तक्कोलजातिसलवङ्गशशाङ्कगन्ध-
पुष्पं हरीशितरि नान्त्ययुगं रमेशे ।
नान्त्यत्रयं शिवगणेशगुहे लवङ्ग-
गन्धाम्बुपद्मम यमाचमनं प्रमेशे ॥ ७१ ॥

विमर्शिनी ।

हरीशितरि शिवनारायणे । तक्कोलजातिसलवङ्गशशाङ्कगन्धपुष्पम् । तक्कोलं तदेव । (ജാതി = ജംതിക്കാ) लवङ्गः स एव । शशाङ्कः कर्पूरम् । एतान्याचमनं स्यात् । रमेशे नान्त्ययुगं गन्धपुष्परहितानि । शिवगणेशगुहे शिवविघ्नस्कन्देषु । नान्त्यत्रयं शशाङ्कगन्धपुष्परहितानि तानि । प्रमेशे लवङ्गगन्धाम्बुपद्ममयम् । (പദ്മകം = പത്മകം) एतत्स्वरूपमाचमनं स्यात् ॥ ७१ ॥

विवरणम् ।

शशाङ्केति कर्पूरग्रहणम् । नान्त्ययुगमिति बहुव्रीहिः । अनन्त्यद्वयं तक्कोलजातिलवङ्गकर्पूरा एवेत्यर्थः । नान्त्यत्रयमित्यपि तद्वत् तक्कोलजातिलवङ्ग-मात्रमेवेत्यर्थः ॥ ७१ ॥

श्रीशे बिल्वद्विजग्रन्थिलखदिरशमीरा हरीशे सहैतै-
र्जम्बूनीपाम्रकारग्वधपनसमधूकास्तुरीयः कुमार्याम् ।
माधूकप्लक्षशैरीषकपनसरसाला महेशे प्रमेशे
क्षीर्याख्यास्ते च शेषेष्वजितगिरिशयोः प्लक्षहीनाः कषाये ॥७२॥

विमर्शिनी ।

श्रीशे कषाये बिल्वद्विजग्रन्थिलखादिरशमीराः । बिल्वः प्रसिद्धः । द्विजः पलाशः । (ഗ്രന്ഥിലം = വയ്യങ്കതക. ഖദിരം = കരിങ്ങാലി. ശമീരം = വന്നി) एते स्युः । हरीशे एतैः सह जम्बूनीपाम्रकारग्वधपनस-मधूकाः । (ജംബു = ഞാവൽ. നീപം = കടമ്പ. ആമ്രം = മാവ. ആരഗ്വധം = കൊന്ന. പനസം = പ്ലാവ്. മധൂകം = ഇരിപ്പ.)

---

१. 'क्रमेषे' च. पाठः.

एते । कुमार्यां तुरीयः खदिरः । महेशे माधूकमशैरीषकपनसरसालाः । (മാധൂകം = ഇരിപ്പ. ബ്രഹ്മ = പ്ലാശു. ശൈരീഷകാ = നെന്മേനി-വാക.) पनसमुक्तम् । (രസാലം = മാവു) एते । प्रभेशे क्षीर्याख्याः (നാല്പാമരം) । शेषेषु उक्तेषु पञ्चस्वपि ते च क्षीर्याख्याश्च । तत्राजित-गिरिशयोस्तु प्लक्षहीना एते स्युः ॥ ७२ ॥

विवरणम् ।

हरीशे सद्वैतैरिति । बिल्वादयः पञ्च जम्ब्वादयश्च पञ्चेत्यर्थः । आम्रक आम्र एव । तुरीयः कुमार्यामिति । बिल्वादिष्वेव तुरीयः खदिरः । प्रभेशे क्षीर्याख्या इति । अश्वत्थवटौदुम्बरप्लक्षाः । ते च शेषेष्विति । हरिहरा-दिषूक्तवृक्षेषु क्षीरिवृक्षा अपि योज्या इत्यर्थः । अजितगिरिशयोः प्लक्षहीना इति । अश्वत्थवटोदुम्बरा एवानयोरुक्तवृक्षेषु योज्या इति भावः । कषाये इति । सर्वेष्वेतेषां त्वच एकस्मिन् पात्रे क्वथिताः स्युः । तदुक्तं कषायः स्यादिति भावः ॥ ७२ ॥

न्यग्रोधद्रुरुदुम्बरश्चलदलप्लक्षौ रसालद्विजौ
शैरीषः समधूकदारुरपि सेनान्यां कषायोचिताः ।
ओषध्योऽत्र सुवर्चलामलवचा ब्राह्मी तथा शङ्खपु-
ष्प्युद्दिष्टाः सशतावरी सहसहा कान्तिश्च लक्ष्मीरपि ॥ ७३ ॥

विमर्शिनी ।

सेनान्यां न्यग्रोधद्रुः न्यग्रोधवृक्षः, उदुम्बरः, चलदलप्लक्षौ चलदलो-ऽश्वत्थः, रसालद्विजौ उक्तौ, शैरीषः उक्तः, समधूकदारुः मधूक उक्तः । एतेषां त्वचः कषायोचिताः कषाये निर्दिष्टाः । अत्र सेनान्यां (സുവർച്ചലാ = തുളസി), अमलवचा निर्मला वचा उक्ता, (ബ്രാഹ്മി = ബ്രഹ്മി) शङ्खपुष्पी सैव शतावरी (ശതാവരി = ശതാവേലി), सहसहा सहया सहिता (സഹാ = പൂവാംകുരുന്തൽ) । कान्तिरुक्ता, (ലക്ഷ്മീ = ത്രിതാളി) । एता ओषध्यः ॥ ७३ ॥

विवरणम् ।

न्यग्रोधद्रुरिति । स्कन्दे क्रमोऽपि नियत एवैषामिति पृथगभिधानम् । यद्वक्ष्यति — 'सागरभवं सरिज्जाग'त्याद्युक्त्वा 'अन्यानि पूर्वगणितानि' इति । अमलवचेत्येकं, सहसहा कान्तिश्चेति । सहा च विष्णुकान्तिश्च ॥ ७३ ॥

शीशे रात्रिसहाशिरीषकुशभद्राः सूर्यवर्तिन्यपि
प्रोक्तं मार्जनमीशशार्ङ्गभृति तत्षट्कान्वितं भूस्तृणम् ।
गन्धाढ्यं तुलसीद्वयीपनससंयुक्तं च शास्तर्यथो
राज्यैन्द्र्यक्षतगन्धपुष्पकसदाभद्राकुशाग्रात्मकम् ॥ ७४ ॥

विमर्शिनी ।

शीशे रात्रिसहाशिरीषकुशभद्राः (രാത്രി = മഞ്ഞൾ. ഭദ്രാ = ചെറൂള) अन्यान्युक्तानि, (സൂര്യവർത്തിനി = ആരിവേള) एता मार्जनं प्रोक्तम् । ईशशार्ङ्गभृति तत्षट्कान्वितं (ഭൂസ്തൃണം = നിലപ്പന)। गन्धाढ्यं गन्धयुक्तं, तुलसीद्वयीपनससंयुक्तं तुलसीद्वयी तुलसी कृष्णतुलसी (പനസം = പ്ലാവിന്റെ തളിർ) एतानि । अथो शास्तरि राज्यैन्द्र्यक्षतगन्धपुष्पकसदाभद्राकुशाग्रात्मकम्, (ഐന്ദ്രി = ഉഴിഞ്ഞ) । एतत्स्वरूपं मार्जनम् । अत्र पल्लवानि गृह्यन्ते ॥ ७४ ॥

विवरणम् ।

ईशशार्ङ्गभृति तत् षट्कान्वितं भूस्तृणं गन्धाढ्यं तुलसीद्वयीपनससंयुक्तञ्चेति वाक्यम् । यदुक्तं —

"शिरीषञ्च कुशा गन्धं रजनी सूर्यवर्तिनी ।
भूस्तृणञ्च सदाभद्रा पनसं तुलसीद्वयम् ॥
सहदेवीति संप्रोक्तं मार्जनं ............ ।"

इति । अथो शास्तरीति योज्यम् । राज्यादि मार्जनमित्यर्थः ॥ ७४ ॥

धात्र्याम्रं विल्वकेर्यौ पनसमपि फले डाडिमीभव्यरम्भा-
श्चेशार्यश्रीशविघ्नेऽष्टक इह तु गुहे मातुलुङ्गाख्यजम्ब्वौ ।
धात्रीकेरस्थलेऽन्त्यमित्रितयसबदरीजातिकेरं कुमार्यां
शार्ङ्गीशेऽतोऽतिरिक्तं सकुटचबदरीमातुलङ्गं कपित्थम् ॥ ७५ ॥

विमर्शिनी ।

ईशार्यश्रीशविघ्ने एतेषु फले । (ധാത്രി = നെല്ലിക്കാ ആമ്രം = മാങ്ങാ.) विल्वकेर्यौ (ബില്വം = കൂവളക്കാ. കേരി = തേങ്ങ)

(പനസം = ചക്ക) डाडिमीभव्यरम्भाः (ഡാഡിമീ = താളിമാതളം. ഭവ്യം = ഇറളി. രംഭാ = കദളിക്കാ)। गुहे त्विह अष्टके धात्रीकेरस्थले मातुलुङ्गाख्यजम्ब्वौ । (മാതുലുംഗം = മാതളം. ജംബൂ = ഞാവൽ)। कुमार्यान् अन्त्यत्रितयसबदरीजातिकेरम् । अन्त्यत्रितयं डाडिमीभव्यरम्भाः । (ബദരം = ഇലന്ത. ജാതി = ജാതിക്കാ. കേരം = നാളികേരം)। शार्ङ्गीशे अतः धात्र्याद्यष्टकात् सकुटचबदरीमातुलुङ्गं कपित्थं च अतिरिक्तम् अधिकं स्यात् । (കടചം = കടകപ്പാലയരി. കപിത്ഥം = വ്ളാങ്ങാ) ॥ ७५ ॥

विवरणम् ।

केरी नालिकेरः । फले इति । तेषां फलानि सम्भूय फलोदकमिति भावः । गुहे त्विह धात्रीकेरस्थले मातुलुङ्गाख्यजम्ब्वावित्यन्वयः । मातुलुङ्गाम्रबिल्वजम्बूपनसडाडिमभव्यरम्भा इति भावः । कुमार्यामन्त्यत्रितयसबदरीजातिकेरमिति । डाडिमी भव्यरम्भा बदरी जातिर्नालिकेरश्च । शार्ङ्गीशेऽतोऽतिरिक्तमिति । एतद्धात्र्याद्युक्तं सर्वं पुनरितोऽधिकं तु कुटचादीत्यर्थः । यदुक्तं —

> 'पनसाम्रकपित्थश्च कदल्यामलकं तथा ।
> बिल्वं भव्यम्मातुलुङ्गं नालिकेरश्च डाडिमम् ॥
> बदरी कुटचश्चैव .... .... ....'

इति ॥ ७५ ॥

> रत्नान्याहुरिहाब्जरागमपि नीलं मौक्तिकेन्दूपलौ
> चाग्नेये कुरुविन्दकाचकसमेतौ विद्रुमं वज्रकम् ।
> शार्ङ्गीशे च्युतकाचनीलकुरुविन्दस्कान्दपुष्याजरा-
> गाग्नेयस्कान्तविद्रुरजार्केहरिनीलस्फाटिकं गारुडम् ॥ ७६ ॥

विमर्शिनी ।

आग्नेये स्कन्दे इह अब्जरागं पद्मरागं, नीलं स्वयमेव, मौक्तिकेन्दूपलौ (മൌക്തികം = മുത്ത്. ഇന്ദുപലം = ചന്ദ്രകാന്തം), कुरुविन्दकाचकसमेतौ । कुरुविन्दं स्वयमेव । (കാചകം = കൗട്ടുകല്ല്. വിദ്രുമം =

പവിഴം. വജ്രകം = വൈരം) । एतानि रत्नान्याहुः । शार्ङ्गीशे च्युतकाचनीलकुरुविन्दस्कान्दपुष्याजरागायस्कान्तविद्रुरजार्कहरिनीलस्फाटिकं । च्युतानि रहितानि काचनीलकुरुविन्दानि स्कन्दोक्तानि पुष्यादिसहितानि च । (പുഷ്യം = പുഷ്യരാഗം: അജരാഗം = ബ്രഹ്മരാഗം) । अयस्कान्तं स्वयमेव । विद्रुरजं वैडूर्यम् । (ആർക്കം = സൂര്യകാന്തം) । हरिनीलम् इन्द्रनीलम् । स्फाटिकं स्फटिकम् । (ഗാരുഡം = ഗരുഡശില) । एतानि ॥ ७६ ॥

विवरणम् ।

इन्दूपलश्चन्द्रकान्तः । शार्ङ्गीशे च्युतकाचनीलकुरुविन्दस्कान्देति । स्कन्दोक्तेषु काचादीनि त्रीणि हित्वान्यानि पञ्च पुष्यरागादीनि चाष्टाविति भावः । विद्रुरजं वैडूर्यम् । आर्कं सूर्यकान्तम् ॥ ७६ ॥

मुक्तावैडूर्यवज्रं मणिमरतकगोमेदपुष्येन्द्रनीलं
भर्गे दौर्गेऽधरार्धद्रुहिणमणिमहानीलनीलप्रवालम् ।
विष्णौ मुक्ताप्रवालाभिधकुलिशविदूरोद्भवाम्भोजरागं
तच्छैवं *** प्रभेशे स्फटिकरहितहारीशमाहुर्गणेशे ॥ ७७ ॥

विमर्शिनी ।

भर्गे शिवे मुक्तावैडूर्यवज्रं, मणिमरतकगोमेदपुष्येन्द्रनीलम्, (മണി-മാണിക്കം) । मरतकं गोमेदं च स्वयमेव । अन्यान्युक्तानि । दौर्गे अधरार्धद्रुहिणमणिमहानीलनीलप्रवालम् । अधरार्धे मुक्तावैडूर्यवज्रं मणिश्च । (ദ്രുഹിണമണി = ബ്രഹ്മരാഗം) । महानीलं नीलं च स्वयमेव । (പ്രവാളം = പവിഴം) एतानि । विष्णौ मुक्ताप्रवालाभिधकुलिशविदूरोद्भवाम्भोजरागम् । (കുലിശം = വൈരം. വിദൂരോൽഭവം = വൈഡൂര്യം. അംഭോജരാഗം = പദ്മരാഗം) । प्रभेशे तद्वा विष्णूक्तं वा, शैवं शिवोक्तं वा । गणेशे स्फटिकराहितहारीशं स्फटिकहीनहरीशोक्तं द्वादशे-त्याहुः ॥ ७७ ॥

विवरणम् ।

दौर्गेऽधरार्धेति । मुक्तायुक्तेष्वधःार्धे पूर्वचतुष्टयं ब्रह्मरागादिचतुष्टयं च । अम्भोजरागः पद्मरागः । तच्चैवं वा प्रभेश इति । वैष्णवं तदथवा पूर्वोक्तं शैवमित्यर्थः । स्फटिकरहितहारीशमाहुर्गणेश इति । हरिहरोक्तेषु स्फटिकं हित्वेतराणि द्वादशेत्यर्थः ॥ ७७ ॥

लोहं शास्त्रजिते सुवर्णरजतं ताम्रायसी च त्रपु
स्कन्दे सीसककांस्यपित्तलयुतं सारं हरीशेऽखिलम् ।
स्वर्णोत्कीर्णसुपर्णकच्छपदरारीण्यौपमानाङ्ककं
श्रीशेऽत्रामलकं प्रविष्टमुरमांसीयुक्तधात्रीफलम् ॥ ७८ ॥

विमर्शिनी ।

शास्त्रजिते शास्तृविष्ण्वोः सुवर्णरजतं सुवर्णं रजतं च, ताम्रायसी ताम्रमयश्च, (ത്ര — ഛാർച്ചാരെക്കാടി), एतल्लोहम् । स्कन्दे सीसककांस्यपित्तलयुतमेतत् । (സീസം = ഈയം. കാംസ്യം = വെള്ളോട്ട്. പിത്തളം — പിച്ചള) । हरीशे सारम् आरसहितम्, (ആരം=ഇരിമ്പ്). अखिलमेतत् लोहम् । श्रीशे स्वर्णोत्कीर्णसुपर्णकच्छपदरारीणि स्वर्णेन कृतानि गरुडकूर्मशङ्खचक्राणि । औपमानाङ्ककम् औपमानद्रव्याङ्गानि अत्र श्रीशे प्रविष्टमुरमांसीयुक्तधात्रीफलं प्रविष्टाभ्यां मुरमांसीभ्यां युक्तं धात्रीफलम् । आमलकम् आमलकद्रव्यम ॥ ७८ ॥

विवरणम् ।

सारं हरीशेऽखिलमिति । तदुक्तं —

'सुवर्णं रजतं ताम्रमायसं त्रपु सीसकम् ।
आरं कांसं च लोहाम्भः पित्तलं समुदाहृतम् ॥

इति । स्वर्णोत्कीर्णेति । श्रीशे औपमानिकाङ्गानि स्वर्णरचितानि गरुडकूर्मशङ्खचक्राणीत्यर्थः । अत्रामलकमिति श्रीशे ॥ ७८ ॥

गन्धं रुङ्मुरवारिसेव्यघुसृणप्लायःपटीरं हरि-
द्वैपास्यार्यहरे सुरद्रुशशिनागाब्दैस्तदीशाच्युते ।
सेनान्यामसृगायसेन्दुगदकीशाम्भोमुरं मालयं
दौर्गे प्राहुरिदं मुराङ्गदपदप्लाचोरगोरोचनम् ॥ ७९ ॥

विमर्शिनी ।

हरिद्वैपास्यार्यहरे विष्णुगणपतिशास्तृशिवेषु रुङ्मुरवारिसेव्यघुसृण-प्लायःपटीरम् (രുക് = കൊട്ടം) मुरं स्वयमेव (വാരി = ഇരുവേലി. സേവ്യം = രാമച്ചം. ഘുസൃണം = കുങ്കുമം. പ്ലാ = മാഞ്ചി. അയസ്സ് = അകിൽ. പടീരം = ചന്ദനം) गन्धं प्राहुः । ईशाच्युते सुरद्रु-शशिनागाब्दैः सह तत् । (സുരദ്രു = ദേവതാരം. ശശി = കർപ്പൂരം. നാഗം = നാഗപ്പൂവ്. അബ്ദം = മുത്തങ്ങാ) । सेनान्याम् अस्रगायतेन्दु-गदकीशाम्भोमुरं मालयं च । (അസൃക് = കുങ്കുമം. ആയസം = അകിൽ. ഇന്ദു = കർപ്പൂരം. ഗദം = കൊട്ടം. കീശം = കണ്ടിവെണ്ണ. അംഭസ്സ് = ഇരുവേലി.) मुरं स्वयमेव । मालयं चन्दनम् । दौर्गे इदं गन्धं मुराङ्गद-पदप्लाचोरगोरोचनं प्राहुः । मुराम्भोगदस्थाने प्लाचोरगोरोचनम् । (പ്ലാം = മാഞ്ചി. ചോരം = ചുവ്വരം) । गोरोचनं स्वयमेव ॥ ७९ ॥

विवरणम् ।

गन्धमिति । रुक् कुष्ठम् । वारि हिरिवेरम् । घुसृणं कुङ्कुमं प्ला मांसी अयः इति पदम् पटीरं चन्दनं द्वैपास्यो गणपतिः शशी कर्पूरम् । अब्दो मुस्ता सहार्थे च तृतीया । इन्दुः कर्पूरः । कीशो ग्रन्थिपर्णी । अम्भो हिरिवेरमेव । मालयं चन्दनम । दौर्गे प्राहुरिति । कुङ्कुमाद्यष्टसूक्तेषु मुरहिरिवेरकुष्ठानि हित्वेतराणि पञ्च मांसीचोरगोरोचनाश्चेत्यर्थः ॥ ८०. ॥

मल्लीचम्पकजातिनन्दिवकुलं तुल्यं गुहान्येषु तैः
संयोज्यं शिवविघ्नयोरपरनन्द्यम्भोजसौगन्धिकम् ।
सैतत्कुन्दफलिन्युमापतिहरौ कुन्दाब्जयूथीश्रियः
श्रीशार्ये महिषद्विषीह कुसुमं साशोकनागोद्भवम् ॥ ८० ॥

विमर्शिनी ।

गुहान्येषु स्कन्दादन्येषु षट्सु मल्लीचम्पकजातिनन्द्यावर्तबकुलं तुल्यं समानम् । (മല്ലി = മുല്ല) । चम्पकं स्वयमेव । (ജാതി = പിച്ചകം. നന്ദി=നന്ദിയാർവട്ടം. വകുളം=ഇലഞ്ഞി) । शिवविघ्नयोः तैः उक्तैः अपरनन्द्यम्भोजसौगन्धिकं संयोज्यम् । (അപരനന്ദി = മറെറനന്ദ്യാർ വട്ടം) । अम्भोजं पद्मम् । सौगन्धिकं स्वयमेव । उमापतिहरौ सैतत्कुन्दफलिनी एतैः सहितं कुन्दं फलिनी च । (കന്ദം = കരന്ന. ഫലിനി = ഞാവൽ) । इति दश । श्रीशार्ये श्रीशार्ययोः पूर्वोक्तैः पञ्चभिः सहिताः कुन्दाब्जयूथीस्त्रियः । कुन्दं चोक्तम् । (യൂഥി = ഇരുവാച്ചിമുല്ല. സ്ത്രീ= കറുമ്പി) इति नव । महिषद्विषीह साशोकनागोद्भवम । अशोकं स्वयमेव । (നാഗോദ്ഭവം = നാഗപ്പൂവ്) । पूर्वोक्तैः पञ्चभिः सहितमेतद्द्वयं कुसुमं पुष्पोदकलशद्रव्यम् ॥ ८० ॥

विवरणम् ।

गुहान्येषु तुल्यमिति । विष्ण्वादिषट्स्वपि साधारणमित्यर्थः । शिवविघ्नयोस्तैः संयोज्यमिति । मल्ल्यादीनि पञ्च दक्षिणावर्तनन्द्यावर्तादीनि च त्रीणीत्यर्थः । सैतत् कुन्दफलिन्युमापतिहराविति । एतैरष्टभिः सह कुन्दं फलिन्यपीत्यर्थः । महिषद्विषीहेति । मल्ल्यादीनि पञ्चाशोकनागपुष्पे चेत्यर्थः ॥ ८० ॥

उत्पलकल्हाराम्बुजकुमुदं सौगन्धिकं कशेरुयुतम् ।
उत्पलयुगमपि शरजे तत्तदभावेऽत्र रक्तकरवीरम् ॥ ८१ ॥

विमर्शिनी ।

शरजे उत्पलकल्हाराम्बुजकुमुदं सौगन्धिकम् । (ഉല്പലം=ചെങ്ങഴനീർ. കൽഹാരം=നൈതൽ) । अम्बुजं (കുമുദം=ആമ്പൽ) सौगन्धिकं स्वयमेव । कशेरुयुतं (കശേരു= ? നെതൽ) उत्पलयुगम । श्वेतोत्पलं नीलोत्पलं च । अत्र स्कन्दे तत्तदभावे एतेष्वन्यतमाभावे (രക്തകരവീരം = ചുവന്നകണവീരം) इति पुष्पोदकम् ॥ ८१ ॥

विवरणम् ।

उत्पलयुगमपीति । श्वेतं नीलञ्चेत्यर्थः । तत्तदभावेऽत्रेति । यद्यत् पुष्पमिह गुह्ये न स्यात् तत्तत्स्थाने रक्तकरवीरो ग्राह्य इति भावः ॥ ८१ ॥

नीवारशालियवतण्डुलवेणुबीज-
माषं हरौ हरिहरेऽक्षतमेतदेव ।
सिद्धार्थकङ्कुसहितं निजगर्भगीता
विघ्नेश्वरे महिषजित्यपि धातवः स्युः ॥ ८२ ॥

विमर्शिनी ।

हरौ नीवारादिकमक्षतम् । (നീവാരം = വരിനെല്ല്. ശാലി = നെല്ല്.) यवं स्वयमेव । तण्डुलं च स्वयमेव । (വേണുബീജം = മുളനെല്ല്. മാഷം = ഉഴുന്ന്) । इत्यक्षतद्रव्यम् । हरिहरे सिद्धार्थकङ्कुसहितमेतदेव । (സിദ്ധാർത്ഥം = കടുക്. കങ്കു = കണ്പ്) । विघ्नेश्वरे महिषजित्यपि निजगर्भगीताः निजगर्भन्यासोक्ता धातवः स्युः ॥ ८२ ॥

विवरणम् ।

हरिहरे सिद्धार्थकङ्कुसहितमेतदेवाक्षतमित्यन्वयः । प्रसिद्धमेवान्यत्राक्षतं, यदुक्तं — 'व्रीहियुतैस्तण्डुलकैरक्षततोय'मिति । निजगर्भगीता इति । प्रथमपटल एव गर्भाधानप्रकरण उक्ताः ॥ ८२ ॥

क्वथितक्वथितवृक्षत्वक्करीषं सुदग्धं
भसितमिह समुक्तं भर्गदुर्गाहरीशे ।
इह महिषनिहन्त्र्यां खादिरत्वक्पदे तु
द्विजवरतरुकल्कं योजनीयं वदन्ति ॥ ८३ ॥

विमर्शिनी ।

भर्गदुर्गाहरीशे क्वथितक्वथितवृक्षत्वक्करीषं कषायोक्तानां वृक्षाणां त्वग्भिः सह सुदग्धं करीषं भसितं समुक्तम् । इह महिषनिहन्त्र्यां खादिरत्वक्पदे तु खादिरस्थाने द्विजवरतरुकल्कं पलाशत्वचं योजनीयमिति वदन्त्याचार्याः ॥ ८३ ॥

१. 'जतरुवरक' ख. पाठः.

विवरणम् ।

कथितकथितेनेति । कषायार्थमुक्तानां वृक्षाणां त्वचः करीषं च सम्यग् दग्ध्वा भस्म सम्पादनीयं किन्तु दुर्गायां तद्वृक्षेषु खदिरत्वचं हित्वा पलाशत्वग्योज्येत्यर्थः ॥ ८३ ॥

वेदीक्षेत्रगजोक्षशृङ्गगिरिवल्मीकोद्भवाः स्युर्मृद-
स्तुल्याः कोलनदीतटद्वयतटाकान्तःस्रवन्त्युद्भवाः ।
शार्ङ्गीशे सरिदब्धिजे शरभवे तीर्थाखुवेश्मोद्भवे
विघ्ने शास्तरि हस्तिनाकुजविहीना वाहिनीतीरजाः ॥ ८४ ॥

विमर्शिनी ।

वेदीक्षेत्रगजोक्षशृङ्गगिरिवल्मीकोद्भवा मृदस्तुल्याः सर्वत्र । वेदी अग्निहोत्रवेदी । (ക്ഷേത്രം = വിളഭൂമി. ഗജശൃംഗജം = ആനക്കൊമ്പത്തേതു്. ഉക്ഷശൃംഗജം = കാളക്കൊമ്പത്തേതു്. ഗിരി = പർവ്വതം. വല്മീകം = പുററു) । शार्ङ्गीशे कोलनदीतटद्वयतटाकान्तःस्रवन्त्युद्भवाः । (കോലോദ്ഭവം = പന്നിപ്പുഴി. നദീതടദ്വയോദ്ഭവം = നദീതീരദ്വയത്തിങ്കലേതു്. തടാകോദ്ഭവം = കുളത്തിലേതു്. അന്തഃസ്രവന്ത്യുദ്ഭവം = പുഴയിലേതു്) । पूर्वोक्ताभिः षड्भिः सहिता एता मृदः । शरभवे सरिदब्धिजे (പുഴയിലേതും, സമുദ്രത്തിലേതും), पूर्वोक्ताः षट् च । विघ्ने तीर्थाखुवेश्मोद्भवे (തീർത്ഥത്തിലേതും എലിപ്പുഴിയും.), पूर्वोक्ताः षट् च । शास्तरि हस्तिनाकुजविहीनाः हस्तिदन्तजवल्मीकविहीनाः पूर्वोक्ताः । षड्भ्यः एतद्द्वयरहिताः वाहिनीतीरजाः नदीतीरस्थाश्च मृदः ॥ ८४ ॥

विवरणम् ।

तुल्या इति । शार्ङ्गीशादिषु साधारणाः । कोलो वराहः । अन्तःस्रवन्तीति नद्यन्तर्भागाभिधानम् । शरभवे सरिदब्धिजे इत्यन्वयः । शास्तरि हस्तिनाकुजविहीना वाहिनीतीरजेति । वेदीक्षेत्राद्युक्तमृत्तिकासु गजशृङ्गजां वल्मीकजां च हित्वेतराश्चतस्रो नद्या द्वितीरजो चेत्यर्थः ॥ ८३ ॥

---

१. 'गैता' ङ. पाठः. २. 'चेत्यर्थः' क. घ. पाठः.

शान्त्यम्भः शिवशार्ङ्गिणीह तिलसिद्धार्थैर्यवैर्वैणवै-
नीवारैस्तुलसीदलाम्बुजपलाशैर्मङ्गलाम्भः पुनः ।
ब्रह्माशोककुशार्जुनेन्द्रलतिकाबोध्यङ्कुराञ्जैकप-
द्माढ्यं भक्ष्यमिभानने पृथुकपूपाद्यं चतुष्कं विदुः ॥ ८५ ॥

विमर्शिनी ।

इह शिवशार्ङ्गिणि तिलसिद्धार्थैर्यवैर्वैणवैर्नीवारैः तुलसीदलाम्बुजपलाशैः तुलसीदलैः पद्मदलैश्च शान्त्यम्भः स्यात् । पुनस्तत्र ब्रह्माशोककुशार्जुनेन्द्र-लतिकाबोध्यङ्कुराञ्जैकपद्माढ्यम् । (ബ്രഹ്മ = പ്ലാശ്) । अशोककुशे स्वयमेव । (അർജ്ജുനം = മരുത്. ഇന്ദ്രലതിക = ഉഴിഞ്ഞ. ബോധ്യങ്കുരം = അരയാലിന്റെ തളിര്. ഏകപത്മം = കരതാമര) । एतानि मङ्गलाम्भः स्यात् । इभानने पृथुकपूपाद्यं चतुष्कं भक्ष्यं विदुः । बुधा इति शेषः । (പൃഥുകം = അവിൽ. പൂപം = അപ്പം. ലഡ്ഡുകം = എള്ളുണ്ട. ശഷ്കലി = അണ്ണാപ്പലി) । इति ॥ ८५ ॥

विवरणम् ।

*द्विपमुखे पृथुकादिकं चतुष्कं भक्ष्यं विदुरित्यन्वयः । क्व पुनरे-तत्सिद्धमिति अधिवासहोमे इति ज्ञेयम् । यदुक्तम् — मन्त्रलाजपृथुकाख्यान् लड्डुकापूपकान् शष्कुल्याज्यमिति ॥ ८५ ॥

बीजानीषुभवे यवाः सतिलगोधूमाः ससिद्धार्थकाः
शालीमुद्गकमाषकाश्च सहनीवारा हरीशेऽथ ते ।
श्यामाकच्छणकङ्गुवैणवयुता निर्माषसिद्धार्थकाः
सञ्जातद्रविणान्यजीगणमथान्यैस्तत्प्रयोगं ब्रुवे ॥ ८६ ॥

विमर्शिनी ।

इषुभवे यवाः सतिलगोधूमाः, (ഗോധൂമം=കോതമ്പ്), ससिद्धा-

1. 'द्वयाम्बु' क. पाठः. २. 'द्यैः स्याद् विघ्ने पृथुकादि होमविहितं भक्ष्यं च' ख. पाठः. ३. 'ज' क. पाठः. ४. 'यः पुन' ख. पाठः. ५. 'मे ज्ञे' च. पाठः. ६. 'रे च' क. पाठः. ७. 'वे ॥ स्नाना...दिधा प्रपूर्य शरवर्गद्रव्यकेऽन्तर्हरौ पायादी-न्युपलंडमध्य' ख. पाठः.

* 'स्यात् पृथुकादिकं द्विपमुखे भक्ष्यं चतुष्कं' इति विवरणपाठः.

र्थकाः शालीमुद्गकुमाषकाः सहनीवाराश्च बीजानि । अथ हरीशे निर्माष-सिद्धार्थकाः स्कन्दोक्तेषु माषसिद्धार्थरहिताः श्यामाकच्छगकङ्गुवैणवयुताः । श्यामाकमुक्तम् (ചാമ = ചണകപ്പയറ്. ഹംഉ=തിന) वैणवमुक्तम् इति बीजानि । संघातद्राविणानि संघातरूपाणि द्रव्याणि अजीगणं गणितवानहम् । अथान्यैरसंघातैः सह तत्प्रयोगं कलशविधानं ब्रुवे वच्मि ॥ ८६ ॥

विवरणम्।

अथ हरीशे ते इति । स्कन्दोक्तेषु माषसिद्धार्थान् हित्वेतराणि षट्श्यामाकच्छणप्रियङ्गुवैणवानि च बीजानीत्यर्थः । सङ्घातद्रविणान्यजीगणमिति प्रकरणोपसंहारः । सङ्घातद्रव्याण्येवं गणितवान् । विस्पष्टमुक्तवानहमित्यर्थः । अथान्यैस्तत्प्रयोगं ब्रुव इति प्रकृतपरिकलशपूजाप्रकारोपक्रमः । सहार्थे तृतीया । केवलद्रव्यैर्दधिघृतादिभिः सहैषां सङ्घातद्रव्याणां यथायथं प्रयोगमेभिरितरकलशपूरणादिलक्षणं वक्ष्यामीत्यर्थः ॥ ८६ ॥

आज्यादिसप्तदशभिर्द्रव्यैः श्रीशाभिषेचने ।
घटादिक्लृप्तिरुद्दिष्टपूर्वा द्रव्यादिकं ब्रुवे ॥ ८७ ॥

विमर्शिनी ।

एवं सामान्येन संघातद्रव्याण्यभिधायाथ विष्ण्वादिदेवानां कलशविधिं पृथक् पृथग् वदन् प्रथमं विष्णौ सप्तदशद्रव्यविधिमाह आज्यादीति । श्रीशाभिषेचने श्रीशस्याभिषेचने आज्यादिसप्तदशभिर्द्रव्यैः करणीये तत्र घटादिक्लृप्तिः घटानां पुटानां खण्डानां च क्लृप्तिः उद्दिष्टपूर्वा पूर्वोक्तैव । द्रव्यादिकं द्रव्यदेवतामन्त्रादिकं ब्रुवे वच्मि ॥ ८७ ॥

विवरणम्।

सहप्रयोगकथनं दुष्करं दुरवधारञ्चेति मन्यमानो विष्ण्वादिषु पृथक् प्रयोगप्रकरणानि कुर्वन् वैष्णवं प्रयोगप्रकरणं तावदारभते — आज्यादिसप्तदशभिरिति । घटादिक्लृप्तिरुद्दिष्टपूर्वेति । पटलादावेवेति भावः । त्र्येवाक्ष्णधीत्यत्रोक्तो वैष्णवशैवभेदो न विस्मरणीय इत्यभिप्रायः । द्रव्यादिकं द्रव्यदेवतामन्त्रक्रमम् ॥ ८७ ॥

1. ष्करावधारं' ङ. पाठः. २. 'गकरणं' ख. घ. ङ. पाठः.

आज्योष्णोदकरत्नकानि फललोहं मार्जनं गन्धकं
प्रादक्षिण्यविधानतोऽक्षतयवौ ब्राह्मे सदैवे न्यसेत् ।
पाद्यार्घ्याचमनीयगव्यदधि दुग्धं माक्षिकं क्वाथकं
दिक्कोणेषु बहिस्तदीशमनुभिस्तारेण शेषेष्वपः ॥ ८८ ॥

विमर्शिनी ।

ब्राह्मे सदैवे ब्रह्मकलशे दैविके च प्रादक्षिण्यविधानतः मध्यानन्तरं पूर्वादिप्रदक्षिणक्रमेण आज्योष्णोदकरत्नकानि आज्यमुष्णोदं रत्नोदं च, फललोहं फलोदकं लोहोदं च, मार्जनं च, गन्धकं गन्धोदम्, अक्षतयवौ अक्षतोदं यवोदं च न्यसेत् । पुनर्बहिर्मानुषे दिक्कोणेषु दिक्कोणक्रमेण पाद्या-र्घ्याचमनीयगव्यदधि पाद्यमर्घ्यमाचमनीयं पञ्चगव्यं दधि च, दुग्धं क्षीरं, माक्षिकं मधु, क्वाथकं कषायजलम्, एतानि सप्तदशद्रव्याणि तदीशमनुभिः तत्त-द्देवतामन्त्रैः प्रणवादिचतुर्थीनमोन्तैः न्यसेत् पूरयेदित्यर्थः । शेषेषु द्रव्यकल-शेभ्योऽन्येषु तारेणापश्च पूरयेत् ॥ ८८ ॥

विवरणम् ।

ब्राह्मे सदैवे प्रादक्षिण्यविधानतो न्यसेदिति । ब्राह्मे कलशे ताव-दाज्यं[1] दैविकावरणे तु तदीयदलकलशस्थानीये[2] पूर्वाग्नेयादिप्रदक्षिणक्रमेणोष्णो-दकादियवान्तानि न्यसेत् । ब्रह्मकलशेष्वित्यर्थः । तदीशमनुभिरिति सर्वत्र सम्बध्यते । बहिर्मानुषावरणे प्रागादिखण्डेषु पूर्वदाक्षिणादिक्रमेणाग्नेयादिकोण[3]-क्रमतश्च पाद्यादिकषायान्तानि च न्यसेदिति । शेषेषु तारेणाप इति । मानुष एवेह प्रतिखण्डं परिकलशसम्भवस्तेषु प्रणवेनैव शुद्धजलं पूरयेत् । तच्च जलं उत्पूयोदग्गुपाहितादित्येतदेवेष्यते । परिकलशपूरणक्रमस्तु पटलान्तेऽवसेयः । वक्ष्यति च — 'स्वकीयपरिकुम्भैश्च प्रकृत्याश्रितमि'त्यादि । ब्रह्मकलशेष्वपि दधिघृतादिव्यतिरिक्तेषु स्वीयद्रव्यन्यासे[4] तु कृते सद्यस्तेनैव जलेन पूरणं कार्यम् । तथा च वक्ष्यति — द्रवद्रव्यकुम्भान्मुक्त्वा शेषानिति[5] । ननु कियती पूजा स्यादिति—

---

१. 'ज्यं मैरीका', २. 'येषु पू' क. पाठः. ३. 'मत आग्ने' ख. पाठः. ४. 'से कृ' ग. च. छ. पाठः. ५. 'नित्यादि' च. छ. पाठः.

सर्वेऽपि कुम्भसंस्काराः स्युस्तदावाहनार्चनम् ।
कूर्चन्यासार्चनं द्रव्यन्यासोऽप्युदितमार्गतः ॥
पूरणद्वयमर्गाब्जस्याक्षतैरेव पूजनम् ।
देवताया द्विमूर्त्योश्च पूजावाहनपूर्वकम् ॥
मन्त्रावाहनतन्न्यासपूजनानि निवेदनम् ।
प्रसन्नयजनं चेयदुपब्रह्मघटोचितम् ॥
पल्लवादिविधानं तु समं सर्वघटेष्वपि ।
प्रधानस्यांशुकं त्वेकं परन्तत् खण्डभाग्भवेत् ॥

इति ।

पङ्क्त्याच्छादनसम्भवे तु पश्चादेव तत् कार्यम् । यदुक्तम् —
'प्रत्येकं वेष्टयेद्वस्त्रैः पङ्क्तिः पङ्क्तीरथापि वा ।'

इति । किञ्च वारुणपात्रसमीपे पात्रेषु सकूर्चकेषु वासोभिः गालयतु घृतादीन्यप्युष्णोदादीनि । पञ्चगव्यं तु,

निष्कृतिभाविक्रमतः स्थाणुभिरायोज्य सपदि मथ्नीयात् ।
शोषादिकृत् प्रपूज्याभिमन्त्र्य संसाधयेत् पुरैव बुधः ॥

इति ।

स्नानीयादिद्रव्यवच्छंख आधायाज्योष्णोदादीन्यथेष्टोक्तरीत्या ।
तत्तद्ब्रह्मांशेष्वादधीताथ चैत्तिं पूर्तिं कृत्वा पूरयेच्छेषतोऽपि ॥

इति । ब्रह्मकलशे तु घृतपञ्चगव्यसम्भवे तदेव शङ्खेऽवदाय तस्मिन् कलावाहनं तत्त्वावाहनमपि कार्यमिति ॥ ८८ ॥

विष्णूष्णरश्म्यजकुबेरवसूंश्च विश्वान्
गन्धर्वकान् निर्ऋतिशुम्भजितौ पितॄंश्च ।
श्रीवाक्सदक्षकविसोमसुरेश्वरार्की-
नाज्यादिभाञ्ज्यभिदधत्यधिदैवतानि ॥ ८८ ॥

विमर्शिनी ।

विष्णूष्णरश्म्यजकुबेरवसून् विष्णुं सूर्यं ब्रह्माणं वैश्रवणं वसूंश्च, विश्वान् देवान्, गन्धर्वकान् गन्धर्वान्, निर्ऋतिशुम्भजितौ निर्ऋतिं दुर्गां

---

१. 'स्थाणुभि' च. पाठः. २. 'चैत्तीं' ख. पाठः. ३. 'लशेषु तु' घ. पाठः. ४. 'हनमपि का' पाठः.

पितृश्च, श्रीवाक्सदक्षकविसोमसुरेश्वरार्कीन् श्रियं सरस्वतीं दक्षं शुक्रं सोममिन्द्रं यमं च , आज्यादिभाञ्जि आज्यादिद्रव्यगानि अधिदैवतान्यभिदधति वदन्ति ॥ ८९ ॥

विवरणम् ।

उष्णरश्मिरादित्यः । अजो ब्रह्मा । विश्वानिति विश्वदेवाः । सुम्भजिद् दुर्गा । कविः शुक्रः । सुरेश्वर इन्द्रः । आर्किर्यमः ॥ ८९ ॥

ऋचः षोडश पुंसूक्तस्येदं विष्णुरपि क्रमात् ।
स्नानमन्त्रास्तदीशान्ताः प्रोक्ताः स्नानक्रमं ब्रुवे ॥ ९० ॥

विमर्शिनी ।

पुंसूक्तस्य षोडशर्चः 'इदं विष्णुरपि' तदीशान्ताः अन्ते तत्तद्देवतानामयुक्ताः क्रमात् स्नानमन्त्राः प्रोक्ताः । स्नानक्रमं ब्रुवे ॥ ९० ॥

विवरणम् ।

स्नानमन्त्रा इति । सप्तदशानां द्रव्यपूरितानां ब्रह्मकलशानामभिषेकमन्त्राः । तदीशान्ता इति । तत्तद्द्रव्याणां देवताश्च तत्तदगन्ते प्रयोक्तव्याः पूरणे स्नपने चासां प्रणवचतुर्थ्यन्ताख्यनतिलक्षणमन्त्ररूपेण प्रयोगः । पुनरप्यस्ति भेदः । वक्ष्यति च — 'सर्वत्र तत्तदणुदैवतमूलतारः' इति ॥ ९० ॥

मानुषदिक्खण्डघटैर्ब्रह्मघटेनाथ मानुषविदिक्स्थैः ।
दैविकदिक्कोणगतैः सप्तदशद्रव्यके हरिं स्नपयेत् ॥ ९१ ॥

विमर्शिनी ।

सप्तदशद्रव्यके सप्तदशद्रव्यस्नाने पूर्वं मानुषदिक्खण्डघटैः अथ ब्रह्मघटेन, पुनर्मानुषविदिक्स्थैः खण्डैः , पुनर्दैविकादिक्कोणगतैश्च हरिं स्नपयेत् ॥ ९१ ॥

---

१. 'त् ॥
पितृलक्ष्मीवारदक्षा विष्णुकर्वान्द्विन्द्रयमदिनेशभनः शः ।
विश्वनिर्ऋत्यजगगुगन्धर्वा दुर्गेति च क्रमात् स्नपने ॥
द्' क. पाठः,

विवरणम् ।

**मानुषदिक्खण्डघटैरिति** । मानुषावरणे पूर्वादिचतुर्दिग्गतखण्डवर्तिकलशैस्तावत् पूर्वं स्नपयेत् । ततो ब्रह्मकलशेन पुनस्तु मानुषावरणे आग्नेयादिकोणगतखण्डवर्तिकलशैः पश्चाद्दैविकावरणे दिक्कोणगतकलशैरेव । नेह पूरण इव प्रादक्षिण्यक्रम इति भावः । मानुषखण्डेषु पूर्वं ब्रह्मकलशेन पुनस्तदीयपरिकलशैः स्नपनम् । वक्ष्यति च — 'द्रव्यघटैस्तदीयपरिकुम्भैश्चे'ति । तत्र क्रमक्लृप्तिमपि तदैव वक्ष्यति—'प्रकृत्याश्रितमाश्रित्य क्रम'मित्यादि । तद्विषये मन्त्रक्लृप्तिमपि वक्ष्यति—'निर्दैवतैः परिघटै'रित्यादि । इह च मानुषदिक्खण्डगतेषु पाद्यार्घ्याचमनीयगव्यद्रव्येषु ब्रह्मकलशेषु सपरिकलशेषु[1] सहस्रशीर्षेत्यादिचतस्र ऋचः तत आज्यद्रव्ये प्रधानब्रह्मकलशे तस्माद्विराडिति, पुनर्दध्यादिषु यत्पुरुषेणेत्यादिचतस्र[2], पुनर्दैविकदिग्विदिग्गतेषूष्णोदकादिषु तस्मादश्वा इत्याद्या, यवोदकलशे त्वन्त्ये इदं विष्णुरिति विवेकः । यदुक्तम्—

> प्राग्याम्यवारुणोदीच्यखण्डस्थान्मध्यगं घृतम् ।
> बहिः कोणगतान्मध्यदलगान् दिग्विदिक्क्रमात् ॥

इति तथा ।

> ततः पुरुषसूक्तेन दद्यात् पाद्यादिकं क्रमात् ।

इति च । इह श्रीशे दिक्तिथयो बहिर्वसुशैत[3] इत्येतन्मध्यमत्रयेऽधमं भवति ।

> क्षेत्रे मनुपुटे मध्ये पद्मं राजपुटैर्भवेत् ।
> बहिष्षोडशकान्यष्टौ दिक्षु मध्यममध्यमे ॥
> मध्ये तिथिपुटे क्षेत्रे तत्त्वकोष्ठैस्सरोरुहम् ।
> दिग्विदिक्ष्वङ्गुलितिथिमिताः स्युर्मध्यमोत्तमे ॥
> बाह्यत्यष्टिपुटे तत्त्वाष्टिमिता दिग्विदिक्ष्वथ ।
> मध्ये तत्त्वपदाब्जेष्टौ दलेष्वष्टौ च तद्बहिः ॥

उत्तमाधममेतत । तत्त्वेषुवर्गा बहिर्दिक्कोणेष्वित्येतत् उत्तममध्यमम् । अत्रैव मध्यमखण्डे[4] दलकलशानां[5] बहिः षोडशकलशयोग उत्तमोत्तमम् ।

---

१. 'षु सपरि' क. च. पाठः. २. 'इति । तथा पुरुष' क. पाठः. ३. 'गत' घ. च. पाठः. ४. 'ध्यखण्डे' ख. घ. च. पाठः. ५. 'कलशां ब' क. पाठः.

मध्यमोत्तममेवैषु सुनिर्वाहं पराणि तु ।
दुर्निर्वाहाणि हि त्रीणि ग्राह्याण्येतान्यपीच्छया ॥

इह बहिः षोडशकान्यष्टावित्यत्र वायव्यसौम्यादिखण्डयुगलेषु यान्यन्तश्चतुष्पदानि तेषां मध्ये यानि तत्क्रमादेवाग्नेयनैर्ऋतवायव्यैशपदानि तेषु तदीयब्रह्मकुम्भाः स्युः । तत्त्वाष्टिमिता दिग्विदिक्ष्वित्यत्र विदिक्ष्वन्तरभितो द्विपङ्क्तिलोपः । अष्टौ च तद्बहिरित्यष्टकलशास्तत्तद्दलकलशावरणस्थानीयाः । एवमुत्तमोत्तमे बहिष्षोडशकलशा अपि किन्तु कोणदलकलशावरणस्थानीया-स्त्र्यस्त्रयः[1] स्युरिति । किं च ।

'नवकानि चतुर्दिक्षु कोणेष्वष्टकमेव च ।
मध्ये द्वादशपत्राढ्यं कमलञ्च प्रकल्पयेत् ॥'

इति । एकादशपुटसाध्यमेतत् ।

हेमरत्नाक्षतोपेतं गन्धोदं मध्यमे न्यसेत् ।
तदीयदलकुम्भेषु गन्धोदं राशिषु क्रमात् ॥
गोमूत्रं गोमयं क्षीरं दधि सर्पिः फलोदकम् ।
द्रावितं कदलीतोयं दिग्विदिक्ष्विक्षवं रसम् ॥
अष्टार्णेन न्यसेत् सर्वं परमेष्ठ्यादिभिस्त्विह ।
क्रमाद् गव्यानि पञ्चैवं नवद्रव्याभिषेचनम् ॥
परमेष्ठ्यादिभिर्गव्यैः स्नापयेन्मूलतस्त्रिभिः ।
गायत्र्या तत्परिघैर्गन्धोदैस्त्वपि मूलतः ॥
ब्रह्मकुम्भेन पुंसूक्तेनातो देवेत्यनेन वा ।
तुरीयदिवसस्नानमेवैतदिति तद्विदः ॥

इति ॥ ९१ ॥

द्रव्ये तत्त्वमिते षडर्णमनुना स्नानोदकं मध्यतः
पाद्यादीन्युपखण्डमध्यकलशेष्वाचासनेज्यादिषु ।
बाह्ये दिग्विदिगन्तरालनिहितेष्वन्तश्च दिक्कोणगे-
ष्वापूर्य द्रविणानि तत्तदणुभिश्चाभ्यर्चयेच्छार्ङ्गिणि ॥ ९२ ॥

---

१. 'यः स्यु' छ. पाठः
२. 'व्यव्यक्तादिधरान्ततत्त्वगणरूपद्रव्यकाणि न्यसेद ॥,

विमर्शिनी ।

विष्णावेव पञ्चविंशतिद्रव्यस्नानमाह— द्रव्य इति । शार्ङ्गिणि तत्त्वमिते पञ्चविंशतिमिते द्रव्ये, मध्यतो ब्रह्मकलशे, षडर्णमनुना स्नानोदकं निशाशालीत्याद्युक्तम् । बाह्ये मानुषे दिग्विदिगन्तरालनिहितेषु , अन्तर्दैविके दिक्कोणगतेषु च स्थानेषु , आचासनेज्यादिषु कृतपीठपूजासंस्कारादिषु , उपखण्डमध्यकलशेषु उपखण्डानां मध्यस्थेषु कलशेषु पाद्यादीनि द्रविणानि तत्तदणुभिः वक्ष्यमाणमन्त्रैरापूर्य चार्चयेच्च ॥ ९२ ॥

विवरणम् ।

द्रव्ये तत्त्वमित इति । पञ्चविंशतिद्रव्यारम्भः । षडर्णमनुना स्नानोदकं मध्यत इति । प्रधानब्रह्मकलशे षडक्षरेण स्वदेवतामनुयुक्तेन प्राङ्निशाशालीचूर्णेत्याद्युक्तस्नानोदकद्रव्यं विन्यसेत् । पाद्यादीन्युपखण्डमध्यकलशेष्विति । परिखण्डगतब्रह्मकलशेषु पाद्यादीनि द्रव्याणि तत्तदणुभिश्चापूर्येदुपरि सम्बन्धः । कीदृशेष्वित्याह — आचासनेज्यादिष्विति । कृतपीठपूजाकुम्भसंस्कारादिविधानेष्वित्यर्थः । किंरूपकेष्वित्याह — बाह्ये दिग्विदिगन्तरालनिहितेष्विति । बाह्ये मानुषावरणं अन्तश्च दिक्कोणगेष्वित्यन्तर्दैविकम् ॥ ९२ ॥

पाद्यार्घ्याचामगव्यं सघृतदधिपयः क्षौद्रमर्काक्षरेणो-
ष्णोदं क्वाथोदकं मार्जनफलयवरत्नोदलोहोदकौशम् ।
गायत्र्या गन्धपुष्पौपमिकमपि सधात्र्यक्षतं केरवारी-
क्षूत्थोदं तण्डुलोदं न्यसतु तदधिदैवान्तमष्टाक्षरेण ॥ ९३ ॥

विमर्शिनी ।

पाद्यार्घ्याचामगव्यं पाद्यमर्घ्यमाचमनीयं गव्यं च, सघृतदधिपयः घृतं दधि पयश्च, क्षौद्रं मधु, एतान्यष्टौ द्रव्याणि अर्काक्षरेण द्वादशाक्षरमन्त्रेण तदधिदैवान्तं चतुर्थीनमोन्तं तत्तद्देवतानामान्ते भवति यथा तथा न्यसतु । पुनस्तत्रान्तरालेषु उष्णोदमुष्णजलं , क्वाथोदकं कषायं , मार्जनफलयवरत्नोदलोहोदकौशं मार्जनं फलोदं यवोदं रत्नोदं लोहोदं कुशोदं च । गायत्र्या च पुनर्दैविके गन्धपुष्पौपमिकमपि गन्धोदं पुष्पोदम् औपमानं च , सधात्र्यक्षतम् आमलकोदकमक्षतोदकं च , केरवारि नालिकेरोदकम् , इक्षूत्थोदं , तण्डुलोदं च , दिग्विदिक्षु अष्टाक्षरेण तदधिदैवान्तं च ॥ ९३ ॥

१. 'तपूजापी' ख. पाठः. २ 'बाह्ये मा' ख. च. पाठः.

विवरणम् ।

पाद्याद्यष्टसु द्वादशाक्षरं मन्त्रः, उष्णोदादिषु विष्णुगायत्री, गन्धोदादिष्वष्टाक्षरम् । तदधिदैवान्तमिति क्रियाविशेषणम् । सर्वत्र देवतामन्त्रस्तूक्तमन्त्रान्ते योज्य इति भावः । तारेण शेषेष्वप इति । एतदिहापि समानं बोद्धव्यम् ॥ ९३ ॥

द्रव्याणां पुरुषः परः पितृरमावाग्दक्षविष्णूशन-
श्चन्द्रेन्द्रार्ककृतान्तविश्वधनदेरब्रह्मवस्वाह्वयाः ।
स्युः सावित्र्यपि देवता निगदिता गन्धर्ववारीश्वरा-
स्तार्क्ष्यः क्ष्मानिर्ऋती रमाधरनृसिंहाख्यौ हयास्यः क्रमात्[1] ॥ ९४ ॥

विमर्शिनी ।

देवताः पठति — द्रव्याणामिति । परः पुरुषो ब्राह्मे । पुनः पितृरमावाग्दक्षविष्णूशनश्चन्द्रेन्द्रार्ककृतान्तविश्वधनदेरब्रह्मवस्वाह्वयाः पितरः श्रीः सरस्वती दक्षो विष्णुः शुक्रः सोम इन्द्रः सूर्यो यमो विश्वदेवा वैश्रवणो वायुः ब्रह्मा वसवश्च, सावित्र्यपि मानुषे । गन्धर्ववारीश्वराः गन्धर्वा वरुणश्च, तार्क्ष्यो गरुडः, क्ष्मानिर्ऋती पृथिवी निर्ऋतिश्च, रमाधरनृसिंहाख्यौ श्रीधरो नृसिंहश्च, हयास्यो हयग्रीवः दैविके । एते क्रमाद् द्रव्याणां देवता निगदिताः स्युः ॥ ९४ ॥

---

१. 'त् ॥ शालीपिष्टसुवर्णरत्नरजनीचूर्णाह्वयैः स्नानकं
श्यामाकाम्बुजविष्णुपर्ण्यभिधदूर्वाभिः स्मृतं पाद्यकम् ।
राजीपुष्पफलाक्षतैर्यवतिलैर्गन्धैः कुशैश्चार्घ्यकं
तक्कोलेन्दुलवङ्गजातिफलसम्पन्नं तथाचामकम् ॥
प्लाक्षन्यूनपयोद्रुखादिरशमीबिल्वद्विजग्रन्थिभिः
क्वाथं रात्रिसहाशिरीषकुशभद्रः स्यूर्यवार्तिन्यपि ।
षट्कं मार्जनमीरितं सकदलीबिल्वाम्रधात्रीफलं
केरीडाडिमभल्लकं सपनसं प्राहुः फलोदाख्यकम् ॥
मुक्ताविद्रुमपद्मरागपविवैडूर्याह्वयै रत्नकं
तद्वत्काञ्चनरूप्यताम्रकमयस्त्रप्वन्वितं लोहकम् ।
गन्धाः श्रीखण्डजलायसाम्रसुरसेव्याप्तार्तयः पुष्पकं
मल्लीचम्पकजातिनन्दिबकुलस्त्रीकुन्दयूथ्यम्बुजम् ॥
हैमं सुवर्णदरकूर्मरयाश्ममौपमानं जटासुरयुतामलकी सपिष्टा ।
श्रेयाजिते सयवतण्डुलमाषशालिनीवारवैणवमुदीरितमक्षताख्यम् ॥
इदमृषि' क. पाठः.

विवरणम् ।

द्रव्याणामिति । अधिदेवता निगदिता इत्यन्वयः । पुरुषः पर इति ओं परपुरुषाय नम इति मन्त्रः । रमा श्रीः वाक् सरस्वती अर्क आदित्य कृतान्तो यमः विश्वेदेवाः धनदः कुबेरः इरो वायुः । वारीश्वरो वरुण' क्ष्मा भूमिः । रमाधरः श्रीधरः । हयास्यो हयग्रीवः ॥ ९४ ॥

इदमृग्घिरण्यवर्णा आपोहिष्ठप्रजापतेनत्वत् ।
तेजोऽसीति दधिक्राव्णोऽथाप्यायस्वमन्त्रमधुमत्यः ॥ ९५ ॥

विमर्शिनी ।

स्नानमन्त्रान् पठति — इदमिति । इदमृक् 'इदं विष्णुः', 'हिरण्य-वर्णाः शुचयः', 'आपोहिष्ठ', 'प्रजापते न त्वत्,' 'तेजोऽसी'ति ' दधिक्रा-व्णो अकारिषम्', आप्यायस्वमन्त्रमधुमत्यः 'आप्यायस्व'मन्त्रो 'मधु वाता इत्यादि तिस्र ऋचश्च ॥ ९५ ॥

विवरणम् ।

इदमृगिति इदं विष्णुः । मधुमत्यो । मधुवातास्तिस्रः ॥ ९५ ॥

आकृष्णेनाश्वत्थे भद्रंकर्णेभिर्ऋग् गणानां त्वा ।
वायो ब्रह्मोपत्वा देवस्य त्वा च मानुषे मन्त्राः ॥ ९६ ॥

विमर्शिनी ।

'आकृष्णेन रजसा, 'अश्वत्थे वो निषदनं', 'भद्रं कर्णेभिः' ऋक् 'गणानां त्वा,' 'वायवायाहि', 'ब्रह्मजज्ञानम्' 'उप त्वाग्ने,' 'देवस्य त्वा च, एते मानुषे मन्त्राः ॥ ९६ ॥

विवरणम् ।

भद्रं कर्णेभिर्ऋगिति । भद्रं कर्णेभिरितीयमृगित्यर्थः । वायो इति वायवायाहि । ब्रह्म इति ब्रह्मजज्ञानम् ॥ ९६ ॥

विष्णोरराटमिति तत्त्वायामि सुपर्णमित्यतः स्योना ।
शन्नो या दिव्या यासां च परोमात्रयाणवो दैवे ॥ ९७ ॥

विमर्शिनी ।

'विष्णोरराटमि'ति, 'तत् त्वायामि' ' सुपर्णं वस्ते,' 'स्योना पृथिवि,' 'शन्नो देवीः' 'या दिव्या आपः', 'यासां राजा,' 'परो मात्रया' एते दैवे दैविके अणवः ॥ ९७ ॥

विवरणम् ।

* सुवर्णमितीति । सुवर्ण घर्मे' । अत इति पुनरित्यर्थः । शन्न इति । 'शन्न इन्द्राग्नी' ; यासां चेति । 'यासां देवाः' ॥ ९७ ॥

ब्राह्मेऽतो देवा इति मनवः स्नपने स्वपूरणाणुयुताः ।
इति पञ्चविंशतिमितद्रव्यस्नानक्रमो हरौ प्रोक्तः ॥ ९८ ॥

विमर्शिनी ।

ब्राह्मे 'अतो देवा' इति स्नपने स्वपूरणाणुयुताः द्वादशाक्षरादिमन्त्राः स्वस्वदेवतानाममन्त्राश्चावसाने युक्ताः एते मनवः स्युः । इति हरौ पञ्चविंशतिमितद्रव्यस्नानक्रमः पञ्चविंशतिमितैर्द्रव्यैः स्नानक्रमः प्रोक्तः ॥ ९८ ॥

विवरणम् ।

अतो देवा इति सूक्ताभिप्रायेम् । तदुक्तम् — मध्यतो देवसूक्तं त्विति । स्वपूरणाणुयुता इति । स्नानमन्त्रास्तदीशान्ता इति चोक्तम् । इह सिदं विष्णुरित्याद्युक्तमन्त्रं द्वादशाक्षराद्युक्तमन्त्रं पितृप्रभृत्युक्तदेवतामन्त्रं च क्रमेणोक्त्वाभिषेकः । तच्चदणुदैवतमूलतारैरित्येतत् सर्वत्र समानम् । परिकलशेषु तु निर्दैवतैः परिघटैरित्येवं नियम इति ।

त्रिंशत्सूत्रयुते क्षेत्रे मध्ये सनवकं शतम् ।
तत्त्वसंकृतितत्त्वानि दिग्विदिङ्मध्यतो बहिः ॥
स्यात् त्रयोविंशतिपुटेऽप्येवं मध्ये बहिः पुनः ।
दिग्विदिङ्मध्यतास्तिथ्यङ्कार्का वा नवकानि वा ॥

इति । नालीकं नवभिः पदैरित्युक्तरीत्या मध्यतः सनवकं शतं विधाय वीथीं समन्ततो मृष्ट्वा त्रयोविंशतिपुटे दिग्विदिगन्तरालेषु नवकान्येव । त्रिपञ्चाशद्विशतं तिथिनवार्कमिताश्चेत् सैकं त्रिंशतम् । एकोनत्रिंशत्पुटे तु बहिस्तत्त्वसंकृतितत्त्वमिताश्चेत् पञ्चाधिकं पञ्चशतमिति । तत्र च ।

अन्तः स्नानाम्बु पैशाचे तैलं गौलं च केर्यपः ।
शान्त्यपो दिक्षु कोणेषु केवलं मङ्गलोदकम् ॥

---

* 'सुवर्णम्' इति विवरणपाठः. १. अथ क. पाठः.
२. 'यः' ख, ग. पाठः. ३. 'युक्तं मन्त्रं' ख. घ. पाठः. ४. 'शान्त्यपो' ख. ङ. पाठः.

मृन्मूलकादलरसांश्च कुन्तीह भृङ्गादिषु ।
क्रमेण बिम्बशुद्ध्युक्तपल्लवादिचतुष्टयम् ॥
मानुषे दिग्विदिङ्मध्येष्वपि पाद्यादिषोडश ।
गन्धादितण्डुलोदान्तान्यप्याशासु च दैविके ॥
वासुदेवादिशान्त्यादिविष्ण्वाद्या वह्निरापृतौ ।
पाद्यादिषु महाब्राह्मे चोक्तास्त्वेवेह देवताः ॥

इति ।

अन्तः स्नानाम्ब्विति प्रधानब्रह्मकलशे स्नानोदकद्रव्यं न्यसेदित्यर्थः । कोणेष्विति चतुर्ष्वपि कोणेषु मङ्गलोदकमेवेत्यर्थः । मृण्मूलेति पैशाच एवान्तरालेषु चतुर्षु मृदादीनि चतुर्षु च पल्लवादीनीत्यर्थः । बिम्बशुद्धौ चैवमुक्तम् । क्षीरिश्रीबकुलाम्रेत्यादि । पाद्यादिषोडशेति पाद्यार्घ्याचामगन्धमित्याद्युक्तानि कुशोदकान्तानि । दैविक आशाव्याशास्विति दिग्विदिक्षु तैलादीनां वासुदेवाद्या देवताः मङ्गलोदकानां शान्त्याद्याः मृन्मूलादीनां विष्णुमधुसूदनाद्याः ।

यवनीवारसिद्धार्थतुलसीद्वययैवणवैः ।
तिलैः शान्त्युदकं षड्भिश्चतुर्भिर्मङ्गलोदकम् ॥
इन्द्रवल्ल्यङ्कुरं पद्ममेकपद्मञ्च पैप्पलम् ।

मृन्मूलानि गर्भाधानोक्तान्येव । तैलादिचतुष्के 'त्वं विष्णो सुमति'मिति, मङ्गलोदके 'विष्णोर्नुकमिति,' मृन्मूलाद्यष्टसु तु 'मूर्धानं दिवो,' 'या दिव्या' 'या ओषधीः' 'गन्धद्वारां' 'हंसश्शुचिषद्' 'विष्णोरराटं' 'सोमं राजानं' विश्वतश्चक्षुरि'ति मन्त्राः । पाद्यादिषु तु पूर्वोक्ता एवेति ॥ ९८ ॥

अधमाधमपूर्वं स्युस्समोत्तमपर्यन्तमिहाभिषेचनम् ।
नवधा परिचक्षते बुधाः क्रमशः शङ्करशार्ङ्गधन्वनि ॥ ९९ ॥

विमर्शिनी ।

अथ शिवनारायणकलशक्लृप्तिमाह — अधमाधमेति । इह शङ्करशार्ङ्गधन्वनि अधममध्यमोत्तमेषु प्रत्येकमधममध्यमोत्तमयोगादभिषेचनं क्रमशो बुधा नवधा परिचक्षते आहुः ॥ ९९ ॥

विवरणम् ।

अथ वैष्णवमेव हरिहरेऽपि सप्तदशद्रव्यस्नपनमिति तत्प्रकरणमिदानीं प्रस्तौति — अधमाधमपूर्वमिति । नवधेत्यधममध्यमोत्तमेष्वप्यधमादिभेदादिति भावः ॥ ९९ ॥

बाणाद्रिनन्दकृतयः कलशा हरीशे
न्यूनं शतं सनवविंशतिकं शतं च ।
तत्त्वोत्तरद्विशतकं द्विशती सविश्वा
सा सप्तसप्ततियुतो[2] त्रिशती सताना ॥ १०० ॥

विमर्शिनी ।

हरीशे एतत्संख्याः कलशाः स्युः — बाणाद्रिनन्दकृतयः बाणकृतिः पञ्चविंशतिः अद्रिकृतिरेकोनपञ्चाशत् नन्दकृतिरेकाशीतिः इत्यधमत्रयम् । न्यूनं शतं सप्तनवतिः सनवविंशतिकं शतं च नवविंशत्यधिकशतं, तत्त्वोत्तरद्विशतकं पञ्चविंशत्यधिकशतद्वयमिति मध्यमत्रयम् । सविश्वा द्विशती त्रयोदशाधिकशतद्वयं, सप्तसप्ततियुता सा सप्तसप्तत्यधिकशतद्वयं, सताना त्रिशती एकोनपञ्चाशदधिकत्रिशतमिति ( उत्तमत्रयम् ) ॥ १०० ॥

विवरणम् ।

आशुगवर्गः पञ्चविंशतिरित्यादि प्रतिपत्तव्यम् । सा सप्तसप्ततियुतेति द्विशती । अद्रिकृतिस्त्रिशत्येति सहेति शेषः । एकोनपञ्चाशदधिकं त्रिशतमित्यर्थः ॥ १०० ॥

आज्यादिभिर्हरिवदत्र[3] कषायनिष्ठै-
र्द्रव्यैस्तु सप्तदशभिस्त्वधमाभिषेकाः ।
शैलाङ्कशङ्करपुटाहितपञ्चसप्त-
गोवर्गसङ्ख्यकलशैर्विहिताः क्रमेण[4] ॥ १०१ ॥

---

१. 'तत्राशुगादिनववर्गमिता घटाः स्युस्त्र्यूनं' क. पाठः. २. 'तादृक्कृतिस्त्रिशत्याः' क. पाठः. विवरण पाठश्च ३. दि 'कथितनिष्ठहरिप्रदिष्टद्रव्यै' ख. पाठः

४. 'मं ॥ मुक्ताफलं कुलिशविद्रुममब्जपुष्पब्रह्मादिरागशशिसूर्यपदादिकान्तम् ।
वैडूर्यगारुडमतकतुनीलसायस्कान्तं त्रिलोचनहरौ स्फटिकं च रत्नम् ॥
श्रीमातुलुङ्गकुटचामलकाम्रकेरीरम्भाकपित्थबदरीफलपूरमव्ययम् ।।
चोचम्पकं कनकपित्तलकांस्यसीसं ताम्रायसाररजतत्रपुलोहमाहुः ॥
भद्रं भूस्तृणयामिनीकुशाशिरीषं सूर्यवर्तिन्यपि
प्रोहिष्टं पनसं सहा द्वितुलसीगन्धात्मकं मार्जनम् ।
गन्धो रक्तसुरवारिसेव्यघुसृणस्तायः पटीराश्च ये
सामान्याः शशिदेवदारुघननागाश्चेह तौ द्वादश ॥
नीवारशालियवतण्डुलवेणुबीजमाषं सकङ्गुसितसर्षपमक्षताग्रम् ।
श्यामाकवित्वतुलसीकुशगन्धदूर्वा[illegible]प्रतार्तवपयोक्षमत्र पात्रम् ॥

विमर्शिनी ।

अत्र शङ्करनारायणेऽपि हरिवद् विष्णुवद् शैवमङ्कशङ्करपुटाहितपञ्च-सप्तगोवर्गसंख्यकलशैः सप्तनवैकादशपुटेषु कल्पितैः पञ्चविंशत्येकोनपञ्चाशदेकाशीतिकलशैराज्यादिभिः कषायनिष्ठैः सप्तदशभिर्द्रव्यैः न्यधमाभिषेकाः अधमाधमाधममध्यमाधमोत्तमाश्चाभिषेकाः क्रमेण विहिताः ॥ १०१ ॥

सद्योजातकवामवक्त्रबहुरूपेशानपञ्चाक्षरा-
प्यायस्वेति पयोवधीह मधुवातब्रह्महृद्भ्यां मधु ।
अश्वत्थे शिरसा जिनार्णशिखया पुष्पावतीलोचने-
नापोह्यस्त्रमयाणुना पुरुषपङ्क्त्यर्णाणुनेत्यक्षतम् ॥ १०२ ॥

विमर्शिनी ।

तेषु त्रिषु स्नानमन्त्राणामेव विशेष इति तान् पठति — सद्य इति सद्योजातकवामवक्त्रबहुरूपेशानपञ्चाक्षराणि 'सद्योजातं', वामदेवाय', तत्पुरुषाय', 'अघोरेभ्यः', 'ईशानः सर्वविद्यानां', पुनः पञ्चाक्षरम् , आप्यायस्व इति पयोवधि पाद्यार्घ्याचमनीयगव्यघृतदधिक्षीरेषु सप्त मन्त्राः । इह मधु-वातब्रह्महृद्भ्यां 'मधु वाता' इति तिस्रः ऋचः, पञ्चब्रह्महृदयेन च मधु मधुस्नानम् । 'अश्वत्थे वः,' शिरसा पञ्चब्रह्मशिरसा कषायस्नानम् । जिनार्णशिखया 'ओं शङ्कराय विद्महे' इत्याद्यया गायत्र्या ब्रह्मशिखया चोष्णोदकस्नानम् । पुष्पावतीलोचनेन 'पुष्पावतीः' ब्रह्मनेत्रेण च फलोदकस्नानम् ।

---

दधं ( ? ) न्याक्षताढ्यं तिलफलयवकौशैर्वचागन्धपुष्पै-
राज्यार्घ्यं जातितक्कोलशशिकुसुमगन्धश्रियाचामकं स्यात् ।
क्वाथे श्रीखादिरग्रन्थिलपनसशमीनीपशम्याकजम्बू -
क्षीर्याम्रब्रह्ममाधूकमपि च भसिते तत् करीषं सुगन्धम् ॥

राजीनीवारपद्मैर्यवतिलतुलसीब्रह्मभिर्वेणुबीजैः
शान्त्यम्भो मङ्गलाम्भश्चलदलमुखजैन्द्रर्जुनाशोककौशैः
कार्यं पद्मैकपद्मान्वितमथ कठिनीतीरमध्यात् तटाका -
त्वाकुक्षेत्रादिदेवदीवृषकरिकिरिशृङ्गाच्च गृह्णातु मृत्स्नाः ॥

नीवारगोधूमयवप्रियङ्गुश्यामाकशालीतिलवैणवानि
बीजानि मुद्गचणकवन्ति कुन्दफलिन्युपेतं शिवभावि पुष्पम् ॥

सद्यो ' क. पाठः.

१. 'वः पञ्च' ख. पाठः.

'आपो हि ष्ठ' अस्त्रमयाणुना ब्रह्मास्त्रमन्त्रेण च मार्जनस्नानम् । पुरुषपङ्क्त्यर्णाणुना 'तत्पुरुषेण' व्योमव्यापिदशाक्षरेण चाक्षतोदस्नानमिति । आक्षतम् अक्षतोदपर्यन्तस्नानम् ॥ १०२ ॥

विवरणम् ।

पयोवर्श्मीहेति । सप्तानां सप्त मन्त्रा उक्ताः । ब्रह्महृदादिपदैः पञ्चब्रह्मणां हृदयाद्यङ्गान्युक्तानि । जिनार्णो हरिहरगायत्री । पुरुषपङ्क्त्यर्णाणुनेति तत्पुरुषव्योमव्यापिदशार्णयोर्ग्रहणम् । आक्षतमिति मधुकषाययोरुष्णोदकफलमार्जनाक्षतोदकानाञ्चेत्यर्थः ॥ १०२ ॥

तन्महेशदशवर्णतः परं व्योमजैनलिपिपङ्क्तिवर्णतः ।
त्र्यम्बकाणुकवचेन मानकाग्विष्णुजैनलिपिना यवोदकम् ॥ १०३ ॥

विमर्शिनी ।

तन्महेशदशवर्णतः 'तन्महेशाय' इति गायत्र्या व्योमव्यापिदशाक्षरेण च परं रत्नोदकस्नानम् । व्योमजैनलिपिपङ्क्तिवर्णतः व्योमगायत्र्या तद्दशाक्षरेण च लोहोदस्नानम् । त्र्यम्बकाणुकवचेन 'त्र्यम्बकं यजामहे' ब्रह्मकवचेन च गन्धोदकस्नानम् । मानकाक् 'मा नस्तोके', विष्णुजैनलिपिना 'नारायणाय विद्महे' इत्याद्यया गायत्र्या यवोदकम् ॥ १०३ ॥

विवरणम् ।

तन्महेशदशवर्णत इति । तन्महेशगायत्री व्योमव्यापिदशार्णश्च । व्योमजैनलिपिर्व्योमगायत्री । मानकाग्विष्णुजैनलिपिनेति । मानस्तोके विष्णुगायत्री च । *आयवोदकमिति । रत्नलोहगन्धयवोदकानां कोणभाजामित्यर्थः ॥ १०३ ॥

इत्युक्तसद्यादिकमन्त्रकाणां सहस्रशीर्षाद्यजितोक्तमन्त्रान् ।
एकैकमादौ समुदीर्य मन्त्री संस्नापयेच्चाभिहितक्रमेण ॥ १०४ ॥

विमर्शिनी ।

मन्त्री मन्त्रविशेषज्ञः इत्युक्तसद्यादिकमन्त्रकाणां सद्योजातादिसप्तदशविधानामुक्तानां मन्त्राणाम् आदौ सहस्रशीर्षाद्यजितोक्तमन्त्रान् वैष्णवोक्तसहस्रशीर्षादिमन्त्रेषु एकैकं समुदीर्य अभिहितक्रमेण 'मानुषादिक्खण्डघटै' रित्यादिश्लोकोक्तक्रमेण संस्नापयेत् ॥ १०४ ॥

---

* 'आयवोदक'मिति विवरणरीत्या पदच्छेदः ।

१. 'परिजप्य म' ख. पाठः.

विवरणम् ।

मन्त्रीति देवतामन्त्रयोगाद्युक्तम् । अभिहितकर्मणेति । तदुक्तं—'भानुषदिक्खण्डघटै'रित्यादि ॥ १०४ ॥

तिथिसङ्ख्यपुटेऽधमाधमं रचयेच्छैलपुटेन मध्यतः ।
नवकान्यपि दिग्विदिक्षु तत्परितोऽष्टाविति मध्यमाधमम् ॥ १०५॥

विमर्शिनी ।

अथ मध्यमाधमादिकमाह — तिथीति । तिथिसंख्यपुटे पञ्चदशपुटे क्षेत्रे मध्ये शैलपुटेन सप्तपुटेनाधमाधमं रचयेत् । तत्परितो वीथ्या बहिः दिग्विदिक्षु अष्टौ नवकान्यपि रचयेदिति मध्यमाधमं स्यात् ॥ १०५ ॥

विवरणम् ।

मध्यतः शैलपुटेनाधमाधमं रचयेदिति । शैलाक्षशङ्करपुटेत्यत्र शैलपुटाहितपञ्चविंशतिकलशरूपमिति भावः । नवकान्यप्यष्टौ रचयेदिति । त्रित्रिपुटास्तद्वीथयः ॥ १०५ ॥

गुलेक्षुकेरोदकतैलशान्तिमङ्गल्यमृद्भस्मजलानि बाह्ये ।
ब्राह्मेण बीजेन घृतादिकान्ते दिक्कोणदेशेष्वभिपूरयेच्च ॥ १०६ ॥

विमर्शिनी ।

तत्र घृतादिकान्ते आज्योष्णोदकेत्याद्युक्तसप्तदशद्रव्यान्ते तद्बाह्ये दिक्कोणदेशेषु गुलेक्षुकेरोदकतैलशान्तिमङ्गल्यमृद्भस्मजलानि गुलम् इक्षूदकं नालिकेरोदकं तैलं शान्तिजलं मङ्गल्यजलं मृज्जलं भस्मजलं च ब्राह्मेण बीजेन 'कं' इति ब्रह्मबीजेनाभिपूरयेच्च ॥ १०६ ॥

विवरणम् ।

घृतादिकान्त इत्यधमोक्ताज्योष्णोदकादिकषायान्तपूरणे कृते इत्यर्थः ॥ १०६ ॥

त्वं विष्णो इति दिक्षु तथाश्रिषु पुनर्विष्णोर्नुकं शम्भ इ-
त्यश्वक्रान्तकगुदुधृतासि च पुरोयुक्तैः क्रमाद् ब्रह्मभिः ।
केरोदादथ संहतैरथ पृथग्भूतैश्च सद्यान्तिमै-
र्मूलोङ्कारसमन्वितैः स्नापयेत् स्नाते यतोदान्तिमैः ॥ १०७ ॥

१. 'खण्डगतै' ख. पाठः. २. 'नवकान्यष्टो' ख. पाठः. ३. 'धमोक्तराज्यो' ख. पाठः.

विमर्शिनी ।

यवोदान्तिमैः सप्तदशद्रव्यैः स्नाते सति दिक्षु 'त्वं विष्णो सुमतिमि'-ति, अथाग्निषु 'विष्णोर्नुकं' 'शन्नो देवीरि'ति 'अश्वक्रान्त'ऋक्, 'उद्धृतासि वराहेण' इति वैष्णवमन्त्रपुरोयुक्तैः, केरोदावधि गुलेक्षुकेरोदस्नानेषु संहतैः समस्तैः ब्रह्मभिः, अथ पृथग्भूतैः सद्यान्तिमैश्च पञ्चभिर्ब्रह्मभिश्च एतेषामन्ते मूलोद्धारसमन्वितैश्च स्नपितयेत् स्नपितं कुर्यात् ॥ १०७ ॥

विवरणम् ।

त्वं विष्णो इतीति । यवोदान्तिमैः स्नाते देवे सत्येतैरपि तं स्नपितं कुर्यादिति । केरोदावधि संहतैरिति गुलेक्षुनालिकेरोदकेषु पञ्चब्रह्माणि समस्तानि स्युः । तैलादिपञ्चस्वीशानादिसद्योजातान्ततया व्यस्तानि च स्युरित्यर्थः । मूलोद्धारसमन्वितैरिति । सर्वत्र तत्तद्णुदैवतमूलतारैरित्येतदेवोक्तम् । देवतास्थाने च ब्राह्मेण बीजेनेत्येतदेव योज्यम् ॥ १०७ ॥

क्षेत्रे विंशतिसूत्रकेऽधमभवं मध्ये तु चेन्मध्यमं
वीथिं पङ्क्तियुजोत्तमं यदि तु पङ्क्त्यैतद्बहिस्तत्क्रमात् ।
कुर्यात् षोडश पञ्चकानि नवकान्यप्यन्तरा गन्धकं
विन्यस्येद्धरिमूलतोऽन्यदखिलं प्राग्वद् द्वयीतीतरा ॥ १०८ ॥

विमर्शिनी ।

मध्यममध्यमं मध्यमोत्तमं चाह—क्षेत्र इति । विंशतिसूत्रके एकोनविंशतिपुटे क्षेत्रे मध्ये अधमभवं मध्यमं चेत् पङ्क्तियुजा, मध्ये उत्तमं यदि तु पङ्क्त्या च वीथिं कुर्यात् । एतद्बहिस्तत्क्रमात् मध्यमं चेत् षोडश पञ्चकानि, उत्तमं यदि षोडश नवकान्यपि कुर्यात् । अत्रान्तरा अन्तरालेषु हरिमूलतः वैष्णवाष्टाक्षरेण गन्धकं गन्धोदकं विन्यस्येत् । अन्यदखिलम् आज्यादिकं गुलादिकं च प्राग्वत् । इतरा द्वयी मध्यममध्यमं मध्यमोत्तमं चेति स्यात् ॥ १०८ ॥

विवरणम् ।

क्षेत्रे विंशतिसूत्रक इति मध्ये अधममध्यमञ्चेत् परितः पङ्क्तिद्वयेन वीथिं[1] कुर्यात् । मध्येऽधमोत्तमं चेत् परित एकपङ्क्त्या वीथीं[2] कल्पयेत् ।

१. 'वीथीं' घ. पाठः. २. 'वीथिं, ख. पाठः.

तत्रैकोनविंशतिपुटे मध्ये नवपुटाहितपञ्चवर्गसंख्यकलशरूपमधममध्यमं विधाय पङ्क्तिद्वयेन वीथीं मृष्ट्वा बहिर्दिग्विदिगन्तरालखण्डतया षोडश पञ्चकानि कल्पयेत् । एतन्मध्यममध्यमम् । अत्रैव क्षेत्रे मध्ये शङ्करपुटाहितनववर्गसङ्ख्यकलशरूपमधमोत्तमं विधायैकपङ्क्त्या वीथीं कल्पयित्वा बहिः षोडश नवकानि कुर्यादेतन्मध्यमोत्तमम् । अन्तरेति अन्तरालेष्वित्यर्थः । अन्यदखिलं प्राग्वदिति । मध्यमाधमवत् । घृतादिकषायान्तं पूरणे कृते बहिर्गुलेक्षुतोयाद्यष्टभिः दिग्विदिक्षु पूर्वमेव पूरणं कार्यमित्यर्थः । इतरा द्वयीति । एवमन्यद् द्वितयं मध्यमे मध्यममुत्तमञ्चेति भावः ॥ १०८ ॥

क्षेत्रे तत्र त्रयोविंशतिपुट इषुवर्गात्मकद्रव्यक्लृप्त्या
मध्ये कृत्वाष्टयुक्तं शतमथ परितः पञ्चकोदञ्चितानि ।
दिक्कोणाभ्यन्तराण्यारचयतु नवकाढ्यानि वा सत्यकादि-
स्थानस्थानि त्रिकाणि द्विविधविधिसमान्युत्तमार्वाग्द्वयीति ॥१०९॥

विमर्शिनी ।

उत्तमत्रैविध्यमाह — क्षेत्र इति । तत्र त्रयोविंशतिपुटे क्षेत्रे मध्ये इषुवर्गात्मकद्रव्यक्लृप्त्या पञ्चदशपुटैः पञ्चविंशतिद्रव्यक्लृप्त्या मानुषान्तरालगतत्रिकैः सहाष्टोत्तरं शतं कृत्वा, अथ परितो दिक्कोणाभ्यन्तराणि पञ्चकोदञ्चितानि पञ्चकैर्युक्तानि वा नवकाढ्यानि वा आरचयतु । उत्तमाधमं चेत् पञ्चकानि, उत्तममध्यमं चेद् नवकानीति विभागः । सत्यकादिस्थानस्थानि दिगन्तरालयोर्मध्यस्थानि त्रिकाण्यन्यान्यन्तरालानि वारचयतु । तानि तु द्विविधविधिसमानि उत्तमस्याधमे मध्यमे च समानि । उत्तमार्वाग्द्वयी उत्तमत्रितयस्य अधोगतद्वयमिति स्यात् ॥ १०९ ॥

विवरणम् ।

इषुवर्गात्मकद्रव्ययुक्त्येति । नालीकं नवभिः पदैरित्युक्तप्रकारेणेत्यर्थः । सत्यकादिस्थानस्थानीति । अनयोर्द्वयोरपि विधानयोस्सत्यकाद्यपरान्तरालेषु त्रिकाण्यपि कल्पनीयानीत्यर्थः । दिग्गतखण्डानामित एते त्रिकखण्डा भवन्ति तेषां कोणखण्डानाञ्च मध्येष्वितराणि महान्तरालानीति । इत्युत्तमार्वाग्द्वयीति । एवमुत्तमत्रयेऽर्वाचीनं द्वयमधमं मध्यमञ्चेत्यर्थः ॥ १०९॥

---

१. 'व्ययुक्त्या' इति विवरणानुसारी पाठः. २. 'चा' ख. पाठः.

तत्रोत्तमोत्तमविधौ शतमष्टयुक्तं
मध्ये बहिर्दिनकराष्टिदिनेशसङ्ख्याः ।
दिक्कोणमध्यनिहिता जलधिप्रमाणा-
स्तत्सत्यकादिषु च तत्त्वपुटे घटाः स्युः ॥ ११० ॥

विमर्शिनी ।

तत्रोत्तमोत्तमविधौ तत्त्वपुटे पञ्चविंशतिपुटे मध्ये पूर्ववदष्टयुक्तं शतम् । बहिर्दिक्कोणमध्यनिहिताः दिक्कोणान्तरालस्थाः दिनकराष्टिदिनेशसंख्याः क्रमेण द्वादशषोडशद्वादशसंख्याः । तत्सत्यकादिषु दिक्समीपस्थान्तरालेषु जलधिप्रमाणाः चत्वारः कलशाः स्युः ॥ ११० ॥

विवरणम् ।

तत्रोत्तमोत्तमेऽप्युत्तमविधौ पञ्चविंशतिपुटे मध्ये नालीकं नवभिः पदैरित्युक्तमष्टशतं घटाः स्युरित्येवं योजनीयम् ॥ ११० ॥

बलां वचां चातिबलां च शङ्ख-
पुष्पीं च सक्तूदकसिंहिके च ।
व्याघ्रीं कुशोदं च घृतादिकान्ते
ब्रह्माङ्गतोऽन्तर्न्यसतु त्रिकेषु ॥ १११ ॥

विमर्शिनी ।

उत्तमत्रितयेऽपि साधारणं द्रव्यपूरणमाह — बलामित्यादिभिः । अन्तः घृतादिकान्ते घृतादिसप्तद्रव्ये पूरिते सति तत्रान्तरालगतत्रिकेषु ब्रह्माङ्गतः पञ्चब्रह्माङ्गमन्त्रैः बलां (കുറുന്തോട്ടി), वचाम् (വയമ്പ), अतिबलां (ആനക്കുറുന്തോട്ടി) शङ्खपुष्पीं, सैव, पुनः सक्तूदकसिंहिके सक्तूदकं सिंहिकां च, (സിംഹികാ–ചെറുവഴുതിന. വ്യാഘ്രീ – വലിയ വഴുതിന) कुशोदकं च न्यसतु ॥ १११ ॥

विवरणम् ।

इदानीमस्मिन् उत्तमत्रयेऽपि पूरणक्लृप्तिं दर्शयति — बलामिति । घृतादिकान्त इति । प्राग्वदाज्योष्णोदकादिकषायान्तपूरणे कृते सत्र दिक्कोणपूरितपाद्याद्यन्तरालत्रिकेषु बलाद्यष्टौ क्रमेण न्यसेदित्यर्थः । ब्रह्माङ्गत इति । समस्ततयैवाङ्गानि ग्राह्याणि ॥ १११ ॥

दिक्कोणकीर्तितगुलाद्यभिपूरणान्ते
तत्सत्यकादिषु बहिर्न्यसतु क्रमेण ।
अष्टाक्षरेण सलिलानि नदीसमुद्र-
वाप्यन्धुवर्षहिमतीर्थकनिर्झराणाम् ॥ ११२ ॥

विमर्शिनी ।

बहिर्दिक्कोणकीर्तितगुलाद्यभिपूरणान्ते दिक्कोणेषूक्तैर्गुलादिभिः पूरिते सति पूर्वं तत्सत्यकादिषु दिक्समीपस्थान्तरालेषु क्रमेण वैष्णवाष्टाक्षरेण नदीसमुद्रवाप्यन्धुवर्षहिमतीर्थकनिर्झराणाम् । नदीसमुद्रौ स्वयमेव । (വാപി–ഒന്ടംകേണി; അന്ധു–കിണറ്) । वर्षं वर्षजलम् । हिमं हिमजलम् । तीर्थं तीर्थजलम् । (തീർത്ഥം–ആറുവിയാറ്) । एतेषां सलिलानि, तदभावे तद्बुद्ध्या शुद्धजलानि च न्यसतु ॥ ११२ ॥

विवरणम् ।

दिक्कोणकीर्तितेति । पैशाचावरणे दिग्विदिग्गता खण्डेषु मध्यमोक्तवत् गुलेक्षूदकाद्यष्टौ विन्यस्य पुनस्तदन्तरालेषु मध्ये यानि त्रिकाण्यल्पान्तरालानि तेष्वष्टसु क्रमेण नदीजलाद्यष्टौ पूर्वं विन्यसेत् । पुनरन्येषु महान्तरालेषु क्रमेण बीजतोयाद्यष्टौ विन्यसेदिति । अन्धुः कूपः ॥ ११२ ॥

तत्रान्तरिक्षाद्यपरान्तरेषु
स्वमूलतो न्यस्यतु बीजतोयम् ।
स्वर्णं तिलं दौर्व्यकशालितण्डु-
लाम्भः क्षपापुष्पजलं क्रमेण ॥ ११३ ॥

विमर्शिनी ।

तत्रान्तरिक्षाद्यपरान्तरेषु कोणसमीपस्थान्तरालेषु स्वमूलतः बीजतोयं स्वर्णं, तिलं, दौर्व्यकशालितण्डुलाम्भः दूर्वाम्भः शाल्यम्भः तण्डुलाम्भश्च । क्षपापुष्पजलं क्षपाजलं (മഞ്ഞൾ–മഞ്ഞൾ) पुष्पजलं च क्रमेण न्यस्यतु इति ॥ ११३ ॥

विवरणम् ।

अन्तरिक्षाद्यपरान्तरालानि कोणखण्डानमितो रचितानि । स्वबीजत इति । हरिहरबीजं ओं ह्रम्मः इत्येतत् । शालितण्डुलाम्भ इति । शाल्यम्भस्तण्डुलाम्भश्च । क्षपापुष्पजलमिति । हरिद्राजलं पुष्पजलञ्च ॥ ११३ ॥

---

१. 'दु ह्रयेषु म' घ. पाठः. २. 'बीजतो' इति मूलकोशपाठः.

उत्तमत्रितयेऽपीति व्यक्तमुक्तं प्रपूरणम् ।
ततस्तत्स्नपनं कुर्यात् तच्चपूरणमन्त्रतः ॥ ११४ ॥

विमर्शिनी ।

उत्तमत्रितयेऽपि प्रपूरणं व्यक्तं स्फुटम् उक्तम् । ततस्तच्चपूरण-मन्त्रतः स्नानोक्तमन्त्रावशिष्टेषु कलशेषु पूरणमन्त्रैतः स्नपनं कुर्यात् ॥ ११४ ॥

विवरणम् ।

ततस्तत्स्नपनं कुर्यादिति । स्नपने क्रमोऽपि मन्त्रोक्त्यादिसिद्ध एव ॥ ११४ ॥

स्नानेऽस्मिन् नवधोदितेऽपि तदुदग् द्रव्यं समस्तं समं
न्यस्य द्रोणघटे समस्तमनुभिः सम्पूर्य गन्धाम्भसा ।
इष्ट्वा सम्यगनेन सर्वकलशान्ते स्नापयेत् साधको
यज्ञायज्ञनृसूक्तरुद्रसहितव्योमाणुनेशाच्युतें ॥ ११५ ॥

विमर्शिनी ।

शङ्करनारायणकलशस्नाने विशेषकृत्यमाह— स्नान इति । ईशाच्युते नवधा नवप्रकारेणोदितेऽपि स्नाने साधकः सर्वद्रव्याणि सर्वमन्त्रांश्च तत्र साधयितुं समर्थो गुरुः तदुद(ग्भागे[1])तस्य कलशक्षेत्रस्योदग्भागे द्रोण-घटे द्रोणवहे कलशे समस्तमनुभिः तत्तद्द्रव्याणामुक्तैर्मन्त्रैः समस्तं द्रव्यं समं समप्रमाणं न्यस्य गन्धाम्भसा संपूर्य सम्यगिष्ट्वा कलावाहनादिसहितं यथा विधानं संपूज्य अनेन सर्वकलशान्ते यज्ञायज्ञनृसूक्तरुद्रसहितव्योमाणुना यज्ञा यज्ञा वः, नृसूक्तं पुरुषसूक्तं, रुद्रं श्रीरुद्रम् एतैः सहितेन महाव्योमव्या-पिमन्त्रेण स्नापयेत् ॥ ११५ ॥

विवरणम् ।

इहाधमाधमादिनवस्वपि कार्यं द्रोणकलशपूजनस्नपनमिति तदिदानीम-भिधत्ते— स्नानेऽस्मिन् नवधोदितेऽपीति । समस्तमनुभिः समस्तं द्रव्यं समं न्यस्य गन्धाम्भसा सम्पूर्येत्यन्वयः । समं सह । सम्यगिष्ट्वेति । लिपिपङ्कजार्चन

1. 'न्त्र' क. ख. ङ. पाठः.

मूर्तिद्वयावाहनपूजनादिकमुक्तम् । नृसूक्तेति पुरुषसूक्तं, रुद्रेति शतरुद्रीयम् । किञ्च —

आज्यादिसप्तदश गौलमथेक्षुनालि-
केर्यो रसो हरिहरेऽथ च शान्तितोयम् ।
चत्वारि मङ्गलजलान्यपि पञ्चविंश-
त्यैतैः सहस्रचैरमं स्नपनं विदध्यात् ॥
गौलादौ वासुदेवाद्याः शान्त्याद्या मङ्गलोदके ।
ब्रह्मबीजेन चैतेषां पूरणं पूर्ववत् परम् ॥

इति । हरिहरेऽपि पञ्चविंशतिद्रव्यस्नपनं केवलशुद्धोदकान्वितभेदेन वैष्णवोक्तं पञ्चविंशत्यादिसहस्रकलशान्तं स्यादेव । तदा च आज्योष्णोदकादीनि कषायान्तानि सप्तदश द्रव्याणि तावदेतान्युक्तान्येव । पुनश्चत्वारि गौलादीनि चत्वारि त्वेकमेव मङ्गलजलावृत्त्या चत्वारि भवन्ति । तत्राज्यादि नव प्राग्वद् ब्राह्मे सदैवे विन्यस्य पाद्यादिकषायान्तानि मानुषे दिग्विदिक्षु गुलादिचत्वारि तत्र भृशाद्यन्तरालेषु मङ्गलजलमावृत्त्या शोषादिचतुरन्तरालेषु विन्यसेदिति । शान्तिमङ्गलाङ्गानि वैष्णवोक्तान्येव । स्नपनं च पाद्यादिचतुर्भिः घृतेन दध्यादिचतुर्भिः उष्णोदकाद्यष्टभिश्च स्वोक्तवद् विधाय पुनस्त्वं विष्णो पञ्चब्रह्मभिर्गौलादिचतुर्भिः विष्णोर्नुकं पञ्चब्रह्मभिरावृत्त्या मङ्गलोदकेन स्नपयेदिति । द्रोणकलशस्नपनमिहापि समानमिति ॥ ११५ ॥

अत्यष्टिसंख्यैरिषुवर्गसङ्ख्यैर्द्रव्यैरथैतैः क्रमवर्धितैश्च ।
वक्ष्यामि तैलादिकगन्धकर्पूराद्यन्वयेन स्नपनं स्मरारौ ॥ ११६ ॥

विमर्शिनी ।

अथ शिवस्य कलशविधिमाह—अत्यष्टीति । अथ स्मरारौ अत्यष्टिसंख्यैः सप्तदशसंख्यैः, इषुवर्गसंख्यैः पञ्चविंशतिसंख्यैश्च द्रव्यैः, तैलादिकगन्धकर्पूराद्यन्वयेन तैलादियोगेन गन्धयोगेन कर्पूरादियोगेन च क्रमवर्धितैः एतैः पञ्चविंशतिद्रव्यैश्च स्नपनं वक्ष्यामि ॥ ११६ ॥

---

१. 'नालीं' ख. पाठः. २. 'परमं' ङ. पाठः. ३. 'षां पूर्ववत्पूरणं' क. ङ. पाठः. ४. 'श्च चत्वारि' ङ. पाठः. ५. 'न च स्नपयेद् । द्रोण' घ. ङ. पाठः. ६. 'न्वितेन' क. पाठः.

विवरणम् ।

इदानीं शैवं[1] प्रकरणमारभते — अत्यष्टिसंख्यैरिति । सप्तदशद्रव्यैः पञ्चविंशतिद्रव्यैः पुनरेतैः पञ्चविंशतिद्रव्यैरेव तैलादीनां गन्धजलस्य कर्पूरादीनां च द्रव्याणामन्वयवशात् क्रमवर्धितैश्च । स्नपनं वक्ष्यामीति । तैलादिगन्धकर्पूराद्यन्वयभेदतस्त्रैविध्यं भवति । वक्ष्यति हि— 'स्नपनमितीशेऽभ्यधायि पञ्चविधमि'ति ॥ ११६ ॥

अन्तः शान्त्युदकं प्रदक्षिणतयेन्द्रात् पञ्चगव्यं पयो
दध्याज्यं मधु रत्नकं कुशजलं गन्धाम्बु बाह्यावृतौ ।
तद्वत् क्षारगुलासवाज्यदधिदुग्धाच्छोदगर्भाभिधान्
सङ्कल्प्याम्बुनिधीन् दलस्थितघटेष्वापूरयेद् वार्यपि ॥११७॥

विमर्शिनी ।

तत्र सप्तदशद्रव्यस्नाने कलशमाह—अन्तरिति । अन्तर्मध्यकलशे शान्त्युदकं, बाह्यावृतौ मानुषे इन्द्रात् पूर्वस्मादारभ्य प्रदक्षिणतया पञ्चगव्यं पयः दधि आज्यं मधु रत्नकं कुशजलं गन्धाम्बु चापूरयेत् । दलस्थितघटेषु तद्वद् इन्द्रादारभ्य प्रदक्षिणतया क्षारगुलासवाज्यदधिदुग्धाच्छोदगर्भाभिधान् क्षाराद्यभिधानयुक्तानम्बुनिधीन् सङ्कल्प्य वार्यप्यापूरयेत् ॥ ११७ ॥

विवरणम् ।

बाह्यावृतौ इन्द्रात् प्रदक्षिणतयेत्यन्वयः । तद्वदिति । इन्द्रात् प्रदक्षिणतयेत्यर्थः । यथा क्षाराभिधं समुद्रं सङ्कल्प्य जलं ऐन्द्रे[2] [3]न्यसीय दलकलशे पूरयेत् । गुलाभिधं समुद्रं सङ्कल्प्याग्नेये दलकलशे इत्यादीति । आसवो मद्यं, अच्छोदकं स्वादूदकम् । गर्भशब्देन जलावरणमभिधीयते ॥ ११७ ॥

१. 'वप्र' क ख. पाठः. २. 'नक्लृप्ति' ख. घ. ङ. पाठः. ३. 'न्यग्र' ङ. ङ. पाठः

सावित्री शीतांशुरुद्रौ हुताशः
स्कन्दो वित्तेशश्च सप्तर्षयश्च ।
इन्द्रश्च स्युर्देवता बाह्यसंस्था
ईशानो ब्राह्मेऽम्बुधिष्वम्बुधीशः ॥ ११८ ॥

विमर्शिनी ।

तद्देवताः पठति—सावित्रीति । सावित्री , शीतांशुरुद्रौ सोमो रुद्रश्च, हुताशोऽग्निः, स्कन्दः स्वयं, वित्तेशो वैश्रवणः, सप्तर्षयः त एव, इन्द्रः स एव, एता बाह्यसंस्थाः देवताः स्युः । ब्राह्मे कलशे ईशानः । अम्बुधिष्वम्बुधीशो वरुणः ॥ ११८ ॥

विवरणम् ।

शीतांशुः सोमः । हुताशोऽग्निः । वित्तेशः कुबेरः । अम्बुधीशः वरुणः । इहेशानो ब्राह्म इत्यत्र क्रमो न विवक्षितः । वृत्तानुरोधार्थत्वादिति बोद्धव्यम् ॥ ११८ ॥

सद्याद्याः पञ्चगव्ये निजनिजमनवो दुग्धदध्याज्यमाध्वी-
ष्वासत्येनाश्मतोये कुशमयसलिले स्याच्च देवस्यमन्त्रः ।
गन्धद्वारेति गन्धाम्बुनि सलिलनिधिष्वष्टसु स्युः समुद्र-
ज्येष्ठाद्या ब्रह्मकुम्भे स्नपनमनुरथ प्रोदिता व्योमविद्या[1] ॥ ११९ ॥

विमर्शिनी ।

स्नानमन्त्रान् पठति—सद्याद्या इति । अथ पञ्चगव्ये सद्याद्याः पञ्चब्रह्माणो मन्त्राः । दुग्धदध्याज्यमाध्वीषु निजनिजमनवः 'आप्यायस्वे'त्याद्याः । अश्मतोये रत्नोदके 'आसत्येन' । कुशमयसलिले 'देवस्य त्वे'ति । गन्धाम्बुनि 'गन्धद्वारेति' । अष्टसु सलिलनिधिषु 'समुद्रज्येष्ठा'द्याः । ब्रह्मकुम्भे व्योमविद्या स्नपनमनुः प्रोदिता ॥ ११९ ॥

विवरणम् ।

निजनिजमनव इति । आप्यायस्वदधिक्राव्णस्तेजोसिमधुवाता इत्यमी वक्ष्यति च—अश्मतोयं रत्नजलम् । देवस्य मन्त्र इति । देवस्य त्वा सवितुरि-[2]

---

१. 'व्योमविद्या सदापि ॥' ख. पाठः.

२. 'तुरितिम' क . ख. पाठः.

त्यादिमन्त्रस्य ग्रहणम् । मन्त्रक्रमादेव स्नपनक्रमोऽपि लभ्यते । तत्तदणुदैवतमूल-तारैरित्येतत्सर्वत्र योजनीयम् । यदस्माभिर्वैष्णवे चतुर्विधमाधिकमुक्तं तदिहापीष्यत एवेति ॥ ११९ ॥

तत्त्वद्रव्यविधौ शिवेऽर्धशतसंयुक्ते घटानां शते
क्षेत्रेऽत्यष्टिपुटे घटा नव निवेश्या ब्रह्मभागेऽम्बुजे ।
दिक्कोणेषु कृशानुभूमिपरिसङ्ख्याताः क्रमाद् दैविके-
ऽथाशाश्र्यन्तरसंस्थिता नवविकाराग्न्युन्मिता मानुषे ॥१२० ॥

विमर्शिनी ।

अथ शिवे तत्त्वद्रव्याविधौ पञ्चविंशतिद्रव्ये घटानामर्धशतसंयुक्ते पञ्चाशत्कलशसंयुते शते अत्यष्टिपुटे सप्तदशपुटे क्षेत्रे ब्रह्मभागेऽम्बुजे नव घटा निवेश्याः । दैविके दिक्कोणेषु क्रमात् कृशानुभूमिपरिसंख्याताः त्र्येकसंख्याताः, अथ मानुषे आशाश्र्यन्तरसंस्थिताः दिक्कोणान्तरालस्थिताः नवविकाराग्न्यु-न्मिताः नवषोडशत्रिमिताः निवेश्याः ॥ १२० ॥

विवरणम् ।

अथ पञ्चविंशतिद्रव्याविधौ प्रागुक्ते क्षेत्रविरचनेऽस्ति भूयान् विशेष इति तं पूर्वमुपदिशति—तत्त्वद्रव्यविधाविति । अर्धशतसंयुक्ते शत इति । षट्पञ्चाशदुपेतमेकशतमित्येतदपोद्यते । इह मानुषे दिक्ष्वान्तरपाङ्क्तिलोपो अन्तरालेषु आन्तरपदलोपः ॥ १२० ॥

अन्तर्दिग्विदिशोर्बहिश्च कृतिसूत्रेऽभ्यन्तरेऽर्कार्कषड्-
वेदेभा द्विशते घटा नृपयुतेऽङ्काब्धीनभूपाद्विपाः ।
मध्याद्याखिलखण्डकेषु नवशो व्यर्काधिके मानुषे
कोणेष्वेकघटाधिकं शरशतं प्रागुक्तमन्यत् समम् ॥ १२१ ॥

विमर्शिनी ।

केवले द्विशते कृतिसूत्रे विंशतिसूत्रे एकोनविंशतिपुटे अन्तर्बहिश्च दिग्विदिशोः बहिरभ्यन्तरे च क्रमात् पञ्चसु स्थानेषु अर्कार्कषड्वेदेभाः द्वादश द्वादश षट् च चत्वारोऽष्टौ च घटा निवेश्याः । तत्रैव नृपयुते षोड-शाधिके[1] द्विशते पूर्वक्रमेणैव अङ्काब्धीनभूपाद्विपाः षड्चतुर्द्वादश षोडशाष्टौ

१. 'दक्षे' ख. ग. पाठः.

च घटा निवेश्याः । अर्कांधिके चतुर्विंशत्यधिके शतद्वये मध्याद्याखिलख-ण्डकेषु मध्याद्येष्वखिलेषु खण्डेषु नवशो घटा निवेश्याः । नवकानां पञ्चविंश-तिकमित्यर्थः । पुनः शरसतं पञ्चशतं मानुषे भागे, कोणेष्वेकघटाधिकं, पूर्वं षोडशकम् इदानीं सप्तदशकमित्यर्थः । प्रागुक्तमन्यदखिलमत्रापि समम् ॥१२१॥

विवरणम् ।

कृतिसूत्र इति । एकोनविंशतिपुटे । बहिश्चाभ्यन्तर इति दिग्वि-दिशोश्चाभ्यन्तरे चेत्यर्थः । द्विशतेऽर्कार्कषड्वेदेभा इति । इभा अष्टगजाः । नृपयुते द्विशते अङ्गार्ध्यीनभूपद्विपा इति । इनाः सूर्याः । भूपाः षोडश राजानः द्विपा अष्टगजाः । द्व्यर्काधिके चतुर्विंशतियुक्ते द्विशते मध्या-द्येष्वखिलखण्डकेषु नवशः पञ्चविंशतिर्नवकानीत्यर्थः । अत्रापि ब्राह्मे दलकल-शयोगः । मानुषे कोणेष्विति । त्रिःसूत्रसूत्रयुते षटीशरशत इत्यत्र तत्त्वाष्टितत्त्व-प्रमानिति । तत्त्वात्यष्टितत्त्वपरिमिताः स्युरिति भावः । प्रागुक्तमन्यत् सममिति । क्षेत्रे रुद्रपुट इत्यादि यदन्यदुक्तं तत्सर्वमिहापि तथैवेत्यर्थः ।

> गोत्रकलशपदमध्यगतैः स्यात् पञ्चविंशतिपदैररविन्दम् ।
> अष्टपत्रमथ तद् बहिरष्टौ दिक्षु दिक्षु नवकानि विदध्यात् ॥
> दिक्षु विंशदथ कोणगतानि प्रोदितान्यथ च षोडशकानि ।
> द्वादशाष्टकमुदीरितमेषामन्तराल इति पारगमेतत् ॥

इति ॥ १२१ ॥

> ब्राह्मे शान्त्यम्बु दैवे दिशि विदिशि पुनः पाद्यमाचाममर्घ्यं
> गव्याज्यक्षौद्रदुग्धं न्यसतु दधि बहिश्चेक्षुतोयं फलोदम् ।
> काथाम्भः सक्तुगन्धार्तवकनकजलं रत्नमुक्ताप्रवालं
> दिक्कोणाभ्यन्तराले यवतिलजलदूर्वोत्पलं कौशशाली ॥१२२॥

विमर्शिनी ।

पञ्चविंशतिद्रव्याणां पूरणक्रममाह— ब्राह्म इति । शिवे ब्राह्मे कलशे शान्त्यम्बु न्यसतु । दैवे दिशि विदिशि क्रमात् पाद्यमाचाममर्घ्यं, गव्याज्य-क्षौद्रदुग्धं पञ्चगव्यमाज्यं मधु क्षीरं च दधि च न्यसतु । बहिर्दिक्कोणाभ्यन्त-

---

१. 'नः सूर्यः' ख. ग. पाठः.

राले क्रमाद् इक्षुतोयं, फलोदं, क्वाथाम्भः, सक्तुगन्धार्तवकनकजलं सक्तुजलं गन्धजलं पुष्पजलं कनकजलं च, रत्नमुक्ताप्रवालं रत्नजलं मुक्ताजलं विद्रुमजलं च यवतिलजलदूर्वोत्पलं यवजलं तिलजलं दूर्वाजलमुत्पलजलं च, कौशशाली कुशजलं शालीजलं च न्यसतु ॥ १२२ ॥

विवरणम् ।

बहिश्च दिक्कोणाभ्यन्तगत इति योज्यम् । आर्तवेति । पुष्पजलम् ॥ ॥ १२२ ॥

ईशानः पितरो हुताशदयितावाचौ च सावित्र्यथो
वह्निः षण्मुखसोमरुद्रमहिषारीभास्यविघ्नेश्वराः ।
ज्येष्ठाखण्डलविष्णुजैलिबिलयः पाशी दिनेशो मरुत्
प्रेताधीशरमे मही च मुनयो विश्वे च तद्देवताः ॥ १२३ ॥

विमर्शिनी ।

देवताः पठति — ईशान इति । ईशानः, पितरः, हुताशदयिता स्वाहा, वाक् सरस्वती, सावित्री, वह्निरग्निः, षण्मुखसोमरुद्रमहिषारीभास्यविघ्नेश्वराः स्कन्दः सोमः रुद्रो दुर्गा गणपतिर्विघ्नेश्वराश्च, ज्येष्ठाखण्डलविष्णुजैलिबिलयः ज्येष्ठा इन्द्रः विष्णुर्ब्रह्मा वैश्रवणश्च, पाशी वरुणः, दिनेशः सूर्यः, मरुद् वायुः, प्रेताधीशरमे यमः श्रीश्च, मही पृथिवी, मुनयः सप्तर्षयः, विश्वेदेवाश्च, तद्देवताः तेषां द्रव्याणां देवताः ॥ १२३ ॥

---

१. 'पि' क. पाठः. २. 'ताः ॥
शान्त्यम्भो रत्नगन्धोदककनकमृतं पायकं शैलमृत्सा
दूर्वाराजीतिलैराचमनमथ सतक्कोलजातीलवङ्गम् ।
अर्घ्यं दध्यम्बुदुग्धाक्षतयवतिलराजीकुशाग्रैः फलोदं
भव्यं श्रीबीजपूरामलकपनसरम्भाम्रकेरैर्महेशे ॥
प्लक्षोनक्षीरिशैरीषकपनसमधूकाद्विजाम्रैः कषायं
गन्धाः शीताभ्रसेव्याम्बवगरुमुरनदप्ताः प्रसूनाम्बु जाल्या ।
नन्दीयुक्मल्लिकाचम्पकसबकुलसौगन्धिकाब्जैश्च रत्नं
मुक्तावैडूर्यवज्रं मणिमरतकगोमेदपुष्पेन्द्रनीलम् ॥
पाबादीदं' क. पाठः.

विवरणम् ।

हुताशदयिता स्वाहा, महिषारिर्दुर्गा, इभास्यो गणपतिः, आखण्डल इन्द्रः, अजो ब्रह्मा, ऐलिविलिः कुबेरः, पाशी वरुणः, दिनेशः सूर्यः, मरुद्वायुः, प्रेताधीशो यमः, रमा श्रीः, मही भूमिः, विश्वे विश्वेदेवाः, इति ॥ १२३ ॥

पाद्यादीदं विष्णुरापः पुनन्त्वि-
त्यापोहिष्ठेत्यग्निमीळे त्विषे त्वा ।
मध्वाद्याद्ध्यात्ममन्त्रा उप त्वा
मा नस्तोकेऽश्वत्थ इत्याकषायम् ॥ १२४ ॥

स्नानमन्त्रान् पठति - पाद्यादीति । पाद्यादिक्रमेण 'इदं विष्णुः' 'आपः पुनन्तु' इति, 'आपोहिष्ठे'ति, 'अग्निमीळे', 'इषे त्वा', मध्वाद्या-दधि मध्वारभ्य दधिपर्यन्तम् आत्ममन्त्राः स्वस्वमन्त्राः । मधौ 'मधु वाताः' । क्षीरे 'आप्यायस्व' । दध्नि 'दधि क्राव्णः' । पुनः 'उप त्वाग्ने', 'मा नस्तोके', 'अश्वत्थे वः' इत्याकषायं कषायपर्यन्तम् ॥ १२४ ॥

विवरणम् ।

मध्वाद्याद्ध्यात्ममन्त्रा इति स्वस्वमन्त्राः 'मधुवाता' 'आप्यायस्व' 'दधि क्राव्ण' इत्यमी ॥ १२४ ॥

भूयः सुमित्राद्यणुरग्नआया-
द्याद्योऽथ पुष्पावतिमन्त्रकः स्यात् ।
ब्रह्मादिजज्ञानाहिरण्यवर्ण-
मन्त्रौ समुद्रात्मकमन्त्रकोऽथ ॥ १२५ ॥

विमर्शिनी ।

'सुमित्रो नः' 'अग्न आयाहि' इत्याद्यः । अथ पुष्पावतिमन्त्रकः ब्रह्मादिजज्ञानहिरण्यवर्णमन्त्रौ 'ब्रह्मजज्ञानं' 'हिरण्यवर्णाः' । समुद्रात्मक मन्त्रकः 'समुद्रज्येष्ठाः' ॥ १२५ ॥

विवरणम् ।

ब्रह्मादिजज्ञानेति । ब्रह्मजज्ञानम् । समुद्रादिकपूर्वमन्त्रा इति । 'समुद्रं गच्छ स्वाहे'त्यादिमन्त्रः ॥ १२५ ॥

---

१. 'त्यादि' क. ङ. पाठः. २. 'त्या' ख. घ. ङ. पाठः. ३. 'द्रादिक' इति विवरणपाठः.

रक्षोहणमोषधयः पितरःपदपूर्वकः श्रिये त्रिष्टुप् ।
देवस्यत्वाथाशुः शिशान इति चाणवोऽत्र शाल्यन्तम् ॥१२६॥

विमर्शिनी ।

'रक्षोहणं वाजिनं' 'ओषधयः संवदन्ते', पितरःपदपूर्वकः 'पितरः पितामहा' इत्यादि, 'श्रिये जातः[1], त्रिष्टुबिति 'जातवेदसे सुनवाम', 'देवस्य त्वा', 'आशुः शिशानः' इति शाल्यन्तं शालीजलपर्यन्तं मन्त्राः । मध्ये ब्रह्मकलशे व्योममन्त्रकः स्यात् ॥ १२६ ॥

विवरणम् ।

श्रिय इति श्रिये जातः । जातवेदस इति । त्रिष्टुप् प्रसिद्धा । आशुरित्याशुश्शिशानः । मध्ये व्योममन्त्रत इति व्योमव्यापिविद्यादेवता इति योगोऽत्रापि भवति ॥ १२६ ॥

द्रव्ये तत्त्वमितेऽत्र षोडशभिरप्यभ्यङ्गपूर्वैर्युते
कुम्भानां त्रिशती द्विशत्यपि समायुक्ता त्रिपञ्चाशता ।
मृत्सापार्श्वयुगस्थगन्धसलिलेऽस्मिन् कृत्युपेतत्रिश-
त्युक्ता पञ्चशती तु पञ्चसहिता कर्पूरकाद्यन्विते ॥ १२७ ॥

विमर्शिनी ।

पञ्चविंशतिद्रव्ये द्रव्यान्तरयोगमाह — द्रव्य इति । अत्र तत्त्वमिते पञ्चविंशतिके द्रव्ये अभ्यङ्गपूर्वैः षोडशभिर्द्रव्यैर्युते कुम्भानां त्रिशती स्यात् । त्रिपञ्चाशत्समायुक्ता द्विशत्यपि । मृत्सापार्श्वयुगस्थगन्धसलिले मृत्तिकायाः पार्श्वद्वये स्थितैर्गन्धसलिलैर्युते अस्मिन् अभ्यङ्गादिसहितपञ्चविंशतिद्रव्ये कृत्यु-[2]पेतत्रिशती विंशत्यधिकशतत्रयम् । कर्पूरकाद्यन्विते कर्पूरादिभिः सहिते तु तत्र पञ्चसहिता पञ्चशत्युक्ता स्यात् ॥ १२७ ॥

विवरणम् ।

तैलाद्यन्वयेन स्नपनेषु कलशसङ्ख्यास्तावदाह — द्रव्ये तत्त्वमिते-ऽत्रेति । तैलमभ्यङ्गः । मृत्सा[3]पार्श्वयुगस्थगन्धसलिलेऽस्मिन्निति । तैलाद्यन्विते तत्त्वमित द्रव्ये इत्यर्थः । तैलादिषोडशस्वष्टौ मृद एव तासामुभयोः पार्श्वयो-र्गन्धर्द्रव्यन्यास इति । कृत्युपेतत्रिशती विंशतियुतं त्रिशतम् ॥ १२७ ॥

---

१. 'तादियो' घ. पाठः. २. 'ते तत्र' ख. घ. पाठः. ३. 'त्स्ना' ख. पाठः. ४. 'रूप्य' घ. पाठः.

क्षेत्रे तत्र त्रयोविंशतिपुट इषुवर्गात्मकद्रव्ययुक्त्या
मध्ये कृत्वाष्टयुक्तं शतमथ परितः कल्पयेद् वीथिकान्ते ।
दिक्कोणाभ्यन्तरस्थांस्तिथिनवदिनकृत्सम्मितान्नन्दसङ्ख्यान्
वा कुम्भान् प्राग्वदन्तर्बहिरथ कलशान् पूरयेत् तैलपूर्वैः ॥१२८॥

विमर्शिनी ।

तत्र तैलादिके त्रयोविंशतिपुटे क्षेत्रे मध्ये इषुवर्गात्मकद्रव्ययुक्त्या पञ्चविंशतिद्रव्यन्यायेन पञ्चदशपुटैरष्टयुक्तं शतं कृत्वाथ परितो वीथिकान्ते वीथ्या बहिः दिक्कोणाभ्यन्तरस्थान् तिथिनवदिनकृत्सम्मितान् पञ्चदश-नवद्वादशसङ्ख्यान्विशते, त्रिपञ्चाशदुपेतद्विशते चेद् नन्दसङ्ख्यान् स्थानत्र-येऽपि नवकान् कल्पयेत् । वाशब्दः कलशसङ्ख्याविकल्पद्योतनार्थः । तत्रान्तः प्राग्वत् पञ्चविंशतिद्रव्याणि पूरयेत् । अथ बहिस्तैलपूर्वैः कलशान् पूरयेत् ॥ १२८ ॥

विवरणम् ।

इषुवर्गात्मकद्रव्ययुक्त्येति । नालीकं नवभिः पदैरित्युक्तप्रकारेणे-त्यर्थः । वीथिकान्त इति । समन्ताद्वीथीं मृष्ट्वा ततो बहिरित्यर्थः । तिथिनवदिनकृत्सम्मितानिति । त्रिशत्यां नन्दसङ्ख्यान् वेति । त्रिपञ्चाशदुपेत-द्विशत्याम् । प्राग्वदन्तरिति । अष्टयुक्तशतपूरणम् । प्राग्वदेव ब्राह्मे शान्त्यम्बु दैव इत्युक्तरीत्यैव ॥ १२८ ॥

तैलं गुलं केररसाम्भसी च
तीर्थं सरिद्वारि तटाकवारि ।
कूपाम्बु च न्यस्यतु दिग्विदिक्षु
सर्वादिमन्त्रैर्विषमैः समैश्च ॥ १२९ ॥

विमर्शिनी ।

तत्र दिग्विदिक्षु दिक्षु कोणेषु च क्रमात् विषमैः अयुग्मैः समैर्युग्मैश्च सर्वादिमन्त्रैः 'शर्वो रुद्रः' इत्याद्यष्टमूर्तिमन्त्रैः तैलं, गुलं, केररसाम्भसी नालिकेररसं नालिकेराम्भश्च, तीर्थं, सरिद्वारि, तटाकवारि, कूपाम्बु च न्यस्यतु ॥ १२९ ॥

---

१. 'विं म्' ख. ङ. पाठः. २. 'युत' च. पाठः.

विवरणम् ।

केररसाम्भसी चेति । नालिकेरक्षीरं तदीयजलं च । कावेरी नदीतोयम् । विषमैः शर्वपशुपतिभवमहादेवमन्त्रैः । सर्वैश्च [illegible] ॥ १२९ ॥

न्यस्येद् भृशादिष्वचलोक्षभृङ्ग-
वेद्युत्थिताः क्षेत्रखलोत्थिते च ।
नद्यब्धितीर्थप्रभवाश्च मृत्साः
क्रमेण विद्येश्वरनाममन्त्रैः ॥ १३० ॥

विमर्शिनी ।

भृशादिष्वन्तरालेषु विद्येश्वरनाममन्त्रैः अनन्तसूक्ष्मादिभिः अचलोक्षशृङ्गवेद्युत्थिताः पर्वतादुक्षशृङ्गादग्निहोत्रवेद्याश्चोत्थिताः, क्षेत्रखलोत्थिते (ക്ഷേത്രം=വിളഭൂമി ഖലം=കളം) ताभ्यामुत्थिते च, नद्यब्धितीर्थप्रभवाश्च नद्याः समुद्रात् तीर्थतश्चोद्भूता मृत्साः क्रमेण च न्यस्येत् ॥ १३० ॥

विवरणम् ॥

मृत्सा[1] मृद एव । अनन्तसूक्ष्मादयोऽष्टौ विद्येश्वराः ॥ १३० ॥

क्षेत्रे तत्र पृषत्कवर्गपुटभाजि द्वादशोर्ध्वं शतं
मर्त्यांशाश्रिविलुप्तकोष्ठघटयुक्त्याधाय तद्बाह्यतः ।
दिक्षु द्वादश षोडशाश्रिषु चतुष्काण्यन्तराले त्रिशः
कृत्वा न्यस्यतु मूलतोऽभिहितमृत्पार्श्वद्वये गन्धकम् ॥ १३१ ॥

विमर्शिनी ।

तत्र गन्धजलान्विते तैलादिके पृषत्कवर्गपुटभाजि पञ्चविंशतिपुटे क्षेत्रे मर्त्यांशाश्रिविलुप्तकोष्ठघटयुक्त्या अष्टोत्तरशतकलशस्य मनुष्यकोणेषु त्यक्तपदयोगेन द्वादशोर्ध्वं शतमाधाय तद्बाह्यतो दिक्षु द्वादश, आश्रिषु षोडश, अन्तराले त्रिशश्चतुष्काणि त्रीणि त्रीणि चतुष्काणि च कृत्वा अभिहितमृत्पार्श्वद्वये भृशादिस्थानामुक्तानां मृदां पार्श्वद्वये । मूलतो गन्धकं गन्धजलं न्यस्यतु ॥ १३१ ॥

---

१. 'मृत्स्न' क. पाठः.

विवरणम् ।

पृषत्कत्र्यगर्भपुटभाजीति । पृषत्काः शराः । मर्त्यांशेति 'नालीकं नवभिः पदैरित्यत्र हि पङ्क्त्या वीथिमथारचय्येति । वीथिमार्जने मानुषेऽकोणेषु नवकानि प्रकृत्या स्युस्तेष्वेकं पदमष्टकं कोणतश्चेति पुनर्विलुप्यत एव । तदिह न लोपनीयं किन्तु योज्यमेवेति । तद्योगे मध्ये द्वादशाधिकं शतं कलशास्सम्भवन्तीति । चतुष्काण्यन्तराले त्रिशः कृत्वेति । दिग्विदिङ्मध्ये त्रीणि त्रीण्यन्तरालानि प्रत्येकं चतुष्काणि कृत्वेत्यर्थः । मूलतोऽभिहितमृत्पार्श्वद्वये गन्धकमिति । तैलादिवदेवान्तर्बहिरपि सर्वं पूरणं किन्त्वयमेवाधिको भेद इति भावः ॥ १३१ ॥

एकत्रिंशत्पुटेऽन्तर्नवयुतशतमेतद्बहिर्दिग्विदिक्स्थं
चापूर्य प्रोक्तरीत्या नवकमथ सहाभ्यन्तरात्रित्रिकं च ।
एतद्बाह्ये चतुर्दिक्ष्वपि घटनवकान्यद्रिसङ्ख्यानि कृत्वा
कर्पूराद्यैः समापूरयतु मनुयुगद्रव्यकैश्च क्रमेण ॥ १३२ ॥

विमर्शिनी ।

तैलादिभिर्गन्धजलैः कर्पूरादिभिश्चान्विते पञ्चविंशतिद्रव्ये विधिमाह— एकत्रिंशत्पुट इति । एकत्रिंशत्पुटेऽन्तः प्रोक्तक्रमेण नवयुतशतं पञ्चविंशतिद्रव्यैरापूर्य एतद्बहिर्दिग्विदिक्स्थं नवकं सहाभ्यन्तरत्रित्रिकं च कृत्वा दिक्कोणगतानि नवकानि तैलादिभिः, अन्तरालस्थितत्रित्रिकेषु मध्यस्थानि मृद्भिः पार्श्वद्वयस्थानि गन्धोदकैश्च प्रोक्तरीत्यापूर्य पुनरेतद्बाह्ये चतुर्दिक्ष्वपि अद्रिसङ्ख्यानि सम्भूयाष्टाविंशतिसङ्ख्यानि घटनवकानि कृत्वा कर्पूराद्यैर्मनुयुगद्रव्यकैरष्टाविंशतिद्रव्यैश्च क्रमेण समापूरयतु ॥ १३२ ॥

विवरणम् ।

प्रोक्तरीत्या नवकमिति । नन्दसङ्ख्यान् वा कुम्भानित्युक्तनवकानि तैलं गुलमित्याद्युक्तन्यायेनेत्यर्थः । सहाभ्यन्तरत्रित्रिकञ्चेति । यद्यपि चतुष्काण्यन्तराले त्रिशः कृत्वेत्युक्तं तथापि त्रित्रिकमिति निर्देशादेव त्रिकेष्वेवाभिहित-

१. 'त्र पङ्क्त्या' क. ङ. च. पाठः. २. 'पकेषु' क. पाठः ३. 'कं क' क. ख. पाठः. ४. 'णादिग' क. पाठः. ५. 'म्भानित्याद्युक्त' ख. पाठः.

मृत्पार्श्वद्वये गन्धकमिति गन्धोदकपूरणमिति ज्ञेयम् । घटनवकान्यद्रिसङ्ख्यानीति । सम्भूयाष्टाविंशतिर्नवकानि भवन्ति । मनुयुगद्रव्यैश्चेति । अष्टाविंशत्या द्रव्यैः ॥ १३२ ॥

पुंसेन्दुवानरपयोदपटीरवारि
कुष्ठागरून् हरिदिशीशपदादिकेषु ।
वैडूर्यनीलमणिविद्रुमवज्रमुक्ता-
गारुत्मतानि यमराड्दिशि घोरनाम्ना ॥ १३३ ॥

विमर्शिनी ।

तत्र हरिदिशि पूर्वभागे ईशपदादिकेषु ईशकोणगतं नवकमारभ्य प्रादक्षिण्यक्रमेण पुंसा तत्पुरुषेण इन्दुवानरपयोदपटीरवारिकुष्ठागरून् न्यसतु। (ഇന്ദു=കർപ്പൂരം. വാനരം=കണ്ടിവെണ്ണ. പയോദം =മുത്തങ്ങാ. പടീരം=ചന്ദനം. വാരി=ഇരുവേലി. കുഷ്ഠം=കൊട്ടം. അഗരു=അകിൽ) पुनर्यमराड्दिशि दक्षिणभागे घोरनाम्ना अघोरेण वैडूर्यनीलमणिविद्रुमवज्रमुक्तागारुत्मतानि न्यसतु ॥ १३३ ॥

विवरणम् ।

पुंसा तत्पुरुषेण पयोदो मुस्ता वारि हिरिवेरं हरिदिशि प्राग्भागे। हरिरिन्द्रः । ईशपदादिकेष्विति । समस्तु नवकेष्विति शेषः । ईशपदमैशखण्डं आदिर्येषामिति समासः । तद्गुणसंविज्ञानसमासपक्षे ऐशनवके कर्पूरादिपूरणारम्भः, इतरपक्षे तदनन्तरनवक एवेति बोद्धव्यम् । मणीति माणिक्यग्रहणम् । यमराड्दिशि दक्षिणभागे । यस्मिन्नगरुपूरणं तदनन्तरनवके चैतत्पूरणारम्भः ॥ १३३ ॥

न्यग्रोधपिप्पलशिरीषपलाशबिल्व-
प्लक्षाग्रजक्वथितवार्यजतः प्रतीच्याम् ।
गोधूमशालियवमुद्गतिलप्रियङ्गु
निष्पावकान् न्यसतु वामत उत्तरस्याम् ॥ १३४ ॥

---

१. 'समनवके' ङ. पाठः २. 'शानवके' ङ. पाठः

विमर्शिनी ।

प्रतीच्यामजतः सद्योजातेन न्यग्रोधपिप्पलशिरीषपलाशबिल्वप्लक्षा- म्रजकाथेत्यारि न्यग्रोधादीनां सप्तानां कषायजलानि न्यसतु । उत्तरस्यां वामतः वामदेवेन गोधूमशालियवमुद्गतिलप्रियङ्गुनिष्पावकान् क्रमेण न्यसतु ॥ १३४ ॥

विवरणम् ।

क्वथितत्र्यारीति । कषायं, अजतस्सद्योजातेन । वामतः वामदेवेन ॥ १३४ ॥

तैलादित्रिविधोक्तद्रव्याणां पूरणे[1] पुरा प्रोक्ताः ।
मन्त्रा एव स्नपने स्नपनमितीशेऽभ्यधायि पञ्चविधम् ॥ १३५॥

विमर्शिनी ।

तैलादित्रिविधोक्तद्रव्याणां तैलादीनां गन्धजलानां कर्पूरादीनां च पूरणे (पुरा) प्रोक्ता मन्त्रा एव स्नपने चेतीशे पञ्चविधं सप्तदशद्रव्यं पञ्चविंश- तिद्रव्यं तैलादित्रिविधं च स्नपनं[2]मभ्यधायि उक्तम् ॥ १३५ ॥

विवरणम् ।

स्नपन इति । पूरणक्रमेणैव स्नपनं किन्तु महाब्रह्मकलशस्नपन- मन्तत एव । यदुक्तं नानामन्त्रको मध्य इति ॥ १३५ ॥

इषुकृतिपरिसङ्ख्यद्रव्यकैरत्र[3] दुर्गा-
स्नपनमभिदधेऽस्मिन् कुम्भसङ्ख्यादिक्लृप्तिः ।
प्रथमनिगदिता स्यादत्र तु[4] द्रव्यमन्त्र-
क्रमपरिगतमेतद् भेदमात्रं वदामि ॥ १३६ ॥

विमर्शिनी ।

अथ दुर्गास्नपनमाह — इषुकृतीति । अत्र इदानीमहम् इषुकृति- परिसङ्ख्यद्रव्यकैः पञ्चविंशतिद्रव्यैः दुर्गास्नपनमभिदधे वच्मि । अस्मिन् दुर्गास्नपने कुम्भसङ्ख्यादिक्लृप्तिः कुम्भसङ्ख्यापुटसङ्ख्याखण्डविभागादीनां

---

१. 'णे प्रो' ख. पाठः. २. 'नं चाभ्य' क. पाठः. ३. 'रेव दु' ख. पाठः. ४. 'तद् द्रव्य' क. ख. पाठः.

स्थितिः प्रथमनिगदिता स्यात्। अत्र तु द्रव्यमन्त्रक्रमपरिगतं द्रव्यमन्त्रक्रमाणां प्राप्तमेतद्भेदमात्रं वदामि ॥ १३६ ॥

विवरणम् ।

अथ दौर्गं प्रकरणम् । अद्याभिदध इति । इदानीं प्रथमत इति यावत् । सामान्येनैतदेवाचर्यते । न सप्तदशद्रव्यस्नपनमिति प्रथमत एव तदभिधानम् । एतद् भेदमात्रमिति । पञ्चविंशतिस्नपनगतं भेदमात्रम् ॥ १३६ ॥

ब्राह्मे स्याद् गन्धपुष्पौषधिफलमणिहेमाम्बु शर्वादि दैवे
सक्तूदं भस्म माध्वी तिलरसगुलमश्वत्थदूर्वोदरौप्यम् ।
पाद्यार्घ्यं पञ्चगव्यान्यपृथगथ पृथक् कौशकाषायरत्नं
गाङ्गेयं धातुगन्धार्तवफलमपि दिक्कोणमध्येषु वाद्ये[2] ॥ १३७ ॥

विमर्शिनी ।

द्रव्याण्याह —– ब्राह्म इति । ब्राह्मे कलशे गन्धपुष्पौषधिफलमणिहेमाम्बु स्यात् । अत्रौषध्यः कुशदूर्वेत्यादिपठिता एव । मणयः सामान्यानि

---

१. 'मन्त्रं व' क. घ. पाठः.

२. 'द्ये ॥'

मूलं ब्राह्मे पौरुषे दैविके तस्याष्टौ वर्णा मानुषाङ्गानि दिक्षु ।
चत्वार्यस्त्रं कोणदेशे त्विह स्यान्नेत्रं त्वष्टस्वन्तरालेषु भूयः ॥

दूर्वा सिंहीकुशशतगुणा व्याघ्र औषध्य उक्ता
भस्मक्षीरिद्विजतरुकरीषैः स्मृतं चाथ पाद्यम् ।
राजीश्यामाकयुतनवदूर्वाब्जमर्घ्यं कुशाग्रं
राजीक्षीराक्षततिलयुतं गन्धपुष्पोदकं स्यात् ॥

क्वाथं क्षीरिद्रुमखदिरजं रत्नकं वज्रमुक्ता-
वैडूर्यं विद्रुममणिमहानीलनीलाब्जरागम् ।
धातून् श्यामं सरसहरितालाञ्जनं रोचनाख्यं
सौराष्ट्रिं गैरिकमपि ससीसं मनोह्वं तथाहुः ॥

पाटीराख्यायक्षकपिजटारोचनाः सेन्दुचोरा
गन्धा नान्दीवकुलसहितं चम्पकाशोकनागम् ।
मल्लीबाल्यन्वितमभिहितं पुष्पकं जातिकेरी
भव्यप्रोद्यद्बदरकदलीबीजपूरः फलोदम् ॥

पाद्य' क. पाठः.

नवरत्नानि । गन्धपुष्पफलहेमानि प्रसिद्धानि । दैवे शर्वादि ईशानादि प्राद-क्षिण्येन सक्तूदं, भस्म, माध्वी मधु, तिलरसगुलं तिलरसं तैलं गुलं च, अश्वत्थदूर्वोदरौप्यम् अश्वत्थोदं दूर्वोदं राजतोदं च । बाह्ये दिक्कोणमध्येषु दिक्कोणान्तरालेषु क्रमात् पाद्यार्घ्ये पाद्यमर्घ्यं च, अपृथक् पञ्चगव्यानि एकीकृतपञ्चगव्यम् । अथ पृथग्भूतानि गोमूत्रगोमयक्षीरदध्याज्यानि पञ्च-गव्यानि पञ्चकलशेषु, कौशकाषायरत्नं कौशं कषायं रत्नोदं च, गाङ्गेयं सुवर्णं तत्सहितं जलं, धातुगन्धार्तवफलमपि धातूदं गन्धजलं पुष्पजलं फलोदं च स्युः ॥ १३७ ॥

विवरणम् ।

गन्धपुष्पौषधीति । यद्यपि गन्धार्तवेति गन्धादीनां पुरा गणितानां विनियोगस्तथापीहापि तेषामेव परिग्रह इष्यते । तदुक्तम् —

गन्धाष्टकमिदं प्रोक्तं ब्राह्मे गन्धोदके तथा ।

इत्यादि । शर्वादिदैव इति । प्रादक्षिण्येनेति भावः । माध्वी मधु, तिलरसो-ऽभ्यङ्गः । बाह्ये दिक्कोणमध्येषु पाद्यार्घ्यादीनि पञ्चगव्यान्यपृथगिति सम-स्ततया । पृथगिति । गोमूत्रगोमयादीनि पृथग्द्रव्यतया । गाङ्गेयं सुवर्णम् । आर्तवं पुष्पम् ॥ १३७ ॥

*मूलं ब्राह्मे पूरणे दैविके त-
स्याष्टौ वर्णा मानुषाङ्गानि दिक्षु ।
चत्वार्यस्त्रं कोणदेशे त्विह स्या
न्नेत्रं त्वष्टस्वन्तरालेषु भूयः ॥ १३८ ॥

विवरणम् ।

तस्याष्टौ वर्णा इति । प्रणवरुद्धा नत्यन्ताः स्युः ॥ १३८ ॥

पाद्य इदं विष्णुरणुः पर आपोह्यग्निमील इति गव्ये ।
दध्यन्तेषु निजार्हाश्चाज्य इषे त्वा कुशे तु तत्सवितुः ॥ १३९ ॥

---

* श्लोकस्यास्य विमर्शिनीव्याख्या न दृश्यते ।

विमर्शिनी ।

स्नानमन्त्रान् स्नानक्रमेण सहाह—पाद्य इति । पाद्ये 'इदं विष्णु'-रणुः । परे अर्घ्ये 'अपोहिष्ठ' । गव्ये 'अग्निमील' इति । दध्यन्तेषु निजार्हाः 'तत्सवितुः' 'गन्धद्वारां' 'आप्यायस्व' 'दधि क्राव्ण' इति । आज्ये 'इषे त्वा' । कुशे 'तत्सवितुः' ॥ १३९ ॥

विवरणम् ।

दध्यन्तेषु निजार्हा इति । तत्सवितुर्गन्धद्वारामाप्यायस्व दधिक्राव्णं इत्यमी मन्त्राः ॥ १३९ ॥

**अश्वत्थेवस्त्र्यम्बकहिरण्यगर्भस्ततः परं क्रमशः ।**
**मानस्तोके शन्नः पुष्पावत्येव पुष्पफलजलयोः ॥ १४० ॥**

विमर्शिनी ।

ततः परं क्रमशः कषायरत्नोदसुवर्णोदधातूदगन्धजलेषु पञ्चसु 'अश्वत्थ वः', 'त्र्यम्बकं यजामहे', 'हिरण्यगर्भः सम', 'मानस्तोके', 'शन्नो देवीः' इति । पुष्पफलजलयोः पुष्पजले फलजले च 'पुष्पावतीरि'त्येव ॥ १४० ॥

विवरणम् ।

शन्न इति शन्न इन्द्राग्नी ॥ १४० ॥

**सक्तूदके सुमित्रा भूतिश्रीर्भस्मके मधौ स्वार्हः ।**
**तैले विश्वानिन इति गौलेऽग्नेत्वं च पैप्पलेऽश्वत्थे ॥ १४१ ॥**

विमर्शिनी ।

पुनरन्तर्गतसक्तूदके 'सुमित्रा नः' । भस्मके भस्मजले 'भूतिश्रीः' । मधौ स्वार्हः 'मधु वाता' इत्यर्थः । तैले 'विश्वानि नः' । गौले 'अग्ने त्वं' पैप्पले अश्वत्थोदके 'अश्वत्थे वः' ॥ १४१ ॥

विवरणम् ।

भूतिश्रीर्भस्मक इति । कर्मशेषपटले भविष्यति । मधौ स्वार्हो मन्त्र इति । मधुवाताः ॥ १४१ ॥

---

१. 'ले अश्वत्थे वः' क. पाठः.

शन्नो देवीरग्ने त्वं परयोर्मध्यमे तु चित्तिः स्रुक् ।
त्रिष्टुभ एकैकार्णैः परिखण्डे मध्यमेऽन्वितं शेषैः ॥ १४२ ॥

विमर्शिनी ।

परयोः दूर्वोदरजतोदकयोः 'शन्नो देवीः' 'अग्ने त्वं' इति क्रमेण । मध्यमे ब्रह्मकलशे तु 'चित्तिः स्रुक् चित्तमाज्यम्' । परिखण्डे परिखण्डद्रव्येषु क्रमेण त्रिष्टुभो 'जातवेदस' इत्यस्य एकैकार्णैः सह मध्यमे शेषैरक्षरैरन्वितं स्नानं स्यात् ॥ १४२ ॥

विवरणम् ।

मध्यमे तु 'चित्तिः स्रुगि'ति । महाब्रह्मकलशे । त्रिष्टुभ एकैकार्णैरिति । जातेत्यादि सन इत्यन्तैः । मध्यमेऽन्वितं शेषैरिति । पर्षदित्यादित्य-निरित्यन्तैर्वर्णैः । वर्णानां चैषामुक्तमन्त्रेषु पुरस्ताद् योगः ।

'पाद्यादीनामिमे मन्त्राः जातिवर्णैः प्रदीपिताः ।'

इत्येवं निर्देशादेतदवगमः । तत्तदणुदेवतमूलतारैरित्येतदिहापि भवति । देवतास्थाने तु मूलं ब्राह्मे पूरण इत्याद्युक्तमन्त्रयोगः । स्वपूरणाणुयुता इति चोक्तमिति ॥ १४२ ॥

अत्यष्टिसङ्ख्यद्रविणाभिषेके
सद्रव्यकुम्भक्रममन्त्रक्लृप्तिः ।
स्याद् विष्णुभागाभिहिता कुमार्या-
मितीरितः स्नानविधिर्द्विधात्र ॥ १४३ ॥

विमर्शिनी ।

कुमार्याम् अत्यष्टिसङ्ख्यद्राविणाभिषेके सप्तदशद्रव्यस्नाने सद्रव्यकुम्भ-क्रममन्त्रक्लृप्तिः द्रव्यकुम्भक्रममन्त्राणां स्थितिर्विष्णुभागाभिहिता स्यात् । इत्यत्र द्विधा स्नानविधिरीरितः ॥ १४३ ॥

विवरणम् ।

सप्तदशद्रव्यस्नपनमपि दर्शयति — अत्यष्टिसङ्ख्येति । ब्राह्मे विष्णुस्थाने दुर्गैव देवता स्नपनमन्त्रेषु च निजमूलयोग इत्येव भेद इति ॥ १४३ ॥

---

१. दुर्गाभिः परिकलशैरिहान्तरा ब्रह्मयक्ष्ममनुना च । स्नापयतु साधु विद्वान् दुर्गास्नपनं समासतः प्रोक्तम् ॥ इत्' ख. पाठः.

उत्तमत्रितयमुत्तमद्वयं मध्यमद्वयमथाधमद्वयम्।
बाहुलेयकलशाभिषेचनं प्राहुरत्र नवधा बुधोत्तमाः ॥ १४२ ॥

विमर्शिनी।

अथ स्कन्दस्य कलशविधिमाह — उत्तमेति। बुधोत्तमाः उत्तमादिस्थाने फलविशेषज्ञा आचार्याः, अत्र स्थाने, उत्तमत्रितयम् उत्तमकलशानां त्रितयम्, उत्तमद्वयं मध्यमाधमयोरुत्तमद्वयं, मध्यमद्वयं तयोर्मध्यमद्वयम्, अथाधमद्वयं तयोरधमद्वयं चेति बाहुलेयकलशाभिषेचनं नवधा प्राहुः ॥१४२॥

विवरणम्।

स्कान्दभागं[1] प्रस्तौति — उत्तमत्रितयमिति। बाहुलेयः स्कन्दः। बुधोत्तमा इति। स्नपनान्तरमप्यस्तीति सूचितम्। यदुक्तम् — द्रव्यैस्तु पञ्चविंशद्भिरित्यादि ॥ १४२ ॥

शरहतशतसङ्ख्यैरेतदर्धाङ्घ्रिसङ्ख्यै-
र्नवयुतशतसङ्ख्यैरद्रिमत्या नवत्या।
नवकृतिशरषष्टिभ्यां घटैस्तत्प्रभेदा
नव गिरिशरवर्गाभ्यां च सद्रव्यभेदाः ॥ १४३ ॥

विमर्शिनी।

शरहतशतसङ्ख्यैः पञ्चगुणितशतसङ्ख्यैः, एतदर्धाङ्घ्रिसङ्ख्यैः एतदर्धसङ्ख्यैः पञ्चाशदधिकशतद्वयेन, एतदङ्घ्रिसङ्ख्यैः पञ्चविंशत्याधिकशतेन, पुनः नवयुतशतसङ्ख्यैः, अद्रिमत्या नवत्या सप्तयुतनवत्या, नवकृतिशरषष्टिभ्यां नवकृतिरेकाशीतिः शरषष्टिः पञ्चाधिकषष्टिः, गिरिशरवर्गाभ्यां च गिरिवर्ग एकोनपञ्चाशत् शरवर्गः पञ्चविंशतिः इति घटैः हेतुभिः सद्रव्यभेदा द्रव्यभेदसहिताः तत्प्रभेदाः स्नानभेदाः नव स्युः ॥ १४३ ॥

विवरणम्।

शरहतशतसङ्ख्यैरिति। पञ्चशतं तदर्धं[2] पञ्चाशद्युतं द्विशतं तत्पादश्च पञ्चविंशतियुतं शतम्। अद्रिमत्या नवत्येति। सप्तनवतिः। नवकृतिशरषष्टिभ्यामित्येकाशीतिः पञ्चषष्टिश्च। सद्रव्यभेदास्तत्प्रभेदा[3] नवेत्यन्वयः। तत्प्रभेदाः स्कन्दस्नपनस्य प्रभेदाः ॥ १४३ ॥

---

१. 'स्कान्दं भा' ङ. पाठः. २. 'तं तं' घ. पाठः. ३. 'तद्द्रव्य' ङ. पाठः.

1556.

त्रिंशत्सूत्रयुते घटीशरशते क्षेत्रेऽभितो वीथिकाः
कृत्वा पञ्चपुटान्तरेऽभिक्रातिकोष्ठेष्वेषु खण्डेष्वथ ।
एकैकोपपदार्पणेन रचयेन्मर्त्यांशकोणानि षड्-
विंशत्या कलशैर्युतानि नवकाढ्यान्यन्तरालानि च ॥ १४४ ॥

विमर्शिनी ।

घटीशरशते घटानां पञ्चशते त्रिंशत्सूत्रयुते क्षेत्रे पञ्चपुटान्तरे पञ्च-पञ्चपुटान्तरे अभितः समन्ताद् वीथिकाः कृत्वा अथाभिक्रान्तिकोष्ठेषु पञ्च-विंशतिकोष्ठेषु खण्डेषु स्थितेषु मर्त्यांशकोणानि एकैकोपपदार्पणेन तेषां बहिः कोणेषु एकैकपदयोगेन षड्विंशत्या कलशैर्युतानि रचयेत् । तत्रान्तरालानि नवकाढ्यानि च रचयेत् । अन्यानि सर्वखण्डान्यपि पञ्चविंशतिकान्येव ॥ ॥ १४४ ॥

विवरणम् ।

अभित इति । दक्षिणोदग्भागयोः प्राक्पश्चिमभागयोश्च । एकैको-पपदार्पणेनेति । यथाग्नेयखण्डे बहिरग्निदिश्येकं पदमर्पयेत् । नैर्ऋतखण्डे तु बहिर्निर्ऋतिदिशीत्यादि । नवकाढ्यान्यन्तरालानि चेति । अष्टस्वप्यन्त-रालखण्डेषु परित एकैकपङ्क्तिलोपः ॥ १४४ ॥

ब्राह्मे दैविकदिग्विदिक्ष्वपि तथा गव्याज्यदुग्धं दधि
क्षौद्रं तैलगुलेक्षुतीर्थसलिलं चापूरयेन्मूलतः ।
तत्रत्योपघटाष्टकान्युदितक्लृप्त्या रत्नकाद्यष्टके
ष्वेकैकद्रविणेन शुद्धसलिलैः शेषानुदित्यान्तिमान् ॥ १४५ ॥

विमर्शिनी ।

ब्राह्मे कलशे दैविकादिग्विदिक्ष्वपि तथा गव्याज्यदुग्धं पञ्चगव्य-माज्यं क्षीरं च, दधि, क्षौद्रं, तैलगुलेक्षुतीर्थसलिलं तैलं गुलमिक्षुसलिलं तीर्थसलिलं च मूलत आपूरयेत् । तत्रत्योपघटाष्टकानि नवसु स्थानेष्वपि तत्तन्मध्यकुम्भानन्तरगतान्यष्टकानि उदितक्लृप्त्या सञ्जातद्रव्येषूक्तया क्लृप्त्या रत्नकाद्यष्टकेषु मध्ये एकैकद्रविणेनापूरयेत् । शेषान् तद्बाह्यगतषोडशषोडश-कलशान् उदित्यन्तिमान् दिक्कोणानन्तरमीशेन्द्रयोर्मध्यगतान्तरालमारभ्य सोमे-

1. 'त्र तद्वीथि' ख. पाठः. 2. 'द्यवल', 3. 'णान्त' ख. पाठः.

शयोर्मध्यगतान्तरालपर्यन्तान् कलशान् शुद्धसलिलैरापूरयेत् । स्कन्देऽन्यत्रापि सर्वत्रायमेव क्रमः ॥ १४५ ॥

विवरणम् ।

तत्रत्योपघटाष्टकानीति । ब्राह्मादिनवखण्डेष्वपि ब्रह्मकलशानामेवं मापूरितानां चतुर्दिग्भागगतानुपघटान् प्रतिखण्डमष्टाष्टसङ्ख्यानित्यर्थः । उदि- तक्लृप्त्येति । आग्रत्नान्याहुरिहाञ्जरागामित्याद्युक्तक्रमानियमेनेत्यर्थः । शुद्ध- सलिलैरिति । यथा ब्राह्मखण्डे परिघटानष्टौ पद्मरागोदकादिभिरापूर्य तेषां बाह्यानपि षोडश परिघटान् दिग्विदिग्जयन्ताद्युदित्यन्तक्रमेण शुद्धजलैरापूर- येत् । एवं दैविकदिग्विदिक्खण्डेष्वपीति ॥ १४५ ॥

रत्नानां बीजानां क्वाथानामष्टकानि पुष्पाणाम् ।
फलगन्धलोहकानामथौषधीनामपामपीति नव ॥ १४६ ॥

विमर्शिनी ।

रत्नाद्यष्टकानां क्रममाह — रत्नानामिति । रत्नानां बीजानां क्वाथानां पुष्पाणां फलगन्धलोहकानां, फलानां गन्धानां लोहानां च ओषधीनामपामपीति नवविधान्यष्टकानि स्युः ॥ १४६ ॥

सागरभवं सरिज्जं निर्झरवापीतटाकजं च जलम् ।
ह्रदकूपसेतुजातं जलाष्टकेऽन्यानि पूर्वगणितानि ॥ १४७ ॥

विमर्शिनी ।

जलाष्टकस्य पूर्वतोऽनुक्तत्वात् सम्प्रत्याह — सागरभवमिति । जलाष्टके सागरभवं जलं, सरिज्जं नद्युद्भवं, निर्झरवापीतटाकजम् (നിര്‍ഝരം = അരുവി. വാപി = നെടുംകേണി. തടാകം = കുളം) ह्रदकूपसेतुजातम् (ഹ്രദം = കയം. കൂപം = കിണറ്. സേതു = ചിറ) अन्यानि रत्नादीनि पूर्वगणितानि सङ्घातकथने गणितानि ॥ १४७ ॥

धात्रीं रात्रीं पिष्टमाचाममर्घ्यं
कौशं काशं दौर्न्यकं सेव्यकं च ।

---

१. 'वं पूरि' छ. पाठः.

न्यस्येद् दिक्कोणक्रमान्मर्त्यभागे
पर्जन्यादिष्वेकशोऽथाङ्कुरांश्च ॥ १४८ ॥

विमर्शिनी ।

पुनर्मर्त्यभागे दिक्कोणक्रमात् (ധാത്രീ = നെല്ലിക്കാ. രാത്രി-പിഷ്ടം = മഞ്ഞപ്പൊടി) आचामम्, अर्घ्यं, कौशं, कुशजलम्, (കാശം = ആററുദർഭ സേവ്യകം = രാമച്ചം ദൈവ്യകം = കറുക. एतानि न्यस्येत् । अत्र पर्जन्यादिष्वन्तरालेष्वङ्कुरांश्च एकैकशो न्यस्येत ॥ १४८ ॥

विवरणम् ।

पर्जन्याद्यन्तरालेष्वङ्कुरानेकैकशो न्यसेत् ॥ १४८ ॥

न्यग्रोधोदुम्बराश्वत्थप्लक्षबिल्वपलाशजाः ।
शम्यपामार्गजाश्चैव क्रमादष्टाङ्कुराः स्मृताः ॥ १४९ ॥

विमर्शिनी ।

अङ्कुरान् कथयति — न्यग्रोधेति । न्यग्रोधादयः क्रमादष्टाङ्कुराः स्मृताः । न्यग्रोधादयः प्रसिद्धा एव ॥ १४९ ॥

---

1. 'श्च
रत्नाष्टकं वारिजरागनीलमुक्तेन्दुकान्तान् कुरुविन्दकाचौ ।
प्रवालवज्रे च यवांस्तिलांश्च गोधूमसिद्धार्थकशालिमुद्गान् ॥
माषं सनीवारकमष्टबीजान्याहुर्वटोदुम्बरपिप्पलाख्याः ।
प्लक्षाम्रविप्रद्रुशिरीषमाधूकाख्याः कषायेऽष्ट महीरुहाः स्युः ॥
उत्पलकह्लाराम्बुजकुमुदं सौगन्धिकं कशेरुयुतम् ।
उत्पलयुगमपि पुष्पाण्यष्टालाभेऽत्र रक्तकरवीरम् ॥
स्यान्मातुलङ्गसहकारसबिल्वजांबूचोचाख्यडाडिमससव्यककादलानि ।
अष्टौ फलान्यसगयरशशिकुष्ठकोशपाथो मुरं मलयजं विदुरष्टगन्धम् ॥
लोहानि क्रमशः स्मृतानि शरजे चामीकरं रूप्यकं
ताम्रायस्त्रपुसीसकांस्यकसमेतं पित्तलं चाष्टमम् ।
ओषध्योऽत्र सुवर्चलामलनचा ब्राह्मी तथा शङ्खपु-
ष्प्युद्दिष्टाः सशतावरी सहसहाक्रान्तिश्च लक्ष्मीरपि ॥
न्यग्रोधोडुम्बरचलदलप्लक्षबिल्वाद्रिजाख्याः
सम्प्रोक्ताः स्युः शरभुवि शमीमार्गजौ चाङ्कुरार्हाः ।
वेदीक्षेत्रभमृषगिरिवल्मीकनद्यब्धिजाः स्यु-
र्मृत्स्नाश्चाष्टौ विधिवदिह पाचामपाद्यार्घ्यकार्यम् ॥
न्यग्रो क. पाठः.

विवरणम् ।

कतमानङ्कुरानित्याह — न्यग्रोधेति । धात्र्यादिषु परिकलशपूरणं प्राक्प्रायुक्तन्यायेन द्रष्टव्यम् । कोणखण्डेषु तु षड्विंशकलशपूरणमितरावसाने भवत् ॥ १४९ ॥

भूभृद्वर्गयुतद्विशत्यथ घटानां चेदिह क्षेत्रकं
कृत्वा सप्तदशप्रभेदितपुटं वीथीं च पञ्चान्तरे ।
त्रिंशत्कानि शिलीमुखोपपदसंयुक्त्या बहिर्दिक्ष्वथो
कोणेषूत्कृतिसङ्ख्यकानि रचयेदेकैककोष्ठान्वयात् ॥१५०॥

विमर्शिनी ।

अथ घटानां भूभृद्वर्गयुतद्विशती एकोनपञ्चाशदधिकशतद्वयं चेत् इह सप्तदशप्रभेदितपुटं क्षेत्रकं पञ्चपुटान्तरे वीथीं च कृत्वा बहिर्दिक्षु शिलीमुखोपपदसंयुक्त्या दिक्स्थितानां पञ्चविंशतिकानां बहिर्भागे पञ्चपञ्चोपपदयोगेन त्रिंशत्कानि रचयेत् । अथो कोणेषु एकैककोष्ठान्वयात् एकैककोष्ठयोगेन उत्कृतिसंख्यकानि षड्विंशतिसंख्यानि च रचयेत् ॥ १५० ॥

विवरणम् ।

भूभृद्वर्गयुतद्विशत्यथेति । भूभृतः पर्वताः शिलीमुखोपपदसंयुक्त्येति । शिलीमुखाः शराः बहिर्दिक्खण्डेषु प्रकृत्या पञ्चविंशतिः पदानि तेषु स्वस्वबहिर्भागे पञ्चपदां पङ्क्तिं रचयेद् योजयेत् । तदा तानि त्रिंशत्पदयुक्तानि स्युः । कोणखण्डेष्वपि स्वस्वबाह्यकोणे एकैकं पदं रचयेद् योजयेद् तदा तानि षड्विंशतिपदयुक्तानि स्युरिति ॥ १५० ॥

गव्यादितीर्थसलिलावधिभिः सरोज-
रागादिसेतुसलिलावधिभिश्च तद्वत् ।
आपूर्य चामलकपूर्वकदौर्व्यकान्तै-
र्दिक्कोणगानुपघटान् परिपूरयेत ॥ १५१ ॥

---

१. 'णे ख' ख. पाठः. २. 'शतिक्' ख. पाठः ३. 'र्भागे प' ख. पाठः ४. 'तिप' ङ. पाठः

विमर्शिनी ।

अत्र गव्यादितीर्थसलिलावधिभिः पूर्वं ब्राह्मे दैविकेषूक्तैर्[1]गव्यादितीर्थजलान्तैर्नवभिर्द्रव्यैस्तेषु मध्यस्थकलशानापूर्य तद्वत् पूर्वक्रमेणैव सरोजरागादिसेतुसलिलावधिभिश्च रत्नाद्यष्टकेषु रत्नेषु पद्मरागादिभिर्जलाष्टके[2] तु सेतुसलिलान्तैर्द्रव्यैरेकैकेन पर्वोक्तानुपघटांश्चापूर्य आमलकपूर्वकदौर्व्यकान्तैः 'धात्रीरात्री पिष्टमि'त्याद्युक्तैरष्टभिर्द्रव्यैः दिक्कोणगान् उपघटान् दिक्कोणेषु योजितान् पञ्चकानेककांश्च परिपूरयेत ॥ १५१ ॥

विवरणम् ।

गव्यादितीर्थसलिलावधिभिरिति । तथोक्तम् ब्राह्मे दैविकदिग्विदिक्ष्वपि[3] तथा गव्याज्येत्यादि । सरोजरागादिसेतुसलिलावधिभिरिति । रत्नानां बीजानामित्याद्युक्तम् । रत्नेषु पद्मरागोदकेन पूरणारम्भः । जलेषु सेतुजलेन तदवसानमित्येवमभिधानम् । तद्वदिति पूर्वोक्तवत् । आमलकपूर्वकेति धात्रीं रात्रिपिष्टमित्याद्यष्टभिः । दिग्गतेषु शिलीमुखोपपदसंयुक्तेत्युक्तेषु मध्यमपदे प्रधानकलशः कोणगतेषु[4] तान्येव पदानि प्रधानकलशपदानीति ज्ञेयम् ॥ १५१ ॥

दिक्कोणगान्युपपदानि सकोणखण्डा
न्यत्रापहाय सहतत्त्वशते घटानाम् ।
गव्यादिमध्ववधिकैरथ पद्मराग-
पूर्वैश्च पूरयतु तान् कदलीफलान्तैः ॥ १५२ ॥

विमर्शिनी ।

अथ घटानां सहतत्त्वशते पञ्चविंशत्यधिकशतेऽपि अत्र सप्तदशपुटे दिक्कोणगानि योजितान्युपपदानि सकोणखण्डानि कोणगतानि चत्वारि खण्डानि च अपहाय त्यक्त्वा अत्र गव्यादिमध्ववधिकैः मध्ये दिक्षु च स्थितैः पञ्चभिर्द्रव्यैरन्तः स्थितान्, अथ पद्मरागपूर्वैः कदलीफलान्तैः पञ्चविधै रष्टैकैरपि पूर्ववदुपघटांश्च[5] पूरयतु । इत्युत्तमत्रयमुक्तम् ॥ १५२ ॥

---

१. 'ग्रा' ख. च. ङ. च. पाठः. २. 'केषु तु' ख. पाठः. ३. 'ज्येति' क. ङ. पाठः. ४. 'षु तु ता' ख. च. पाठः. ५, 'टान् पू' ख. पाठः.

विवरणम् ।

दिक्कोणगान्युपपदानीति । शिलीमुखोपपदसंयुक्तेत्युक्तान्येव । सकोणखण्डानीति । कोणपूरकेतिसङ्ख्यकानीत्युक्तानां स्थानमुक्तम् । सप्तदशपुटं क्षेत्रं सूत्रयित्वा पञ्चपुटान्तरे वीथीश्च विधाय कोणखण्डान् कार्त्स्न्येन मृज्यादिति भावः । गव्यादिमध्ववधिकैरिति । मध्यखण्डे पञ्चगव्यं प्रागादिखण्डेष्वाज्यक्षीरदधिमधूनि । कदलीफलान्तैरित्युदीच्यखण्डे परिघटेषु फलपूरणमुक्तम् । तत्र कदलीफलोदकेन पूरणावसानमित्येवमभिधानम् ॥ १५२ ॥

अन्तस्त्रयोदशपुटे शरवर्गसङ्ख्या-
नाशासु पञ्चदश सैककनन्दसंख्यान् ।
कुम्भान् विदिक्षु परिपूर्य करोतु वात्र
गव्यादिसेतुसलिलावधिभिर्जघन्यम् ॥ १५३ ॥

विमर्शिनी ।

उक्त एवोत्तमत्रये अधमस्य पक्षान्तरमाह—अन्तरिति । त्रयोदशपुटे क्षेत्रे अन्तर्बहिः शरवर्गसङ्ख्यान् पञ्चविंशतिसङ्ख्यान् , आशासु पञ्चदश, विदिक्षु सैककनन्दसंख्यान् स्वस्वकोणेष्वेकैककुम्भयोगेन नवनवकुम्भान् संभूय दशदशकुम्भान् गव्यादिसेतुसलिलावधिभिः नवसु मध्यस्थघटेषु गव्यादितीर्थसलिलावधिभिर्नवभिर्द्रव्यैः, परिकलशाष्टकेषु पद्मरागादिसेतुसलिलान्तैर्नवविधैरष्टकैश्च परिपूर्य जघन्यम् उत्तमत्रितयेऽधमं करोतु वा ॥ १५३ ॥

विवरणम् ।

अत्रैव प्रकारान्तरमाह— अन्तस्त्रयोदशपुट इति । आशासु पञ्चदशेति वाक्यम् । विदिक्षु सैककनन्दसङ्ख्यानिति । कोणेषु नवपदानि खण्डानि

---

१. 'ति मुखो' ङ. पाठः. २. 'च पञ्च' . ३. 'लोकैरि' क. पाठः. ४. 'वकु' ख. पाठः.

तेषु बाह्यकोणे पुनरेकैकं पदमुपजनयन् योजयेदिति भावः । गन्धादिसेतुसलि-
लावधिभिरिति । भूभृद्वर्गयुतद्विशतीत्युक्तवादिह कोणखण्डसद्भावात् लब्धदेव
द्रव्यपूरणं भवति । जघन्यमुत्तमत्रयेऽधमम् ॥ १५३ ॥

अन्तस्त्रयोदशपुटे शरवर्गसङ्ख्या-
स्तद्बाह्यतस्तिथिरसप्रमिताः क्रमेण ।
दिक्कोणयोर्नवशतेऽथ शते त्रिहीने
बाह्ये तु धूर्जटिगिरिप्रमिता घटाः स्युः ॥ १५४ ॥

विमर्शिनी ।

उत्तमद्वयमप्याह — अन्तस्त्रयोदशपुट इति । अथ त्रयोदशपुटे अन्तर्मध्ये, शरवर्गसंख्याः पञ्चविंशतिसंख्याः तत्र नवशते नवयुते शते चेत् तद्बाह्यतो दिक्कोणेषु क्रमेण तिथिरसप्रमिताः पञ्चदशसंख्याः षट्संख्याः घटाः स्युः । अथ त्रिहीने शते सतयुतनवत्यां चेदन्तस्तथैव पञ्चविंशतिकम् । बाह्ये तु क्रमेण धूर्जटिगिरिप्रमिताः दिक्ष्वेकादश कोणेषु सप्त च घटाः स्युः ॥ १५४ ॥

विवरणम् ।

रसप्रमिता इति । अत्रान्तरकोणेषु त्रिपदलोपः । दिक्कोणयोरिति पूर्वत्रोत्तरत्र च सम्बन्धनीयम् । बाह्ये त्विति । अन्तः शरवर्गसङ्ख्याः इति । समानमेवेति भावः ॥ १५४ ॥

अन्तस्तत्त्वघटेषु सर्वमणितोयं गव्यकं दुग्धकं
दध्याज्यं मधु गौलमिक्षुसलिलं तैलं हरिद्राजलम् ।
धात्रीवारि फलोदकं कथितकं कौशाम्बुकाशाम्बुनी
सेव्यं दौर्व्यमपीति सप्तदशकं विन्यस्य विद्वानथ ॥१५५॥

पाटीरासृगयःप्लवङ्गमुरमांसीतोयमुस्ताम्बुमुक्-
चोरैलाशशिजातिकुष्ठकलवङ्गत्वक् च ये षोडश ।
गन्धास्तेषु युगं युगं न्यसतु पर्जन्यादिकाभ्यन्तरे-
ष्वष्टौ तद्बहिरङ्कुरानभिहितान् दिक्कोणखण्डेष्वपि ॥ १५६ ॥

विमर्शिनी ।

तद्द्वयेऽपि द्रव्यन्यासमाह— अन्तरिति । विद्वान् कलशक्रमं तद्द्रव्याणि च विद्वानाचार्यः अन्तःस्थितेषु पञ्चविंशतिघटेषु ब्राह्मे सर्वमणितोयं रत्नाष्टकयुतजलं , तस्यानन्तरादिक्कोणेषु गव्यकं, दुग्धकं, दधि, आज्यं, मधु, गौलं, इक्षुसलिलं, तैलं, पुनस्तदनन्तरस्थदिग्विदिक्षु हरिद्राजलं, धात्रीवारि, फलोदकं, क्वथितकं, कौशाम्बुकाशाम्बुनी कुशजलं काशजलं च, सेव्यं, दौर्व्यमपि इति द्रव्याणां सप्तदशकं विन्यस्याथ पर्जन्यादिकाभ्यन्तरेषु ये निर्दिश्यमानाः षोडश गन्धाः तेषु युगं युगं द्वौ द्वौ गन्धौ न्यसतु । पाटीरासृक् चन्दनं कुङ्कुमं च । अयःप्लवङ्गं (അകിലും കണ്ടിവെണ്ണയും) । मुरमांसी (മുരവും മാഞ്ചിയും) । तोयमुस्तम् (ഇരുവേലിയും മുത്തങ്ങയും) । अम्बुमुक्चोरम् (മുത്തങ്ങയും കർപ്പൂരവും) । एलाशशि (ഏലത്തരിയുംകർപ്പൂരവും) जातिकुष्ठकं (ജാതിക്കായും കൊട്ടവും) लवङ्गत्वक् च(രണ്ടും ഇലവർങ്ങം തന്നെ) । तद्बहिर्दिक्कोणखण्डेष्वपि मध्यस्थकलशेषु अभिहितानुक्तान् न्यग्रोधादिकानष्टावङ्कुरांश्च न्यसतु ॥ १५५, १५६ ॥

विवरणम् ।

सर्वमणितोयमिति । रत्नानां पृथग्विनियोगकथनादेवमुक्तम् । रत्नाष्टकतोयमित्यर्थः । विद्वानिति पूरणन्यायविदित्यर्थः । गव्याद्यष्टौ ब्राह्मीयाष्टपरिकलशेषु दिग्विदिक्क्रमेण पूरयेत् । हरिद्राजलाद्यष्टौ तेषामपि दिग्विदिग्गतपरिकलशेषु पूरयेदिति ॥ १५५ ॥

तत्रत्यान्तरालपरिकलशेषु जयन्ताद्युदित्यन्ततया चन्दनकुङ्कुमादीनां गन्धयुगलानां पूरणमाह —— पाटीरासृगिति । पाटीरं चन्दनम् । असृक् कुङ्कुमम् । प्लवंगो ग्रन्थिपर्णी । तोयं ह्रिबेरम् । अम्बुमुगपरमुस्ता । शशी कर्पूरः । लवङ्गं प्रसिद्धम् । त्वगित्यपरंलवङ्गकः । य एते षोडश गन्धास्तेषु मध्ये द्वयं द्वयमेकैकस्मिन् कलशे न्यसेदिति । अभिहितानष्टावङ्कुरानिति । न्यग्रोधोदुम्बुराश्वत्थेत्याद्युक्तानित्यर्थः ॥ १५६ ॥

एकाशीत्यां प्राग्वभवनवकान्यादधीत रुद्रपुटे ।
अत्रैव पञ्चषष्ट्यां वहिःष्ठितान्यष्ट सप्तकानि स्युः ॥ १५७ ॥

---

१. 'रो लव' च. पाठः,

विमर्शिनी ।

मध्यमध्यमद्वयमाह — एकाशीत्यामिति । एकाशीत्यां घटसंख्यायां रुद्रपुटे एकादशपुटे प्राग्वत् पूर्वोक्तवत् मध्येऽष्टदिक्ष्वपि नवनवकान्यादधीत । पञ्चषष्ट्यां तु अत्रैव एकादशपुटे बहिःस्थितानि दिक्षु कोणेष्वपि सप्तकान्यष्ट स्युः ॥ १५७ ॥

विवरणम् ।

प्राग्वन्नवनवकानीति । न्येकाशीतात्राऽधीत्यत्रोक्तवदित्यर्थः । बहिःस्थितानीति अन्तस्तु प्राग्वन्नवकमेवेति भावः । सप्तकानि स्युरिति । प्रतिखण्डं द्विपदलोपः ॥ १५७ ॥

सर्पिर्मूत्रशकृन्ति दुग्धदधिनी गोरोचनावारिकं
कौशं रत्नकगन्धमाक्षिकगुलक्काथोदबीजोदकम् ।
मृत्सातोयतिलोदसूनसलिलस्वर्णोदकं कर्णिका-
तद्दिक्कोणदलादिकेष्वपि निदध्यान्मध्यमद्वन्द्वके ॥ १५८ ॥

विमर्शिनी ।

अत्र द्रव्याण्याह — सर्पिरिति । मध्यमद्वन्द्वके कर्णिकातद्दिक्कोणदलादिकेष्वपि कर्णिकायां तद्दिक्कोणदलेषु, आदिशब्देन तद्दिग्विदिक्खण्डेषु च । सर्पिर्मूत्रशकृन्ति, आज्यं गोमूत्रं गोमयं च, दुग्धदधिनी क्षीरं दधि च, गोरोचनावारिकं, कौशं, रत्नकगन्धमाक्षिकगुलक्काथोदबीजोदकं रत्नोदं गन्धोदं मधु गौलं कषायं बीजोदकं च, मृत्सातोयतिलोदसूनसलिलस्वर्णोदकं मृज्जलं तिलोदकं पुष्पोदकं हिरण्योदकं च निदध्यात् ॥ १५८ ॥

विवरणम् ।

गोरोचनावारिकमिति । गोरोचनोदकम् । ब्राह्मे सर्पिः, तदीयपरिकलशेषु दिग्विदिक्क्रमेण गोमूत्राद्यष्टकं, बहिरष्टखण्डेष्वपि दिग्विदिक्क्रमेण मध्वाद्यष्टकमिति विवेकः ॥ १५८ ॥

गव्यक्षौद्रपयोघृतानि दधि गौलेक्षूदतैलं नवं
केरीवार्यथ पाद्यमर्घ्यसलिलं चाचामकं क्वाथकम् ।

रत्नाम्भः फलवारि गन्धसलिलं पुष्पोदकं चाधम-
द्वन्द्वद्रव्यगणोऽङ्कशैलपुटयोः प्रोक्ता पदप्रक्रिया ॥ १५९ ॥

विमर्शिनी ।

अधमद्वन्द्वमाह — गव्येति । गव्यक्षौद्रपयोघृतानि पञ्चगव्यं मधु क्षीरं घृतं च, दधि, गौलेक्षूदतैलं गौलमिक्षूदं तैलं च, नवं नवीनं केरीवारि नालिकेरोदकम्, अथ वाह्ये पाद्यम्, अर्घ्यसलिलम्, आचामकं, क्राथकं, रत्नाम्भः फलवारि, गन्धसलिलं, पुष्पोदकं च एतानि सप्तदशद्रव्याणि पूर्वक्रमेणाधम-द्वन्द्वद्रव्यगणः प्रोक्तः । अत्र अङ्कशैलपुटयोः नवसप्तपुटयोः पदप्रक्रिया पद-क्लृप्तिः प्रोक्ता । पूर्वोक्तैवेत्यर्थः ॥ १५९ ॥

विवरणम् ।

नवं केरीवारीत्येकं द्रव्यम् । अधमद्वन्द्वद्रव्यगण इति । पूरणक्रमस्तु कर्णिकादिकोणदलादिकेष्वपि निदध्यादित्ययमेवेति भावः । अङ्कशैलपुटयोः प्रोक्ता पदप्रक्रियेति । त्र्यैकाङ्गाब्धीत्येवं प्रागुक्तैवेत्यर्थः । सर्वत्र पूरणमन्त्रस्त्वा-पूरयेन्मूलत इत्युक्त एव ॥ १५९ ॥

मूलेन ब्रह्मघटैर्गायत्र्या द्रव्यपूर्णपरिकलशैः ।
अङ्गाणुनावशिष्टैः स्नपयतु मध्यादिपूरणक्रमतः ॥ १६० ॥

विमर्शिनी ।

स्नानमन्त्रानाह— मूलेनेति । ब्रह्मघटैः सर्वखण्डस्थितैः ब्रह्मकलशैर्मू-लेन स्नपयतु । द्रव्यपूर्णपरिकलशैर्गायत्र्या च, अवशिष्टैः शुद्धजलपूर्णैरङ्गाणुना च मध्यादिपूरणक्रमतः ब्रह्मकलशादिभिः पूरणक्रमेणैव स्नपयतु ॥ १६० ॥

विवरणम् ।

अङ्गाणुनेति । अङ्[3]षट्कस्यैकमन्त्रतोक्ता । अवशिष्टैरिति । शुद्धज-लकलशैः ॥ १६० ॥

मूलोपचाराणुकुमारसूक्ततः संस्नापयेद्ब्रह्मघटेन मूलतः ।
खण्डान्तरब्रह्मघटैर्जिनार्णतः सद्रव्यकैः शुद्धजलैर्हृदेति वा ॥ १६१ ॥

---

१. 'कातहि' ख. ङ. पाठः. २. 'क्तः' क. पाठः. ३. 'ङ्गमन्त्रस्ये' ख. ङ. पाठः.

विमर्शिनी।

पक्षभेदमाह — मूलेति। ब्रह्मघटेन मूलोपचाराणुकुमारसूक्ततः संस्नापयेत्। खण्डान्तरब्रह्मघटैर्मूलेन सद्रव्यकैः द्रव्यसहितापरकुम्भैः, जिनार्णतो गायत्र्या, शुद्धजलैः कुम्भैः हृदा हृदयमन्त्रेण इति वा संस्नापयेत् ॥ १६१॥

विवरणम्।

खण्डान्तरब्रह्मघटैर्मूलत इति सम्बन्धनीयम्। सद्रव्यकैः परिकलशैरिति[2]। जिनार्णत इति। तत्तदणुदैवतमूलतारैरित्येतदिहापि भवति। देवतास्थाने मूलमेव ॥ १६१ ॥

पूर्त्यै पञ्चशतस्य यो ह्युपघटः कोणेषु तेन स्वख-
ण्डैक्यात् पञ्चकमेककं च विहितं द्विकोणयोर्यत्पुनः।
खण्डैकत्वजुषापि तेन मनुजांशद्रव्यभाजा पृथग्-
देवेशं स्नपयेदितीह नवधा प्रोक्तोऽभिषेको गुहे ॥ १६२ ॥

विमर्शिनी।

अत्र पञ्चशतस्य पूर्त्यै कोणेषु मानुष[3]खण्डकोणेषु यो ह्युपघटः प्रोक्तः तेन घटेन स्वखण्डैक्यात् कोणस्थपञ्चविंशत्या सह स्नपयेत्। यत्पुनरेकोनपञ्चाशदुपेतद्विशतघटे द्विकोणयोर्विहितं पञ्चकमेककं च विहितं, खण्डैकत्वजुषापि एकखण्ड एव स्थितवतापि तेन मनुजांशद्रव्यभाजा मानुषगतद्रव्यपूरणाद्धेतोः पृथगेव देवेशं स्नपयेत्। इति गुहे नवधा नवप्रकारेणाभिषेकः प्रोक्तः ॥ १६२ ॥

विवरणम्।

पञ्चशतस्य पूर्त्यै इति षड्विंशत्या कलशैर्युक्तानीत्यत्रष ड्विंशस्य कलशस्य ग्रहणं तेन स्वखण्डैक्यादिति। स्नपयेदिति सम्बध्यते। पञ्चविंशति[6]कलशान्मध्यदिग्विदिगन्तरालक्रमादुद्धृत्य पुनस्तमुपकलशमप्युद्धृत्य स्नपयेदिति खण्डैकत्वजुषापि तेनेति। मध्ये वीथ्यभावादेकखण्डभाक्त्वं भवति। पृथक् स्नपयेदिति सम्बन्धः। मनुजांशद्रव्यभाजेति पृथक् स्नपने निबन्धनमुक्तम्। तथाह्युक्तं धात्रीं रात्रीपिष्टामित्यादि, सैककनन्दसंख्यानित्यत्रापि तेन,

---

१. 'रैर्ब्र' ख. छ. पाठः. २. 'शंजिना' ख. घ. पाठः. ३. 'षकोणखण्डेषु' घ. क. पाठः. ४. 'त्या स' ख. ङ. पाठः. ५. 'ता' ख. च. पाठः. ६. 'तिं क' ख. पाठः.

स्वखण्डैक्यादित्ययमेव न्यायोऽवगन्तव्यः । किञ्चान्तस्तत्त्वघटेषु सर्वमाणितोय-मित्यादि यत् पञ्चविंशतिद्रव्यमुक्तं तेनैव शैववत् केवलद्रव्यतया शुद्धोदकान्विततया च पञ्चविंशत्याद्यासहस्रं स्नपनं कार्यम्। तदुक्तम् —

पञ्चविंशत्पदेष्वेव मध्यस्थेषु समीरितैः ।
द्रव्यैस्तु पञ्चविंशद्भिर्बाह्यद्रव्यविवर्जितैः ॥
पञ्चविंशतिमारभ्य सहस्रान्तघटैर्बुधाः ।

इति ॥ १६२ ॥

विघ्नेशेऽपि महेशवद् घटपुटाद्याधाय वैधातृकं
कुम्भं द्वादशरत्नकेन परिपूर्यापूरयेत् तत्परम्।
अन्तर्दिग्विदिशोर्बहिश्च कलशान् पाद्यादिभिर्व्यष्टभि-
स्तैरेवाथ तदान्तरालिकगुलाद्याढ्यैस्तु वा त्र्यष्टभिः ॥१६३॥

विमर्शिनी ।

गणपतौ कलशविधिमाह — विघ्नेश इति । विघ्नेशेऽपि महेशवत् शिववत् घटपुटादि घटपुटक्रमाणां कलशसमाधाय वैधातृकं कुम्भं ब्रह्मकलशं द्वादशरत्नकेन परिपूर्य तत्परं तदनन्तरम् अन्तर्दैविके बहिर्मानुषे च दिग्विदिशोः दिक्षु कोणेषु च पाद्यादिभिर्व्यष्टभिः षोडशभिर्द्रव्यैः कलशानापूरयेत् । अथवा तैरेव षोडशभिः सहैव तदान्तरालिकगुलाद्याढ्यैः तेषां मानुषदिक्कोणानामन्तरालगतैः गुलादियुक्तैः त्र्यष्टभिश्चतुर्विंशतिद्रव्यैरापूरयेत ॥ १६३॥

विवरणम् ।

विघ्नेशेऽपीति । वैधातृकं प्रधानब्रह्मकलशम् । बहिश्चेति । दिग्विदिशोरित्यनुषङ्गः । पाद्यादिभिर्व्यष्टभिरिति । सप्तदशद्रव्यस्नपनमेतदिति भावः । त्र्यष्टभिरिति । पञ्चविंशतिद्रव्यस्नपनमेवं भवतीति भावः । तदा च तेषामन्तरालखण्डेषु गुलाद्यष्टौ स्युरिति भेदः ॥ १६३ ॥

पाद्यार्घ्याचमनीयदुग्धदधिसर्पिः क्षौद्रगव्यं फलं
भक्ष्यं यावकशालिके सतिलरत्नाष्टापदं विद्रुमम्।
गौलं पुष्पजलं च दौर्व्यसलिलं धातूदमृत्साकुशं
मुक्ताकेरपयश्च षोडश वदन्ति द्रव्यकाण्यष्ट च ॥ १६४ ॥

---

१. 'त्यास' क. पाठः. २. 'शत्पुटे' क. पाठः. ३. 'के' क. पाठः ४. 'घ्रस्न' क. ख. पाठः. ५. 'मेव भ' ख. पाठः. ६. 'द इति ।' ख. पाठः,

विमर्शिनी ।

द्रव्याणि गणयति — पाद्येति । पाद्यार्घ्याचमनीयदुग्धदधिसर्पिः पाद्यम् अर्घ्यम् आचमनीयं क्षीरं दधि आज्यं च, क्षौद्रगव्यं मधु पञ्चगव्यं च, फलं, भक्ष्यं, यावकशालिके यवजलं शालिजलं च, सतिलरत्नाष्टापदं तिलोदकं रत्नोदकं अष्टापदमिति हिरण्योदकं, विद्रुमं विद्रुमोदकं, गौलं, पुष्पजलं, दौर्व्यसलिलं, धातूदमृत्साकुशं धातूदं मृज्जलं कुशोदकं च, मुक्ताकेरपयश्च मुक्ताजलं नालिकेरपयश्च, एतानि षोडशाष्ट च द्रव्याणि वदन्ति । बुधा इति शेषः । सप्तदशद्रव्ये पञ्चविंशतिद्रव्येऽप्ययमेव विधिरित्यर्थः ॥ १६४ ॥

विवरणम् ।

अष्टापदं सुवर्णम् ॥ १६४ ॥

तद्देवता गणेशः पितरो *वाग्वह्निवल्लभा सोमः ।
रुद्रोऽग्निर्गुहसावित्र्यौ च गणेशो गजास्यकः पवनः ॥१६५ ॥

विश्वेदेवा यमधनदब्रह्माणोऽथ दिनकरो दुर्गा ।
विष्णुर्लक्ष्मीः सप्त च मुनयो भूर्वह्निवरुणसोमाः स्युः ॥ १६६

विमर्शिनी ।

तेषां देवताः पठति — तद्देवता इति । मध्ये गणेशः, पुनः पितरः, वाक् सरस्वती, वह्निवल्लभा स्वाहा, सोमः, रुद्रः, अग्निः, गुहसावित्र्यौ स्कन्दः सावित्री च, गणेशः, गजास्यकश्च, पवनो वायुः, विश्वेदेवाः, अथ यमधनदब्रह्माणः यमो वैश्रवणो ब्रह्मा च, दिनकरः सूर्यः, दुर्गा, विष्णुः, लक्ष्मीः, सप्त च मुनयः सप्तर्षयः, भूर्भूमिः, वह्निवरुणसोमाश्च तद्देवताः स्युः ॥ १६५, १६६ ॥

---

* 'गग्नि' इति विवरणपाठः.

१. 'व'. २. स्युः,
विघ्नेशो स्फटिकोनितं हरिहरोक्तं रत्नमीशोदितं
पाद्यार्घ्याचमनीयपुष्पफलरत्नं दौर्यवद् धातुकम् ।
भक्ष्यं स्याव पृथुकादिकं स्वहवनोद्दिष्टं चतुष्कं मृदो
वेदीक्षेत्रगजोक्षश्वङ्गगिरिवल्मीकाखुतीर्थोद्भवाः ॥

भत्रे' क. पाठः.

विवरणम्।

आग्निवल्लभा स्वाहा। गजास्यको गणपतिः। दिनकर आदित्यः। सप्तमुनयः सप्तर्षयः॥ १६५, १६६॥

अत्रेदंविष्णुऋचापोह्यणुनापः पुनन्तुमनुना च।
आप्यायस्वदधिक्राव्णः सावित्र्याख्यमधुमतीभिश्च॥ १६७॥

भूयोऽग्निमीलइत्यृङ्मानस्तोकेगणेशमूलेन।
पुनरोषधीऋचाथुशिशानपितरोहिरण्यवर्णाग्भिः १६८॥

ब्रह्मादिजज्ञमनुना रक्षोहणमित्यृचा तथाग्नेत्वम्।
पुष्पावतीश्च शन्नो देवीर्देवस्य चोद्धृतासीति॥ १६९॥

सिञ्चेत् तथाग्नआयाहृचः समुद्रादिकेन मनुना च।
याः फलिनीश्च गणानां त्वेति क पाद्यादिकान्तकलशैस्तम्॥१७०॥

विमर्शिनी।

अभिषेकमन्त्रानाह –– अत्रेति। 'इदं विष्णु'ऋचा, 'आपोह्य'णुना, 'आपःपुनन्तु'मनुना. 'आप्यायस्व', 'दधिक्राव्णः', सावित्र्याख्यमधुमतीभिः सावित्री 'तत्सवितुरि'ति, मधुमत्यो 'मधु वाता' इति तृचम्. 'अग्निमील' इति, 'मा नस्तोके'. गणेशमूलेन, 'ओषधीरि'त्यृचा, 'आशुः शिशानः', 'पितरः पितामहाः', 'हिरण्यवर्णा' इत्यृग्भिः, ब्रह्मादिजज्ञमनुना 'ब्रह्म जज्ञान-मि'ति, 'रक्षोहणमि'त्यृचा, 'अग्ने त्वं' 'पुष्पावतीश्च', 'शन्नो देवीः', 'देवस्य त्वा', 'उद्धृतासी'ति. 'अग्न आयाहृ'चा, समुद्रादिकेन 'समुद्रं गच्छे'ति, 'याः फलिनीः' 'गणानां त्वा' इति एतैर्मन्त्रैः पाद्यादिकान्तकलशैः पाद्यादिभिः क इति ब्रह्म, तदन्तैः ब्रह्मकलशान्तैस्तं गणपतिं सिञ्चेत्॥ १६७–१७०॥

विवरणम्।

पितरः इति। पितरः पितामहाः समुद्रादिकेनेति समुद्रं गच्छ स्वाहा। पाद्यादिकान्तकलशैस्तमिति। कशब्दो ब्रह्मवचनः[1]। ब्रह्मकलशान्तैः गणपतिं सिञ्चेदित्यर्थः॥ १६७––१७०॥

आर्येऽन्तः पाद्यमन्तर्दिशि विदिशि बहिश्चार्घ्यमाचामगन्ये
गोमूत्रं दुग्धदध्याज्यमपि मधु कषायं फलं मार्जनं मृत्।

---

१. 'ब्राह्म' ख· पाठः.

सक्तूदं गन्धपुष्पोदकयवगुलमिक्षूदकेरीरसं स्यात्
केरोदं रत्नलोहोदकमपि सहतीर्थाक्षताम्ब्वन्तरान्तम् ॥ १७१ ॥

विमर्शिनी ।

शास्तुः कलशविधिमाह -- आर्य इति । आर्ये अन्तः ब्राह्मे पाद्यं स्यात् । अन्तर्बहिश्च दिशि विदिशि अन्तरान्तम् अन्तरालान्तं यथा तथा अर्घ्यम् , आचामगव्ये आचमनीयं पञ्चगव्यं च, गोमूत्रं, दुग्धदध्याज्यं क्षीरं दध्याज्यं च, मधु, कषायं, फलं, मार्जनं, मृत् , सक्तूदं, गन्धपुष्पोदकयवगुलं गन्धोदकं पुष्पोदकं यवोदकं गुलं च, इक्षूदकेरीरसम् इक्षूदकं नालिकेररसं च, केरोदं नालिकेरोदकं, रत्नलोहोदकमपि रत्नोदकं लोहोदकं च, सहतीर्थाक्षताम्बु तीर्थोदकमक्षतोदकं च, एतानि द्रव्याणि स्युः ॥ १७१ ॥

विवरणम् ।

बहिश्चेति । दिशि विदिशि चेत्यनुषङ्गः । अन्तरान्तमित्यपि सम्बध्यते केरीरसो नालिकेर[1]क्षीरम् ॥ १७१ ॥

तद्देवताः पितृश्रीवाक्साविन्यस्तथैव गायत्री ।
सोमो रुद्राग्निगुहा विश्वे विघ्नेश्वरो मही ज्येष्ठा ॥ १७२ ॥

इन्द्रः सप्तर्षिमरुन्नृसिंहदुर्गास्ततः परं क्रमशः ।
श्रीधरयुगजकुबेराः पुरुषो निर्ऋतिः परश्च सम्प्रोक्ताः[2] ॥ १७३ ॥

---

१. 'ररसः' ङ पाठः.

२. 'क्ताः ॥

आर्ये गन्धनिशाक्षतवं + तिलं पाद्यं सराजीतिलं
सक्षीरं कुशगन्धपुष्पमृतमर्घ्यं स्याल्लवङ्गाम्बुजम् ।
गन्धाम्ब्वाचमनं पयस्तरुक्तं काषायकं मार्जनं
राश्यैन्द्यक्षतगन्धपुष्पकसदाभद्राकुशाग्रात्मकम् ॥

क्षेत्रादिवेदिवृषशृङ्गनदीद्वितीर-
जाता मृदः प्रमथराजि हरीरितानि ।
लोहानि रुद्रगदितानि सविद्रुमानि
रत्नानि गन्धकुसुमान्यपि तद्विधाप्यम् ॥

---

म्' क. पाठः,

विमर्शिनी ।

देवताः पठति – तद्देवता इति । पितृश्रीवाक्सावित्र्यः पितरः श्रीः सरस्वती सावित्री च, तथा गायत्री, सोमः, रुद्राग्निगुहाः रुद्रोऽग्निः स्कन्दश्च, विश्वे देवाः, विघ्नेश्वरो गणपतिः, मही पृथिवी, ज्येष्ठा स्वयमेव, इन्द्रः, सप्तर्षिमरुन्नृसिंहदुर्गाः सप्तर्षयो वायुः नरसिंहो दुर्गा च. श्रीधरयुगजकुबेरा श्रीधरः उभयत्र ब्रह्मा वैश्रवणश्च, पुरुषः, निर्ऋतिः, परः पुरुषश्च, तद्देवताः सम्प्रोक्ताः ॥ १७२, १७३ ॥

विवरणम् ।

वाक् सरस्वती । विश्वे विश्वेदेवाः । मही भूमिः । मरुद्वायुः । श्रीधरयुगिति द्वौ श्रीधरौ । पर इति देवतान्तरमेव ॥ १७२, १७३ ॥

षण्मूलप्रणवाणुना स्नपितयेत् सम्पूरणोक्तक्रमात्
पाद्यादिद्रविणाभिपूर्णकलशैः स्वस्वोपकुम्भैः सुधीः ।
सावित्र्याद्यणुपञ्चकं तदनु सावित्र्यादितत्तन्मनून्
गव्याद्येषु युनक्तु मध्ववधिषु द्रव्येषु षट्सु क्रमात् ॥ १७४ ॥

विमर्शिनी ।

पाद्यादिद्रविणाभिपूर्णकलशैः ब्रह्मकलशादिद्रव्यकलशैः स्वस्वोपकुम्भैः स्वस्वपरिकलशैः सह सम्पूरणोक्तक्रमात् षण्मूलप्रणवाणुना सर्वत्र षण्मन्त्रमूलमन्त्रप्रणवैः स्नपितयेत् स्नपितं कुर्यात् । सुधीरिति तत्तद्देवतानाममन्त्र[1]-योजनमुक्तम् । गव्याद्येषु मध्ववधिषु पञ्चगव्यगोमूत्रक्षीरदध्याज्यमधुषु षट्सु द्रव्येषु क्रमात्, सावित्र्याद्यणुपञ्चकं पञ्चगव्ये, तत्सवितुर्गन्धद्वारामाप्यायस्वदधिक्राव्णस्तेजोऽसीत्येतन्मन्त्रपञ्चकं, तदनु गोमूत्रदुग्धदध्याज्येषु सावित्र्यादितत्तन्मनून् 'तत्सवितुः' 'आप्यायस्व' 'दधिक्राव्णः' 'तेजोऽसि' इति मन्त्रान्, मधौ 'मधु वाता' इति च युनक्तु योजयतु । गोमयाभावाद्गन्धद्वाराभावः ॥ १७४ ॥

विवरणम् ।

षण्मूलप्रणवाणुनेति । अत्र मूलात् पूर्वं देवतामन्त्रयोगः । सावित्र्यादिमन्त्रपञ्चकं पञ्चगव्ये तत्सवितुः गन्धद्वारामाप्यायस्वदधिक्राव्णस्तेजोसी-

---

१. 'नां मन्त्र' ख. पाठः.

त्येतत् । सावित्र्यादितत्तन्मनूनिति । गोमयाभावाद् गन्धद्वाराभावः । मधुनि मधुवाताः । षण्मन्त्रतः पूर्वमेषां योगः ॥ १७४ ॥

मध्वन्तिमोऽधमविधिर्यववारिनिष्ठः
स्यान्मध्यमोऽक्षतजलान्तिम उत्तमः स्यात् ।
तत्तत्क्षमं घटपुटादि विधाय चैत-
त्त्रिष्वेकमाचरतु च स्नपनं प्रभेशे ॥ १७५ ॥

विमर्शिनी ।[1]

अत्र मध्वन्तिमः मध्वन्तनवद्रव्यैः अधमविधिः स्यात् । यववारिनिष्ठः यवोदकान्तः सप्तदशद्रव्यैः मध्यमो मध्यमविधिः । अक्षतजलान्तिमः अक्षतजलान्तपञ्चविंशतिद्रव्यैः उत्तमः उत्तमविधिः स्यात् । तत्तत्क्षमं तस्य तस्योचितं घटपुटादि घटपुटकल्पन्याद्याधाय एषु त्रिष्वपि विधिषु मध्ये एकं स्वयोग्यं स्नपनं प्रभेशे आचरतु ॥ १७५ ॥

विवरणम् ।

मध्वान्तिमोऽधमविधिरिति । पाद्यादिनवद्रव्यात्मकः । यववारिनिष्ठः स्यान्मध्यम इति सप्तदशद्रव्यात्मकः[2] । पञ्चविंशतिद्रव्यात्मकस्तूत्तमः । तत्तत्क्षममिति । नवद्रव्यविधावपि सप्तदशद्रव्यवदेव क्षेत्रे[3] क्लृप्तिः । ब्राह्मे दलकलशास्तु शुद्धजलपूर्णा[4] एवेति विशेषः । तदुक्तम् — बिम्बशुद्धौ सप्तदशकद्रव्यक्रमात् क्षेत्रकं कृत्वान्तर्नवकं प्रकल्प्य कलशानां बाह्यतो युक्तित इति; मध्यान्तर्नवखण्डकेषु[5] शिवशाक्तोर्दिग्विदिक्क्लृप्तित इति च । नवद्रव्येऽपि केवलविधौ नवैव कलशाः स्युः । किञ्च—

माणिक्यमुक्ताकुलिशप्रवालगारुत्मतं पुष्यमजादिषु स्युः ।
वैडूर्यनीलं पशुमेदमाशाकोणेषु सोऽयं नवकाभिषेकः ॥

मूलं हरावष्वथ वासुदेवशान्त्यादयः स्युर्मनवः क्रमेण ।
ब्रह्माणि पञ्चार्चनदेशभाञ्जि साङ्गानि[6] शम्भावपरेषु मूलम् ॥

इति नवकविधिः ।

---

१. 'षु त्रिष्वे' क. ख. पाठः. 'वं त्रिष्वे' ग. पाठः. २. 'कः । तत्त' क पाठः. ३. 'त्रक्लृ' ख. च. पाठः. ४. 'र्णा' ख. पाठः. ५. 'ण्डेषु' ख. च. पाठः. ६. 'साद्यानि' च. पाठः.

अत्र मध्यादिपूरणं मध्यान्तं च स्नपनमिति ।

त्रिंशत्सूत्रे शरपुटविभक्तेऽन्तरोन्मृष्टवीथौ
क्षेत्रे ब्राह्मं कमलमिषुकृत्या बहिस्तत्त्वकुम्भाः ।
सर्वे खण्डा रसशतविधावर्ककुम्भान्तराला-
स्त्वेते वेदच्छदघट्युतं वैधसं पञ्चशत्याम् ॥

इति । एकोनत्रिंशत्पुटं क्षेत्रमास्फाल्य सर्वतः पञ्चपुटान्तरेषु वीथीर्मृष्ट्वा[1] मध्यतः पञ्चवर्गपदैः ब्राह्मं पद्मं रचयेत् । बहिश्चतुर्विंशतिरपि खण्डाः पञ्चविंशतिपदशालिनस्तावत् कलशाः स्युरित्येवं विष्णुशिवादिषु[2] षट्च्छतकलशविधिः । अत्रैमानुषेऽन्तरालानि द्वादश कलशानि ब्राह्मे वा चतुर्दिक्षु दलकलशाः स्युः । शेषाः षोडश खण्डास्तत्त्वकलशा एवेति पञ्चशतकलशविधिः इति ।

एकाशीतिपदं कृत्वा नवधा च द्विधा स्थितः ।
अत्र सप्तदशद्रव्यैः पञ्चविंशद्भिरेव वा ॥
द्विविधैः सह वा कुम्भैः दूरैस्सप्तशतैस्तु वा ।

इति । द्रव्यावृत्तिस्नपनमेतत् । केवलसप्तदशद्रव्यविधौ तावत्तदुपपत्त्या पञ्चत्रिंशत्पुटं क्षेत्रं कृत्वा रुद्रपुटान्तरेषु द्वे द्वे वीथी संमार्ज्य नवावान्तरक्षेत्राणि सम्पाद्य तेषु नवांशके[3]त्युक्तरीत्या नवैकाशीतिकलशरूपान् व्यूहान् विदध्यात् । केवलपञ्चविंशतिद्रव्यविधौ त्वेकचत्वारिंशत्पुटे क्षेत्रे त्रयोदशपुटान्तरेषु द्वे द्वे वीथी विधाय क्षेत्रे त्रयोदशपुट इत्युक्तरीत्या नव व्यूहान् विदध्यात् । मिश्रविधौ तु मध्ये पञ्चविंशतिद्रव्यञ्चेत् सप्तत्रिंशत्पुटे क्षेत्रे मध्यतस्त्रयोदशपुटावान्तरे क्षेत्रमभितो वीथिकल्पनं, मध्ये सप्तद्रव्यञ्चेदेकचत्वारिंशत्पुट एव । मध्ये रुद्रपुटावान्तरक्षेत्रमभितो[6] वीथिकल्पनम् । विषमा मिश्रविधौ वीथयः । दूरैः सप्तशतैरिति विधित्रयेऽप्यष्टाविंशत्यधिकं सप्तशतं कलशाः भवन्तीति ।

नवैकाशीतयो वात्र बहिष्कोणविलोपतः ।

---

१. 'वीथिं मृ ' ख., ' वीथीं मृ ' ङ. पाठः. २. 'च चतु ' घ. पाठः.
३. ' नवांके ' घ. च. पाठः. ४. ' न्तरक्षे ' ख. ङ. च., ' न्तरेषु क्षे ' घ. पाठः.
५. ' प्तदशद्रव्यं ' घ. पाठः. ६. ' ति सविधि' ख. घ. पाठः.

इति । मध्ये सप्तदशद्रव्यं पञ्चविंशतिद्रव्यं वा । बहिरष्टौ तु सप्तदशद्रव्याण्येव । तेषु च बाह्यव्यूहेषु प्रतिव्यूहं यानि कोणनवकगतकोणपदानि चत्वारि चत्वारि प्रतिव्यूहं सम्भूय षोडश षोडश पदानि तानि विलोपयेत् । तदाष्टाविंशत्यधिकशतपदापायात् षट्छतं भवति ।

अष्टोत्तरशतं मध्ये बाह्ये दिक्षु विदिक्षु च ।
क्रमादेकोनपञ्चाशदेवं पञ्चशतं तु वा ॥

इति । केवलसप्तदशद्रव्यविधौ त्रयस्त्रिंशत्पुटानि, केवलपञ्चविंशतिद्रव्यविधावेकोनचत्वारिंशत्, मिश्रविधौ त्वन्तः पञ्चविंशतिद्रव्यसम्भवे तु पञ्चत्रिंशत् । शेषमूह्यमिति ।

'कोणेष्वेकोनपञ्चाशदुक्तद्रव्यैश्च वा भवेत्' ।

इति । मध्ये चतुर्दिक्षु चैकाशीतिः कोणेष्वेकोनपञ्चाशच्च कलशाः सम्भूय षट्छतं सम्पद्यते । इहापि केवलमिश्रभेदौ भवत इति ।

एकाशीतिपदानि पावनपदैर्मध्ये च दिक्ष्वर्पयेत्
प्रत्येकं नवधाथ पञ्चकृतिभिः कुर्यात् पदैरम्बुजम् ।
बाह्ये कोणनिवेशितानि नवकान्येषां त्रिकाण्यन्तरा
त्रीणि त्रीणि विधाय पञ्चकृतिभिर्द्रव्यैस्तु संस्नापयेत् ॥

इति । पावनपदान्येकचत्वारिंशत्पुटरूपाणि त्रयोदशपुटैरेकाशीतिपदनिष्पत्तिः । वीथयस्त्वर्थसिद्धा एव । पञ्चकृतिभिरित्यादिना क्षेत्रे त्रयोदशपुट इत्युक्त एव प्रकारोऽभिहित इति ।

दिवासूत्रैः प्रभिन्नेऽत्र शतं सनवकं पृथक् ।
नवधा मध्यकोणेषु कोणलुप्तैः समन्वितः ॥
पञ्चविंशतिभिर्द्रव्यैः सहस्रैः स्नापयेद् घटैः ।

इति । दिवासूत्रैरिति सप्तचत्वारिंशत्पुटग्रहणम् । तत्र सनवकं शतं नवधा पृथक् पञ्चदशपुटैः सवीथिकैः विरचयेत् । तत्र मध्यमव्यूहे कोणव्यूहेषु च यानि बाह्यकोणखण्डानि तेष्वष्टकं कोणतश्चादध्यादित्यत्रार्थाल्लोपनीयानि पदानि न लुम्पेदिति । मध्यव्यूहे दिग्व्यूहेषु च वैवं बाह्यकोणखण्डेषु कोणपदलोपः । यदुक्तम्—

१. 'द' क. पाठः. ६. 'कपदा' ख. पाठः. ३. 'सम्पद्यन्ते' ख. ङ. पाठः. ४. 'श्च'. ख, ५८ः. ५. 'पुटान्ये' ङ. पाठः.

सर्वपुटे मान्यपुटैर्मध्ये सद्वादशं शतं कुर्यात् ।
दिक्षु तथा कोणगतं नवोत्तरं तत्सहस्रपदक्लृप्तौ ॥

इति

द्रव्यावृत्तिरियं द्विकेवलविमिश्राकारतस्त्र्यप्यपि
त्र्यक्षाधोक्षजयोश्च सुम्भजिति च प्रायः स्फुटं भिद्यते ।
हेरम्बे द्रविणप्रभेदविधुरे त्र्य्येव शास्त्र्यपि
स्कन्दे त्र्यप्यपि नैव शङ्करहरौ चोह्या[1] तु वा भूयसी ॥

इति । द्वे केवले द्रव्यावृत्ती विमिश्रा च, तृतीया चैवं त्रयी सा भवति । त्र्य्येवेति न स्फुटं भेदः पञ्चविंशतिद्रव्यैरेवं नयोः सप्तदशद्रव्यविधानात् त्र्यप्यपि नैवेति केवला पञ्चविंशतिद्रव्यैवास्ति । अथैवनयोरनेकविधा द्रव्यावृत्ति रूह्या । यथा स्कन्दे तावदन्तस्त्रयोदशपुटे शरवर्गसङ्ख्या इति । नवशतम् । तत्र मध्ये दिक्षु मध्ये कोणेषु वा रसपदस्थाने सप्तपदकरणे नवव्यूहतया सह-स्रकलशसिद्धिः । किञ्चैकाशीत्यां प्राग्वदिति नवैकाशीतिभिरष्टाविंशत्यधिकसप्त-शतसिद्धिः, पञ्चविंशतिद्रव्यगतैकाशीत्या सहास्या[2] विमिश्रभेदसिद्धिः । तथा-धमद्वन्द्वद्रव्यगणोऽङ्कशैलपुटयोरित्येकोनपञ्चाशत्सम्भवे प्राग्वद्व्यतिकरान्तरमिति । एवं शङ्करहरौ च तत्राशुगादिनववर्गमिता घटाः स्युरित्येकाशीत्येकोनपञ्चा-शतोः सम्भवात् पञ्चविंशतिद्रव्यैः सह प्राग्वदेव विमिश्रिताद्युपपत्तिरिति ॥ १७५ ॥

तत्तद्द्रव्यन्यसनमिति कृत्वा द्रवद्रव्यकुम्भान्
मुक्त्वा शेषान् सपरिकलशान् वारिणा वारुणेन ।
आपूर्यैषूज्ज्वलकिसलयाद्यञ्चितेषु स्वमन्त्रे-
णावाह्याभ्यर्चयतु जलगन्धादिभिश्चानुखण्डम् ॥ १७६ ॥

विमर्शिनी ।

इति उक्तप्रकारेण तत्तद्द्रव्यन्यसनं तस्य तस्य द्रव्यस्य न्यासं कृत्वा द्रवद्रव्यकुम्भान् पञ्चगव्यादिद्रवद्रव्येण पूर्णान् कुम्भान् मुक्त्वा शेषान् पाद्या-दिभिर्द्रव्यैर्युक्तान् सपरिकलशान् द्रव्यहीनांश्च कलशान् वारुणेन वारिणा

---

१. 'वोह्या' घ. पाठः. २. 'स्यापि वि' घ. पाठः.

इति । मध्ये सप्तदशद्रव्यं पञ्चविंशतिद्रव्यं वा । बहिरष्टौ तु सप्तदशद्रव्याण्येव । तेषु च बाह्यव्यूहेषु प्रतिव्यूहं यानि कोणनवकगतकोणपदानि चत्वारि चत्वारि प्रतिव्यूहं सम्भूय षोडश षोडश पदानि तानि विलोपयेत् । तदाष्टाविंशत्यधिकशतपदापायात् षट्छतं भवति ।

> अष्टोत्तरशतं मध्ये बाह्ये दिक्षु विदिक्षु च ।
> क्रमादेकोनपञ्चाशदेवं पञ्चशतं तु वा ॥

इति । केवलसप्तदशद्रव्यविधौ त्रयस्त्रिंशत्पुटानि, केवलपञ्चविंशतिद्रव्यविधावेकोनचत्वारिंशत्, मिश्रविधौ त्वन्तः पञ्चविंशतिद्रव्यसम्भवे तु पञ्चत्रिंशत् । शेषमूह्यमिति ।

> 'कोणेष्वेकोनपञ्चाशदुक्तद्रव्यैश्च वा भवेत्' ।

इति । मध्ये चतुर्दिक्षु चैकाशीतिः कोणेष्वेकोनपञ्चाशच्च कलशाः सम्भूय षट्छतं सम्पद्यते । इहापि केवलमिश्रभेदौ भवत इति ।

> एकाशीतिपदानि पावनपदैर्मध्ये च दिक्ष्वर्पयेत्
> प्रत्येकं नवधाथ पञ्चकृतिभिः कुर्यात् पदैरम्बुजम् ।
> बाह्ये कोणनिवेशितानि नवकान्येषां त्रिकाण्यन्तरा
> त्रीणि त्रीणि विधाय पञ्चकृतिभिर्द्रव्यैस्तु संस्नापयेत् ॥

इति । पावनपदान्येकचत्वारिंशत्पुटरूपाणि त्रयोदशपुटैरेकाशीतिपदनिष्पत्तिः । वीथयस्त्वर्थसिद्धा एव । पञ्चकृतिभिरित्यादिना क्षेत्रे त्रयोदशपुट इत्युक्त एव प्रकारोऽभिहित इति ।

> दिवासूत्रैः प्रभिन्नेऽत्र शतं सनवकं पृथक् ।
> नवधा मध्यकोणेषु कोणलुप्तैः समन्वितः ॥
> पञ्चविंशतिभिर्द्रव्यैः सहस्रैः स्नापयेद् घटैः ।

इति । दिवासूत्रैरिति सप्तचत्वारिंशत्पुटग्रहणम् । तत्र सनवकं शतं नवधा पृथक् पञ्चदशपुटैः सवीथिकैः विरचयेत् । तत्र मध्यमव्यूहे कोणव्यूहेषु च यानि बाह्यकोणखण्डानि तेष्वष्टकं कोणतश्चादध्यादित्यत्रार्थाल्लोपनीयानि पदानि न लुम्पेदिति । मध्यव्यूहे दिग्व्यूहेषु च नैवं बाह्यकोणखण्डेषु कोणपदलोपः । यदुक्तम्—

---

१. 'द' क. पाठः. २. 'कपदा' ख. पाठः. ३. 'सम्पद्यन्ते' ख. क. पाठः. ४. 'ख' ख. ५८. ५. 'पुटान्ये' ङ. पाठः.

सर्वपुटे मान्यपुटैर्मध्ये सद्वादशं शतं कुर्यात् ।
दिक्षु तथा कोणगतं नवोत्तरं तत्सहस्रपदक्लृप्तौ ॥

इति

द्रव्यावृत्तिरियं द्विकेवलविमिश्राकारतस्त्रय्यपि
त्र्यक्षाधोक्षजयोश्च सुम्भजिति च प्रायः स्फुटं भिद्यते ।
हेरम्बे द्रविणप्रभेदविधुरे त्रय्येव शास्त्र्यपि
स्कन्दे त्रय्यपि नैव शङ्करहरौ चोक्ता[1] तु वा भूयसी ॥

इति । द्वे केवले द्रव्यावृत्ती विमिश्रा च, तृतीया चैवं त्रयी सा भवति । त्रय्येवेति न स्फुटं भेदः पञ्चविंशतिद्रव्यैरेवेनयोः सप्तदशद्रव्यविधानात् त्र्यय्यपि नैवेति केवला पञ्चविंशतिद्रव्यैवास्ति । अथैवनयोरनेकविधा द्रव्यावृत्तिरुक्ता । यथा स्कन्दे तावदन्तस्त्रयोदशपुटे शरवर्गसङ्ख्या इति । नवशतम् । तत्र मध्ये दिक्षु मध्ये कोणेषु वा रसपदस्थाने सप्तपदकरणे नवव्यूहतया सहस्रकलशसिद्धिः । किञ्चैकाशीत्यां प्राग्वदिति नवैकाशीतिभिरष्टाविंशत्यधिकसप्तशतसिद्धिः, पञ्चविंशतिद्रव्यगतैकाशीत्या सहास्या विमिश्रभेदसिद्धिः । तथा-धमद्वन्द्वद्रव्यगणोऽङ्कशैलपुटयोरित्येकोनपञ्चाशत्सम्भवे प्राग्वद्व्यतिकरान्तरमिति । एवं शङ्करहरौ च तत्राशुगादिनववर्गमिता घटाः स्युरित्येकाशीत्येकोनपञ्चाशतोः सम्भवात् पञ्चविंशतिद्रव्यैः सह प्राग्वदेव विमिश्रिताद्युपपत्तिरिति ॥ १७५ ॥

तत्तद्द्रव्यन्यसनमिति कृत्वा द्रवद्रव्यकुम्भान्
मुक्त्वा शेषान् सपरिकलशान् वारिणा वारुणेन ।
आपूर्यैषूज्ज्वलकिसलयाद्यञ्चितेषु स्वमन्त्रे-
णावाह्याभ्यर्चयतु जलगन्धादिभिश्चानुखण्डम् ॥ १७६ ॥

विमर्शिनी ।

इति उक्तप्रकारेण तत्तद्द्रव्यन्यसनं तस्य तस्य द्रव्यस्य न्यासं कृत्वा द्रवद्रव्यकुम्भान् पञ्चगव्यादिद्रवद्रव्येण पूर्णान् कुम्भान् मुक्त्वा शेषान् पाद्या-[2]दिभिर्द्रव्यैर्युक्तान् सपरिकलशान् द्रव्यहीनांश्च कलशान् वारुणेन वारिणा

1. 'चोक्ता' ख. पाठः. 2. 'स्यापि वि' घ. पाठः.

कलशक्षेत्रोत्तरभागगतस्वस्तिकस्थजलद्रोण्यां गालितवारिणा पूर्णायां तस्यां वरुणं देवं चावाह्य सम्पूज्य पञ्चवारुणादिजप्तेन तेन वारिणापूर्य उज्ज्वलकिसलयाद्यन्वितेषु उज्ज्वलैर्मनोहरैरश्वत्थचूतपनसस्तबकैः, आदिशब्देन तण्डुलपूर्णचक्रिकादिभिरलङ्कृतेषु तेषु अनुखण्डं खण्डे खण्डे स्वस्वमन्त्रेणावाह्य जलगन्धपुष्पादिभिरभ्यर्चयेत् ॥ १७६ ॥

विवरणम् ।

अथ ततः परिवारार्चनमारभेतेति । पाद्यादीन्युपखण्डमध्यकलशेष्वासनेज्यादिषु द्रविणान्यापूर्याभ्यर्चयेदिति च यत्प्रस्तुतं तच्छेषं तदनुवादपुरस्सरं प्रस्तौति — तत्तद्द्रव्यन्यसनमिति कृत्वेति । द्रवद्रव्यकुम्भान्मुक्त्वेति । पञ्चगव्यमधुतैलगुलक्षीररसतज्जलनदीतीर्थाद्युदककषायोष्णोदकगन्धजलानि द्रवद्रव्यपदेन गृहीतानि । तेषां द्रव्यन्यासपूरणं स्वैरेव कार्यमिति तत्पूरितकलशान्मुक्त्वान्यद्व्यतिरेच्येत्यर्थः । शेषान् द्रव्यन्यासमात्रभाजः पाद्यार्घ्यादिकलशानित्यर्थः । सपरिकलशानित्येतदीयपरिकलशानां द्रवद्रव्यकुम्भपरिकलशानामपि ग्रहणम् । हरिहरे तु द्रोणकलशे द्रव्यं समस्तं समामित्याज्यगव्यादिद्रव्याणां न्यासमात्रम् । सम्पूर्य गन्धाम्भसेति वारुणजलेनैव स्वीयगन्धद्रव्यालोडितेन पूरणमिति । वारिणा वारुणेनेत्युत्पूयोद्गुपाहितादिति पूर्वसम्भृत[1]जलस्य ग्रहणम् । एषूज्ज्वलकिसलयान्वितेष्विति । किसलयोऽश्वत्थचूताद्युक्तपल्लवः । आदिशब्देन चक्रिकादीनां प्रागुक्तानां ग्रहणम् । तदलङ्करणे च मन्त्राः प्रागुक्ता एव । अनुखण्डमिति । सर्वखण्डेष्वपि द्रव्यन्यासक्रमेणेति भावः । ब्राह्मेऽपि[2] दलकलशानां पृथग् द्रव्यकलशतया ब्रह्मकलशभावे तेषु पृथगावाहनादि कार्यम् । यथा सप्तदशद्रव्येष्वाज्योष्णोदकरत्नकानीति तद्वत् क्षारगुलासवेति । दलकलशानां स्वाङ्गत्वे तेष्वपि[3] । सपरिकलशान्वारिणेति । पूरितेष्वेव ब्रह्मकलशेष्वपि मन्त्रावाहनादि कार्यम् । यथा घटा नव निवेश्या ब्रह्मभागेऽम्बुज इति । तत्रत्योपघटान्यष्टकान्युदितकलशस्येति ।

मध्ये तत्त्वपदाब्जेऽष्टौ दलेष्वष्टौ च तद् बहिः ।

इति च, दलकलशानामपि परिकलशयोग इति ।

---

१. 'पूर्वं सम्भृ' ङ. पाठः. २. 'ब्राह्म' च. पाठः. ३. 'ङ्गत्वे तु तेष्वपि' ङ. पाठः.

स्कन्दे पञ्चकमेककञ्च विहितं दिक्कोणयोर्यत्पुनः ।

इत्येष्वपि पृथगावाहनादि कार्यं प्रायिकमेवानुखण्डमित्येतदिति ज्ञेयम् ॥ १७६ ॥

आचार्यः सह मूर्तिपैरथ दिशास्वग्निं विहृत्य क्रमात्
स्वस्वोक्तद्रविणाणुभिः कृतहुतिः सम्पातपातं पुनः ।
कृत्वा द्रव्यघटेषु मन्त्रमहितान् हृद्यांशुकैर्वर्मणा
तान् संच्छाद्य विभूषयेत् सकुसुमनोदर्भाक्षताद्यैरपि ॥ १७७

विमर्शिनी ।

अथाचार्यो मूर्तिपैः सह दिशासु पूर्ववदग्निं क्रमाद् विहृत्य स्वस्वोक्तद्रविणाणुभिः अधिवासपटले स्वस्वविभागोक्तैर्द्रविणैर्मन्त्रैश्च कृतहुतविधिर्भूत्वा पुनर्द्रव्यघटेषु संपातपातं कृत्वा मन्त्रसहितान् स्वस्वमन्त्रेण पूजितान् जप्तांश्च तान् हृद्यांशुकैः शुद्धैर्वस्त्रैर्वर्मणा सञ्छाद्य सकुसुमनोदर्भाक्षताद्यैः पुष्पसहितदर्भाक्षतगन्धाद्यैरपि[2] । विभूषयेत् अलङ्कुर्यात् ॥ १७७ ॥

विवरणम् ।

इदानीं कलशपूजानन्तरं तदीयमधिवासहोममाह — आचार्यः सह मूर्तिपैरिति । दिशास्वग्निं विहृत्येति । नागेऽलिन्दभुवि प्रकल्प्य निजकुण्डं पूर्ववद् घटीभ्रान्त्यान्तिमामिति जनितं गुरुकुण्डगतमग्निं यथास्वं दिक्कुण्डेषु विहृत्येत्यर्थः । क्रमादिति । प्रागबिम्बाधिवासोक्तक्रमेणेति भावः । स्वस्वोक्तद्रविणाणुभिः कृतहुतिरिति । निजनिजपूर्वोदितैः समिदादिहोमद्रव्यैस्तदीयहोममनुभिश्च कृताधिवासहोमो भूत्वेत्यर्थः ।

आचार्यकुण्डमधमस्नपनेषु कार्यं
चत्वारि च स्युरपराण्यपि मध्यमेषु ।
द्वेधोदितेष्वथ करोतु नवोत्तमेषु
सर्वेषु विष्णुगिरिशादिषु देशिकेन्द्रः ॥

इति ।

---

१. 'मिति हो' क. पाठः. २. 'द्यैः विभू' ङ. पाठः. ३. 'धं हो' क ख. घ, ङ. पाठः. ४. 'दृश्र' ख, ङ. पाठः. ५. 'भिः कृ' क. पाठः.

पुनर्द्रव्यघटेषु सम्पातपातं कृत्वेति । द्रव्यविन्यासक्रमात् सम्पातार्पणक्रमोऽवगन्तव्यः । मन्त्रमहितानिति । होममन्त्राणां कलशं स्पृशद्भिः गुरुमूर्तिपैर्जप उक्तः । यदुक्तं बिम्बाधिवासे —

'सम्पातं मनुबिम्बके समुपसिच्य स्वस्वमन्त्रान् जपेत्'

इति । यद्वा तत्तद्देवतामन्त्रेज्याजपाभिप्रायमेतत् । यदुक्तम् —

'ततः कुम्भेषु सम्पूज्याः क्रमेण द्रव्यदेवताः ।'

इति ।

यथा प्रधानब्रह्मकलशे मूलेन किञ्चिदभ्यर्च्य हुतमन्त्रैः सम्पातं तस्मिन्नासिच्य 'पुनः प्रयजेच्च किञ्चने'त्युक्तनयेन किञ्चिदभ्यर्च्य हुतमन्त्राञ्जप्त्वा-पूरणोदितमन्त्रैरभ्यर्च्य तानपि मन्त्राञ्जपेदेवमितरब्राह्मेष्वपि यथोचितं कुर्यादिति । ततो वीथीः सम्मार्ज्य गन्धोदकेनास्त्रेणोपलिम्पेत् । मङ्गलपालिकादि परिशोभनपूर्वमेवोक्तम् । हृद्यांशुकैः वर्मणा तान् सञ्छादयेति । वर्म कवचम् । खण्डशपङ्क्तिशो वा समाच्छादनमेतत् । सस्रुमनोदर्भाक्षताद्यैरपि विभूषयेदिति । प्रागस्त्रेणुना दर्भादिकैरपि विभूष्येत्युक्तत्वादेतदप्यस्त्रेण कार्यम् । कवचेनास्त्रप्रोक्षितवस्त्रैराच्छाद्यास्त्रेण दर्भैरलङ्कृत्य पुष्पाक्षतैरपि विकीर्य मूलेनास्त्रेण वा गन्धोदकप्रोक्षणमपि कुर्यादिति भावः ॥ १७७ ॥

प्रागास्यः समवस्थितोऽत्र कलशक्षेत्राद् बहिस्तत्त्वता-
 राराध्याखिलखण्डतत्त्वविहितैकाङ्गं विभाव्याथ तम् ।
भूतानि प्रविलाप्य शोषदहनाद्याधाय सृष्ट्वा लिपि-
 न्यासान्ते समनूदयादि सकलाध्वन्यासनिष्ठं चरेत् ॥ १७८ ॥

विमर्शिनी ।

अत्राधिवासकर्मणि कलशक्षेत्राद् बहिः पश्चिमे भागे प्रागास्यः समवस्थितो भूत्वाथ तत्त्वताराराध्या तत्त्वैस्तारेण च पुष्पाराधनात् तं देवम् अखिलखण्डतत्त्वविहितैकाङ्गम् अखिलैः खण्डैः तत्त्वरूपैरुपलक्षितैकशरीरं विभाव्य तस्य भूतानि प्रविलाप्य शोषदहनाद्याधाय भूतानि सृष्ट्वा लिपिन्यासान्ते समनूदयादि मन्त्रोदयादिसहितं सकलाध्वन्यासनिष्ठं षडध्वन्यासपर्यन्तं कर्म चरेत् ॥ १७८ ॥

---

१. 'ति। वीथीः' च. पाठः, २. 'स्त्र' इति मूलकोशेषु पाठः [illegible]

विवरणम् ।

अथ कलशाधिवासनमाह — प्रागास्य इति । अथ कलशक्षेत्राद् बहिः प्रागास्यः समवस्थित इत्यन्वयः । तत्तत्खण्डाभिमुखतया तदीयपूजायतनेऽवस्थानं प्राक् कृतम् इदानीं तत्कलशसमुदायाभिमुखतया तद्बहिस्तदग्रभागेऽपि तदीयपूजायतने समवस्थानं कार्यमिति भावः । तत्त्वताराराध्येति तत्त्वमन्त्रैस्तावद्भिस्तारैश्च पुष्पाराधनमुक्तम् । तमखिलखण्डतत्त्वविहितैकाङ्गं विभाव्येति तदा प्रतिपत्तिरुपदिश्यते । तमिति । ब्राह्मादितत्तत्खण्डेष्वेवमावाह्याभिपूजितं नानावतिष्ठमानं देवमित्यर्थः । अखिलखण्डैस्तत्त्वैर्विहितैरेकमेवाङ्गं विग्रहो मूर्तिर्यस्य स तथोक्तः । पूर्वं सर्वानपि खण्डांस्तत्त्वानि विभाव्य पुनस्तैस्तत्त्वैरेकमूर्तितामापन्नं तं विभावयेदिति । यदाहुः — ब्रह्मघटादिक्रमेण तत्त्वमन्त्रैः पुष्पाञ्जलिं विधाय[1] प्रणवेन ब्रह्मघटान्तमपि पुष्पाञ्जलिं विधाय सर्वं ब्रह्मकलशेनैकीकृत्येति सर्वेषां तत्त्वतापत्त्यावेकविग्रहतापत्तिः प्रसिद्धैव ।

> हृत्स्थोऽपि भगवान् शक्त्या व्याप्य सर्वत्र संस्थितः ।
> सर्वाध्वपञ्जरे देहे तथा मध्यघटे स्थितः ॥
>
> स्वकीयरश्मिजालाख्यमूर्त्यङ्गपरिवारकैः ।
> भावनारूपभेदेन पृथक्कुम्भेषु संस्थितः ॥

इति । ब्राह्मे[2] देवः दैविकखण्डेषु वासुदेवशान्त्यादयस्तत्पुरुषशान्त्यादयो वा । मानुषे तु सप्तदशद्रव्ये स्वस्वेज्योक्तनयेन हृदयादिचतुष्टयमस्त्रं च । पञ्चविंशतिद्रव्ये त्वस्त्रं त्रित्रिखण्डेषु कल्प्यम् । ततोऽपि बाह्यावरणसम्भवे विष्ण्वादयोऽनन्तादयोऽपि यथायोगं योज्याः तद्बहिरिन्द्रादय इति । देवेऽन्तर्गतशक्तीनामेव[4] मूर्त्याद्यावरणतया प्रसरणम् । तथाचोक्तम् — 'सिन्धोर्यथोर्मिपटलस्ये'त्यादि । ततश्च मूलमूर्त्यादिपुष्पाञ्जलिं विधाय तत्त्वमन्त्रैः सर्गक्रमेण पुष्पाञ्जलिः । तत्र सप्तदशद्रव्ये पुरुषमनोबुद्धीन्द्रियपञ्चभूतरूपेण सप्तदश तत्त्वानि स्युः । पञ्चविंशतिद्रव्ये[5] च पुरुषः प्रकृत्यादीनि च चतुर्विंशतिः । वैष्णवादिषु

---

१. 'वत्तारैश्च' च. पाठः. २. 'ब्रह्मादि' ख. पाठः. ३. 'य सर्वं' ख पाठः. ४. 'मेवैवं मू.' घ. पाठः ५. 'पञ्चदश' ख. ग. घ. पाठः.

जीवप्राणौ पुंप्रकृत्यन्यसंज्ञावित्येतद् भवति । मादिकान्तान्येव तेषां बीजानि, सप्तदशानां त्वक्षरो विसर्गबिन्द्वाद्यकारान्ताः षोडश स्वराः इति बोद्धव्यम् । यदुक्तम् —

स्वगायत्र्यक्षराभिन्नैः पृथिव्यादिकतत्त्वगैः ।
कादिमान्तैर्नमोन्तैश्चाप्युद्धारवशतो मतैः ॥
जीवान्तब्रह्मकुम्भेन गायत्रीसकलात्मना ।

इति ।

षोडशाक्षरवर्णोत्थैर्गन्धमात्रादिपञ्चभिः ।
कर्मज्ञानेन्द्रियप्राणैरादिषोडशभिः स्वरैः ॥

इति च । संहारक्रमेण च तत्त्वमन्त्रैः सकृत् पुष्पाञ्जलिं कृत्वा पुनः प्रणवपुष्पाञ्जलिरेवं लभ्यत इति । पुनस्तालत्रयादि कृत्वोपसंहरेत् । भूतानि प्रविलाप्येति । पुरा ध्यानाधिवासोक्तनयेन गुर्वादिवन्दनपूर्वं तालत्रयादि कृत्वा मन्त्रप्राणायामकरन्यासाक्षराङ्गर्ष्यादिन्यासमपि कृत्वा मानसपूजां कुर्यात् । पुनः कलशमूर्त्तौ फडन्तप्रणवेन प्रोक्षणं तालत्रयादिकं प्रणवेन जीवव्याप्तिसङ्कोचनं प्लुतप्रणवेनात्मनि तदुद्वासनमपि कृत्वा प्राग्वत् प्राणायामव्यापकाभ्यां पृथिव्यादिभूतानि संहरेत् । शोषदहनाद्याधायेति प्लावनाद्युक्तम् । सृष्ट्वेति । प्राग्विलापितानि भूतानि जीवञ्च । पुरोक्तरीत्येति शेषः । लिपिन्यासान्ते इति संन्यस्तसर्ववासनादिसर्वमुक्तश्च । स्वमनूदयादीति । यदुक्तम् — 'प्रत्यक्चितिं परिजपन्नहहे'त्यादि ॥ १७८ ॥

इष्ट्वा पीठमिहाभिवाह्य सकलीकृत्यैकभूयं गतं
सम्पूज्यैनमथो निवेद्य परितो दद्याद् बलिं पूर्ववत् ।
स्वस्वोक्तैर्बलिमन्त्रकैरथ समाचम्यान्तरभ्येत्य त-
न्नैवेद्यं प्रतिसृज्य तोषणसपर्यां च प्रकुर्यात् गुरुः ॥ १७९ ॥

विमर्शिनी ।

पुनः पीठमिष्ट्वा इहावाह्य सकलीकृत्यैकीभूयम् एकत्वं गतम् एनं देवं संपूज्य निवेद्याथो पूर्ववत् स्वस्वोक्तैर्बलिमन्त्रकैः परितो बलिं च दद्यात् । अथो

१. 'शमूर्तौ' ग. घ. पाठः. २. 'णवप्रो' घ. पाठः ३. 'शोषण'. ४ 'ति । प्रत्यक्' क. पाठः.

समाचम्यानन्तरमभ्येत्य नैवेद्यं प्रविसृज्य तोषणसपर्यां प्रसन्नपूजां च प्रकुर्वीत । गुरुरिति पूर्वस्मादधिवासादत्रातिदेशं कर्तुं समर्थ इति सूचितम् ॥ १७९ ॥

विवरणम् ।

सकलीकृत्यैकभूयं गतमिति । कृत्स्नकलशसमुदायैकमूर्तिभूतमेव मन्त्रपुटितमातृकान्यासादिभिः सकलीकुर्यात्, न ब्रह्मकलशमात्रविग्रहमन्यद्वेत्यभिप्रायः । परित इति मण्डपबहिः । समन्तादित्यर्थः । पूर्ववदिति । बिम्बाधिवासोदितमार्गेण । स्वस्वोक्तैः बलिमन्त्रैराधाश्चेत्यादिभिर्बलिं दद्यात् । निवेद्यशेषेण होमो ब्राह्मणभोजनमपि पूर्ववदिष्यत एव ॥ १७९ ॥

शुद्धा भवन्त्वित्यणुना च पञ्च-
विंशत्युपेतेन पवित्रपाणिः ।
सम्पातशेषान्वितवारिणोक्षेत्
कुम्भान् किरेदक्षतसूनकैश्च ॥ १८० ॥

शुद्धा भवन्त्विमे कुम्भाः सकुशाः सापिधानकाः ।
वातातपपरीताश्च शुभलक्षणसंयुताः ॥ १८१ ॥

पञ्चविंशतिधा विष्णोस्तत्त्वभेदेन तिष्ठतः ।
द्रव्येयंत्ताश्रयाः सर्वाः सङ्गच्छन्तां विभूतयः ॥ १८२ ॥

इति ।

विमर्शिनी ।

ततः पवित्रपाणिर्गुरुः 'शुद्धा भवन्त्वि'त्यणुना 'पञ्चविंशतिधे'त्युपेतेन सम्पातशेषान्वितवारिणा सम्पातशेषयुक्तैर्गन्धजलैः पूजितान् कुम्भानुक्षेत् । अक्षतसूनकैः पुष्पाक्षतैः किरेच्च ॥ १८० ॥

प्रस्तुतं मन्त्रद्वयं पठति — शुद्धा भवन्त्विति पञ्चविंशतिधेति च ॥ १८१, १८२ ॥

विवरणम् ।

शुद्धा भवन्त्विति । प्रागवसानीयार्घ्यादेतत् कार्यम् । वक्ष्यति च — 'दत्त्वावसानीयकमर्घ्य'मिति । प्रागवसानीयार्घ्यादुत्थाय करतले शङ्खोदकं गृहीत्वा

१, 'यदार्घ्यो' क. ग. पाठः.

सम्पातशेषयुतं गन्धाक्षतपुष्पयुतं कृत्वा तेन ओं शुद्धा भवन्त्विति मन्त्रेण कलशसमुदायं प्रोक्ष्य तेनैवाक्षतपुष्पाणि विकिरेत् । पात्रान्तरे वा शङ्खोदकादि सम्पाद्य कूर्चाग्रेण तेन मन्त्रेण प्रोक्ष्याक्षतपुष्पविकिरणं कार्यम् । तदुक्तम् —

शान्तितोयमथानीय सम्पाताज्यसमायुतम् ।
प्रोक्षयेत् कलशान् सर्वान् कूर्चाग्रेण पुनर्गुरुः ॥

इति । सर्वखण्डोद्देशेनैवं[1] प्रोक्षणमपि शक्यमिति । पञ्चविंशत्युपेतेनेति । प्रोक्षणानन्तरं विकिरणानन्तरं च ओं पञ्चविंशतिधा विष्णोरित्यप्युच्चारणीयमिति भावः । यदुक्तम्—पञ्चविंशतिधेत्यनेन सर्वविभूतियोगं विभाव्येति ॥ १८२ ॥

सम्प्रार्थ्य शास्त्रोदितमित्यनेन
मन्त्रेण मन्त्री रचिताञ्जलिः सन् ।
दत्त्वावसानीयकमर्घ्यमस्मै
देवाय कुर्वीत लयाङ्गकाद्यम् ॥ १८३ ॥

विमर्शिनी ।

पुनश्च संप्रोक्ष्य रचिताञ्जलिः सन् मन्त्री मन्त्रार्थं स्मरन् 'शास्त्रोदितमि'त्यनेन मन्त्रेण संप्रार्थ्य पुनरवसानीयमर्घ्यं चास्मै देवाय दत्त्वा लयाङ्गकाद्यं लयाङ्गं रक्षां च कुर्वीत ॥ १८३ ॥

विवरणम् ।

मन्त्रीति प्रणवयोगाद्युक्तम् ॥ १८३ ॥

शास्त्रोदितमिदं चास्तु स्नपनं देवनिर्मितम् ।
अनेन स्नपनेनास्तु प्रसन्नो भगवान् हरिः ॥ १८४ ॥

विमर्शिनी ।

प्रार्थनामन्त्रं पठति — शास्त्रोदितमिति ॥ १८४ ॥

अभ्येत्य देवायतनाग्रसंस्थः
कृत्वा प्रसूनाञ्जलिमञ्जलिं च ।
विज्ञापयेद् विश्वजनीनमेनं
बुधोऽधिवासः कृत इत्यनेन ॥ १८५ ॥

---

१. 'द्देशेन प्रोक्षणं श' घ. ङ. च. छ. पाठः.

विमर्शिनी ।

ततोऽन्तरम्येत्य देवायतनाग्रसंस्थः देवालयस्याग्रतः स्थित्वा प्रसूनाञ्जलिमञ्जलिं च कृत्वा विश्वजनीनं विश्वस्य जनस्य हितकारिणम् एनं देवम् 'अधिवासः कृत' इत्यनेन मन्त्रेण विज्ञापयेत् ॥ १८५ ॥

विवरणम् ।

विश्वजनीनं विश्वजनहितम् । प्रतिष्ठावसितौ लोकानुग्रहहेत्वर्थमित्याद्यर्थनया यादृगवस्थो देवो भावितस्तादृगवस्थस्यैव तस्येदानीमविछिन्नतयानुसन्धानार्थमेतदाभिधानम् । बुधः प्रसूनाञ्जलिमञ्जलिं च कृत्वेति सम्बन्धनीयम् । प्राक्तल्लयाङ्गादि कृत्वा संरक्ष्येत्युक्तत्वादिदानीं मनसा किञ्चित् सकलीकरणं मनसैव पूजनं विज्ञापने कृते मनसैव लयाङ्गकरणं चोक्तम् । द्वाःस्थयोरर्घ्यदानादिकमपि बुधशब्देनोक्तमिति ॥ १८५ ॥

अधिवासः कृतो देव! स्नपनाय मया तव ।
क्षणेन मे प्रसादोऽस्य क्रियतां पुरुषोत्तम! ॥ १८६ ॥

विमर्शिनी ।

तन्मन्त्रं पठति—अधिवासः कृत इति ॥ १८६ ॥

अत्रोदाहृतविष्णोरित्यादिपदांशकेषु मन्त्रितमः ।
शम्भोरित्यादि पदं स्वं स्वं कुर्वीत सर्वदेवेषु ॥ १८७ ॥

विमर्शिनी ।

अत्रास्मिन् प्रकरणे उदाहृतविष्णोरित्यादिपदांशकेषु उक्तेषु 'पञ्चविंशतिधा विष्णोरि'त्यादिषु विष्णोरित्यादिपदस्थानेषु मन्त्रितमः मन्त्रपदयोजने कुशलः सर्वदेवेष्वपि शम्भोरित्यादि स्वं स्वं पदं कुर्वीत ॥ १८७ ॥

विवरणम् ।

मन्त्रितम इति । वृत्तानुरोधेनोचितपदयोजनमुक्तम् । यथा पञ्चविंशतिधा विष्णोः पञ्चविंशतिधा शक्तेरित्यादि । प्रसन्नो भगवाञ्छिवः प्रसन्नः शिवः शङ्कर इत्यादि । क्रियतां परमेश्वर परमेश्वरीत्यादि इति ॥ १८७ ॥

समेत्य मण्डपं ततो निजे निषद्य विष्टरे ।
परं पदं परामृशन्नतन्द्रितो[1] निशां नयेत् ॥ १८८ ॥

---

१. 'निद्रतो' इति मूलकोशपाठः.

विमर्शिनी ।

ततो मण्डपं समेत्य निजे विष्टरे आसने निषद्योपविश्य अतन्द्रितः निन्द्रातन्द्रादिविहीनः परं पदं योगनिद्रयोत्कृष्टं पदं गतं देवं परामृशन् ध्यायन् निद्रां नयेत् ॥ १८८ ॥

विवरणम् ।

'परं पदं परामृशन्निति, कलशसन्निहितभगवदनुसन्धानमुक्तम् । यथोक्तं प्राग्—'इतिहासपुराणनृत्तगीतादिभि'रित्यादि ॥ १८८ ॥

प्रातस्तुर्यदिने स्वसाम्प्रतिककृत् सम्पूज्य सर्वात्मकं
तारेणाथ पृथक् स्वतत्त्ववपुषं कृत्वार्घ्यहस्तोऽग्रतः ।
स्थित्वा मूलमनुं प्रजप्य मरुता द्वारं विदार्याभिग-
म्यान्तर्दर्शितमङ्गलोऽर्घ्यसलिलं देवाय दद्याद् गुरुः ॥ १८९ ॥

विमर्शिनी ।

पुनः प्रतिष्ठायास्तुर्यदिने चतुर्थदिवसे गुरुः स्वयं स्वसांप्रतिककृत् स्वस्य सम्प्रतिभवं प्राभातिकं कर्म कृत्वा मण्डपं गत्वा सर्वात्मकम् एकीभूतं देवं तारेण सम्पूज्याथ स्वतत्त्ववपुषं स्वतत्त्वात्मकशरीरं देवं तत्त्वैः पुष्पाराधनेन पृथक् कृत्वा तस्माद् गत्वा देवालयस्याग्रतोऽर्घ्यहस्तः स्थित्वा मूलमनुं यथाशक्ति प्रजप्य मरुता वायुबीजमुच्चरन् द्वारं विदार्य उद्घाट्य अन्तरभिगम्य देवसमीपं गत्वा दर्शितमङ्गलो भूत्वा उत्सवपटले वक्ष्यमाणरीत्या मङ्गलानि दर्शयित्वा देवायार्घ्यसलिलं दद्यात् ॥ १८९ ॥

विवरणम् ।

स्वसाम्प्रतिककृदिति । आत्मनो यत् सम्प्रति तदा कर्तव्यं स्नानसध्योपासनादि तत्सर्वं कृतवान् सन्नित्यर्थः । सम्पूज्य सर्वात्मकमिति । प्रकृतं सकलकलशसमुदायरूपं देवं विधिवत् सम्पूज्येत्यर्थः । सर्वात्मकमित्यनेन सकलीकरणसमये प्रागुक्तावरणतत्त्वमन्त्रपुष्पाञ्जल्यनुसारेण तन्न्यसनं पूजासमये तथा पूजनमपि सूचितम् । अथ तारेण पृथक् स्वतत्त्ववपुषं कृत्वेति । लयाङ्गतालत्रयाद्यनन्तरं प्रणवेन किञ्चित् सम्पूज्य प्रणवेनैव कलशान् पृथक्कृत्य पुनः प्रणवैस्तत्त्वमन्त्रैश्च ब्रह्मकलशादिसर्गरीत्या पुष्पाञ्जलिं विदध्यात् । तत्रोद्धारक्रमसंहारो विपर्ययेण सर्ग इत्यवगन्तव्यम् । पुनस्तत्तद्देवतामन्त्रैः मूलेन सर्गक्रमेणैव

१. 'पदं परा' ख. ङ. पाठः.

किञ्चिदर्चयित्वास्त्रेण रक्षां कुर्यादिति । तत्त्ववपुषं स्ववपुषं च कृत्वेति व्याख्येयम् । स्ववपुषं स्वीयरूपभाजं यद्रूपतया पूजायां भावितोऽसौ तत्तत्खण्डेषु देवं तद्रूपभाजं देवतामयं स्वमूलमन्त्रमयञ्चेत्यर्थः । अग्रतोऽर्घ्यहस्तः स्थित्वेति । द्वारं विदार्येति निर्देशादौचित्याच्च प्रासादद्वारि पुरतः स्थित्वेत्यवसीयते । मूलमनुं प्रजप्येति । द्वाःस्थाभ्यनुज्ञापूर्वकमेतदित्यौचित्याल्लभ्यते । मरुता द्वारं विदार्येति । वायुबीजेन प्रासादीयं द्वारमुद्घाट्येत्यर्थः । अन्तरभिगम्येति गर्भगृहोन्तरभिगमनमुक्तम् । दर्शितमङ्गल इति । देवाय मङ्गलानि दर्शयित्त्वेत्यर्थः । मन्त्रीति निर्देशात् हृदयेनैतदिति ज्ञेयम् । लौकिकान्येतानि मङ्गलानि ।

दीपिका दर्पणं हेमधान्यपात्रं फलं दधि ।
पुस्तामङ्गलपात्री च लौकिकं मङ्गलाष्टकम् ॥

इति । यद्वा प्रागुक्तान्येवाष्टमङ्गलानि । यथा 'न्यस्येच्छङ्खारिकेतूनि'त्यादि । तानि च लोहादिकृतानि गोमयेनाश्वत्थदलेषु कल्पितानि वा तण्डुलपूर्णपात्रिकायां परितो निधायास्त्रप्रोक्षणादि कृत्वा प्रणवेन पूजितानि स्युरिनि देवाग्रतस्तिष्ठन् प्रणवेन देवं स्वावस्थातो बहिर्मुखं विभाव्य मङ्गलावलोकनं शङ्खादिमङ्गलध्वनिना सह कार्यमिति ज्ञेयम् । देवायार्घ्यसलिलं दद्यादिति । मूलेन पुष्पाराधनपूर्वकं तत्तदुपचारेणार्घ्यदानं कार्यम् । 'दत्त्वा द्वार्युपचारतोऽर्घ्य'मिति चोक्तम् ॥ १८९ ॥

निर्माल्यं व्यपनीय विश्वमनुना विष्णौ परेष्वस्त्रतो
मन्त्री मूलत एव वा शिवहरौ गव्येन पुंसूक्ततः ।
तैलेनाज्य परेषु चास्त्रमनुना शैरीषचूर्णादिभि-
र्घृष्ट्वा भूरिजलैर्विशोध्य च विभुं सम्पूजयेत् पायसैः ॥१८९॥

विमर्शिनी ।

विष्णौ विश्वमनुना, पञ्चतत्त्वेषु मध्यमन्त्रेण, परेष्वस्त्रतो मूलत एव वा निर्माल्यं व्यपनीय शिवहरौ पुंसूक्ततो गव्येन परेषु तैलेनास्त्रमनुना च आज्य अभ्यञ्जनं कृत्वा शैरीषचूर्णादिभिः अभ्यङ्गनिवर्तनसाधनैः घृष्ट्वा

१. 'दीयद्वा' च. पाठः. २. 'ऽन्तर' ख. च. पाठः. ३. 'र्घ्यं दद्या' च. पाठः.

(൧൦ശരീഷം–൧൩൩ മനിവാക.) भूरिजलैर्विशोध्य विभुं देवं पायसैः सह संपूजयेत् । मन्त्रीत्यनेनास्यां नित्यक्रियायां सर्वं कर्म मन्त्रसहितमेव कुर्यादिति सूचितम् । मन्त्रविशेषविधानाभावे मूलं प्रणवं वा तत्र योजयेदित्यपि सूचितम् ॥ १९० ॥

विवरणम् ।

विश्वमनुना विष्णाविति । निर्माल्यव्यपनयने विश्वतश्चक्षुरित्ययं मन्त्र उक्तः । परेष्वस्त्रेत इति । पाशुपतादिना स्वस्वोक्तास्त्रेण शिवादिषु निर्माल्यापनयनमुक्तम् । मन्त्रीति क्वचिन्मन्त्रान्तरविकल्पः सूचितः । यथा शिवे —

अपनीय तु निर्माल्यमावर्त्य ब्रह्मपञ्चकम् ।

इत्यादि । मूलत एव वेत्यपि निर्माल्यहाने मन्त्रविकल्पः । यद्वा मन्त्रीति निर्माल्यविनियोगमन्त्राभिज्ञत्वमुक्तम् । निर्माल्यं सर्वं विष्वक्सेनादिषु तदीयमन्त्रेणार्घ्यदानपूर्वं समर्पयेदिति च तदभिप्रायः । देवोपभुक्तमखिलं तस्मै समर्प्येति चोक्तम् । देवसन्निधावपि तन्निजमन्त्रेण विभाव्य तथा कार्यमिति । विष्ण्वादिषु प्रणवेन निर्माल्यस्यात्मसात्करणं वा कार्यम् । यदुक्तम् — 'विश्वेनापनयेत्', 'बहिरात्मसात्कृत्य निर्माल्य'मिति । शिवहरौ गव्येन पुंसूक्तत इति आज्येति सम्बध्यते । तैलेनाज्य परेषु चेति मूलैमेव मन्त्रः । प्रागेव पञ्चगव्यं तैलञ्च स्वास्तेके पूजयित्वैवं तेन बिम्बेऽञ्जनं कार्यम् । पुनः शैरीषचूर्णादिभिरुन्मर्दने भूरिजलैस्संक्षालने चास्त्रमेव मन्त्रः । चूर्णजलानामस्त्रप्रोक्षणादि सर्वं न्यायसिद्धम् । विभुं सम्पूजयेत् पायसैरिति । तुर्यदिने प्रातस्तनी नित्यपूजापीयमेव भवति ॥ १९० ॥

इष्ट्वा पीठमिहाभिवाह्य सकलीकृत्य प्रदाय क्रमात्
पाद्यार्घ्ये स्त्रजिनार्णतोऽस्त्रमनुना वाच्छिद्य तत्कौतुकम् ।
प्रक्षाल्य स्वकरौ प्रदाय पुनराचामादि संस्नाप्य तं
सिक्त्वा तत्त्वहुतान्तहोमकलशैः प्रत्येकमभ्यर्चयेत् ॥१९१॥

---

१. 'व चेत्यपि' क. पाठः. २. 'ति तान्निर्मा' पाठः ३. 'ब्रमन्त्रमेव मन्त्रः' क. पाठः.

विमर्शिनी ।

पुनः पीठमिष्ट्वा इह पीठे देवं चावाह्य सकलीकृत्य पाद्यार्घ्ये क्रमात् स्वस्वक्रमेण प्रदाय स्वजिनार्णतः स्वस्वगायत्र्या स्वस्वास्त्रमनुना वा तत्कौतुकं देवस्य दक्षिणकरे पूर्वमेव बद्धं कौतुकम् आच्छिद्य त्यक्त्वा स्वकरौ प्रक्षाल्य पुनस्त्वाचामादि प्रदाय संस्नाप्य तत्त्वहुतान्तहोमकलशैः प्रायश्चित्तपटले वक्ष्यमाणैर्होमकलशैः सिक्त्वा होमकलशस्नाने प्रत्येकमभ्यर्चयेच्च ॥ १९१ ॥

विवरणम् ।

अथ नैमित्तिकीमपि पूजामाह — इष्ट्वा पीठमिति । तत्कौतुकमाच्छिद्येति । तस्य बिम्बस्य कौतुकं प्राग् 'इष्ट्वा गन्धादिभिः कौतुकमपि कलये'दिति बद्धमित्यर्थः । सिक्त्वा तत्त्वहुतान्तहोमकलशैरिति । पूर्वेद्युरेव कृतप्रायश्चित्तशान्तितत्त्वहोमसंसिद्धकलशैरभिषिच्येत्यर्थः । निष्कृतिवक्ष्यमाणविधिना तत्त्वान्तिमान् होमान् कुर्वीतेति हि प्रागुक्तम् । प्रत्येकमभ्यर्चयेदिति । तेषां पृथक् पृथग् विधिवत् पूजा कार्येत्यर्थः ॥ १९१ ॥

अथाराध्य पीठं समावाह्य देवं
तदीयाश्च मुद्राः प्रदर्श्यार्णतत्त्वम् ।
स्वमन्त्रोत्तरं न्यस्य दत्त्वोपहारान्
जलैः स्नानकालेऽभिषिच्यार्चयित्वा ॥ १९२ ॥

गत्वान्तर्मध्यकुम्भानुमतिकृदुपगम्यार्च्य चोद्धार्यकुम्भं
नीराज्यार्घ्यं प्रदाय स्वविहितमनुनोद्धार्य गत्वान्तरेऽर्घ्यम् ।
दत्त्वा नीराज्य देवं स्नपयतु कलशेनार्चयेच्चानुखण्डं
नैवेद्यान्तेऽन्तरा स्नानमपि वितनुयात् तत्तदुक्ताणुनात्र ॥१९३॥

विमर्शिनी ।

अथ पीठमाराध्य देवं समावाह्य तदीया आवाहनादिमुद्राः प्रदर्श्य अर्णतत्त्वं[3] स्वमन्त्रोत्तरं लिपितत्त्वमन्त्राक्षरादिकं च न्यस्योपहारान् दत्त्वा स्नानकालेऽभिषिच्यार्चयित्वा मण्डपान्तर्गत्वा मध्यकुम्भानुमतिकृद् भूत्वा ब्रह्मकलशस्थदेवाय पुष्पमाराध्य तस्यानुज्ञां लब्ध्वा उद्धार्यकुम्भम् उद्धारयोग्य

१. 'कृ विधि' च. पाठः. २. 'रा' इति मूलकोशपाठः. ३. 'त्त्वं स्वस्व' ख. पाठः.

कुम्भमुपगम्य किञ्चिदार्च्य संपूज्य नीराज्यार्घ्यं प्रदाय स्वविहितमनु-ना स्वस्वगायत्र्या द्रव्यकुम्भं स्वस्वमूलेन तत्परिकुम्भं च मूर्तिपेनोद्धार्यो-न्तर्गत्वा देवायार्घ्यं दत्त्वा नीराज्य कलशेन देवं स्नपयतु । अनुखण्डं खण्डे खण्डे स्नपिते देवमर्चयेच्च । अत्र खण्डानां खण्डानामन्तराले नैवेद्यान्ते तत्तदु-क्ताणुना तत्तदागमेषूक्ताणुना अन्तरा स्नानमपि वितनुयात् ॥ १९२,१९३ ॥

विवरणम् ।

द्रव्यकलशाभिषेकार्थतया पूजामाह — अथाराध्येति । अर्णन्यासो मूलपुटितलिपिन्यासः । स्वमन्त्रोत्तरं न्यस्येति । पुनर्मूलवर्णाङ्गादिन्यासः । ॥ १९२ ॥

गत्वान्तरिति मण्डपाभिप्रायम् । देवे तालत्रयादि कृत्वा बहिर्निरेत्य कलशमण्डपं प्रविश्येत्यर्थः । मध्यकुम्भानुमतिकृदिति प्रधानब्रह्मकलशाभ्यनुज्ञा-पनमुक्तम् । उपगम्यार्च्य चेत्येतदिहापि योज्यम् । इह मूलेनाच्छादनवस्त्रो-द्धारणं विधाय ब्रह्मकलशसन्निधिं गत्वा तं किञ्चिदिष्ट्वा पुष्पाञ्जलिं कृत्वा प्रण-वेन परिकलशाभिषेकानुज्ञां लभेतेति । उद्धार्यकुम्भमिति समासपदम् । स्नपनक्रम-स्तावत्तत्प्रकरणेऽभिहित एव । ततो यो ब्रह्मकुम्भस्नपनकृते नेतुमुद्धारणीयतया प्राप्तस्तमुपगम्य तद्देवतामन्त्रेण मूलमन्त्रेण च किञ्चित् पूजयेत् । पूर्वं तदीयं खण्डं प्रणवेन परिपूज्य तदूब्रह्मकुम्भपरिकुम्भभिदां प्रणवेन विभाव्यैतत् कार्य-मिति । पुष्पदन्तपदेन कलशानयने प्रवेशो निष्क्रमश्च तैत्तदुचितवीथिमार्गेण गमनागमने गुरुमूर्तिपादीनामित्यवबोद्धव्यम् । प्रत्यङ्मुखं ब्रह्मकलशं प्रति तथोचितत्वात् । यदुक्तम् —

'पुष्पदन्तप्रदेशे स्यात् सञ्चारो मूर्तिधारिणाम् ।'

इति । नीराज्येति । नीराजनीयैरचनं पुरोक्तं 'शुद्धे तैजसपात्रक' इत्यादि । स्वास्त्रेण च नीराजनम् । स्वविहितमनुनोद्धार्येति । कुम्भन्यासे यो मन्त्रः स एव तदुद्धारेऽपि भवति । गत्वान्तरिति ततो निष्क्रम्य प्रासादान्तर्गमनमुक्तम् । तत्र प्रासादद्वारेऽप्यर्घ्यदानं बिम्बादिनयनासिद्धम् । अर्घ्यं दत्त्वेति । कलशस्यै-

१. 'म्भं स्वमू' ङ. पाठः., २. 'दिष्ट्वा' ख. पाठः. ३. 'कलश' क. छ. पाठः. ४. 'तद्विहित' ङ. पाठः. ५. 'यं पुरो' क. छ. पाठः. ६. ति निष्क्रम्य' च. पाठः.

वार्घ्यदानमेतत् । नीराज्य देवमिति । पूर्ववदस्त्रेण नीराजनम् । स्नपयतु कलशेनेति । तेन कलशेन देवं तत्तत्प्रकरणोक्तमन्त्रेणाभिषिञ्चेत् । कलशस्थं कूर्चं दक्षिणहस्तेन गृहीत्वा कलशाग्रान्निस्सृततोयं यथा कूर्चाग्रं स्पृष्ट्वा दैवेन तीर्थेन देवमूर्धनि निपतेत्तथा स्नपयेदिति चोक्तम् । अनुखण्डमर्चयेच्च देवमिति । * 'द्रव्यघटैस्तदीयपरिकुम्भैश्चे'ति वक्ष्यति तदपि हृदि कृत्वैतदुक्तम् । तेन कलशेन तदीयपरिकलशैश्चाभिषिच्यार्चयेत् । पुनः समनन्तरोद्धार्यखण्डे ब्रह्मकलशेन तदीयपरिकलशैश्चाभिषिच्यार्चयेत् । एवमखिलेष्वपीति भावः । व्यापकाङ्गन्यासं कृत्वैतत्पूजनं पुनर्मुखार्घ्यं दत्त्वा निवेद्यं निवेदयेत् । तदाह— नैवेद्यान्त इति । गण्डूषादि दत्त्वा पूर्वेणैव नीराजनीयेन नीराजयेत् । 'तत्स्थांशुकाद्यैर्नीराज्ये'ति यद् वक्ष्यते तत् सकलकलशतुल्यमेवेति ज्ञेयम् । तत्तदुक्ताणुनेत्येतद् देवं स्नपयत्वित्यत्रापि योजनीयम् ॥ १९३ ॥

सर्वत्र तत्तदणुदैवतमूलतारै-
मध्यस्थितैश्चरतु संस्नपनं घटैस्तैः ।
निर्दैवतैः[2] परिघटैर्मनुवित् कुमार्यां
दुर्गाभिरङ्गमनुभिः शरजे हृदा वा ॥ १९४ ॥

विमर्शिनी ।

मनुवित् मन्त्रयोजनकुशलो गुरुः सर्वत्र देवेषु प्राक् तत्तदणुदैवतमूलतारैः 'इदं विष्णुरि'त्यादितत्तन्मन्त्रानन्तरं 'पितृभ्यो नमः' इत्यादितत्तद्देवतानाममन्त्रान्ते[3] स्वस्वमूलमन्त्र तारं चोक्त्वा मध्यस्थितैः स्वखण्डेषु मध्यस्थब्रह्मकलशैः तैर्घटैः संस्नपनं चरतु । तदनन्तरं तत्तत्रस्थैः परिघटैः निर्दैवतैः[4] देवतानाममन्त्रहीनैरुक्तैर्मन्त्रैः[5] स्नपनं चरतु । कुमार्यां[6] दुर्गाभिर्वा, शरजे त्वङ्गमनुभिर्वा हृदा वा चरतु ॥ १९४ ॥

विवरणम् ।

तमेव तत्तन्मनुमिदानीं ब्रूते—सर्वत्रेति । सर्वदेवेषु सर्वखण्डेषु चेत्यर्थः । तस्य तस्य द्रव्यकलशस्य यो मन्त्र उक्तो यथा ऋचः पुरुषसूक्तस्य 'पाद्य

---

१. 'खिलखण्डेष्व' ख. पाठः. २. 'निर्दे' ख. पाठः. ३. 'नां मन्त्रा' ख. पाठः ४. 'निर्दे' ख. पाठः. ५. 'न्यैर्हीनै' ङ. पाठः. ६. 'मार्यां तु दु' ख. घ.ङ. पाठः. * 'द्रव्यघटैः स्वकीयपरिकुम्भै' रिति वक्ष्यमाणः पाठः.

इदं विष्णुरणुरित्यादि । यच्च दैवतमुक्तं, यथा-'विष्णूणरश्म्यजकुबेरे'त्यादि 'मूलं ब्राह्मे पूरणे' इत्यादि च यच्च तत्र तत्र मूलं प्रणवश्चैतैस्तत्तत्खण्डेषु ब्रह्मकलशैरभिषिञ्चेत् । निर्दैवतैस्तैः परिघटैरिति । देवतामन्त्रमपहाय शेषैस्तत्तन्मनुमूलतारैरित्यर्थः । मनुविदिति प्रणवोपचारमूलानामादौ योगो यथावसरं पीठावरणादिमन्त्रयोगश्चोक्तः । कुमार्यां दुर्गाभिरिति परिकलशस्नपने मन्त्राभिधानम् । दुर्गायां सप्तदशद्रव्यविधौ तु निर्दैवतैस्तैरित्येतदेवेष्यते । शरजेऽङ्गमनुभिर्हृदा वेत्यपि परिकलशविषयम् । एतदेवा'ङ्गाणुनावशिष्टै'रिति 'शुद्धजलैर्हृदेति वे'ति चोक्तम् ॥ १९४ ॥

तन्महेशमनुना महेश्वरे श्रीशसेशहरिसुम्भविद्विषि ।
ब्रह्मजङ्गमनुना स्वमूलतोऽन्येषु च स्नपनमन्तरा चरेत् ॥१९५॥

विमर्शिनी ।

अन्तरा स्नाने मन्त्रानाह — तन्महेशेति । महेश्वरे तन्महेशमनुना 'तन्महेशे'त्याद्यया गायत्र्यान्तरा स्नपनं चरेत् । श्रीशसेशहरिसुम्भविद्विषि विष्णुशङ्करनारायणदुर्गासु 'ब्रह्मजज्ञ'मनुना, अन्येषु देवेषु स्वस्वमूलतश्च ॥ १९५ ॥

विवरणम् ।

ब्रह्मजज्ञमनुनेति पूर्वत्र योजनीयम् । निर्माल्यं व्यपनीयान्तरा स्नाने कृते किञ्चित् संपूज्यापरेण ब्रह्मकलशेन नीराजनपूर्वं स्नपनं कार्यम् । तदीयपरिकलशैरभिषिच्य व्यापकादि कृत्वा किञ्चित् सम्पूज्य मुखार्घ्यं दत्त्वा निवेद्यं देयमिति सर्वत्र समानम् । पञ्चगव्यतैलाद्यभिषेके तु पुनः शिरीषचूर्णादिभिरुद्वर्तनमपि कार्यम् । सर्वकलशस्नपनेषु तदङ्गदेवताप्रोक्षणार्थमवस्रावोऽपि सम्पादनीयः, यतो वक्ष्यति 'साक्स्रुतोक्षं परिषद्बलिञ्चे'ति ॥ १२५ ॥

तत्तच्छागसमीरितक्रममनूपेतैरिति स्नापयेद्
देवं द्रव्यघटैः स्वकीयपरिकुम्भैश्च प्रकृत्याश्रितम् ।
आश्रित्य क्रममन्तरङ्गवशदिक्कोणादिकं वोद्धृतैर्-
मध्यान्ते स्नपनेऽत्र तद्दलघटा यद्येतदन्तेऽमुना ॥ १९६ ॥

---

१. 'वं यदुक्तं' क. पाठः.

विमर्शिनी ।

इति एवमुक्तेन विधिना तत्तद्भागसमीरितक्रममनूपेतैः तत्र तत्र विष्ण्वादिभागेषु सम्यगुक्तैः क्रमैर्मन्त्रैश्च संयुतैर्द्रव्यघटैस्तं देवं स्नापयेत् । स्वकीयपरिकुम्भैश्च तत्र प्रकृत्याश्रितं क्रममाश्रित्य वा पञ्चविंशत्यादिकलशयुक्तेषु खण्डेषु स्नानकाले यथा प्रकृतिः सर्वकलशस्वरूपिणी स्थितिः दैविकाद्या वा मानुषाद्या वा दिग्विदिक्स्था वा प्रादक्षिण्या वान्यथा वा, तथा विकृतिखण्डेष्वपि तं क्रममाश्रित्येत्यर्थः । इत्येकः पक्षः । अन्तरङ्गवशदिक्कोणादिकं सर्वखण्डेष्वपि मध्यकलशोद्धारानन्तरं तत्तदन्तर्भागसमीपस्थदिक्कोणानन्तरं तत्तद्बहिर्दिक्कोणान्तरालक्रममाश्रित्येत्यपरः पक्षः । एवमुद्धृतैः स्वस्वपरिकलशैश्च स्नापयेत् । मध्यान्ते स्नपनेऽत्र ब्रह्मखण्डे तद्दलकलशाः सन्ति यदि एतदन्ते दलकलशानामप्यन्ते अमुना ब्रह्मकलशेन स्नापयेत् ॥ १९६ ॥

विवरणम् ।

परिकलशोद्धारक्लृप्तिमपि दर्शयन्नाह– तत्तद्भागसमीरितक्रममनूपेतैरिति । तत्तद्भागेषु समीरिता ये क्रमा ये च मन्त्राः तैरुपेतैर्द्रव्यघटैरित्येवमुक्तप्रकारेण देवं स्नापयेत् । किञ्च प्रकृत्याश्रितं क्रमं वान्तरङ्गवशदिक्कोणादिक्रमं वाङ्गीकृत्योद्धृतैः स्वकीयपरिकुम्भैश्च समुच्चयतस्तं स्नापयेदिति । प्रकृतिमाश्रितः क्रम इति । विष्णौ तावत्सप्तदशद्रव्ये ब्राह्म आज्यं, दैविके प्रागादिप्रादक्षिण्येनोष्णोदकादीनि मानुषे दिग्विदिक्षु पाद्यादीनीति ह्युक्तम् । तत्र मध्ये दैविके प्रागादिप्रादक्षिण्येन पुनर्मानुषे दिग्विदिक्ष्वित्येष तावत् पूरणक्रमः । 'मानुषदिक्खण्डघटै'रिति मानुषे दिक्षु मध्ये पुनर्मानुष एव विदिक्षु दैविके च दिग्विदिक्ष्वित्येष उद्धारक्रमः । सेयं प्रकृतिः क्रमावश्याकाङ्क्षी । खण्डगतकलशसमुदायो विकृतिः । अतस्तदाश्रितोऽस्य पूरण उद्धारे च क्रम इत्यभिप्रायः । तत्तद्ब्रह्मघटं प्रति तदीयान्तरपरिकलशानामन्तरङ्गत्वं बाह्यपरिकलशानाञ्च बहिरङ्गत्वं दिक्कोणान्तरालक्रमश्च सामान्र्यम् । अतोऽन्तरङ्गादिवशो दिक्कोणक्रमः खण्डगतकलशसमुदाय आश्रयणीयः । ततश्चा'ज्योष्णोदके'त्यत्रापि खण्डेषु ब्रह्मकलशानन्तरं तदीयदैविके दिग्विदिक्क्रमो मानुषे च दिग्विदिगन्तरालक्रम

१. 'धा तत्र दि' क. ख पाठः. २. 'तद', ३, 'तद्व' ख. पाठः.
४ 'न्यः' च पाठः,

पूरण उद्धारे चेति । सहस्रकलशविधौ प्रतिखण्डं दैविके दिग्विदिगन्तरालक्रमः मानुषे तु दिग्विदिगनन्तरं व्यन्तरालकलशसद्भावाच्चयोः पूर्वानन्तरमुत्तरमित्ययमेव क्रमो भवति । प्रकृत्याश्रितक्रमपक्षे तु दैविके प्रकृतावप्यन्तरालाभावात् त्कोणकलशानां त्रयाणामपि पूर्वानन्तरमुत्तरमित्ययमेव क्रमः स्यात् । सप्तदशद्रव्येऽपि 'गोविकृतयः श्रीशे दिक्तिथयः तत्त्वेषुवर्गाः' इति । अत्राप्येवमेव मानुषे क्रमो भवति । सहस्रकलश एव मानुषे तु प्रकृतावन्तरालसद्भावाद् व्यन्तरालानां पूर्वानन्तरमुत्तरमित्ययमेव क्रमः । यदा ब्राह्मखण्डेऽपि दलकलशसम्भवो यथा 'नव निवेश्या ब्रह्मभागेऽम्बुजे दिक्कमलदिक्पत्रेषु चे'ति तदा ते स्वीयब्रह्मकलशावरणमात्रमिति तावति भागेऽपि प्रकृत्याश्रितक्रमोपपत्तौ दिग्विदिक्क्रमो भवति । केचित् प्रकृत्याश्रितक्रमं दैविके दैविकमेव, मानुषे मानुषमेवाश्रयन्ते । तेषां दौर्गे पञ्चविंशतिद्रव्यविधौ स्फुटो भेदः । तेषां न प्रतिखण्डं प्रकृतिरवतिष्ठते । अपि तु कृत्स्ने कलशसमुदाय एव । किन्तु प्रतिखण्डं तदवयवावस्थानमिति प्रतिखण्डं दैविकमानुषपौर्वापर्यं प्रकृतिवत् स्यादिति । द्रव्यावृत्तौ तु व्यूहानां दिग्विदिग्व्यवस्था । तदुक्तं —

> "पूज्यत्वे सर्वकुम्भानामेकजातीयवस्तुभिः ।
> दिग्विदिक्क्रमनिर्बन्धस्तत्तद्वैशिष्ट्यभेदकृत् ॥"

इति ।

> 'अष्टोत्तरशतं मध्ये बाह्ये दिक्षु विदिक्षु च ।'

इति मध्यव्यूहे पूरणारम्भोऽभिषेकपरिसमाप्तिश्च । तत्तद्व्यूहेषु च यथास्वं पूरणोद्धाराविति । बिम्बशुद्धिकलशादिष्वप्ययमेव प्रकार इति । मध्यान्ते स्नपनेऽत्रेति । यथा—घटा नव निवेश्या ब्रह्मभागेऽम्बुजे' 'मध्याद्याखिलखण्डकेषु नवशः' इति । तत्र तद्दलकलशा अपि सन्ति तदा दलकलशैरभिषिच्य तदनन्तरमेवामुना तदीयब्रह्मकलशेन स्नापयेत् ॥ १९६ ॥

> कृत्वार्वागन्त्यकुम्भात् स्नपनमिति समभ्यर्च्य देवं समेत्य
> प्रोद्वास्यान्त्ये घटे तत्सकलमिममुपानीय बिम्बोक्तनीत्या ।
> कुम्भेशेनाभिषिच्य स्नपयतु विधिवत् तेन तत्स्थांशुकाद्यै-
> र्नीराज्य न्यस्तमन्त्रं महितमुपहृतार्घ्यं यजेत् पायसेन ॥ १९७ ॥

---

१. 'तभावक्र', च. पाठः. २. 'न संस्ना', क. ङ. पाठः.

विमर्शिनी ।

अन्त्यकुम्भादर्वाक् पुरोगतं स्नपनमिति कृत्वा देवं समभ्यर्च्य पुनर्मण्डपं समेत्यान्त्ये घटे तत्सकलं मण्डपगततोरणध्वजद्वारकलशादिकं प्रोद्वास्येमं कलशं बिम्बोक्तनीत्या 'स्थान्नीराजनमग्रत' इत्यादिश्लोकोक्तक्रमेण बिम्बस्थाने तं कलशमुपानीय कुम्भेशेन च प्रोक्तक्रमेणाभिषिच्य तत्स्थांशुकाद्यैः तत्स्थवस्त्रचक्रिकादिभिश्च नीराज्य विधिवत् स्वगुरूक्तक्रमेण तेन कलशेन स्नपयतु । पुनर्न्यस्तमन्त्रं स्वस्वोक्तसर्वमन्त्रन्यासानन्तरं महितं पूजितम् उपहृतार्घ्यमुपहारदानानन्तरं पायसेन यजेत् ॥ १२७ ॥

विवरणम् ।

कृत्वार्वागन्त्यकुम्भात् स्नपनमितीति पूर्वोक्तानुवादः । ब्रह्मकलशस्यैवान्त्यकुम्भपदेनाभिधानम् । यदा परिकलशस्याप्यन्त्यत्वं यथा वैष्णवे सप्तदशद्रव्ये स्कन्दे शास्तरि च हरिहरे द्रोणकुम्भोऽन्त्यो भवति, तदाप्ययमेव प्रकार इत्यन्त्यकुम्भादित्येवोक्तम् । समभ्यर्च्य देवमिति । पूर्वखण्डाभिषेकपूजाद्यनन्तरमन्तरा स्नानं विधाय पुनर्ब्रह्मकुम्भाभिषेकार्थतया समर्चनमेतत् । दलकलशसद्भावे त्वन्तरा स्नानानन्तरं किञ्चिदिष्ट्वा नीराज्य तैरभिषिच्य पुनर्ब्रह्मकलशार्चनार्थतयार्चनं कार्यम् । परिकलशे त्वन्त्ये सति तदभिषेकार्थतया समर्चनमात्रम् । द्रोणकलशे त्वन्तरा स्नानमपि कृत्वा समर्चनमित्यौचित्यगम्यं सर्वमिति समेत्येति देवे तालत्रयादि कृत्वा ततो मण्डपगमनमुक्तम् । तत्सकलमन्त्ये घटे प्रोद्वास्येति । तोरणध्वजद्वारकलशाग्न्यादि तच्छब्देन गृह्यते । बिम्बोक्तनीत्येति सर्वत्र सम्बन्धनीयम् । इममुपानीयेति । 'स्थान्नीराजनमग्रत' इत्याद्युदितरीत्येममन्त्यकलशं प्रासादान्तर्देवतासान्निधौ नीत्वेत्यर्थः । कुम्भेशेनाभिषिच्येति । बिम्बोक्तनीत्या त्रिः करकोदकेनेत्येवं कर्करीप्रतिपत्तिपूर्वं नीराज्य मूर्ध्नि कृतहेम्नीत्येवं कुम्भेशेनाभिषिच्य त्रितत्त्वन्यासपूजां कृत्वेति भावः । तत्स्थांशुकाद्यैर्नीराज्य तेन विधिवत् स्नपयत्वित्यन्वयः । अंशुकं तदीयावेष्टनवस्त्रद्वयम् । चक्रिकापल्लवयोरादिपदेन ग्रहणम् । येन पूर्वमंशुकादि कलशेऽर्पितं तेनैव मन्त्रेण तदादायास्त्रेण तेन

---

१. 'पेय' क. छ. पाठः. २. 'वसानि' च. पाठः. ३. 'स्नाप' क. छ. च. पाठः.

देवं नीराजयेत् । पूर्वमस्त्रेण नीराजनीयेन नीराज्यैतत्सर्वं कार्यम् । विधिवदिति प्रणवोपचारमूलानां त्रिवारं सकृत् पीठमनूनां मूर्तिद्वयकलातत्त्वपरिवाराणां तत्तदणुदैवतमूलतारैरित्येषां च जपेनाभिषेचनमुक्तम् । तत्तन्मन्त्रात् पूर्वं पुरुषसूक्ताद्यपि यथावसरं जपनीयम् । तदुक्तं—

'सहरुद्रहोतृभिरथो निखिलैर्धृतमार्गगामिमनुना च शिवम् ।
अपरत्र पौरुषमहामनुना सह विष्णुसूक्तमथ मन्त्रवरम् ॥

इति ।

'रुद्रैः पुरुषसूक्तेन मन्त्रेण व्योमगामिना ।
होतृभिर्गुह्यमन्त्रैश्च मूलमन्त्रद्वयेन च ॥

पौरुषेण च सूक्तेन दुर्गाभिः पञ्चभिस्तथा ।
मूलमन्त्रद्वयेनापि दशहोत्रा तथैव च ॥'

स्कन्दादिषु पुरुषसूक्तनिजसूक्तगायत्रीषणमन्त्रमूलमन्त्रद्वयैरिति[3] तत्तद्भागोदितातोदेवाव्योमव्याप्याद्यभिषेकमन्त्रं त्रिवारमुच्चरन्नभिषिञ्चेत् । प्रणवस्त्ववसाने एकमात्रादिसप्तमात्रान्तो वक्तव्यः । एतत्सर्वं विधिवदित्येव सूचितम् । ब्रह्मकलशे सर्वत्रैतावन्मन्त्रविस्तारः । द्रोणकलशे त्वनियमः । परिकलशमात्रे त्वन्त्ये सामान्यमेव जपनीयमिति । न्यस्तमन्त्रमिति । विधिवदिति सम्बध्यते । प्रणवेन मूलेन व्यापय्य मूर्तिमन्त्रव्यापकमूलपुटितालिपिन्यासं च कृत्वा कलान्यासं विधिवद्विधाय विद्यादेहव्यापकं पञ्चब्रह्मादितदुचितमन्त्रन्यासञ्च विधाय तत्त्वन्यासमपि कृत्वा मूलेन व्यापय्य लिपिन्यासादिन्यासविस्तारं अङ्गन्यासं भूषणन्यासं च विदध्यात् । पुनः पीठे तदन्तर्गतपीठमन्त्रानुगतिं विभाव्य 'ब्रह्माध्वेद्धचितादिने' त्येतामपि व्याप्तिं विभावयेदिति विधिवच्छब्दाशयः । महितमिति मूर्तिद्वयमूलतदक्षराङ्गमन्त्रैः पूजोक्ता । परसूक्ष्मस्थूलरूपपूजापि विधिवच्छब्देनाभिमतयते । उपहृतार्घ्यमिति प्रणवोपचारमूलेन मुखार्घ्यदानमुक्तम् । यजेत् पायसेनेति ब्रह्मकलशाभिषेकशेषतया समुचितपायसनिवेदनमुक्तम् । विधिवदित्येतदिहापि समानम् । देवस्य स्थूलसूक्ष्मपरभागेषु तदन्तर्गतकलातत्त्वादिशक्तिषु मन्त्राक्षरभूषणादिशक्तिषु पीठतदन्तर्गतधर्मादि-

---

१. 'मपि म' च. पाठः. २. 'स्कान्दा' क. छ. पाठः. ३. 'लद्वयै' छ. पाठः. ४. न्मात्रविस्तरः सर्वक' क. पाठः. ५. 'तावदपि' छ. पाठः.

शक्तिषु च तत्पायससमुचितांशव्याप्तिभावनैवमुक्ता भवति। पुनर्गण्डूषादिस-र्मपणपूर्वकं किञ्चित् पुष्पाराधनं विधाय नीराजनमपि कार्यम् ॥ १९७ ॥

ततो यथाविध्यभिपूज्य देवं निवेद्य सन्तर्प्य तमग्निरूपम् ।
सावस्रुतोक्षं परिषद्बलिं च कृत्वा विभुं भावयतु प्रसन्नम् ॥

विमर्शिनी ।

ततो यथाविधि देवमभिपूज्य निवेद्याग्निरूपं तं सन्तर्प्य पूजाहोमं कृत्वा सावस्रुतोक्षं कलशानामभिषेककाले सर्वकलशेभ्यः किञ्चित्किञ्चिदवस्रावितानि जलान्येकीकृत्य तेन सर्वपरिवारेषूक्षणं परिषद्बलिं प्रतिष्ठायामिव परिषदां बलिं च कृत्वा विभुं देवं प्रसन्नं भावयतु प्रसन्नपूजां च कुर्यात् ॥ १९८ ॥

विवरणम् ।

ततो यथाविध्याभिपूज्य देवमिति प्रारब्धपूजायां स्नपनं तावदित्थं समनुष्ठितं ततोऽङ्गवस्त्रादिसमर्पणपूर्वं विस्तारेण विग्रहपूजा यथोचितमावरणपूजा चोक्ता । तदा च विग्रहपूजायां कलातत्त्वादिमन्त्रैरपि पूजा पुष्पाञ्जलिरपि वा कार्येति यथाविधीत्युक्तम् । सावस्रुतोक्षं परिषद्बलिञ्च कृत्वेति परिवारपीठप्रतिष्ठा तुर्यदिनाभिषेकार्वागेव कार्याभिमता । यदुक्तं— 'कुर्याच्चुर्यदिनात्यये यदि महापीठप्रतिष्ठापनमि'ति । ततश्च पूजाङ्गहोमानन्तरं द्वाःस्थादिसकलपरिवारबिम्बपीठेषु संक्षालितेषु सकलकलशावस्रावेण पूर्वसम्भृतेन कूर्चेन प्रोक्ष्य तद्बलिमपि 'द्वाःस्थादिकांस्तत्परिवारमुख्यानि'त्युक्तविधया विदधीतेति भावः । यच्चोक्तं— 'तुर्येऽहन्यभिषिच्य देवम्…… इह तच्छेषोक्षणाद्यं चरेदि'ति । परिवारपीठाद्यकरणे तु नावस्रावप्रोक्षणं किन्तु बलिदानमात्रमेव । तदपि वा 'हुताशेऽथ समीरणे वे'त्युक्तविधमेव कार्यमिति । विभुं भावयतुं प्रसन्नमिति पुनर्निवेद्यविसर्गादिपूर्वकं यथाविधि कृत्स्ना प्रसन्नपूजोक्ता । 'संस्पृश्य तन्मूर्धनि मन्त्रदोष्णे'त्येतदपि सर्वमिहापि समुचितमिति यथाविधिपदावृत्तेर्लभ्यते ।

---

१. 'यथोक्तम्' ङ. २. 'त्विति' छ. पाठः.

तथा प्राक् पायसनिवेदने कृते 'लोकानुग्रहहेत्वर्थ'मित्याद्युपस्थानञ्च समुचित-मिति । प्रसन्नं भावयत्वित्यनेन 'विशुद्धिसान्निध्यसमृद्धिकारक'मित्येतत्फलभा-वनाप्युक्ता ॥

इति तन्त्रसमुच्चयविवरणे अष्टमः

पटलः ।

---

इति तन्त्रसमुच्चये समुद्यद्घटसङ्ख्यापरिकल्पनाप्रकारः ।
पटलः कलशप्रसाधनैतत्स्नपनाख्यानपरोऽष्टमः समाप्तः ॥

इति तन्त्रसमुच्चये

अष्टमः पटलः ।

---

विमर्शिनी ।

पटलं समापयति— इतीति । इति तन्त्रसमुच्चयाख्ये ग्रन्थेऽष्टमः पटलः समाप्तोऽभूत् । कथम्भूतः, समुद्यद्घटसंख्यापरिकल्पनाप्रकारः सम्यक्प्रकाशि-तानां घटसंख्यानां परिकल्पनायाः प्रकारेण युक्तः । कलशप्रसाधनैतत्स्नपना-ख्यानपरश्च कलशानां प्रसाधनं पूरणपूजनाधिवासादिकम् , एतत्स्नपनम् उत्त-रेद्युः करणीयं कर्म, एतयोः कर्मणोराख्याने प्रकथने तत्परस्तात्पर्येण युक्तः ॥ १९९ ॥

इति तन्त्रसमुच्चयविमार्शिन्याम्

अष्टमः पटलः ।

---

# APPENDIX I

## श्लोकानुक्रमणी ।

## स्मृतवाक्यानुक्रमणी

| पुटम् | स्मृतवाक्यानि | आकरः |
|---|---|---|
| २ | गुरूनुदग्दक्षिणतो गणेशम् | तन्त्रसमु० ७ ३७ |
| ५ | पूरयित्वा ··· प्रापय्य | |
| ६ | हृदयकण्ठ ... निर्भिद्य | |
| ९ | महापातकपञ्चाङ्गम् | |
| १० | नाभेरधस्ताद् ··· मण्डलम् | |
| १३ | प्रभञ्जनं पिङ्गलया | तन्त्रसमु० ५ ६ |
| १६ | स्वयं देवीमथो भूत्वा | |
| १७ | बिम्बापिङ्गलया ··· मृच्छति | |
| ,, | त्रिमात्रप्रणवेन ··· सुषुम्नयोः | |
| १९ | उद्घातावृत्तिभि ··· वा | |
| २३ | स्वमूलषष्ठवर्णेन | तन्त्रसमु० ५ ५५ |
| २९ | विचिकीर्षुर्घनीभूता ···ताम् | |
| ३१ | लोकानुग्रहहेत्वर्थे | तन्त्रसमु० ६ ६८ |
| ३७ | जीवस्तटित्प्रभः ··· पुरोदितम् | |
| ४१ | जीवं तमीशभावस्थं ··· परमेष्ठिनाः | |
| ,, | वाच्यवाचक ... मण्डलम् | |
| ४२ | पञ्चशक्तिभिः पञ्चात्मानः स्मृताः | |
| ५१ | प्रथमां वामहस्ते तु ··· तथा | ऋग्विधानम् |
| ५४ | मध्येवेदि विनिर्मित | तन्त्रसमु० ४ ५७ |
| ५५ | पुरुषं मण्डलं विद्यात् | |
| ५९ | प्रथमो विष्णुराख्यातः ··· नः | |
| ,, | विष्णौ विष्णुमुखाः .... लिपयः | तन्त्रसमु० ४ ५६ |

